# ÇATASĀHASRIKĀ-PRAJÑĀ-PĀRAMITĀ

## THEOLOGICAL AND PHILOSOPHICAL DISCOURSE

BUDDHA WITH HIS DISCIPLES

(IN A HUNDRED THOUSAND STANZAS)




EDITED BY

PRATĀPACANDRA GHOSA

PART I. FAS 1



CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET

1902

sahasrikā Prajna Paramita, the publication of the Çata-sahasrika would be acceptible to the reading public

Much time was lost in securing five copies of the text, and one manuscript had to be obtained on loan from the Cambridge University Library

There are now at my disposal five manuscripts

क This is a manuscript which years ago I had secured from a Nepali Pandit who had come down to Calcutta on a pilgrimage to Puri It is a tolerably correct copy but incomplete Character Nagri

ख Is an incomplete copy obtained from the Society's Library Character Nepali

ग Another manuscript from the Library of the Asiatic Society of Bengal, incomplete but much older than any. Character Newari

घ This is the only complete copy I have got It belongs to the Asiatic Society of Bengal, it was found in the Collection of Hodgson's Nepali manuscript Character Newari

ङ The Cambridge University Library manuscript is in Nepali characters A neatly written copy Character Nepali This copy has to be consulted under orders of the authorities of the Cambridge University Library at the premises of the Asiatic Society of Bengal Part I, only

क The first manuscript has been made the basis of collation, and so far as they have been collated all the five manuscripts generally tally with each other There are a few clerical errors which have been corrected by collation with the other manuscripts Notes from Patanjala aphorisms, Bhāṣya, Tīkā, from Sarvadarçana Sangraha, and from Bhāmati have been given with a view to elucidate some passages, but the language of the Buddhist authors as well as their technical terms differ greatly from those of their Hindu brethren Notes from the Commentary of Astasahasrikā have also been given

The name of the author does not appear from the text nor the epoch of its composition

BHAGADEVEL, VINDHYACAL }
*The 5th day of Sept 1901* }

EDITOR

# शतसाहस्रिका प्रज्ञापारमिता।

## प्रथमपरिवर्त्तः।

नमः श्रीसर्व्वबुद्धबोधिसत्त्वार्य्यश्रावकप्रत्येकबुद्धेभ्यः ॥

या सर्व्वज्ञतया नयत्युपसमं* शान्तैषिणः श्रावकान्
या मार्गज्ञतया जगद्धितकृतालोकार्थसम्पादिका ।
सर्व्वाकारमिदं वदन्ति मुनयो विश्वं यया सङ्गतां†
तस्यै श्रावकबोधिसत्त्वगणिनो बुद्धस्य मात्रे नमः ॥
यदसुलभमनन्तकल्पकोटिभिः प्रवरशतैरपि हेतुवर्जितानां।
भवतु हि जिनार्करश्मिभूतं‡ तदिदमिदं प्रतिचतुरश्रयानं ॥
गम्भीरश्च न चाभ्यस्तं दुर्लभश्च मुनेर्वचः।
न च तेन विना मोचं§ तस्माच्छ्रोतव्यमादरात् ॥

नमो भगवते भैषज्यगुरुवैदूर्य्यप्रभाय तथागताय॥। नमो भगवत्यै

---

* उपसममिति पुस्तकचतुष्टये लिखितं। उपशममिति पाठोयुक्तः प्रतिभाति।

† सङ्गता इति पाठः पुस्तकचतुष्टये दृश्यते। सङ्गतमिति पाठोयुक्तः।

‡ रश्मि इति पुस्तकचतुष्टये पाठः। रश्मि इति पाठोयुक्तः।

§ मोचौ इति नेपालीय ग पुस्तके पाठः। मोचः — इति तु युक्तं।

|| सर्व्वाकाराविपरीतधर्म्मदेशिकत्वेन परार्थसम्पदा तथागतः इत्यष्टसाहस्रीटीका।

प्रज्ञापारमितायै[१]। नम आर्यावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय[२] महाकारुणिकाय। नमश्चण्डवज्रपाणये महायक्षसेनापतये। नमः सर्वबुद्धबोधिसत्त्वेभ्यो भगवद्भ्यः। निराश्रवा. सर्वसत्त्वानां कुशलसम्भवोयोगैः सम्भवन्ति सिद्धार्थानां च तथागतो प्रतिलम्भता सर्वसत्त्वानां सुखसौमनस्यसद्भावश्चेति। नमो भगवते रश्मिचन्द्रप्रतिमण्डितविद्युत्तेजघोषेश्वरराजाय तथागताय। नमो भगवते शाक्यमुनये तथागतायार्हते सम्यक्सम्बुद्धाय यस्येयं धर्मोल्काज्वालेति।

एवम्मया श्रुतमेकस्मिन् समये भगवान्[३] राजगृहे[४] विहरति स्म। गृध्रकूटपर्वते[५] महता भिक्षुसङ्घेन[६] सार्द्धं पञ्चमात्रैर्भिक्षुसहस्रैः

(१) प्रज्ञायाधर्म्मप्रविचयलक्षणाया पार प्रकर्षपर्य्यन्तमेतीति विगृह्य क्विपि सर्व्वापहारिलोपे अनित्यमागमशासनमित्यनुक्ति तत्पुरुषे कृति बहुलमित्यलुकि च कर्म्मविभक्ते, कृत पारमि, तद्भाव पारमिता।

(२) प्रज्ञाबलेन बोध्यालम्बनात् बोधि, स चासौ महाकृपाशयेन सत्त्वालम्बनात् सत्त्वश्चेति बोधिसत्त्व। बोधौ सर्व्वधर्म्मासक्ततायां स्वार्थसम्पदि सत्त्वमभिप्रायो येषा ते बोधिसत्त्वा श्रावका अपि स्युरेव मित्याह महासत्त्वा इति। महत्या परार्थसम्पदि सत्त्व येषा ते. महासत्त्वा। महत्त्वञ्चान्यथापि तीर्थिकसाधुजनवत् स्यादिति बोधिसत्त्वग्रहण।

(३) ऐश्वर्य्यस्य समग्रस्य रूपस्य यशस श्रिय। ज्ञानस्याथ प्रयतस्य षण्णा भग इति श्रुति। सोऽस्यास्तीति समग्रैश्वर्य्यादिमान् भगवान्।

(४) राजगृहेऽन्वर्थसंज्ञके प्रसिद्धस्थानविशेषे।

(५) गृध्र अभिकाङ्क्षित, नानारत्ननिकर कूटः, गृध्रश्चासौ कूटश्चेति गृध्रकूट॥ पुण्यकामदेवादीनामगम्यादिपर्व्वसु यात्रा तनोतीति नैरुक्तविधानात् पर्व्वत॥

(६) बुद्धधर्मस्तथा सङ्घे मारकोटिशतैरपि। भेत्तुं न शक्यते यस्मात् तस्मात् सङ्घोऽभिधीयते॥

सर्वैरर्हद्भिः[1] क्षीणास्रवै[2]र्निःक्लेशै[3]र्वशीभूतैः[4] सुविमुक्तचित्तैः सुविमुक्तप्रज्ञै[5]राजानेयै[6]र्महानागैः[7] कृतकृत्यैः[8] कृतकरणीयैः[9] अपहृतभारै[10]रनुप्राप्तस्वकार्थैः[11] परिक्षीणभवसंयोजनैः[12] सम्यगा-

---

(१) सर्व्व एवात्र पूजादक्षिणागुणप्रकर्षादर्हतया ऽर्हन्तः ॥ हतारित्वा-दर्हन् इति स्थानान्तरे उक्तं ॥

(२) आसंसारं स्रवन्तीति कामभवाविद्या आस्रवाः क्षीणा येषां तत्प्रति-पक्षानास्रवशीलादिस्कन्धलाभेन, ते क्षीणास्रवाः ॥

(३) निर्गतः क्लेशकर्म्मजन्मसंक्लेशाख्यः क्लेशो येषां ते निःक्लेशाः ।

(४) सर्व्वबन्धनविगमस्वातन्त्र्यात्ते वशिनोभूतास्ते वशीभूताः ॥

(५) समापत्तिक्लेशावरणविमुक्ताः सर्व्वार्थोपभोगविमुक्ताः (यथाक्रमं) सुवि-मुक्तचित्ताः सुविमुक्तप्रज्ञाः ॥

(६) दुःखभयलोकधर्म्मा ज्ञानाशङ्काविगमात् निर्भयत्वेनाजानेयाः ।

(७) त्रैविद्यादित्वविशिष्टधर्म्माविगमयोगान्महाप्रधानभावेन महानागाः ।

(८) शीलसमाधिप्रज्ञापरिपूर्त्या कृतमवश्यङ्करणीयं सर्वदुःखप्रमोक्षादि-कृत्यं यैस्ते कृतकृत्याः ।

(९) कृतमानुषङ्गिकं कर्त्तव्यं स्वेच्छाप्रतिबद्धवृत्तिधुतगुणादिकं यैस्ते कृत-करणीयाः ।

(१०) अपहृताः सर्व्वथाऽपनीताः स्कन्धक्लेशप्रतिज्ञोद्योगभारा यैस्तेऽपहृत-भाराः ।

(११) भगवतः पश्चात् अनुप्राप्तः हिताहितप्राप्तिपरिहारलक्षणो द्विविधः स्वकोऽर्थो विद्याऽविद्याधिगमप्रज्ञाणाभ्यां यैस्तेऽनुप्राप्तस्वकार्थाः ।

(१२) परि समन्तात् यथासम्भवमार्य्यमार्गेण क्षीणानि भवेन सह पुरुष-संयोजनेयत्प्रतिघादिनवसंयोजनानि येषां ते परिक्षीणभवसंयोजनाः ।

ज्ञासुविमुक्तचित्तैः(१) सर्वचेतोवशिपरमपारमिताप्राप्तै(२) रेकपुद्गलं(३) स्थापयित्वा। यदुतायुष्मन्तमानन्दं शैक्षं स्रोतआपन्नं। पञ्चमात्रैश्च भिक्षुशतैः। यशोधरामहाप्रजापती*प्रमुखैः सम्बहुलैश्च। उपासकोपासिकाभिश्च सर्वैर्दृष्टधर्मभिः। महता च बोधिसत्त्वसङ्घेन सार्द्धमप्रमेयैरसंख्येयैर्बोधिसत्त्वैः सर्वैर्द्धारणीमुखप्रतिलब्धैः शून्यतानिमित्ताप्रणिहितैर्विहारिभिरानिमित्तागोचरैरविकल्पिकप्रणिधानैः सर्वधर्मसमताक्षान्तिप्रतिलब्धैरसङ्गप्रणिधानैरसङ्गप्रतिभानसमन्वागतैरद्वयप्रतिनिर्देशप्रतिनिर्देशैः प्रतिसंविन्नयप्रतिवद्धैर्महाभिज्ञाविक्रीडितैरत्यन्ताच्युताभिज्ञैरादेयवचनैरकुसीदैरारब्धवीर्यैः कायजीवितनिरपे-

---

* प्रजापती इति पुस्तकचतुष्टये पाठोदृश्यते। प्रजापति इति पाठोयुक्तः।

---

(१) सम्यक् अविपरीतं, आ समन्तात्, आ ज्ञानं तत्त्वावबोधस्तया सुष्ठुविमुक्तं सर्वबन्धनविसंयुक्तं चित्तं येषां ते सम्यगाज्ञासुविमुक्त चित्ताः।

(२) सर्वत्र चेतसि नवानुपूर्वविहारसमापत्तिलक्षणे स्वातन्त्र्याद्वशिनस्ते च ते परमपारमिं स्वगोत्रप्रकर्षपर्यन्तगतिं प्राप्ताश्चेति सर्वचेतोवशिपरमपारमि प्राप्ताः। अत्र पूर्वपूर्वस्योत्तरोत्तरं कारणं। कुतः क्षीणाश्रवा? निक्लेशत्वात्। एवं सर्वत्र योज्यं। अतः सर्वपुरुषार्थसमाप्तत्वान्नापरं विशेषणं वाच्यमिति। तदनेन अष्टसाहस्रीटीकायां परमपारमि प्राप्ते इति पाठोव्याख्यातः अष्टसाहस्र्यां स एव पाठोदृश्यते। अत्र तु पुस्तकचतुष्टये परमपारमिताप्राप्ते इति पाठोदृश्यते।

(३) नित्यस्य कार्यकारणलक्षणस्य वास्यवासकभावानुपपत्तेः शुभाशुभवासनाभिः पूर्णोऽनित्यस्तदनुरूपां गतिं गच्छतीति निरुक्ताभिधानात् प्रबन्ध एवैक पुद्गलः। पुनः पुनर्गतिषु लीयते इति पुद्गलः इति स्थानान्तरे उक्तं।

लैरकुहकैरलपकैरपगतज्ञानलाभचित्तैर्निरामिषधर्मदेशकैर्गम्भीरधर्मक्षान्तिपरमगतिं गतैर्महावैशारद्यप्राप्तैरसंकुचितमानसैः सर्वमारकर्मसमतिक्रान्तैः कर्मावरणप्रतिप्रस्रब्धै*र्निहतकर्मक्लेशप्रत्यर्थिकैः सर्वपरप्रवादानभिभूतैः सर्वश्रावकप्रत्येकबुद्धदुरवगाहैः धर्मप्रविचयविभक्तिनिर्देशकुशलैरसंख्येयकल्पसुसमारब्धप्रणिधानैः स्मितमुखैः पूर्वाभिलापिभिर्व्यपगतभ्रुकुटिकैः श्लक्ष्णमधुरवचनैर्गाथाभिगीतपरालपनकुशलैरनाच्छेद्यप्रतिभानैरनन्तपरिषदभिभवनैः वैशारद्यसमन्वागतैरनन्तकल्पकोटिनिर्देशनिर्जातिभिः सरण्या†कुशलैर्मायामरीच्युदकचन्द्रस्वप्नप्रतिश्रुत्काप्रतिभासगन्धर्वनगरप्रतिबिम्बनिर्याणोपायधर्माधिमुक्तैरपगतसंलीनचित्तैः सर्वसत्त्वचित्तगतिसूक्ष्मज्ञानचर्याधिमुक्त्यावतार‡कुशलैः सर्वसत्त्वाप्रतिहतचित्तैः अधिमात्रक्षान्तिसमन्वागतैः सर्वधर्मसमताप्रतिवेधज्ञानकुशलैर्गम्भीरधर्मतादुरवगाहैः स्वचित्तवसिता§प्रतिलब्धैः सर्वधर्मवसिताप्राप्तैः सर्वकर्मक्लेशदृष्ट्यावरणविमुक्तैः प्रतीत्यनिर्देशकुशलैर्गम्भीरप्रतीत्यसमुत्पादनयनयावतीर्णैः सर्वदृष्ट्यानुशयपर्युत्थानविगतैः सर्वसंयोजनप्रहीणैः सत्यप्रतिवेधज्ञानकुशलैः सततसमितं|| प्रतिश्रुत्कासमसर्वधर्माधिमुक्तैः अप्रमाणधर्मनयनिर्देशवैशारद्यैर्यावक्षार्य्यावतारणाकुशलैः अनन्तबुद्धक्षेत्रव्यूहप्रणिधानप्रस्थानपरिगृहीतै-

* प्रस्रब्धैरिति ग पुस्तके पाठः। प्रस्रब्धैरिति ख घ पुस्तके पाठः।

† सरण्य इति पाठः पुस्तकचतुष्टये दृश्यते। शरण्य इति युक्तः।

‡ मुक्त्यावतारण इति ख पुस्तके घ पुस्तके च पाठः। मुक्त्यवतार इति युक्तः।

§ वसिता इति पुस्तकचतुष्टये पाठः। वशिता इति तु युक्तं। एवं परत्र।

|| समितं इति पुस्तकचतुष्टये पाठः। समित इति पाठो युक्तः।

रसंख्येयलोकधातुगता* बुद्धानुस्मृतिसमाधिसततसमिताभिमुखीभूतैः सर्वबुद्धोत्पादोपसंक्रमणकुशलैरपरिमितबुद्धाध्येषणकुशलैर्नानादृष्टिपर्युत्थानसर्वक्लेशप्रशमनकुशलैः समाधिशतसहस्राणिनिर्हारविक्रीडनज्ञानप्रवेशकुशलैः अपर्यन्तकल्पाक्षीणगुणवर्णासमन्वागतैः। तद्यथा, भद्रपालेन च नाम बोधिसत्त्वेन महासत्त्वेन। रत्नाकरेण च नाम बोधिसत्त्वेन महासत्त्वेन। रत्नगर्भेण च नाम बोधिसत्त्वेन महासत्त्वेन। रत्नदत्तेन च नाम बोधिसत्त्वेन महासत्त्वेन। सुसार्थवाहेन च नाम बोधिसत्त्वेन महासत्त्वेन। नरदत्तेन च नाम बोधिसत्त्वेन महासत्त्वेन। गुहगुप्तेन च नाम बोधिसत्त्वेन महासत्त्वेन। वरुणदेवेन च नाम बोधिसत्त्वेन महासत्त्वेन। इन्द्रदेवेन च नाम बोधिसत्त्वेन महासत्त्वेन। भद्रपालेन च नाम बोधिसत्त्वेन महासत्त्वेन। उत्तरमतिना च बोधिसत्त्वेन महासत्त्वेन। विशेषमतिना च बोधिसत्त्वेन महासत्त्वेन। वर्द्धमानमतिना च बोधिसत्त्वेन महासत्त्वेन। अनन्तमतिना च बोधिसत्त्वेन महासत्त्वेन। अमोघदर्शिना च बोधिसत्त्वेन महासत्त्वेन। अनावरणमतिना च बोधिसत्त्वेन महासत्त्वेन। सुसम्प्रस्थितेन च नाम बोधिसत्त्वेन महासत्त्वेन। सुविक्रान्तविक्रामिणा च बोधिसत्त्वेन महासत्त्वेन। अनन्तवीर्य्येण च बोधिसत्त्वेन महासत्त्वेन। नित्योद्युक्तेन च बोधिसत्त्वेन महासत्त्वेन। नित्यप्रयुक्तेन च बोधिसत्त्वेन महासत्त्वेन। अनिक्षिप्तधुरेण च बोधिसत्त्वेन महासत्त्वेन। सूर्य्यगर्भेण च बोधिसत्त्वेन महासत्त्वेन। चन्द्रगर्भेण च बोधिसत्त्वेन महासत्त्वेन। अनुपम-

* इत्थमेव सर्वत्र पाठ। गत इति तु युक्तं।

मतिना च बोधिसत्त्वेन महासत्त्वेन। अवलोकितेश्वरेण च नाम बोधिसत्त्वेन महासत्त्वेन। महास्थामप्राप्तेन च बोधिसत्त्वेन महासत्त्वेन। मंजुश्रिया च कुमारभूतेन च बोधिसत्त्वेन महासत्त्वेन। मारबलप्रमर्दिना च बोधिसत्त्वेन महासत्त्वेन। वज्रमतिना च बोधिसत्त्वेन महासत्त्वेन। रत्नमुद्राहस्तेन च बोधिसत्त्वेन महासत्त्वेन। नित्योत्क्षिप्तहस्तेन च बोधिसत्त्वेन महासत्त्वेन। महाकरुणाचिंतिना च बोधिसत्त्वेन महासत्त्वेन। महाव्यूहेन च नाम बोधिसत्त्वेन महासत्त्वेन। शकराजेन च नाम बोधिसत्त्वेन महासत्त्वेन। मेरुकूटेन च बोधिसत्त्वेन महासत्त्वेन। मैत्रेयेण च नाम बोधिसत्त्वेन महासत्त्वेन। एतैश्चान्यैश्चानेकैर्बोधिसत्त्वकोटिनियुतशतसहस्रैः॥

अथ खलु भगवांस्तस्यां वेलायां स्वयमेव सिंहासनं प्रज्ञापयन्निषीदत्। पर्यंकमाभुज्य ऋजुकायं प्रणिधाय प्रतिमुखं स्मृतिमुपस्थाप्य तत्र निषद्य सर्वसमाधिराजनामसमाधिं समापन्नोऽभूत्। यत्र समाधौ समाधयोऽन्तर्गता अनुप्रविष्टाः सङ्गं समवसरणं गच्छन्ति॥

अथ खलु भगवान् स्मृतः सम्प्रजानंस्ततः समाधेर्व्युत्थाय दिव्येन चक्षुषेदं बुद्धक्षेत्रं व्यवलोकयति स्म। व्यवलोक्य सर्वकायात्प्रभां प्रामुञ्चत्। तस्याधस्तात् पादतलयोः सहस्राराभ्यां चक्राभ्यां षष्टिषष्टिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म। दशभ्यश्च पादाङ्गुलिभ्यः षष्टिषष्टिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म। द्वाभ्यां गुल्फाभ्यां षष्टिषष्टिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म। नाभिमण्डलात् षष्टिषष्टिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म। द्वाभ्यां पार्श्वाभ्यां षष्टिषष्टिरश्मिकोटी-

नियुतशतसहस्राणि निश्चरन्ति स्म। हृदयश्रीवत्सान्महापुरुषलक्षणात् षष्टिषष्टिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म । दशभ्यो-हस्ताङ्गुलिभ्यः षष्टिषष्टिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म । द्वाभ्यां बाहुभ्यां षष्टिषष्टिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म। द्वाभ्यामंसाभ्यां षष्टिषष्टिरश्मिकोटीनियुतशतसह-स्राणि निश्चरन्ति स्म । ग्रीवायाः षष्टिषष्टिरश्मिकोटीनियुतशत-सहस्राणि निश्चरन्ति स्म । चतसृभ्यो दंष्ट्राभ्यः षष्टिषष्टिरश्मिकोटी-नियुतशतसहस्राणि निश्चरन्ति स्म। चत्वारिंशतो दन्तेभ्यः षष्टि-षष्टिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म । द्वाभ्यां चक्षुर्भ्यां षष्टिषष्टिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म। द्वाभ्यां श्रोत्राभ्यां षष्टिषष्टिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म। द्वाभ्यां घ्राणाभ्यां षष्टिषष्टिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म । मध्ये भ्रुवोः ऊर्णायाः षष्टिषष्टिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म। उपरिष्टादुष्णीषात् षष्टिषष्टिरश्मिकोटीनियुत-शतसहस्राणि निश्चरन्ति स्म। मुखद्वाराच्च षष्टिषष्टिरश्मिकोटी-नियुतशतसहस्राणि निश्चरन्ति स्म। सर्वाणि च तानि रश्मिकोटी-नियुतशतसहस्राणि निश्चरन्ति स्म। सर्वावन्तमिमन्त्रिसाहस्र-महासाहस्रं लोकधातुं महताऽवभासेन स्फुरित्वा पूर्वस्यान्दिशि गङ्गानदीवालुकोपमां *लोकधातुं महताऽवभासेन स्फुरन्ति स्म। दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमां लोकधातुं महताऽवभासेन

* लोकधातुशब्दविशेषणपदस्य क्वचित् स्त्रिया क्वचित् पुंसिप्रयोगो दृश्यते वस्तुत पुंसिप्रयोग एवयुक्तः ।

स्फुरन्ति स्म। पश्चिमायान्दिशि गङ्गानदीवालुकोपमां लोकधातुं महताऽवभासेन स्फुरन्ति स्म। उत्तरपूर्वस्यान्दिशि गङ्गानदीवालुकोपमां लोकधातुं महताऽवभासेन स्फुरन्ति स्म। पूर्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमां लोकधातुं महताऽवभासेन स्फुरन्ति स्म। दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमां लोकधातुं महताऽवभासेन स्फुरन्ति स्म। पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमां लोकधातुं महताऽवभासेन स्फुरन्ति स्म। अधस्ताद्दिशि गङ्गानदीवालुकोपमां लोकधातुं महताऽवभासेन स्फुरन्ति स्म। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमां लोकधातुं महताऽवभासेन स्फुरन्ति स्म। यैश्च सत्त्वैः सोऽवभासो दृष्टो ये च तेनावभासेन स्पृष्टास्ते सर्वे नियता अभूवन् अनुत्तरायां सम्यक्सम्बोधौ॥

अथ खलु भगवान् पुनरेव सर्वरोमकूपेभ्यः प्रभां प्रामुञ्चत्। यया प्रभयाऽयन्त्रिसाहस्रमहासाहस्रो लोकधातुर्महताऽवभासेन स्फुट*मभूत्। पूर्वस्यान्दिशि गङ्गानदीवालुकापमा लोकधातवोमहताऽवभासेन स्फुटा अभूवन्। दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमा लोकधातवो महताऽवभासेन स्फुटा अभूवन्। पश्चिमायान्दिशि गङ्गानदीवालुकोपमा† लोकधातवो महताऽवभासेन स्फुटा अभूवन्। उत्तरस्यान्दिशि गङ्गानदीवालुकोपमा लोकधातवो महताऽवभासेन स्फुटा

* स्फुतमभूत् इति क पुस्तके स्फुटेन भूत् इति ख, घ, पुस्तके स्फुटमभूदिति ग पुस्तके पाठः। एकोपि पाठो न समीचीनः। स्फुटोऽभूदिति पाठः सङ्गतः प्रतिभाति।

† क पुस्तके वालिकोपमा इति पाठो बहुस्थले दृश्यते।

धर्मदेशनां । दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमां* लोकधातुं गच्छन्ति स्म । तत्रापि गत्वा धर्मन्देशयन्ति स्म । यदुतेमामेव षट्पारमिताप्रतिसंयुक्तां धर्मदेशनां । पश्चिमायान्दिशि गङ्गानदीवालुकोपमां लोकधातुं गच्छन्ति स्म । तत्रापि गत्वा धर्मं देशयन्ति स्म । यदुतेमामेव षट्पारमिताप्रतिसंयुक्तान्धर्मदेशनां । उत्तरस्यान्दिशि गङ्गानदीवालुकोपमां लोकधातुं गच्छन्ति स्म । तत्रापि गत्वा धर्मं देशयन्ति स्म यदुतेमामेव षट्पारमिताप्रतिसंयुक्तान्धर्मदेशनां । उत्तरपूर्वस्यान्दिशि गङ्गानदीवालुकोपमां लोकधातुं गच्छन्ति स्म तत्रापि गत्वा धर्मं देशयन्ति स्म । यदुतेमामेव षट्पारमिताप्रतिसंयुक्तान्धर्मदेशनां । पूर्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमां लोकधातु गच्छन्ति स्म तत्रापि गत्वा धर्मं देशयन्ति स्म यदुतेमामेव षट्पारमिताप्रतिसंयुक्तान्धर्मदेशनां। दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमां लोकधातुं गच्छन्ति स्म तत्रापि गत्वा धर्मं देशयन्ति स्म यदुतेमामेव षट्पारमिताप्रतिसंयुक्तान्धर्मदेशनां । पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमां लोकधातु गच्छन्ति स्म तत्रापि गत्वा धर्मं देशयन्ति स्म यदुतेमामेव षट्पारमिताप्रतिसंयुक्तान्धर्मदेशनां । अधस्ताद्दिशि गङ्गानदीवालुकोपमां लोकधातुं गच्छन्ति स्म तत्रापि गत्वा धर्मं देशयन्ति स्म यदुतेमामेव षट्पार-

---

* लोकधातुशब्दविशेषणस्य क्वचित् स्त्रिया पुंसिप्रयोग पुस्तकचतुष्टये दृश्यते । वस्तुत कर्मेरुजतु वस्तूनिच्छित्वा तुरुविरामका इति पुंलिङ्गसंग्रहवर्गोक्तधातुशब्दस्य पुलिङ्गत्वात् तद्विशेषणस्यापि पुंसिप्रयोगस्यैव युक्तत्वमिति ।

मिताप्रतिसंयुक्तान्धर्मदेशनां । उपरिष्टाद्दिशि गङ्गानदीवालुकोपमां लोकधातु गच्छन्ति स्म तत्रापि गत्वा धर्मं देशयन्ति स्म यदुतेमामेव षट्पारमिताप्रतिसंयुक्तान्धर्मदेशनां । यैश्च सत्वैः सधर्मः श्रुतस्ते सर्वे नियता अभूवन् अनुत्तरायां सम्यक् सम्बोधौ ॥

*अथ खलु भगवान् तस्मिन्नेव सिंहासने निषण्णः सिंहविक्रीडितं नाम बुद्धसमाधिं समापद्य तथारूपमृद्ध्यभिसंस्कारमभिसंस्करोति स्म । यथारूपेणार्द्ध्यभिसंस्कारेण अभिसंस्कृतेनायं त्रिसाहस्रमहासाहस्रो लोकधातुः षड्विकारं(१)अकम्पतः* प्राकम्पत सम्प्राकम्पत । अवेधत् प्रावेधत् सम्प्रावेधत् अचलत्प्राचलत्सम्प्राचलत् । अक्षुभ्यत्प्राक्षुभ्यत्सम्प्राक्षुभ्यत् । अगर्जत् प्रागर्जत्सम्प्रागर्जत् । अरणत्प्रारणत्सम्प्रारणत् । अन्तेषून्नमति स्म मध्येऽवनमति स्म अन्तेष्ववनमति स्म मृदुकः स्निग्धः सूक्ष्मः सर्वसत्त्वहितसुखसञ्जननो†ऽभूत् ॥

अथ तेन क्षणलवमुहूर्त्तेन यावन्तोऽस्मिंस्त्रिसाहस्रमहासाहस्रे लोकधातौ नरकतिर्यग्योनियमलोकाक्षणापायदुर्गतिविनिपातास्ते सर्वे समुच्छिन्ना‡ अभूवन् । सर्वे च ते सत्त्वा मनुष्याणां सभागतायाः§ उपपन्ना अभूवन् सर्वे च ते सत्त्वाश्चातुर्महाराजकायिकानां

* (क, ग, घ) पुस्तके प्रकम्पतः इति पाठः ख पुस्तके प्रकम्पते इति पाठः । पश्चाल्लिखित क्रमेणाकम्पत इति पाठः समीचीनः प्रतिभाति ।

† सञ्जानन इति पुस्तकचतुष्टये दृश्यते सञ्जनन इति पाठोयुक्तः ।

‡ सर्व्वाक्षणास्त्वस्तमिता इति ख पुस्तके पाठोऽधिकः ।

§ सभागतायाः इति पुस्तकचतुष्टये पाठः । सभागता इति पाठोयुक्तः ।

(१) षड्भावविकारा भवन्तीति वार्ष्यायणिः, जायते अस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यति । इति निरुक्ते नैगमकाण्डे ।

अभूवन्। उत्तरपूर्वस्यान्दिशि गङ्गानदीवालुकोपमा लोकधातवो महताऽवभासेन स्फुटा अभूवन्। पूर्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमा लोकधातवो महताऽवभासेन स्फुटा अभूवन्। दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमा लोकधातवो महताऽवभासेन स्फुटा अभूवन्। पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमा लोकधातवो महताऽवभासेन स्फुटा अभूवन्। अधस्ताद्दिशि गङ्गानदीवालुकोपमा लोकधातवो महताऽवभासेन स्फुटा अभूवन्। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमा लोकधातवो महताऽवभासेन स्फुटा अभूवन्। यैश्च सत्त्वैः सोऽवभासो दृष्टो ये च तेनाऽवभासेन स्फुटास्ते सर्वे नियता अभूवन अनुत्तरायां सम्यक्सम्बोधौ(१)॥

अथ खलु भगवान् पुनरपि या सा तथागतस्य प्रकृतिप्रभा एतया *यस्त्रिसाहस्रमहासाहस्र लोकधातुं महताऽवभासेन स्फुरन्ति स्म। पूर्वस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूंस्तेन महताऽवभासेन स्फुरन्ति स्म। दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूंस्तेन महताऽवभासेन स्फुरन्ति स्म। पश्चिमायान्दिशि गङ्गानदीवालुकोपमान् लोकधातूंस्तेन महताऽवभासेन स्फुरन्ति स्म। उत्तरस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूंस्तेन महताऽव-

---

* एतया यस्त्रिसाहस्र इति पुस्तकचतुष्टये पाठ। एतये मस्त्रिसाहस्रेति पाठोयुक्त।

---

(१) नास्त्युत्तरं प्रधानं यस्या सेयमनुत्तरा सम्यक् अविपरीता सम्बोधिः सर्व्वाकाराभिसम्बोधिर्बुद्धभूमिरितियावत्।

भासेन स्फुरन्ति स्म। उत्तरपूर्वस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूंस्तेन महताऽवभासेन स्फुरन्ति स्म। पूर्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूंस्तेन महताऽवभासेन स्फुरन्ति स्म। दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमान् लोकधातूंस्तेन महताऽवभासेन स्फुरन्ति स्म। पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूंस्तेन महताऽवभासेन स्फुरन्ति स्म। अधस्ताद्दिशि गङ्गानदीवालुकोपमान् लोकधातूंस्तेन महताऽवभासेन स्फुरन्ति स्म। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमान् लोकधातूंस्तेन महताऽवभासेन स्फुरन्ति स्म। यैश्च सत्त्वैः सोऽवभासो दृष्टो ये च तेनाऽवभासेन स्पृष्टास्ते सर्वे नियता अभूवन् अनुत्तरायां सम्यक्सम्बोधौ।

अथ खलु भगवान् मुखद्वारा जिह्वेन्द्रियं निर्णमय्य सर्वावन्तमिमन्त्रिसाहस्रमहासाहस्रं लोकधातुं जिह्वेन्द्रियेण स्फुरित्वा स्मितं प्रादुरकार्षीत्। ततश्च जिह्वेन्द्रियादनेकानिनानावर्णानिरश्मिकोटीनियुतशतसहस्राणि निश्चरन्ति स्म। सर्वत्र च रश्म्यां नानारत्नमयानि सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि सन्तिष्ठन्ते स्म। चित्राणि च दर्शनीयानि मनोरमाणि सुवर्णानि सुगन्धीनि मृदूनि काचिलिन्दिक* सुखसंस्पर्शानि। तत्र च पद्मेषु तथागतविग्रहानिषण्णाधर्मन्देशयन्ति स्म। यदुतेमामेवषट्पारमिताप्रतिसंयुक्तां धर्मदेशनां। ते पूर्वस्यान्दिशि गङ्गानदीवालुकोपमां लोकधातु गच्छन्ति स्म। तत्रापि गत्वा धर्मं देशयन्ति स्म। यदुतेमामेवषट्पारमिताप्रतिसंयुक्तां

* काचिलिन्दिक इति पाठः पुस्तकचतुष्टये दृश्यते।

देवानां चातुर्महाराजिकानां त्रायस्त्रिंशानां यामानां तुषितानां निर्माणरतीनां परनिर्मितवशवर्तिनां देवानां सभागतताया उपपन्ना अभूवन् ॥

अथ ते मनुष्यास्ते च देवास्तेनैव प्रीतिप्रसादप्रामोद्येन पौर्विकीं जातिं समनुस्मरन्ति स्म । समनुस्मृत्य प्रीतिप्रसादप्रामोद्यप्रतिलम्भायेन भगवांस्तेनोपसङ्क्रामन्ति स्म । उपसङ्क्रम्य भगवन्तं नमस्यन्ति स्म ॥

अथ तेन क्षणलवमुहूर्त्तेन पूर्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वनरकाः सर्वतिर्यग्योनयः सर्वयमलोकाः समुच्छिन्नाः । सर्वाक्षणाश्चास्तमिता अभूवन् सर्वे च ते सत्त्वा मनुष्याणां देवानाञ्च सभागतताया उपपन्ना अभूवन् ॥

अथ ते मनुष्यास्ते च देवास्तेनैव च प्रीतिप्रसादप्रामोद्यजातेन पौर्विकीं जातिं समनुस्मरन्ति स्म । समनुस्मृत्य प्रीतिप्रसादप्रामोद्यप्रतिलब्धाः स्वकस्वकेषु बुद्धक्षेत्रेषु ये तत्र तथागता अर्हन्तः सम्यक्सम्बुद्धास्तिष्ठन्ति तानुपसङ्क्रामन्ति स्म । उपसङ्क्रम्य पादान् वन्दित्वा प्राञ्जलीभूतास्तांस्तथागतानर्हतः सम्यक्सम्बुद्धान्नमस्यन्ति स्म ॥

अथ तेन क्षणलवमुहूर्त्तेन दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वनरकाः सर्वतिर्यग्योनयः सर्वयमलोकाः समुच्छिन्नाः सर्वाक्षणाश्चास्तमिता अभूवन् । सर्वे च ते सत्त्वा मनुष्याणां देवानाञ्च सभागतताया उपपन्ना अभूवन् ॥

अथ ते मनुष्यास्ते च देवास्तेनैव प्रीतिप्रसादप्रामोद्यजातेन पौर्विकीं जातिं समनुस्मरन्ति स्म । समनुस्मृत्य प्रीतिप्रसादप्रामोद्यप्रतिलब्धाः स्वकस्वकेषु बुद्धक्षेत्रेषु ये तत्र तथागता अर्हन्तः सम्यक्सम्बुद्धास्तिष्ठन्ति तानुपसङ्क्रामन्ति स्म । उपसङ्क्रम्य

पादान् वन्दित्वा प्राञ्जलीभूतास्तांस्तथागतानर्हतः सम्यक्सम्बुद्धान्न-मस्यन्ति स्म ॥

अथ तेन क्षणलवमुहूर्त्तेन पश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वनरकाः सर्वतिर्यग्योनयः सर्वयमलोकाः समुच्छिन्नाः सर्वाक्षणाश्चास्तमिता अभूवन् । सर्वे च ते सत्त्वा मनुष्याणाञ्च देवानाञ्च सभागतायां उपपन्ना अभूवन् ॥

अथ ते मनुष्यास्ते च देवास्तेनैव प्रीतिप्रसादप्रामोद्यजातेन पौर्विकीं जातिं समनुस्मरन्ति स्म। समनुस्मृत्य प्रीतिप्रसादप्रामोद्य-प्रतिलब्धाः स्वकस्वकेषु बुद्धक्षेत्रेषु ये तत्र तथागता अर्हन्तः सम्यक्-सम्बुद्धास्तिष्ठन्ति। तानुपसङ्क्रामन्ति स्म। उपसङ्क्रम्य पादान् वन्दित्वा प्राञ्जलीभूतास्तांस्तथागतानर्हतः सम्यक्सम्बुद्धान्नमस्यन्ति स्म ॥

अथ तेन क्षणलवमुहूर्त्तेन उत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वनरकाः सर्वतिर्यग्योनयः सर्वयमलोकाः समुच्छिन्नाः सर्वाक्षणाश्चास्तमिता अभूवन्। सर्वे च ते सत्त्वामनुष्याणां देवानाञ्च सभागतायां उपपन्ना अभूवन् ॥

अथ ते मनुष्यास्ते च देवास्तेनैव प्रीतिप्रसादप्रामोद्यजातेन पौर्विकीं जातिं समनुस्मरन्ति स्म । समनुस्मृत्य प्रीतिप्रसादप्रामोद्य-प्रतिलब्धाः स्वकस्वकेषु बुद्धक्षेत्रेषु ये तत्र तथागता अर्हन्तः सम्यक्-सम्बुद्धास्तिष्ठन्ति तानुपसङ्क्रामन्ति स्म । उपसङ्क्रम्य पादान् वन्दित्वा प्राञ्जलीभूतास्तांस्तथागतानर्हतः सम्यक्सम्बुद्धान्नमस्यन्ति स्म ॥

अथ तेन क्षणलवमुहूर्त्तेनोत्तरपूर्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वनरकाः सर्वतिर्यग्योनयः सर्वयमलोकाः

समुच्छिन्नाः सर्वाक्षणाश्चास्तमिता अभूवन्। सर्वे च ते सत्त्वामनुष्याणां देवानां च सभागताया उपपन्ना अभूवन्॥

अथ ते मनुष्यास्ते च देवास्तेनैव प्रीतिप्रसादप्रामोद्यजातेन पौर्विकीं जातिं समनुस्मरन्ति स्म। समनुस्मृत्य प्रीतिप्रसादप्रामोद्यप्रतिलब्धाः स्वकस्वकेषु लोकधातुषु* बुद्धक्षेत्रेषु ये तत्र तथागता अर्हन्तः सम्यक्सम्बुद्धास्तिष्ठन्ति तानुपसङ्क्रामन्ति स्म। उपसंक्रम्य पादन् वन्दित्वा प्राञ्जलीभूतास्तांस्तथागतानर्हतः सम्यक्सम्बुद्धान्नमस्यन्ति स्म॥

अथ तेन क्षणलवमुहूर्त्तेन पूर्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वनरकाः सर्वतिर्यग्योनयः सर्वयमलोकाः समुच्छिन्नाः सर्वाक्षणाश्चास्तमिता अभूवन्। सर्वे च ते सत्त्वामनुष्याणां देवानां च सभागताया उपपन्ना अभूवन्॥

अथ ते मनुष्यास्ते च देवास्तेनैव प्रीतिप्रसादप्रमोद्यजातेन पौर्विकीं जातिं समनुस्मरन्ति स्म। समनुस्मृत्य प्रीतिप्रसादप्रमोद्यप्रतिलब्धाः स्वकस्वकेषु बुद्धक्षेत्रेषु ये तत्र तथागता अर्हन्तः सम्यक्सम्बुद्धा स्तिष्ठन्ति तानुपसंक्रामन्ति स्म। उपसंक्रम्य पादान् वन्दित्वा प्राञ्जलीभूतास्तांस्तथागतानर्हतः सम्यक्सम्बुद्धाचमस्यन्ति स्म॥

अथ तेन क्षणलवमुहूर्त्तेन दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वनरकाः सर्वतिर्यग्योनयः सर्वयमलोकाः समुच्छिन्नाः सर्वाक्षणाश्चास्तमिता अभूवन्। सर्वे च ते सत्त्वामनुष्याणां देवानां च सभागताया उपपन्ना अभूवन्॥

* लोकधातुषु इति पुस्तकचतुष्टये एकस्थल एव लिखितः।

अथ ते मनुष्यास्ते च देवास्तेनैव प्रीतिप्रसादप्रामोद्यजातेन पौर्विकीं जातिं समनुस्मरन्ति स्म। समनुस्मृत्य प्रीतिप्रसादप्रामोद्यप्रतिलब्धाः स्वकस्वकेषु बुद्धक्षेत्रेषु ये च तत्र तथागता अर्हन्तः सम्यक्सम्बुद्धास्तिष्ठन्ति तानुपसंक्रामन्ति स्म। उपसंक्रम्य पादान् वन्दित्वा प्राञ्जलीभूतास्तांस्तथागतानर्हतः सम्यक्सम्बुद्धान् नमस्यन्ति स्म॥

अथ तेन क्षणलवमुहूर्त्तेन पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वनरकाः सर्वतिर्यग्योनयः सर्वयमलोकाः समुच्छिन्नाः सर्वाक्षणाश्चास्तमिता अभूवन्। सर्वे च ते सत्त्वामनुष्याणां देवानां च सभागताया* उपपन्ना अभूवन्॥

अथ ते मनुष्यास्ते च देवास्तेनैव प्रीतिप्रसादप्रामोद्यजातेन पौर्विकीं जातिं समनुस्मरन्ति स्म। समनुस्मृत्य प्रीतिप्रसादप्रामोद्यप्रतिलब्धाः स्वकस्वकेषु बुद्धक्षेत्रेषु ये च तत्र तथागता अर्हन्तः सम्यक्सम्बुद्धास्तिष्ठन्ति तानुपसंक्रामन्ति स्म। उपसंक्रम्य पादान् वन्दित्वा प्राञ्जलीभूतास्तांस्तथागतानर्हतः सम्यक्सम्बुद्धान् नमस्यन्ति स्म॥

अथ तेन क्षणलवमुहूर्त्तेनाधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वनरकाः सर्वतिर्यग्योनयः सर्वयमलोकाः समुच्छिन्नाः सर्वाक्षणाश्चास्तमिता अभूवन्। सर्वे च ते सत्त्वामनुष्याणां देवानां च सभागताया उपपन्ना अभूवन्॥

अथ ते मनुष्यास्ते च देवास्तेनैव प्रीतिप्रसादप्रामोद्यजातेन पौर्विकीं जातिं समनुस्मरन्ति स्म। समनुस्मृत्य प्रीतिप्रसादप्रामोद्य-

* सभागता इति पाठः समीचीनः प्रतिभाति। एवं परत्र।

प्रतिलब्धाः स्वकस्वकेषु बुद्धक्षेत्रेषु ये तत्र तथागता अर्हन्तः सम्यक्-सम्बुद्धास्तिष्ठन्ति तानुपसंक्रामन्ति स्म। उपसंक्रम्य पादान् वन्दित्वा प्राञ्जलीभूतास्तांस्तथागतानर्हतः सम्यक्सम्बुद्धान्नमस्यन्ति स्म॥

अथ तेन क्षणलवमुहूर्त्तेन उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वनरकाः सर्वतिर्यग्योनयः सर्वयमलोकाः समुच्छिन्नाः सर्वाक्षणाश्चास्तमिता अभूवन्। सर्वे च ते सत्त्वा मनुष्याणां देवानां च सभागतायां उपपन्ना अभूवन्॥

अथ ते मनुष्यास्ते च देवास्तेनैव प्रीतिप्रसादप्रामोद्यजातेन पौर्विकीं जातिं समनुस्मरन्ति स्म। समनुस्मृत्य प्रीतिप्रसादप्रामोद्यप्रतिलब्धाः स्वकस्वकेषु बुद्धक्षेत्रेषु ये तत्र तथागता अर्हन्तः सम्यक्सम्बुद्धास्तिष्ठन्ति तानुपसङ्क्रामन्ति स्म। उपसंक्रम्य पादान् वन्दित्वा प्राञ्जलीभूतास्तांस्तथागतानर्हतः सम्यक्सम्बुद्धान्नमस्यन्ति स्म॥

अथ खलु तेन तत्क्षणेनैव ये अस्मिंस्त्रिसाहस्रमहासाहस्रे लोकधातौ जात्यन्धाः सत्त्वास्तेऽपि सर्वे चक्षुषा रूपाणि पश्यन्ति स्म। बधिराः श्रोत्रेण शब्दान् शृण्वन्ति स्म। उन्मत्ताः स्मृतिं प्रतिलभन्ते स्म। विक्षिप्तचित्ताः अविक्षिप्तचित्ततां प्रतिलभन्ते स्म। नग्नाश्चीवराणि प्रतिलभन्ते स्म। दरिद्रा धनानि प्रतिलभन्ते स्म। जिघत्सिता भोजनानि प्रतिलभन्ते स्म। पिपासिताः पानीयं प्रतिलभन्ते स्म। रोगस्पृष्टा अरोगा अभूवन्। हीनकाया विकलेन्द्रियाः परिपूर्णकायेन्द्रिया अभूवन्। क्लान्तकाया अक्लान्तकाया अभूवन्। अविरताकुशलकायवाङ्मनस्कर्मान्ताजीवा विगताकुशलकायवाङ्-मनस्कर्मान्ताजीवा भवन्ति स्म। सर्वसत्त्वाश्च सर्वसत्त्वेषु समचित्ता-

अभूवन्। यदुत मातापितृभ्रातृभगिनीमित्रज्ञातिसहायसमर्पिताः सर्वसत्त्वास्य कुशलकर्मपथसमन्वागता अभूवन्। ब्रह्मचारिणः शुचयो-निरामगन्धाः सर्वाकुशलवितर्कविगताः सर्वसत्त्वाश्च तस्मिन् समये सर्वसुखसमर्पिता अभूवन्। एवं रूपेण सुखेन समन्वागताः। तद्यथाऽपि नाम तृतीयध्यानसमापन्नस्य भिक्षोः सुखम्। सर्वसत्त्वाश्च तस्मिन् समये एवंरूपया प्रज्ञया समन्वागता अभूवन्। यदेवं जानन्ति स्म। साधु दानं साधु धर्मः साधु संयमः साधु सत्यं साध्वप्रमादः साधु मैत्री साधु करुणा साध्वविहिंसा साधु सर्वप्राणिभूतेषु॥

अथ भगवान् तस्मिन्नेव सिंहासने निषण्ण इमं त्रिसाहस्र-महासाहस्रं लोकधातुं सुमेरुं सचक्रवाडं सदेवभवनं सेन्द्रकं सेन्दुसूर्य-गभस्तिकं सदेवदानवकायं सब्रह्मकं सशुद्धावासमभिभूय स्थितः शोभते भासते तपति विरोचते आभया वर्णेन तेजसा श्रिया॥

तद्यथाऽपि नाम बलवान्दिवाकरः परिशुद्धगगणतले पौर्ण-मास्यां वा चन्द्रमण्डलं, तथाच भगवानिमन्त्रिसाहस्रमहासाहस्रं लोकधातुमभिभूय स्थितः शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

एवं पूर्वस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनभि-भूय स्थितः शोभते भासते तपति विरोचते आभया वर्णेन तेज-सा श्रिया॥

एवं दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनभि-भूय स्थितः शोभते भासते तपति विरोचते आभया वर्णेन तेज-सा श्रिया॥

एवं पश्चिमायान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनभिभूय स्थितः शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

एवमुत्तरस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनभिभूय स्थितः शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

एवमुत्तरपूर्वस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनभिभूय स्थितः शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

एवं पूर्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनभिभूय स्थितः शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

एवं दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनभिभूय स्थितः शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

एवं पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनभिभूय स्थितः शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

एवमधस्ताद्दिशि गङ्गानदीवालुकोपमान् लोकधातुनभिभूय स्थितः शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

एवमुपरिष्टाद्दिशि गङ्गानदीवालुकोपमान् लोकधातूनभिभूय

स्थितः शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

तद्यथाऽपि नाम सुमेरुः पर्वतराजः सर्वांस्तांश्चान्यान् कालपर्वता*नभिभूय स्थितः शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

तद्यथाऽपि नाम चन्द्रमण्डलं सर्वतारारूपाण्यभिभूय स्थितं शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

तद्यथाऽपि नाम सूर्यमण्डलं सर्वांस्तदन्यानवभासानभिभूय स्थितं शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

एवमेव भगवान् दशसु दिक्षु सदेवकं लोकं सेन्द्रकं सब्रह्मकं शुद्धावासमभिभूय स्थितः शोभते भासते तपति विरोचते। आभया वर्णेन तेजसा श्रिया॥

अथ भगवान् पुनरपि यादृशोभगवतः प्रकृत्यात्मभावः तादृशमिमस्त्रिसाहस्रमहासाहस्रे लोकधातावुपदर्शयति स्म॥

अथ यावन्तोऽस्मिन् त्रिसाहस्रमहासाहस्रे लोकधातौ शुद्धावासकायिकादेवनिकाया आभास्वरा ब्रह्मकायिकाः परनिर्मितवशवर्त्तिनो निर्माणरतयः तुषिता यामास्त्रायस्त्रिंशाश्चातुर्महाराजकायिकादेवनिकायास्ते सर्वे सिद्दासने निषस्तं तथागतमर्हन्तं सम्यक् सम्बुद्धं पश्यन्ति स्म†। ते तुष्टा उदग्रा आत्तमनस्काः प्रमुदिताः प्रीतिसौमनस्यजाता दिव्यानि पुष्पाण्यादाय दिव्यानि माल्यानि दिव्यानि

* कुलपर्व्वतानिति पाठः सङ्गत· प्रतिभाति।

† ग। पुस्तके पश्यन्ति इति पाठः।

गन्धानि दिव्यानि विलेपनानि दिव्यानि चूर्णानि दिव्यानि वासांसि दिव्यान्युत्पलकुमुदपुण्डरीकनलिनसौगन्धिकानि केशरतमालपत्राणि दिव्यानि वस्त्राणि दिव्यान्याभरणानि दिव्यानि छत्राणि दिव्याध्वजा दिव्याः पताकाश्च गृहीत्वा येन भगवांस्तेनोपसंक्रामन्ति स्म, उपसंक्रम्य* भगवन्तमभिपूजयन्ति स्म। सर्वाणि च तानि पुष्पमाल्यविलेपनचूर्णादीनि गन्धवस्त्राभरणानि छत्रध्वजपताकाश्च समनन्तरमेव भगवतोऽधिष्ठानेन त्रिसाहस्रमहासाहस्रलोकधातुप्रमाणे भगवतः उपरि वैहायसे सर्वसत्त्वोभयपुण्यादिकूटागारः संस्थितोऽभूत्। ततश्च कूटागाराद् दिव्यानि पुष्पाणि पुष्पपट्टदामानि लम्बन्ते स्म प्रलम्बन्ते स्म अभिप्रलम्बन्ते स्म। तैश्च पुष्पपट्टदामाभिरयं† त्रिसाहस्रमहासाहस्रो लोकधातुरभिशोभते स्म। तेन च सुवर्णवर्णेन भगवतः प्रभाऽवभासेनात्यर्थं शोभते भासते तपति विरोचते स्म। यथा चायं त्रिसाहस्रमहासाहस्रो लोकधातुरेवं पूर्वस्यां दिशि गङ्गानदीवालुकोपमा लोकधातवस्तेन भगवतः प्रभाऽवभासेन स्फुटा-

---

* तै पुष्पैर्माल्यैर्गन्धैर्विलेपनैश्चूर्णैर्वासैरुत्पलपद्मकुमुदपुण्डरीकनलिनसौगन्धिकैः केशरतमालपत्रवस्त्रैराभरणैः छत्रैर्ध्वजैः पताकाभिर्भगवन्तमवकिरन्ति स्म। अभ्यवकिरन्ति स्म। अभिप्राकिरन्ति स्म। ये च त्रिसाहस्रमहासाहस्रे लोकधातौ मनुष्यास्ते विनेयाभाजनीभूतास्ते जलजस्थलजानि पुष्पाणि गृहीत्वा येन भगवांस्तेनोपसंक्रामन्ति स्म। उपसंक्रम्य भगवन्तमभिपूजयन्ति स्म। इत्यधिकः पाठः ख। ग। घ पुस्तके दृश्यते।

† दामाभिरिति पुस्तकचतुष्टये पाठः। दामभिरिति पाठो युक्तः।

अभूवन्। दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमाल्लोकधातवस्तेन भगवतः प्रभाऽवभासेन स्फुटा अभूवन्। पश्चिमायान्दिशि गङ्गानदीवालुकोपमालोकधातवस्तेन भगवतः प्रभाऽवभासेन स्फुटा अभूवन्। उत्तरस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवस्तेन भगवतः प्रभाऽवभासेन स्फुटा अभूवन्। उत्तरपूर्वस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवस्तेन भगवतः प्रभाऽवभासेन स्फुटा अभूवन्। पूर्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवस्तेन भगवतः प्रभाऽवभासेन स्फुटा अभूवन्। दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमालोकधातवस्तेन भगवतः प्रभाऽवभासेन स्फुटा अभूवन्। पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवस्तेन भगवतः प्रभाऽवभासेन स्फुटा अभूवन्। अधस्ताद्दिशि गङ्गानदीवालुकोपमालोकधातवस्तेन भगवतः प्रभाऽवभासेन स्फुटा अभूवन्। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमालोकधातवस्तेन भगवतः प्रभाऽवभासेन स्फुटा अभूवन्। तत्र जाम्बुद्वीपकानां मनुष्याणां तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णो* धर्मं देशयति। यथा च जाम्बुद्वीपकानां मनुष्याणामेवं गोदानीयानां मनुष्याणान्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतः तथागतो निषण्णो धर्मं देशयतीति। पौर्वविदेहकानां मनुष्याणान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णो धर्मं देशयतीति। उत्तरकौरवाणां मनुष्याणां तत्तथागत-

* निषण्ण इति पुस्तकचतुष्टये पाठः।

स्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो-निषण्णो धर्मं देशयतीति। चातुर्महाराजकायिकानां देवानान्तत्तथा-गतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतः तथागतो-निषण्णो धर्मं देशयतीति। त्रायत्रिंशानां देवानान्तत्तथागतस्यासेचन-कदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णो धर्मं देशयतीति। यामानान्देवानान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णो धर्मं देशयतीति। तुषि-तानां देवानान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूद-स्माकं पुरस्तथागतो निषण्णो धर्मं देशयतीति। निर्माणरतीनां देवा-नान्तत्तथागतस्यासेचनकदर्शनमाभत्मावं दृष्ट्वा एतदभूदस्माकं पुरतस्त-थागतो निषण्णो धर्मं देशयतीति। परनिर्मितवशवर्त्तिनां देवानान्त-त्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथा-गतोनिषण्णो धर्मं देशयतीति। ब्रह्मकायिकानां देवानान्तत्तथागत-स्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णो धर्मं देशयतीति। ब्रह्मपुरोहितानां देवानान्तत्तथागतस्यासेचनक-दर्शनमात्मभाव दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतोनिषण्णो धर्मं देश-यतीति। ब्रह्मपार्षद्यानां देवानान्तत्तथागतस्यासेचनकदर्शनमात्म-भाव दृष्ट्वा एतदभूदस्माक पुरतस्तथागतो निषण्णो धर्मं देशयतीति। महाब्रह्माणां देवानान्तत्तथागतस्यासेचकनदर्शनमात्मभावं दृष्ट्वा एत-दभूदस्माकं पुरतस्तथागतो निषण्णो धर्मं देशयतीति। आभानां देवा-नान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्त-थागतो निषण्णो धर्मं देशयतीति। परीत्ताभानान्देवानान्तत्तथागत-

स्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णो धर्मन्देशयतीति। अप्रमाणाभानां देवानान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णो धर्मन्देशयतीति आभास्वराणां देवानान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णो धर्मन्देशयतीति॥

आभानांदेवानान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णो धर्मन्देशयतीति। परीत्तशुभानां देवानान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णो धर्मन्देशयतीति। अप्रमाणशुभानां देवानान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णो धर्मन्देशयतीति। शुभकृत्स्नानां देवानान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णो धर्मन्देशयतीति। वृहाणां देवानां तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतोनिषण्णोधर्मन्देशयतीति। परीत्तवृहाणां देवानान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतोनिषण्णोधर्मन्देशयतीति। अप्रमाणवृहाणां देवानान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णोधर्मन्देशयतीति। वृहत्फलानां देवानान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णोधर्मन्देशयतीति। अवृहाणां देवानान्तत्तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा एतदभूदस्माकं पुरतस्तथागतो निषण्णोधर्मन्देशयतीति। अतपानां देवानान्तत्तथागतस्यासेच-

लोकधातवोऽवभापिताश्चभूवन् । उत्तरपूर्वस्यान्दिशि गङ्गानदीवालुकोपमा लोकधातवोऽवभापिता अभूवन् । पूर्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमा लोकधातवो अवभापिता अभूवन् । दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमालोकधातवोऽवभापिता अभूवन् । पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवोऽवभापिता अभूवन् । अधस्ताद्दिशि गङ्गानदीवालुकोपमालोकधातवोऽवभापिताश्चभूवन् । उपरिष्टाद्दिशि गङ्गानदीवालुकोपमालोकधातवोऽवभापिताश्चभूवन् । येनावभासेनय इमां* त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वास्ते सर्वे पूर्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तथागतानर्हतः सम्यक् सम्बुद्धान् सश्रावकान् बोधिसत्त्वपरिवारान् पश्यन्ति स्म । तत्र च पूर्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तेपीमं त्रिसाहस्रमहासाहस्रं लोकधातुं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् सम्बुद्धं सभिक्षुसङ्घं बोधिसत्त्वपरिवारं पश्यन्ति स्म । तत्र च दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तेऽपीमं त्रिसाहस्रमहासाहस्रं लोकधातुं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् सम्बुद्धं सभिक्षुसङ्घं बोधिसत्त्वपरिवारं पश्यन्ति स्म । तत्र च पश्चिमायान्दिशि गङ्गानदीवालिकोपमेषु लोकधातुषु सत्त्वास्तेऽपीमं त्रिसाहस्रमहासाहस्रं लोकधातुं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् सम्बुद्धं सभिक्षुसङ्घं बोधिसत्त्वपरिवारं पश्यन्ति स्म । तत्र चोत्तरस्यान्दिशि गङ्गानदी-

* इमा इति पुस्तकचतुष्टये पाठः । इमे इति पाठोयुक्तः ।

† पुस्तकचतुष्टये ये पाठ· क्वचित् क्वचित् दृश्यते वस्तुतः सर्वमेव ये इत्यस्य स्थितिरुचिता ।

वालुकोपमेषु लोकधातुषु सत्त्वास्तेऽपीमं त्रिसाहस्रमहासाहस्रं लोकधातुं भगवन्तं च शाक्यमुनिं तथागतमर्हन्तं सम्यक् सम्बुद्धं सभिक्षुसङ्घं बोधिसत्त्वपरिवारं पश्यन्ति स्म। तत्र चोत्तरपूर्वस्यान्दिशि ये गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तेऽपीमं त्रिसाहस्रमहासाहस्रं लोकधातुं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् सम्बुद्धं सभिक्षुसङ्घं बोधिसत्त्वपरिवारं पश्यन्ति स्म। तत्र च पूर्वदक्षिणस्यान्दिशि ये गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तेऽपीमं त्रिसाहस्रमहासाहस्रं लोकधातुं भगवन्तं च शाक्यमुनिं तथागतमर्हन्तं सम्यक् सम्बुद्धं सभिक्षुसङ्घं बोधिसत्त्वपरिवारं पश्यन्ति स्म। तत्र च दक्षिणपश्चिमायान्दिशि ये गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तेऽपीमन्त्रिसाहस्रमहासाहस्रं लोकधातुं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् सम्बुद्धं सभिक्षुसङ्घं बोधिसत्त्वपरिवारं पश्यन्ति स्म। तत्र च पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तेऽपीमन्त्रिसाहस्रमहासाहस्रं लोकधातुं भगवन्तं शाक्यमुनिं तथागमर्हतन्तं सम्यक् सम्बुद्धं सश्रावकं* सङ्घं बोधिसत्त्वपरिवारं पश्यन्ति स्म। तत्रचाधस्ताद्दिशि ये† गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तेपीमन्त्रिसाहस्रमहासाहस्रं लोकधातुं भगवन्तञ्च‡ शाक्यमुनिस्तथागतमर्हन्तं सम्यक्

* क, ग पुस्तके सश्रावकसङ्घं इति पाठः। ख, घ पुस्तके सभिक्षुसङ्घं इति पाठः।

† ये इति पाठ सर्वस्थले पुस्तकचतुष्टये न दृश्यते।

‡ भगवन्तञ्चेति चकारो न सर्वस्थले पुस्तकचतुष्टये दृश्यते। किन्तु सर्वत्रैव स्यात्समुचितः।

सम्बुद्धं सभिक्षुसङ्घं बोधिसत्त्वपरिवारं पश्यन्ति स्म। तत्र चोपरिष्टाद्दिशि ये गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तेऽपीमं त्रिसाहस्रमहासाहस्रं लोकधातुं भगवन्तञ्च शाक्यमुनिं तथागतमर्हन्तं सम्यक् सम्बुद्धं सभिक्षुसङ्घं सबोधिसत्त्वगणपरिवारं* पश्यन्ति स्म॥

अथ पूर्वस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य यः सर्व्वपश्चिमो लोकधातुः रत्नावती नाम तत्र रत्नाकरो नाम तथागतोऽर्हन् सम्यक् सम्बुद्धस्तिष्ठति ध्रियते यापयति स इमामेव प्रज्ञापारमितां बोधिसत्त्वेभ्यो महासत्त्वेभ्यः सम्प्रकाशयति॥

अथ तत्र लोकधातौ समन्तरश्मिर्नाम बोधिसत्त्वोमहासत्त्वस्तं महान्तमवभासन्तञ्च महान्तं पृथिवीचालन्तञ्च तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा येन भगवान् रत्नाकरस्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनोपसंक्रान्तः। उपसंक्रम्य तं भगवन्तं तथागतमर्हन्तं सम्यक् सम्बुद्धमेतदवोचत्। को भगवन् हेतुः कः प्रत्ययः योऽस्य महतोऽवभासस्य लोके प्रादुर्भावाय अस्य च महतः पृथिवीचालस्य अस्य चेदृशस्य तथागतकायस्य सन्दर्शनाय॥

एवमुक्ते भगवान् रत्नाकरस्तथागतोऽर्हन् सम्यक् सम्बुद्धस्तं समन्तरश्मिं बोधिसत्त्वं महासत्त्वमेतदवोचत्। एष कुलपुत्र पश्चिमायान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य सहा नाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तिष्ठति ध्रियते यापयति स बोधिसत्त्वेभ्यो महासत्त्वेभ्यः प्रज्ञापारमितां सम्प्रकाशयति। तस्यैष ईदृशोऽनुभावः॥

* सबोधिसत्त्वगणपरिवारमिति क, ग पुस्तके पाठः। बोधिसत्त्वपरिवारमिति ख, घ पुस्तके पाठः।

अथ समन्तरश्मिर्बोधिसत्त्वोमहासत्त्वस्तं भगवन्तं रत्नाकरन्तथागतमर्हन्तं सम्यक् सम्बुद्धमेतदवोचत् । गच्छेयमहं भगवंस्तां सहां लोकधातुं तस्य भगवतः शाक्यमुनेस्तथागतस्यार्हतः सम्यक् सम्बुद्धस्य दर्शनाय वन्दनाय पर्य्युपासनाय तेषाञ्च बोधिसत्त्वानां महासत्त्वानां सर्वेषां प्रायःकुमारभूतानां धारणीप्रतिलम्भिनिर्हार* प्रतिलब्धानां सर्वसमाधिसमापत्तिवशितामप्राप्तानाम् । भगवान् रत्नाकरस्तथागत आह । गच्छत्वं कुलपुत्र तां सहां लोकधातुं यस्येदानीं कालं मन्यसे॥

अथ रत्नाकरस्तथागतोऽर्हन् सम्यक् संबुद्धो नानारत्नमयानां सुवर्णनिर्भासानां सहस्रपत्राणां पद्मानां सहस्रं समन्तरश्मये बोधिसत्त्वाय महासत्त्वाय प्रादात् । एभिः कुलपुत्र पद्मैस्त्वं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् संबुद्धं अभ्यवकिर सम्प्रजान विहारी च तत्र बुद्धक्षेत्रे भवेत् । तत्कस्य हेतोर्दुरासदाहिते बोधिसत्त्वा-महासत्त्वा ये तत्र लोकधातावुपपन्नास्ता तत्र चर्य्याः ॥

अथ समन्तरश्मिर्बोधिसत्त्वोमहासत्त्वस्तस्य भगवतोरत्नाकरस्य तथागतस्यार्हतः सम्यक्संबुद्धस्यान्तिकात्तानि सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि गृहीत्वानेकैर्बोधिसत्त्व कोटीनियुतशतसहस्रैः सार्द्धं गृहस्थैः प्रव्रजितैश्च दारकदारिकारूपिभिश्च ततो बुद्धक्षेत्रादन्तर्हितो यावन्तः पूर्वस्यान्दिशि बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति तान् सर्वान् सत् कुर्वन् गुरुकुर्वन् मानयन् पूजयन् पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिर्महत्याबोधिसत्त्वर्धामहता

---

* निर्हार इति ख, ग पुस्तके पाठ ।

† वसिता इति पुस्तकचतुष्टये पाठः । वशिता इति पाठोयुक्तः ।

बोधिसत्त्वानुभावेन । येन भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् संबुद्धस्तेनोपसंक्रान्तः उपसंक्रम्य भगवतः पादौ शिरसाभिवन्दित्वा एकान्तेऽस्थितः समन्तरश्मिर्बोधिसत्त्वोमहासत्त्वो भगवन्तमेतदवोचत् । रत्नाकरोभगवंस्तथागतोऽर्हन् सम्यक् संबुद्धो भगवतोऽल्पाबाधतां परिपृच्छत्यल्पातङ्कतां च लघूत्थानतां बलं सुखस्पर्शविहारतां च । इमानि च तेन भगवता रत्नाकरेण तथागतेनार्हता सम्यक् संबुद्धेन सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि प्रणिहितानि भगवतः पूजाकर्मणे ॥

अथ भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् संबुद्धस्तानि पद्मानि गृहीत्वा येन ते पूर्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तथागता अर्हन्तः सम्यक् संबुद्धास्तेनाक्षैप्सीत् ॥

अथ तैः पद्मैस्ते सर्वलोकधातवः स्फुटा अभूवन् तत्र च पद्मेषु तथागतविग्रहानिषण्णा धर्मं देशयन्ति स्म । यदुतेमामेव* षट्पारमिता आरभ्य येच सत्त्वैः साधर्मदेशनाश्रुता ते सर्वेनियता अभूवन्ननुत्तरायां सम्यक् सम्बोधौ(१) । तेऽपि बोधिसत्त्वागृहस्थाश्च प्रव्रजिताश्च दारकदारिकाश्च स्वकस्वकैः कुशलमूलैर्भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् संबुद्धं सत्कुर्वन्ति स्म । गुरुकुर्वन्ति स्म । मानयन्ति स्म । पूजयन्ति स्म । दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमाल्लोकधातूनतिक्रम्य यः सर्वपश्चिमोलोकधातुः सर्वशोकापगतो नाम

* इमामेव इति पुस्तकचतुष्टये पाठः । इमा एव इति पाठोयुक्तः ।

(१) नास्त्युत्तरं प्रधानं यस्याः सेयमनुत्तरा सम्यक् अविपरीता सम्बोधिः सर्व्वाकाराभिसम्बोधिर्बुद्धभूमिरिति यावत् ।

तत्राशोकश्रीर्नाम तथागतोऽर्हन् सम्यक् संबुद्धस्तिष्ठति ध्रियते यापयति। स इमामेव प्रज्ञापारमितां बोधिसत्त्वेभ्यो महासत्त्वेभ्य' सम्प्रकाशयति॥

अथ तत्र लोकधातौ विगतशोको नाम बोधिसत्त्वोमहासत्त्वस्तं महान्तमवभासं तं च महान्तं पृथिवीचालन्तस्य तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा येन स भगवानशोकश्रीस्तथागतोऽर्हन् सम्यक् संबुद्धस्तेनोपसंक्रान्तः उपसंक्रम्यतं भगवन्तमशोकश्रियं तथागतं सम्यक् संबुद्धमेतदवोचत्। को भगवन् हेतुः कः प्रत्ययोऽस्य महतोऽवभासस्य लोके प्रादुर्भावायास्य च महतः पृथिवीचालस्य, चेदृशस्य तथागतकायस्य सन्दर्शनाय। एवमुक्ते भगवानशोकश्रीस्तथागतोऽर्हन् सम्यक् संबुद्धस्तं विगतशोकं बोधिसत्त्वं महासत्त्वमेतदवोचत्। एष कुलपुत्र उत्तरस्यान्दिशि गङ्गानदीवालुकोपमाल्लोकधातूनतिक्रम्य सहानाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक् संबुद्धस्तिष्ठति ध्रियते यापयति। स बोधिसत्त्वेभ्यो महासत्त्वेभ्यः प्रज्ञापारमितां सम्प्रकाशयति। तस्यैष ईदृशोऽनुभावः॥

अथ विगतशोको बोधिसत्त्वोमहासत्त्वस्तं भगवन्तमशोकश्रियं तथागतमर्हन्तं सम्यक् संबुद्धमेतदवोचत्। गच्छेयमहं भगवंस्तां सहां लोकधातुं तस्य शाक्यमुनेस्तथागतस्यार्हतः सम्यक् संबुद्धस्य दर्शनाय वन्दनाय पर्य्युपासनाय तेषां च बोधिसत्त्वानां महासत्त्वानां सर्वेषां प्रायः कुमारभूतानां धारणीप्रतिसम्विन्निर्हार प्रतिलब्धानां सर्वसमाधिसमापत्तिवशिता प्राप्तानाम्। स भगवानशोकश्रीस्तथागत आह। गच्छत्वं कुलपुत्र तां सहां लोकधातुं यस्येदानीं कालं मन्यसे॥ •

अथ भगवानशोकश्रीस्तथागतोऽर्हन् सम्यक् संबुद्धो नानारत्नमयानां सुवर्णनिर्भासानां सहस्रपत्राणां पद्मानां सहस्रं विगतशोकाय बोधिसत्त्वायमहासत्त्वाय प्रादात्। एभिः कुलपुत्र पद्मैस्तं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् संबुद्धमभ्यवकिर सम्यग्ज्ञानहारी च कुलपुत्र तत्र बुद्धक्षेत्रे भवेत्। तत्कस्य हेतोर्दुरासदाहिते बोधिसत्त्वामहासत्त्वाः ये तत्र लोकधातावुपपन्ना भा तत्र क्षणेयाः॥

अथ विगतशोको बोधिसत्त्वोमहासत्त्वतस्य भगवतोऽशोकश्रियस्तथागतस्यार्हतः सम्यक्संबुद्धस्यान्तिकात्तानि सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि गृहीत्वानेकैर्बोधिसत्त्वकोटीनियुतशतसहस्रैः सार्द्धं गृहीस्थैः प्रव्रजितैश्च दारकदारिकारूपिभिश्च ततो बुद्धक्षेत्रादन्तर्हितोयावन्तोदक्षिणस्यान्दिशि बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति* सत्कुर्वन् गुरुकुर्वन् मानयन् पूजयन् पुष्पधूपगन्धमाल्यविलेपनचूर्णवस्त्राभरणच्छत्रध्वजपताकाभिर्महत्याबोधिसत्त्वर्धामहता बोधिसत्त्वानुभावेन येन भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् संबुद्धस्तेनोपसंक्रान्तः उपसंक्रम्य भगवतः पादौ शिरसावन्दित्वा एकान्तेस्थात् एकान्तेस्थितश्च विगतशोको बोधिसत्त्वोमहासत्त्वो भगवन्तमेतदवोचत्। अशोकश्रीर्भगवंस्तथागतोऽर्हन् सम्यक् संबुद्धो भगवतोऽल्पाबाधतां परिपृच्छत्यल्पातङ्कतां लघूत्थानतां बलं सुख स्पर्शविहारताञ्च। इमानि च तेन भगवता अशोकश्रिया तथागतेनार्हता सम्यक् संबुद्धेन सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि प्रहितानि† भगवतः पूजाकर्मणे॥

* तान् सर्वान् इति ख, घ, पुस्तके पाठोऽधिकः।

† प्रणिहितानि इति ग, ङ, पुस्तके पाठः।

अथ भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् संबुद्धस्तानि पद्मानि गृहीत्वा येन ते दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तथागता अर्हन्तः सम्यक् संबुद्धास्तेनाक्षैप्सीत् ॥

अथ तैः पद्मैस्सर्वलोकधातवः स्फुटा अभूवन्। तत्र च पद्मेषु तथागतविग्रहाश्रिषसाधर्म्मं देशयन्ति स्म। यदुतेमामेव षट्पारमिता*मारभ्य येषां सत्त्वैः साधर्म्मदेशनाश्रुता ते सर्वे नियता अभूवन्ननुत्तरायां सम्यक् सम्बोधौ। तेपि बोधिसत्त्वागृहस्थाः प्रव्रजितास्च दारकदारिकास्च स्वकस्वकैः कुशलमूलैर्भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् संबुद्धं सत्कुर्वन्ति स्म गुरुकुर्वन्ति स्म मानयन्ति स्म पूजयन्ति स्म। पश्चिमायान्दिशि गङ्गानदीवालुकोपमां†लोकधातूननतिक्रम्य यः सर्वपश्चिमोऽलोकधातुरुपशान्ता नाम लोकधातुस्तत्र रत्नार्चिर्नाम तथागतोऽर्हन् सम्यक् संबुद्धस्तिष्ठति ध्रियते यापयति। स इमामेव प्रज्ञापारमितां बोधिसत्त्वेभ्यो महासत्त्वेभ्यः सम्प्रकाशयति ॥

अथ तत्र लोकधातौ चारित्रमतिर्नाम बोधिसत्त्वस्तं महान्तमवभासन्तञ्च महान्तं पृथिवीचालनं च तथागतस्यासेचनकदर्शनमात्मभावं दृष्ट्वा येन स भगवान् रत्नार्चिस्तथागतोऽर्हन् सम्यक् संबुद्धस्तेनोपसंक्रान्तः उपसंक्रम्य भगवन्तं रत्नार्चिषं तथागतमर्हन्तं सम्यक् संबुद्धमेतदवोचत्। को भगवन् हेतुः कः प्रत्ययोऽस्य

* पारमिता चारभ्येति ख, ग, घ, पुस्तके पाठः।

† वालुकोपमान् इति ख, ग, घ, पुस्तके पाठः।

‡ पुस्तकचतुष्टये लोकधातुशब्दस्य पुनः पाठोदृश्यते।

महतोऽवभासस्य लोके प्रादुर्भावायास्य च महतः पृथिवीचालस्य चेदृशस्य तथागतकायस्य सन्दर्शनाय। एवमुक्ते भगवान् रत्नार्चि-स्तथागतोऽर्हन् सम्यक् संबुद्धस्तं चारित्रमतिं बोधिसत्त्वं महासत्त्व-मेतदवोचत्। एष कुलपुत्र पूर्वस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य सहा नाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्संबुद्धस्तिष्ठति ध्रियते यापयति। स बोधि-सत्त्वेभ्योमहासत्त्वेभ्यः प्रज्ञापारमितां सम्प्रकाशयति। तस्यैव ईदृशोऽनुभावः॥

अथचारित्रमतिर्बोधिसत्त्वो महासत्त्वस्तं भगवन्तं रत्नार्चिषं तथा-गतमर्हन्तं सम्यक् संबुद्धमेतदवोचत्। गच्छेयमहं भगवंस्तां सहां लोकधातुं तस्य भगवतः शाक्यमुनेस्तथागतस्यार्हतः सम्यक् संबुद्धस्य दर्शनाय वन्दनाय पर्युपासनाय। तेषां च बोधिसत्त्वानां महा-सत्त्वानां सर्वेषां प्रायः कुमारभूतानां धारणीप्रतिसम्विन्निर्हार-प्रतिलब्धानां सर्वसमाधिसमापत्तिवशिताप्राप्तानाम्। स भगवान् रत्नार्चिस्तथागत आह। गच्छत्वं कुलपुत्र तां सहां लोकधातुं यस्ये-दानीं कालं मन्यसे॥

अथ रत्नार्चिस्तथागतोऽर्हन् सम्यक् संबुद्धोनानारत्नमयानां सुवर्णनिर्भासानां सहस्रपत्राणां पद्मानां सहस्रं चारित्रमतये बोधिसत्त्वाय महासत्त्वाय प्रादात्। एभिः कुलपुत्र पद्मैस्तं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् संबुद्धमभ्यवकिर सम्प्रजानचारी च कुलपुत्र तत्र बुद्धक्षेत्रे भवेत्। तत्कस्य हेतोर्दुरासदा हि ते बोधिसत्त्वामहासत्त्वाये तत्र लोकधातावुपपन्ना मा तत्र क्षणेथाः॥

मर्हन्तं सम्यक्सम्बुद्धमेतदवोचत्। गच्छयमहं भगवंस्तां सहां लोकधातुन्तस्य भगवतः शाक्यमुनेस्तथागतस्यार्हतः सम्यक् संबुद्धस्य दर्शनाय वन्दनाय पर्य्युपासनाय तेषाञ्च बोधिसत्त्वानां महासत्त्वानां सर्वेषां प्रायः कुमारभूतानां धारणी प्रतिसम्विनिर्हारप्रतिलब्धानां सर्वसमाधिसमापत्तिवशिताप्राप्तानां स भगवान् जायेन्द्रस्तथागत आह। गच्छत्वं कुलपुत्र तां सहां लोकधातुं यस्येदानीङ्कालं मन्यसे॥

अथ जायेन्द्र स्तथागतोऽर्हन् सम्यक् सम्बुद्धो नानारत्नमयानां सुवर्णनिर्भासानां सहस्रपत्राणां पद्मानां सहस्रं जयदत्ताय बोधिसत्त्वाय महासत्त्वाय प्रादात्। एभिः कुलपुत्र पद्मैस्तं भगवन्तं सम्यक् सम्बुद्धमभ्यवकिर। सम्प्रजान विहारीच कुलपुत्र तत्र बुद्धक्षेत्रे भवेत् तत् कस्य हेतोर्दुरासदाहिते बोधिसत्त्वा महासत्त्वा ये तत्र लोकधातावुपपन्ना मा तत्र क्षयेथाः॥

अथ जयदत्तो बोधिसत्त्वोमहासत्त्वस्तस्य भगवतो जायेन्द्रस्य तथागतस्यार्हतः सम्यक् संबुद्धस्यान्तिकात्तानि सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि गृहीत्वानेकै र्बोधिसत्त्वकोटीनियुतशतसहस्रैः सार्द्धं गृहस्थैः प्रव्रजितैश्च दारकदारिकारूपिभिश्च ततो बुद्धक्षेत्राद्न्तर्हितोयावन्तः उत्तरस्यान्दिशि बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्तितान् सर्वान् सत्कुर्वन् गुरुकुर्वन्मानयन् पूजयन् पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिः महत्या बोधिसत्त्वर्ध्यामहता बोधिसत्त्वानुभावेन येन भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् संबुद्धस्तेनोपसंक्रान्तः उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्तेऽस्थात् एकान्तेस्थितोजयदत्तोबोधिसत्त्वोमहासत्त्वो

भगवन्तमेतदवोचत्। आर्येन्द्रो भगवंस्तथागतोऽर्हन् सम्यक् संबुद्धो भगवतोऽल्पाबाधतां परिपृच्छत्यल्पातङ्कतां लघूत्थानतां बलञ्च सुखस्पर्शविहारतां च। इमानि च तेन भगवतार्येन्द्रेण तथागतेनार्हता सम्यक् संबुद्धेन सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि प्रनिर्हितानि भगवतः पूजाकर्मणे॥

अथ भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् संबुद्धस्तानि पद्मानि गृहीत्वा येन ते उत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तथागता अर्हन्तः सम्यक् संबुद्धास्तेनाक्षैप्सीत्॥

अथ तैः पद्मैस्ते सर्वे लोकधातवः स्फुटा अभूवन्। तत्र च पद्मेषु तथागतविग्रहानिषण्णाधर्मं देशयन्ति स्म। यदुतेमामेव षट्पारमिताम् आरभ्यैस्च सत्त्वैः साधर्मदेशना श्रुता ते सर्वे नियता अभूवन्ननुत्तरायां सम्यक् सम्बोधौ तेऽपि बोधिसत्त्वाः गृहस्थाः प्रव्रजिताश्च दारिकदारिकाश्च स्वकस्वकैः कुशलमूलैर्भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् संबुद्धं सत् कुर्वन्ति स्म। गुरुकुर्वन्ति स्म मानयन्ति स्म पूजयन्ति स्म। उत्तरपूर्वस्यान्दिशि गङ्गानदीवालुकोपमाम् लोकधातूनतिक्रम्य यः सर्व पश्चिमोलोकधातुः समाध्यलङ्कृतोनाम तत्र समाधिहस्त्युत्तरश्रीर्नाम तथागतोऽर्हन् सम्यक् संबुद्धस्तिष्ठति ध्रियते यापयति। इमामेव प्रज्ञापारमितां बोधिसत्त्वेभ्यो महासत्त्वेभ्यः सम्प्रकाशयति॥

अथ तत्र लोकधातौ विजयविक्रामी नाम बोधिसत्त्वोमहासत्त्वस्तमवभासन्तञ्च महान्तं पृथिवीचालन्तञ्च तथागतस्यांसेचनकदर्शनमात्मभावं दृष्ट्वा येन स भगवान् समाधिहस्त्युत्तरश्रीस्तथागतो-

अथ चारित्रमतिर्बोधिसत्त्वोमहासत्त्वस्तस्य भगवतो रत्नार्चिषस्तथागतस्यार्हतः सम्यक् सम्बुद्धस्यान्तिकात्तानि सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि गृहीत्वानेकैर्बोधिसत्त्वकोटीनियुतशतसहस्रैः सार्द्धं गृहस्थैः प्रव्रजितैर्दारकदारिकाभिश्च ततो बुद्धक्षेत्रादन्तर्हितः यावन्तः पश्चिमायान्दिशि बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति तान् सर्वान् सत्कुर्व्वन् गुरुकुर्व्वन्मानयन् पूजयन् पुष्पधूपगन्धमाल्यविलेपनचूर्णवस्त्राभरणच्छत्रध्वजपताकाभिर्महत्याबोधिसत्त्वर्द्धा महता बोधिसत्त्वानुभावेन। येन भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् सम्बुद्धस्तेनोपसंक्रान्तः उपसंक्रम्य भगवतः पादौ शिरसाभिवन्दित्वा एकान्तेऽस्थात् एकान्तस्थितश्चारित्रमतिर्बोधिसत्त्वोमहासत्त्वोभगवन्तमेतदवोचत्। रत्नार्चिर्भगवंस्तथागतोऽर्हन् सम्यक् सम्बुद्धो भगवतोऽल्पाबाधतां परिपृच्छत्यल्पातङ्कतां लघूत्थानतां बलं सुखस्पर्शविहारताञ्च इमानि च तेन भगवतारत्नार्चिषातथागतेनार्हता सम्यक् सम्बुद्धेन सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि प्रहितानि भगवतः पूजाकर्मणे॥

अथ भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् सम्बुद्धस्तानि पद्मानि गृहीत्वा येन ते पश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तथागता अर्हन्तः सम्यक् सम्बुद्धास्तेनाक्षैप्सीत्॥

अथ तैः पद्मैस्ते सर्वे लोकधातवः स्फुटा अभूवन्। तत्र च पद्मेषु तथागतविग्रहातिषणाधर्मं देशयन्ति स्म। यदुतेमामेव षट्पारमिता आरभ्य येच सत्त्वैः सा धर्मदेशनाश्रुता ते सर्वे नियता अभूवन्ननुत्तरायां सम्यक् सम्बोधौ तेपि बोधिसत्त्वा महा-

सत्ता गृहस्थाः प्रव्रजितास्दारकदारिकाश्च सकसकैः कुशलमूलै-र्भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् सम्बुद्धं सत् कुर्व्वन्ति स्म गुरुकुर्व्वन्ति स्म मानयन्ति स्म पूजयन्ति स्म। उत्तरस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य यः सर्वपश्चिमोलोक-धातुर्जायानाम तत्र जायेन्द्रो नाम तथागतोऽर्हन् सम्यक् सम्बुद्ध-स्तिष्ठति भ्रियते यापयति स इमामेव प्रज्ञापारमितां बोधि-सत्त्वेभ्यो महासत्त्वेभ्यः सम्प्रकाशयति॥

अथ तत्र लोकधातौ जयदत्तो नाम बोधिसत्त्वो महासत्त्वस्त-महान्तमवभासन्तं च महान्तं पृथिवीचालनञ्च तथागतस्यासेचनक-दर्शनमात्मभावं दृष्ट्वा येन भगवान् जायेन्द्रस्तथागतोऽर्हन् सम्यक् सम्बुद्धस्तेनोपसंक्रान्तः उपसंक्रम्य तं भगवन्तं जायेन्द्रं तथागतमर्हन्तं सम्यक् सम्बुद्धमेतदवोचत् को भगवन् हेतुः कःप्रत्ययोऽस्य महतोऽव-भासस्य लोके प्रादुर्भावायास्य च महतः पृथिवीचालस्यास्यचेदृशस्य तथागतकायस्य सन्दर्शनाय*वन्दनायपर्युपासनाय॥

एवमुक्ते भगवान् जायेन्द्रस्तथागतोऽर्हन् सम्यक् सम्बुद्धस्तं जयदत्तं बोधिसत्त्वं महासत्त्वमेतदवोचत्। एष कुलपुत्र दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य सहा नाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक् संबुद्धस्तिष्ठति भ्रियते यापयति सबोधिसत्त्वेभ्यो महासत्त्वेभ्यः प्रज्ञापारमितां सम्प्रकाशयति। तस्यैष ईदृशोऽनुभावः॥

अथ जयदत्तो बोधिसत्त्वो महासत्त्वस्तं भगवन्तं जायेन्द्रंतथागत-

* वन्दनाय पर्य्युपासनायेति पाठोऽत्रैव स्थले पुस्तकचतुष्टये दृश्यते॥

ऽर्हन् सम्यक् संबुद्धस्तेनोपसङ्क्रान्तः उपसंक्रम्यतं भगवन्तं समाधिहस्त्युत्तरश्रियं तथागतमर्हन्तं सम्यक् संबुद्धमेतदवोचत् । को भगवन् हेतुः कः प्रत्ययोऽस्य महतोऽवभासस्य लोके प्रादुर्भावायास्य च महतः पृथिवीचालस्य अस्य चेदृशस्य तथागतकायस्य सन्दर्शनाय । एवमुक्ते भगवान् समाधिहस्त्युत्तरश्रीस्तथागतोऽर्हन् सम्यक् संबुद्धस्तं विजयविक्रामिणं बोधिसत्वं महासत्त्वमेतदवोचत् । एष कुलपुत्र दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य सहा नाम लोकधातुस्तत्र शाक्यमुनिर्नामतथागतोऽर्हन् सम्यक् सबुद्धस्तिष्ठति ध्रियते यापयति । स बोधिसत्वेभ्यो महासत्वेभ्यः प्रज्ञापारमितां सम्प्रकाशयति । तस्यैव ईदृशोऽनुभावः ॥

अथ विजयविक्रामी बोधिसत्त्वोमहासत्वस्तं भगवन्तं समाधिहस्त्युत्तरश्रियं तथागतमर्हन्तं सम्यक् संबुद्धमेतदवोचत् । गच्छेयमहं भगवं स्तां सहा लोकधातुं तस्य भगवतः शाक्यमुनेस्तथागतस्यार्हतः सम्यक् संबुद्धस्य दर्शनाय वन्दनाय पर्युपासनाय । तेषाञ्च बोधिसत्वानां महासत्त्वानां प्रायः कुमारभूतानां धारणीप्रतिसम्भिद्विहार प्रतिलब्धानां सर्वसमाधिसमापत्तिवशिताप्राप्तानां । स भगवान् समाधिहस्त्युत्तरश्रीर्नाम तथागत आह । गच्छत्वं कुलपुत्र तां सहां लोकधातुं यस्येदानीं कालं मन्यसे ॥

अथ समाधिहस्त्युत्तरश्रीस्तथागतोर्हन् सम्यक् संबुद्धो नानारत्नमयानां सुवर्णनिर्भासानां सहस्रपत्राणां पद्मानां सहस्रं विजयविक्रामिणे बोधिसत्वाय महासत्त्वाय प्रादात् । एभिः कुलपुत्र पद्मैस्तं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् संबुद्धमभ्यकिर सम्प्रजान-

विहारी च कुलपुत्र तत्र बुद्धक्षेत्रे भवेत्। तत् कस्य हेतोर्दुरा-सदाहि ते बोधिसत्त्वामहासत्त्वा ये तत्र लोकधातावुपपन्नाः सा तत्र क्षणेयाः॥

अथ विजयविक्रामी बोधिसत्त्वोमहासत्त्वस्तस्य भगवतः समाधिहस्त्युत्तरश्रियस्तथागतस्याऽर्हतः सम्यक् संबुद्धस्याऽन्तिकात् तानि सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि गृहीत्वाऽनेकैर्बोधिसत्त्वकोटीनियुतशतसहस्रैः सार्द्धं गृहस्थैः प्रव्रजितैश्च दारकदारिकाभ्यपिभिश्च ततो बुद्धक्षेत्रादन्तर्हितो यावन्तः उत्तरपूर्वस्यान्दिशि बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति तान् सर्वान् सत्कुर्वन् गुरुकुर्वन् मानयन् पूजयन् पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरवस्त्रध्वजपताकाभिर्महत्या बोधिसत्त्वर्ध्या महता बोधिसत्त्वाऽनुभावेन येन भगवान्* शाक्यमुनिस्तथागतोऽर्हन् सम्यक् सबुद्धस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्तेऽस्थादेकान्ते स्थितोविजयविक्रामी बोधिसत्त्वोमहासत्त्वोभगवन्तमेतदवोचत्। समाधिहस्त्युत्तरश्रीर्भगवस्तथागतोऽर्हन् सम्यक् सबुद्धो भगवतोऽल्पाबाधतां परिपृच्छत्यल्पातङ्कतां लघूत्थानतां बलञ्च सुखस्पर्शविहारितांश्च। इमानि च तेन भगवता समाधिहस्त्युत्तरश्रिया तथागतेनाऽर्हता सम्यक् संबुद्धेन सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि प्रणिहितानि† भगवतः पूजाकर्मणे॥

अथ भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् संबुद्धस्तानि

* भगवाञ्छाक्यमुनिरिति ग, घ, पुस्तके सन्धिनिर्देश एवमन्यत्र।

† प्रेषितानि इति घ पुस्तके पाठ।

पद्मानि गृहीत्वा येन उत्तरपूर्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तथागता अर्हन्तः सम्यक् संबुद्धास्तेनाऽचैषीत्॥

अथ तैः पद्मैः सर्वे लोकधातवः स्फुटा अभूवन्। तत्र च पद्मेषु तथागतविग्रहाः निषण्णाधर्मं देशयन्ति स्म। यदुतेमामेव षट्पारमितामारभ्य। यैश्च सत्त्वैः सा धर्मदेशना श्रुता ते सर्वे नियता अभूवन्ननुत्तरायां सम्यक् सम्बोधौ। तेपि च बोधिसत्त्वा-गृहस्थाः प्रव्रजिताश्च दारकदारिकाश्च स्वकस्वकैः कुशलमूलैर्भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् संबुद्धं सत्कुर्वन्ति स्म गुरुकुर्वन्ति स्म मानयन्ति स्म पूजयन्ति स्म। पूर्वदक्षिणस्यान्दिशि गङ्गानदी-वालुकोपमान् लोकधातूनतिक्रम्य यः सर्वपश्चिमोलोकधातुर्बोधि-मण्डालङ्कारसुरुचिरा नाम तत्र पद्मोत्तरश्रीर्नाम तथागतोऽर्हन् सम्यक् संबुद्धस्तिष्ठति ध्रियते यापयति। स इमामेव प्रज्ञापारमितां बोधिसत्त्वेभ्यो महासत्त्वेभ्यः सम्प्रकाशयति॥

अथ तत्र लोकधातौ पद्महस्तो नाम बोधिसत्त्वोमहासत्त्वस्तं महान्तमवभासं तञ्च महान्तं पृथिवीचालनतञ्च तथागतस्याऽसेचनक-दर्शनमात्मभावं दृष्ट्वा येन भगवान् पद्मोत्तरश्रीस्तथागतोऽर्हन् सम्यक् संबुद्धस्तेनोपसंक्रान्तः। उपसंक्रम्य तं भगवन्तं पद्मोत्तरश्रियं तथागत-मर्हन्तं सम्यक् संबुद्धमेतदवोचत्। को भगवन् हेतुः कः प्रत्ययोऽस्य महतोऽवभासस्य लोके प्रादुर्भावायाऽस्य च महतः पृथिवीचालस्याऽस्य चेदृशस्य तथागतकायस्य सन्दर्शनाय॥

एवमुक्ते भगवान् पद्मोत्तरश्रीस्तथागतोऽर्हन् सम्यक् संबुद्धस्तं पद्महस्तं बोधिसत्त्वं महासत्त्वमेतदवोचत्। एष कुलपुत्र पश्चिमो-

त्तरस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य सहा नाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक् संबुद्धस्तिष्ठति ध्रियते यापयति। स बोधिसत्त्वेभ्यो महासत्त्वेभ्यः प्रज्ञापारमितां सम्प्रकाशयति। तस्यैव ईदृशोऽनुभावः ॥

अथ पद्महस्तो बोधिसत्त्वो महासत्त्वस्तं भगवन्तं पद्मोत्तरश्रियं तथागतमर्हन्तं सम्यक् संबुद्धमेतदवोचत्। गच्छेयमहं भगवंस्तां सहां लोकधातुं तस्य भगवतः शाक्यमुनेस्तथागतस्याऽर्हतः सम्यक् संबुद्धस्य दर्शनाय वन्दनाय पर्य्युपासनाय। तेषाञ्च बोधिसत्त्वानां महासत्त्वानां सर्वेषां प्रायः कुमारभूतानां धारणीप्रतिसम्विन्निर्हारप्रतिलब्धानां सर्वसमाधिसमापत्तिवशिताप्राप्तानाम्। स भगवान् पद्मोत्तरश्रीस्तथागत आह। गच्छ त्वं कुलपुत्र तां सहां लोकधातुं यस्येदानीं कालं मन्यसे ॥

अथ पद्मोत्तरश्रीस्तथागतोऽर्हन् सम्यक् संबुद्धो नानारत्नमयानां सुवर्णनिर्भासानां सहस्रपत्राणां पद्मानां सहस्रं पद्महस्ताय बोधिसत्त्वाय महासत्त्वाय प्रादात्। एभिः कुलपुत्र पद्मैस्तं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् संबुद्धमभ्यवकिर। सम्प्रजानविहारी च कुलपुत्र तत्र बुद्धक्षेत्रे भवेत्। तत्कस्य हेतोर्दुरासदा हि ते बोधिसत्त्वामहासत्त्वा ये तत्र लोकधातावुपपन्नाः। मा तत्र क्षण्येथाः ॥

अथ पद्महस्तो बोधिसत्त्वो महासत्त्वस्तस्य भगवतः पद्मोत्तरश्रियस्तथागतस्याऽर्हतः सम्यक् संबुद्धस्याऽन्तिकात्तानि सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि गृहीत्वाऽनेकैर्बोधिसत्त्वकोटीनियुतशतसहस्रैः

सार्द्धं गृहस्थैः प्रव्रजितैश्च दारकदारिकारूपिभिश्च ततोबुद्धक्षेत्रादन्तर्हितोयावन्तः पूर्वस्यान्दिशि बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति, तान् सर्वान् सत्कुर्वन् गुरुकुर्वन् मानयन् पूजयन् पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिर्महत्या बोधिसत्त्वर्ध्या महता बोधिसत्त्वाऽनुभावेन, येन भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् सम्बुद्धस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्तेऽस्थात् । एकान्ते स्थितः पद्महस्तो बोधिसत्त्वोमहासत्त्वोभगवन्तमेतदवोचत् । पद्मोत्तरश्रीर्भगवन् सम्यक् सम्बुद्धस्तथागतोऽर्हन् भगवतोऽल्पाबाधतां परिपृच्छत्यल्पातङ्कताञ्च लघूत्थानतां बलञ्च सुखस्पर्शविहारताञ्च । इमानि च तेन भगवता पद्मोत्तरश्रिया तथागतेनाऽर्हता सम्यक् सम्बुद्धेन सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि प्रणिहितानि* भगवतः पूजाकर्मणे ॥

अथ भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् संबुद्धस्तानि पद्मानि गृहीत्वा येन पूर्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तथागता अर्हन्तः सम्यक् सम्बुद्धास्तेनाऽक्षैप्सीत् ॥

अथ ते पद्मैः सर्वे लोकधातवः स्फुटा अभूवन् । तत्र च पद्मेषु तथागतविग्रहानिषण्णाधर्मं देशयन्ति स्म । यदुतेमामेव षट्पारमितामारभ्य । यैश्च सत्त्वैः सा धर्मदेशना श्रुता ते सर्वे नियता अभूवननुत्तरायां सम्यक् सम्बोधौ । तेपि बोधिसत्त्वा महासत्त्वागृहस्थाः प्रव्रजिताश्च दारकदारिकाश्च स्वकस्वकैः कुशलमूलैर्भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् सम्बुद्धं सत्कुर्वन्ति स्म । गुरुकुर्वन्ति

* ग, घ, पुस्तके प्रहिताणीति पाठः ।

स्म । मानयन्ति स्म । पूजयन्ति स्म । दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य यः सर्वपश्चिमो लोकधातुर्विगतराजसभावा नाम तत्र सूर्यमण्डलप्रतिभासोत्तमश्रीर्नाम. तथागतोऽर्हन् सम्यक् संबुद्धस्तिष्ठति ध्रियते यापयति । स इमामेव प्रज्ञापारमितां बोधिसत्त्वेभ्योमहासत्त्वेभ्यः सम्प्रकाशयति ॥

अथ तत्र लोकधातौ सूर्यप्रतिभासो नाम बोधिसत्त्वो महासत्त्वस्तं महान्तमवभासन्तञ्चमहान्तं पृथिवीचालनञ्च तथागतस्याऽसेचनकदर्शनमात्मभावं दृष्ट्वा येन स भगवान् सूर्यमण्डलप्रतिभासोत्तमश्रीस्तथागतस्तेनोपसंक्रान्तः । उपसंक्रम्य तं भगवन्तं सूर्यमण्डलप्रतिभासोत्तमश्रिय तथागतमर्हन्तं सम्यक् संबुद्धमेतदवोचत् । कोभगवन् हेतुः कः प्रत्ययोऽस्य महतोऽवभासस्य लोके प्रादुर्भावायाऽस्य च महतः पृथिवीचाल्याऽस्य चेदृशस्य तथागतकायस्य सन्दर्शनाय ॥

एवमुक्ते भगवान् सूर्यमण्डलप्रतिभासोत्तमश्रीर्नाम तथागतोऽर्हन् सम्यक् संबुद्धस्तं सूर्यप्रतिभासम्बोधिसत्त्व महासत्त्वमेतदवोचत् । एष कुलपुत्र उत्तरपूर्वस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य सहा नाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक् संबुद्धस्तिष्ठति ध्रियते यापयति। स बोधिसत्त्वेभ्यो महासत्त्वेभ्यः प्रज्ञापारमितां सम्प्रकाशयति । तस्यैव ईदृशोऽनुभावः ॥

अथ सूर्यप्रतिभासोबोधिसत्त्वोमहासत्त्वस्तं भगवन्तं सूर्यमण्डलप्रतिभासोत्तमश्रियं तथागतमर्हन्तं सम्यक् संबुद्धमेतदवोचत् । गच्छेयमहं भगवस्तां सहां लोकधातुं तस्य भगवतः शाक्यमुनेस्तथागतस्याऽर्हत. सम्यक् संबुद्धस्य दर्शनाय वन्दनाय पर्युपासनाय ।

तेषाञ्च बोधिसत्त्वानां महासत्त्वानां सर्वेषां प्रायः कुमारभूतानां धारणीप्रतिलब्धिनिर्हारप्रतिलब्धानां सर्वसमाधिसमापत्तिवशिताप्राप्तानाम्। स भगवान् सूर्य्यमण्डलप्रतिभासोत्तमश्रीस्तथागत आह। गच्छ त्वं कुलपुत्र तां सहां लोकधातुं यस्येदानीङ्कालं मन्यसे॥

अथ सूर्य्यमण्डलप्रतिभासोत्तमश्रीस्तथागतोऽर्हन् सम्यक् संबुद्धो नानारत्नमयानां सुवर्णनिर्भासानां सहस्रपत्राणां पद्मानां सहस्रं सूर्य्यप्रतिभासाय बोधिसत्त्वाय महासत्त्वाय प्रादात्। एभिः कुलपुत्र पद्मैस्त्वं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक् संबुद्धमभ्यवकिर। सम्प्रजानविहारी च कुलपुत्र तत्र बुद्धक्षेत्रे भवेत्। तत् कस्य हेतोर्दुरासदा हि ते बोधिसत्त्वा महासत्त्वा ये तत्र लोकधातावुपपन्नाः मा तत्र क्षणिथाः॥

अथ सूर्य्यप्रतिभासो बोधिसत्त्वो महासत्त्वस्तस्य भगवतः सूर्य्यमण्डलप्रतिभासोत्तमश्रियस्तथागतस्यार्हतः सम्यक् संबुद्धस्यान्तिकात्तानि सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि गृहीत्वाऽनेकैर्बोधिसत्त्वकोटीनियुतशतसहस्रैः सार्द्धं गृहस्थैः प्रव्रजितैश्च दारकदारिकाभिश्च ततो बुद्धक्षेत्रादन्तर्हितो यावन्तो दक्षिणपश्चिमायान्दिशि बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति, तान् सर्वान् सत्कुर्वन् गुरुकुर्वन्मानयन् पूजयन् पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिर्महत्या बोधिसत्त्वर्द्ध्या महता बोधिसत्त्वाऽनुभावेन येन भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् संबुद्धस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्तेऽस्थादेकान्ते स्थितः सूर्य्यप्रतिभासो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्। सूर्य्यमण्डलप्रतिभासोत्तमश्रीस्तथागतोऽर्हन् सम्यक् संबुद्धो भगवतोऽल्पाबाधतां

परिपृच्छत्यल्पातङ्कतां लघूत्थानतां बलञ्च सुखस्पर्शविहारताञ्च ।
इमानि च तेन भगवता सूर्य्यमण्डलप्रतिभासोत्तमश्रिया तथागते-
नार्हता सम्यक् संबुद्धेन सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि
प्रहितानि भगवतः पूजाकर्मणे ॥

अथ भगवान् शाक्यमुनिस्तथागतोऽर्हन् सम्यक् संबुद्धस्तानि
पद्मानि गृहीत्वा येन ते दक्षिणपश्चिमायान्दिशि गङ्गानदीवालु-
कोपमेषु लोकधातुषु तथागता अर्हन्तः सम्यक् संबुद्धास्तेनाऽक्षेप्सीत् ॥
अथ तैः पद्मैः सर्व्वे लोकधातवः स्फुटा अभूवन् । तत्र च
पद्मेषु तथागतविग्रहा निषण्णा धर्म्मं देशयन्ति स्म । यदुतेमामेव
षट्पारमितामारभ्य । यैश्च सत्त्वैः सा धर्म्मदेशना श्रुता ते सर्व्वे नियता-
अभूवन्ननुत्तरायां सम्यक्सम्बोधौ । तेऽपि बोधिसत्त्वा गृहस्थाः प्रव्र-
जिताश्च दारकदारिकाश्च स्वकस्वकैः कुशलमूलैर्भगवन्तं शाक्यमुनिं
तथागतमर्हन्तं सम्यक्सम्बुद्धं सत् कुर्व्वन्ति स्म । गुरूकुर्व्वन्ति स्म ।
मानयन्ति स्म । पूजयन्ति स्म । पश्चिमोत्तरस्यान्दिशि गङ्गानदी-
वालुकोपमान् लोकधातूनतिक्रम्य य. सर्व्वपश्चिमो लोकधातुर्वंशी-
भूता नाम तत्र एकछत्रो नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तिष्ठति
ध्रियते यापयति । इमामेव प्रज्ञापारमितां बोधिसत्त्वेभ्यो महा-
सत्त्वेभ्यः सम्प्रकाशयति ।

अथ तत्र लोकधातौ रत्नोत्तमो नाम बोधिसत्त्वो महासत्त्वस्तं
महान्तमवभासं तञ्च महान्तं पृथिवीचालं तञ्च तथागतस्याऽसेच-
नकदर्शनमात्मभावं दृष्ट्वा येन भगवानेकछत्रस्तथागतोऽर्हन् सम्यक्
संबुद्धस्तेनोपसक्रान्तः । उपसंक्रम्य तं भगवन्तमेकछत्रं तथागतमर्हन्तं

सम्यक्सम्बुद्धमेतदवोचत्। को भगवन् हेतुः कः प्रत्ययोऽस्य महतो-ऽवभासस्य लोके प्रादुर्भावायाऽस्य च महतः पृथिवीचालस्याऽस्य चेष्टस्य तथागतकायस्य सन्दर्शनाय॥

एवमुक्ते भगवानेकछत्रस्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तं रत्नोत्तमं बोधिसत्त्वं महासत्त्वमेतदवोचत्। एष कुलपुत्र दक्षिणपश्चिमाया-न्दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य सहानाम लोकधातुः, तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तिष्ठति ध्रियते यापयति। स बोधिसत्त्वेभ्यो महासत्त्वेभ्यः प्रज्ञापारमितां सम्प्रकाशयति। तस्यैषईदृशोऽनुभावः॥

अथ रत्नोत्तमो बोधिसत्त्वो महासत्त्वस्तं भगवन्तमेकछत्रं तथा-गतमर्हन्तं सम्यक्सम्बुद्धमेतदवोचत्। गच्छेयमहं भगवंस्तां सहां लोकधातुं तस्य भगवतः शाक्यमुनेस्तथागतस्याऽर्हतः सम्यक्सम्बुद्धस्य दर्शनाय वन्दनाय पर्युपासनाय। तेषाञ्च बोधिसत्त्वानां महासत्त्वानां सर्वेषां प्रायः कुमारभूतानां धारणीप्रतिसंविद्विहारप्रतिलब्धानां सर्वसमाधिसमापत्तिवशिताप्राप्तानाम्। स भगवानेकछत्रस्तथागत-स्त्राह। गच्छ त्वं कुलपुत्र तां सहां लोकधातुं यस्येदानीं कालं मन्यसे॥

अथैकछत्रस्तथागतोऽर्हन् सम्यक्सम्बुद्धोनानारत्नमयानां सुवर्ण-निर्भासानां सहस्रपत्राणां पद्मानां सहस्रं रत्नोत्तमाय बोधिसत्त्वाय महासत्त्वाय प्रादात्। एभिः कुलपुत्र पद्मैस्त्वं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक्सम्बुद्धमभ्यवकिर। सम्प्रजानविहारी च कुलपुत्र तत्र बुद्धक्षेत्रे भवेत्। तत् कस्य हेतोर्दुरासदाहि

ते बोधिसत्त्वा महासत्त्वा ये तत्र लोकधातावुपपन्नाः मा तत्र घर्णेथाः।

अथ रत्नोत्तमोबोधिसत्त्वोमहासत्त्वस्तस्य भगवतएकछत्रस्य तथागतस्याऽर्हतः सम्यक्सम्बुद्धस्याऽन्तिकात्तानि सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि गृहीत्वाऽनेकैर्बोधिसत्त्वकोटीनियुतशतसहस्रैः सार्द्धं गृहस्थैः प्रव्रजितैश्च दारकदारिकाभिरपिभिश्च ततोबुद्धक्षेत्रा-दन्तर्हितोयावन्त पश्चिमोत्तरस्यान्दिशि बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति। तान् सर्व्वान् सत्कुर्व्वन् गुरुकुर्व्वन् मानयन् पूजयन् पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरछत्रध्वजपताकाभिर्महत्या बोधि-सत्त्वर्द्धा महता च बोधिसत्त्वाऽनुभावेन। येन भगवांश्शाक्यमुनि-स्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनोपसङ्क्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्तेऽस्थात्। एकान्ते स्थितोरत्नोत्तमो बोधिसत्त्वोमहासत्त्वोभगवन्तमेतदवोचत्। एकछत्रोभगवंस्तथागतो-ऽर्हन् सम्यक्सम्बुद्धोभगवतोऽल्पाबाधतां परिपृच्छत्यल्पातङ्कतां लघू-त्थानतां बलञ्च सुखस्पर्शविहारताञ्च। इमानि च तेन भगवता एकछत्रेण तथागतेनाऽर्हता सम्यक्सम्बुद्धेन सुवर्णनिर्भासानि सहस्र-पत्राणि पद्मानि प्रहितानि भगवतः पूजाकर्म्मणे।

अथ भगवांश्शाक्यमुनिस्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तानि पद्मानि गृहीत्वा येन ते पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुको-पमेषु लोकधातुषु तथागता अर्हन्तः सम्यक्सम्बुद्धास्तेनाऽक्षैप्सीत्।

अथ तैः पद्मैस्ते सर्व्वे लोकधातवः स्फुटा अभूवन्। तत्र च पद्मेषु तथागतविग्रहानिषण्णाधर्म्मं देशयन्ति स्म। यदुतेमामेव षट्-

मुनिस्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनोपसंक्रान्तः उपसंक्रम्य भगवतः, पादौ शिरसावन्दित्वा एकान्तेऽस्थात्। एकान्तेऽस्थितः पद्मोत्तरो बोधिसत्त्वोमहासत्त्वोभगवन्तमेतदवोचत्। पद्मश्रीभर्गवंस्तथागतोऽर्हन् सम्यक्सम्बुद्धोभगवतोऽल्पाबाधतां परिपृच्छत्यल्पातङ्कतां लघूत्थानतां बलञ्च सुखस्पर्शविहारताञ्च। इमानि च तेन भगवता पद्मश्रिया तथागतेनार्हता सम्यक्सम्बुद्धेन सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि प्रणिहितानि भगवतः पूजाकर्मणे।

अथ भगवाञ्छाक्यमुनिस्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तानि पद्मानि गृहीत्वा येन तेऽधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तथागताऽर्हन्तः सम्यक्सम्बुद्धास्तेनाऽचैप्सीत्।

अथतैः पद्मैस्ते सर्व्वलोकधातवः स्फुटाऽभूवन्। तत्र च पद्मेषु तथागतविग्रहानिषण्णाधर्म्मं देशयन्ति स्म। यदुतेमामेव षट्पारमिता आरभ्य। येश्च सत्त्वैः साधर्म्मदेशनाश्रुता ते सर्व्वे नियताअभूवन्ननुत्तरायां सम्यक्सम्बोधौ। तेऽपि च बोधिसत्त्वागृहस्थाः प्रव्रजिताश्च दारकदारिकाश्च स्वकस्वकैः कुशलमूलैर्भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक्सम्बुद्धं सत्कुर्व्वन्ति स्म, गुरुकुर्व्वन्ति स्म मानयन्ति स्म पूजयन्ति स्म। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य यः सर्व्वपश्चिमो लोकधातुर्नन्दानाम तत्र नन्दश्रीर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तिष्ठति ध्रियते यापयति। स इमामेव प्रज्ञापारमितां बोधिसत्त्वेभ्यो महासत्त्वेभ्यः सम्प्रकाशयति।

अथ तत्र लोकधातौ नन्ददत्तो नाम बोधिसत्त्वोमहासत्त्वस्तं

महान्तमवभासं तच्च महान्तं पृथिवीचालं तच्च तथागतस्याऽसेचनक-दर्शनमात्मभावं दृष्ट्वा येन भगवान् नन्दश्रीस्तथागतोऽर्हन् सम्यक्-सम्बुद्धस्तेनोपसंक्रान्तः। उपसंक्रम्य तं भगवन्तं नन्दश्रियं तथागत-मर्हन्तं सम्यक्सम्बुद्धमेतदवोचत्। कोभगवन् हेतुः कः प्रत्ययोऽस्य महतोऽवभासस्य लोके प्रादुर्भावायाऽस्य च महतः पृथिवीचालस्याऽस्य च तथागतकायस्य सन्दर्शनाय।

एवमुक्ते भगवान् नन्दश्रीस्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तं नन्द-दत्तं बोधिसत्वं महासत्वमेतदवोचत्। एष कुलपुत्राऽधस्ताद्दिशि गङ्गानदीवालुकोपमान् लोकधातूनति क्रम्य महानामलोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तिष्ठति ध्रियते याप-यति। स बोधिसत्वेभ्योमहासत्वेभ्यः प्रज्ञापारमितां सम्प्रकाशयति तस्यैव ईदृशोऽनुभावः।

अथ नन्ददत्तोबोधिसत्वोमहासत्वस्तं नन्दश्रियं तथागत-मर्हन्तं सम्यक्सम्बुद्धमेतदवोचत्। गच्छेयमहं भगवंस्तां महां लोकधातुं तस्य भगवतः शाक्यमुनेस्तथागतस्याऽर्हतः सम्यक्सम्बुद्धस्य दर्शनाय वन्दनाय पर्य्युपासनाय तेषाञ्च बोधिसत्वानां महासत्वानां प्रायः कुमारभूतानां धारणीप्रतिलब्धिप्रतिसंविप्रतिलब्धानां सर्व्व-समाधिसमापत्तिवशिताप्राप्तानां। सभगवान् नन्दश्रीस्तथागत आह। गच्छ त्वं कुलपुत्र तां महां लोकधातुं यस्येदानीं कालं मन्यसे।

अथ नन्दश्रीस्तथागतोऽर्हन् सम्यक्सम्बुद्धोनानारत्नमयानां सुवर्णनिर्भासानां सहस्रपत्राणां पद्मानां सहस्रं नन्ददत्ताय बोधि-सत्वाय महासत्वाय प्रादात्। एभिः कुलपुत्र पद्मैस्तं भगवन्तं

शाक्यमुनिं तथागतमर्हन्तं सम्यक्सम्बुद्धमभ्यवकिर। सप्रज्ञान-विहारी च कुलपुत्र तत्र बुद्धक्षेत्रे भवेत् तत् कस्य हेतोर्दुराषदा हि ते बोधिसत्त्वामहासत्त्वास्ये तत्र लोकधातावुपपन्नाः मा तत्र घट्टेथाः।

अथ नन्ददत्तोबोधिसत्त्वोमहासत्त्वस्तस्य भगवतोनन्दश्रियस्तथागतस्याऽर्हतः सम्यक्सम्बुद्धस्याऽन्तिकात्तानि सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि गृहीत्वाऽनेकैर्बोधिसत्त्वकोटीनियुतशतसहस्रैः सार्द्धं गृहस्थैः प्रव्रजितैश्च दारकदारिकाभिश्च ततो बुद्धक्षेत्रादन्तर्हितः। यावन्त उपरिष्टाद्दिशि बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति तान् सर्व्वान् सत्कुर्व्वन् गुरुकुर्व्वन् मानयन् पूजयन् पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिर्महत्या बोधिसत्त्वर्द्ध्या महता बोधिसत्त्वानुभावेन। येन भगवांश्छाक्यमुनिस्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनोपसङ्क्रान्तः। उपसङ्क्रम्य भगवतः पादौ शिरसावन्दित्वा एकान्तेऽस्थात्। एकान्तेऽस्थितोनन्ददत्तो बोधिसत्त्वोमहासत्त्वोभगवन्तमेतदवोचत् नन्दश्रीर्भगवंस्तथागतोऽर्हन् सम्यक्सम्बुद्धोभगवतोऽल्पाबाधतां परिपृच्छत्यल्पातङ्कतां लघूत्थानतां बलञ्च सुखस्पर्शविहारताञ्च। इमानि च तेन भगवता नन्दश्रिया तथागतेनाऽर्हता सम्यक्सम्बुद्धेन सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि प्रतिष्ठितानि भगवतः पूजाकर्म्मणे।

अथ भगवांश्छाक्यमुनिस्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तानि पद्मानि गृहीत्वा येन ते उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तथागताऽर्हन्तः सम्यक्सम्बुद्धास्तेनाऽक्षैप्सीत्।

अथ तैः पद्मैस्ते सर्व्वे लोकधातवः स्फुटा अभूवन्। तत्र च पद्मेषु तथागतविग्रहानिषण्णाधर्म्मं देशयन्ति स्म। यदुतेमामेव षट्पारामिता आरभ्य यैश्च सत्त्वैः साधर्म्मदेशनाश्रुता ते सर्व्वे नियताअभूवन्ननुत्तरायां सम्यक्सम्बोधौ। तेऽपि च बोधिसत्त्वा गृहस्थाः प्रव्रजिता दारकदारिकाश्च स्वकस्वकैः कुशलमूलैर्भगवन्तं शाक्यमुनिं तथागतमर्हन्तं, सम्यक्सम्बुद्धं सत्कुर्व्वन्ति स्म गुरुकुर्व्वन्ति स्म मानयन्ति स्म पूजयन्ति स्म॥

अथ तेन च्छणलवमुहूर्त्तेनाऽयं त्रिसाहस्रमहासाहस्रोलोकधातुः रत्नमयः संस्थितोऽभूत् विचित्रपुष्पावकीर्णोऽवसक्तपट्टदामकलापोनानागन्धघटिकानिर्धूपितः। कल्पवृक्षैर्नानालङ्कारफलायविटपैः सर्व्वपुष्पवृक्षैः फलवृक्षैर्गन्धवृक्षैर्माल्यवृक्षैश्चूर्णवृक्षैः प्रतिमण्डितः। तद्यथापि नाम पद्मावतीलोकधातुः समन्तकुसुमस्य तथागतस्याऽर्हतः सम्यक्सम्बुद्धस्य बुद्धक्षेत्रे मञ्जुश्रीः कुमारः प्रतिवसति। सुस्थितमतिश्च देवपुत्रोऽन्ये सुमहौजस्काबोधिसत्त्वा महासत्त्वाः। यदा च भगवानाज्ञासीत् स देवकं लोकं समारकं सब्रह्मकं सश्रमणब्राह्मणीं प्रजां सदेवमानुषासुरां तांश्च बोधिसत्त्वान् महासत्त्वान् भूयस्तेन कुमारभूतान्। तदा भगवान् आयुष्मन्तं शारद्वतीपुत्रमामन्त्रयति स्म। इह शारद्वतीपुत्रबोधिसत्त्वेन महासत्त्वेन सर्व्वाकारान् सर्व्वधर्म्मानभिसम्बोद्धुकामेन प्रज्ञापारमितायां योगः करणीयः।

अथ खल्वायुष्मान्छारद्वतीपुत्रो भगवन्तमेतदवोचत् कथं भगवन् बोधिसत्त्वेन महासत्त्वेन सर्व्वाकारान् सर्व्वधर्म्मानभिसम्बोद्धुकामेन प्रज्ञापारमितायां योगः करणीयः॥

एवमुक्ते भगवान् आयुष्मन्तं शारद्वतीपुत्रमेतदवोचत्। इह शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां स्थित्वा अस्थानयोगेन दानपारमिता परिपूरयितव्या। अपरित्याग-योगेन देयदायकपरिग्राहकाऽनुपलब्धितामुपादाय। शीलपारमिता परिपूरयितव्या आपत्त्यना*पत्त्यनध्यापत्तितामुपादाय। क्षान्तिपार-मिता परिपूरयितव्या अक्षोभणतामुपादाय। वीर्य्यपारमिता परि-पूरयितव्या कायचित्तवीर्य्यास्रंसनता†मुपादाय। ध्यानपारमिता परिपूरयितव्या अविक्षेपा[१]सङ्करणता‡मुपादाय। प्रज्ञापारमिता परिपूरयितव्या सर्व्वधर्म्मानुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन चत्वारि स्मृत्युपस्थाना-नि[२]परिपूरयितव्यानि स्मृत्युपस्थानाऽनुपलब्धितामुपादाय। प्रज्ञा-पारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन चत्वारि सम्यक्प्रहाणानि परिपूरयितव्यानि सम्यक्प्रहाणानुपलब्धितामुपा-

* आपत्त्यनापत्त्य इति ख, ग, घ, पुस्तके पाठ।

† अंसनता ख, घ, पाठ।

‡ ग पुस्तके शङ्करणता इति पाठ। सङ्करणता इति युक्तम्।

(१) व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वा-नवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः। पातञ्जलदर्शनसमाधि-पादे ३० सूत्रम्। स्त्यानं अकर्म्मण्यता चित्तस्य अविरतिश्चित्तस्य विषयसम्प्रयोगात्मा गर्द्धः। अलब्धभूमिकत्वं समाधिभूमेरलाभः। अनवस्थितत्वं लब्धायां भूमौ चित्तस्याप्रतिष्ठा। टीका। विक्षेपा-भावोऽविक्षेपम्।

(२) चत्वारि स्मृत्युपस्थानानीति। कायवेदनाचित्तधर्म्माणां स्मृत्युपस्था-नानि चत्वारि।

दाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन चत्वारः ऋद्धिपादाः परिपूरयितव्याः ऋद्धिपादाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन पञ्चेन्द्रियाणि परिपूरयितव्यानि इन्द्रियाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन पञ्च-बलानि परिपूरयितव्यानि बलाऽनुपलब्धितामुपादाय। प्रज्ञापार-मितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन सप्तबोध्यङ्गानि परिपूरयितव्यानि बोध्यङ्गाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन आर्य्याष्टाङ्गमार्गः परि-पूरयितव्यः मार्गाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शार-द्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन शून्यतासमाधिः परिपूरयि-तव्यः शून्यताऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेनानिमित्तः समाधिः परिपूरयितव्यः आनिमित्ताऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वती-पुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेनाऽप्रणिहितः परिपूरयितव्यः अप्रणिहिताऽनुपलब्धितामुदाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन चत्वारि ध्यानानि(१) परिपूरयित-

(१) समापत्तिजातिरूपधातुस्वभावानि चत्वारि ध्यानानि तत्रप्रथमं ध्यानं वितर्को विचारः प्रीतिः सुखं चित्तैकाग्रतेति पञ्चाङ्गं। द्वितीयं ध्यानमात्मसम्प्रसादः प्रीतिः सुखञ्चित्तैकाग्रतेति चतुरङ्गं। तृतीय-मुपेक्षा स्मृतिः सम्प्रजन्यं सुखञ्चित्तैकाग्रतेति पञ्चाङ्गं। चतुर्थं ध्यानमुपेक्षापरिशुद्धिः स्मृतिरदुःखासुखवेदना चित्तैकाग्रता चेति चतुरङ्गं। इत्यष्टसाहस्रीटीका।

ध्यानि ध्यानाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन चत्वार्य्यप्रमाणानि[१] परिपूरयितव्यानि अप्रमाणाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन चतस्रः आरूप्यसमापत्तय[२] परिपूरयितव्याः आरूप्याऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन अष्टौ विमोक्षाः परिपूरयितव्याः विमोक्षाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन नवाऽनुपूर्व्वविहारसमापत्तिः परिपूरयितव्याः अनुपूर्व्वविहाराऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन पञ्चाऽभिज्ञाः परिपूरयितव्याः अभिज्ञाऽनुपलब्धितामुपादाय। प्रज्ञा-

---

(१) "चत्वार्य्यप्रमाणानि"। करुणे सर्व्वथाऽधमस्वभावेषु सत्त्वेषु यथाक्रमं सुखदुःखसंयोगवियोगेच्छे मुदिता सम्यक्प्रतिपत्तिषु सत्त्वेषु सौमनस्यलक्षणं प्रामोद्यं। उपेक्षा तु मित्रामित्रेष्वनुनयप्रतिघविरह"। इत्येतान्यप्रमाणसत्त्वालम्बनत्वादप्रमाणानि॥ इत्यष्टसाहस्रीटीका।

(२) अनन्तमाकाशमिति। अनन्तम्विज्ञानमिति नास्ति किञ्चनेति एतच्छान्तमेतत् प्रणीतं यदुत संज्ञानासंज्ञायतनमित्येवं मनसिकारैर्यथाक्रममाकाशविज्ञानाकिञ्चन्यनैवसंज्ञानासंज्ञायतनाख्योऽधिभावितरूपसंज्ञत्वेन रूपाभावादरूप्याएवारूप्या कायचित्तसमतापादनाच्चतस्र समापत्तय॥ इत्यष्टसाहस्रीटीका।

पातञ्जलदर्शनसमाधिपादे समापत्तिरन्यप्रकारादर्शिता। यथा "क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्तिरिति" ४१ सूत्रम्।

पारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन नव-संज्ञाभावयितव्या ध्मातकसंज्ञाभावयितव्या ध्मातकाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन विपद्मकसंज्ञाभावयितव्या विपद्मकाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन विपूतिकसंज्ञाभावयितव्या विपूतिकाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन विलोहितसंज्ञाभावयितव्या विलोहिताऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन विनीलकसंज्ञाभावयितव्या विनीलकाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन विखादितकसंज्ञाभावयितव्या विखादितकाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन विच्छिन्नकसंज्ञाभावयितव्या विच्छिन्नकाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन अस्थिसंज्ञाभावयितव्या अस्थ्यनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन विदग्धकसंज्ञाभावयितव्या विदग्धकाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन आहारे प्रतिकूलसंज्ञाभावयितव्या प्रतिकूलाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन बुद्धाऽनुस्मृतिर्भावयितव्या बुद्धाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधि-

सत्त्वेन महासत्त्वेन धर्म्माऽनुस्मृतिर्भावयितव्या धर्म्माऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन सङ्घाऽनुस्मृतिर्भावयितव्या सङ्घाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन त्यागाऽनुस्मृतिर्भावयितव्या त्यागाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन देवताऽनुस्मृतिर्भावयितव्या देवताऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन आनापाना*ऽनुस्मृतिर्भावयितव्या आनापानाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन उद्वेगाऽनुस्मृतिभावयितव्या उद्वेगाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन मरणाऽनुस्मृतिर्भावयितव्या मरणाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन कायगताऽनुस्मृतिर्भावयितव्या कायाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन अनित्यसंज्ञाभावयितव्या अनित्याऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन दुःखसंज्ञा भावयितव्या दुःखाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन अनात्मसंज्ञाभावयितव्या अनात्माऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र

---

* एष एव पाठः घ पुस्तके।

स्थिता बोधिसत्त्वेन महासत्त्वेन अशुभसंज्ञाभावयितव्या अशुभाऽनुपलब्धितामुपादाय । प्रज्ञापारमितायां शारद्वतीपुत्र स्थिता बोधिसत्त्वेन महासत्त्वेन सर्व्वलोकाऽनभिर(१)तिसंज्ञाभावयितव्या अनभिरत्यनुपलब्धितामुपादाय । प्रज्ञापारमितायां शारद्वतीपुत्र स्थिता बोधिसत्त्वेन महासत्त्वेन अविश्वासर्सज्ञाभावयितव्या अविश्वासाऽनुपलब्धितामुपादाय । प्रज्ञापारमितायां शारद्वतीपुत्र स्थिता बोधिसत्त्वेन महासत्त्वेन दुःखसंज्ञानं (२) भावयितव्यं दुःखाऽनुपलब्धितामुपादाय । प्रज्ञापारमितायां शारद्वतीपुत्र स्थिता बोधिसत्त्वेन महासत्त्वेन समुदयज्ञानं भावयितव्यं समुदयाऽनुपलब्धितामुपादाय । प्रज्ञापार-

---

(१) प्रज्ञालोकस्थलोकारो वैराग्यस्य परो मतः ॥ पञ्चदशी ।

(२) बुद्धानां सुगतो देवो विश्वञ्च क्षणभङ्गुरम् ।
आर्य्यसत्त्वाख्यया तत्त्वचतुष्टयमिदं क्रमात् ॥
दुःखमायतनञ्चैव ततः समुदयो मतः ।
मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः ॥
दुःखं संसारिणः स्कन्धास्ते च पञ्चप्रकीर्त्तिताः ।
विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥
पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् ।
धर्म्मायतनमेतानि द्वादशायतनानि तु ॥
रागादीनां गणो यस्मात् समुदेति नृणां हृदि ।
आत्मात्मीय स्वभावाख्य' स स्यात् समुदयः पुनः ॥
क्षणिकाः सर्व्वसंस्काराः इति या वासना स्थिरा ।
समार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते ॥
सर्व्वदर्शनसंग्रहः ।

मितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन निरोधज्ञानं भावयितव्यं निरोधाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन मार्गज्ञानं भावयितव्यं मार्गाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन क्षयज्ञानं भावयितव्यं क्षयाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन अनुत्पादज्ञानं भावयितव्यं अनुत्पादाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन धर्मज्ञानं भावयितव्यं धर्माऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन अन्वयज्ञानं भावयितव्यं अन्वयाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन संवृति(१)ज्ञानं भावयितव्यं संवृत्यनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन परिचयज्ञानं भावयितव्यं परिचयाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन यथारुतज्ञानं(२) भावयितव्यं यथारुताऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन

---

(१) अविद्या।

(२) शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानं॥ पातञ्जलदर्शनसमाधिपादे १७ सूत्रम्।

सवितर्कः[1] सविचारः[2] समाधिः परिपूरयितव्यः वितर्कविचाराऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन [3]अवितर्काऽविचारमात्रः समाधिः परिपूरयितव्यः अवितर्काऽविचाराऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेनाज्ञास्यामीतीन्द्रियं परिपूरयितव्यं आज्ञास्यामीतीन्द्रियाऽनुपलब्धितामुपादाय।

---

(१) तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः॥ पातञ्जलदर्शनसमाधिपादस्य ४२ सूत्रम्। अस्यायमर्थः। तत्र तासु समापत्तिषु मध्ये सवितर्कानामसमापत्तिरभिधीयते। ताहि-शब्दस्यार्थस्य ज्ञानस्य च विकल्पैर्विभक्तानामपि अविभक्तप्रत्ययैः सङ्कीर्णा सम्मिश्रा परीक्षकैरन्वयव्यतिरेकाभ्यां विभज्यमाना अन्यः शब्दोऽन्योऽर्थोऽन्यज्ज्ञानमिति पर्यवस्यति। तत्र समापन्नस्य योगिनो यो गवाद्यर्थः समाधिप्रज्ञायां समारूढः तद्विकल्पानुविद्ध उपावर्त्तते सा सङ्कीर्णा समापत्तिः सवितर्कानाम। सा च समापत्तिः समाधिरेव "ता एव सबीजः समाधि"रिति वक्ष्यमाण सूत्रान्तरेण तथाभिधानात्॥

(२) स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थनिर्भासा निर्वितर्का॥ तथा ४३ सूत्रम्। या शब्दसङ्केतश्रुतानुमानज्ञानविकल्पस्मृतिपरिशुद्धौ ग्राह्यस्वरूपोपरक्ताप्रज्ञा स्वमिव प्रज्ञारूपं ग्रहणात्मकं त्यक्ता-पदार्थमात्रस्वरूपा ग्राह्यस्वरूपापन्नेव भवति सा निर्वितर्का समापत्तिः। भाष्यं। शब्दसङ्केतस्य श्रुतस्यानुमानस्य तेषां ज्ञानमेव विकल्पः तस्मात् स्मृतिः तस्याः परिशुद्धिरिति तट्टीका॥

(३) एतयैव च सविचारानिर्विचारा च सूक्ष्मविषयाव्याख्याता॥ तथा ४४ सूत्रम्।

प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेनाज्ञेन्द्रियं परिपूरयितव्यं आज्ञेन्द्रियाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेनाज्ञाताविन्द्रियं परिपूरयितव्यं आज्ञाताविन्द्रियानुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन अभिभ्वायतनं परिपूरयितव्यमभिभ्वायतनाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन कृत्स्नायतनं परिपूरयितव्यं कृत्स्नायतनाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन चत्वारिंशत्वस्तूनि परिपूरयितव्यानि वस्त्वनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन व्यवस्थानानि परिपूरयितव्यानि व्यवस्थानाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन दशभूमयः परिपूरयितव्याः भूम्यनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन दशचर्याः परिपूरयितव्याः चर्याऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन दशक्षान्तयः परिपूरयितव्याः क्षान्त्यनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन विंशतिरध्याशयाः परिपूरयितव्याः अध्याशयाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन सर्वज्ञज्ञानं परिपूरयितव्यं सर्वज्ञज्ञानाऽनुपलब्धितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधि-

सत्त्वेन महासत्त्वेन शमथविपश्यनाज्ञानं[1] परिपूरयितव्यं शमथ*-विपश्यनाज्ञानाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन तिस्रो[2]ऽविद्याः परिपूरयितव्याः अविद्याऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन चतस्रः प्रतिसम्विदः परिपूरयितव्याः प्रतिसम्विदा†ऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन चत्वारि वैशारद्यानि[3] परिपूरयितव्यानि वैशारद्याऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन अच्युताः षडभिज्ञाः परिपूरयितव्याः अच्युताऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन षट्पारमिताः

(१) पश्यनादिशब्दा बौद्धैर्दर्शनाद्यर्थे व्यवहृताः। अन्यैस्त्वसाधुत्वेनोक्ताः। यथाभामत्यां। यश्यतस्तावत् पश्यना तिष्ठना सिद्ध योषधाद्यसाधुप्रयोगः॥ इति।

(२) पातञ्जले चतस्रोऽविद्या उक्ता यथा। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या॥ साधनपादे ५ सूत्रम्।

(३) निर्विचारवैशारद्येऽध्यात्मप्रसादः। तथा समाधिपादे ४७ सूत्रम्। अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यमिति भाष्यं। रजस्तमसोरुपचयोऽशुद्धिः सैवावरणलक्षणोमलस्तस्मादपेतस्य प्रकाशात्मनः स्वप्रकाशस्वभावस्य बुद्धिसत्त्वस्य॥ इति टीका।

* शमथ इति ख, ग, पाठः।

† प्रतिसम्विदनुपलम्भितामिति युक्तः पाठः।

परिपूरयितव्याः षट्पारमिताऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन सप्तधनानि परिपूरयितव्यानि धनाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेनाऽष्टौ पुरुषवितर्काः परिपूरयितव्याः वितर्काऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन नवसत्त्ववासाः परिपूरयितव्याः सत्त्ववासाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन दशबलानि परिपूरयितव्यानि बलाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेनाऽष्टादशावेणिकबुद्धधर्माः परिपूरयितव्याः आवेणिकबुद्धधर्माऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन महामैत्री(१)-परिपूरयितव्या महामैत्र्यनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन महाकरुणापरिपूरयितव्या महाकरुणाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन महामुदितापरिपूरयितव्या महामुदिताऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन महोपेक्षापरिपूरयितव्या महो-

(१) मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्॥ तथा समाधिपादे ३३ सूत्रम्।

तत्र सर्व्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेत्। दुःखितेषु करुणां पुण्यात्मकेषु मुदितां अपुण्यात्मकेषूपेक्षामिति भाष्यम्॥

येषाऽनुपलम्भितामुपादाय। प्रज्ञापारमितायां शारद्वतीपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन सर्व्वाऽऽकारवरोपेतं सर्व्वज्ञज्ञानमभिसम्बोद्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां योगः करणीयः। मार्गाऽऽकारज्ञतां परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां योगः करणीयः। सर्व्वज्ञतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां योगः करणीयः। सर्व्वसत्त्वचित्तचरितज्ञानाऽऽकारतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां योगः करणीयः। सर्व्ववासनाऽनुसन्धिक्लेशान् प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां योगः करणीयः। एवं हि शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन। प्रज्ञापारमितायां शिक्षितव्यं। बोधिसत्त्वन्यामं* शारद्वतीपुत्रावक्रमिं† तु कामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। श्रावकभूमिप्रत्येकबुद्धभूमीप्रज्ञातुकामेन ते च भूमी अतिक्रमितुकामेन बोधिसत्त्वेनमहासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अवैवर्त्तिकभूमौ स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। षड्भिज्ञतायां(१) स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सर्व्वसत्त्वचित्तचरितविस्पन्दितानि ज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापार-

* एष पाठः ५ पुस्तके ।

† क्रमितु इति च पुस्तके पाठः ।

(१) ऋद्धिर्दिव्यचक्षुर्दिव्यश्रोत्रं परचित्तज्ञानं पूर्व्वनिवासाऽनुस्मृतिराश्रवक्षयज्ञानमिति षडभिज्ञा । इत्यष्टसाहस्रीटीका ।

मितायां शिचितव्यं । सर्व्वश्रावकप्रत्येकबुद्धानां ज्ञानमभिभवितु-कामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। धारणीमुखसमाधिमुखानि प्रतिलब्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। सर्व्वश्रावकप्रत्येकबुद्धयानिकानां कुलपुत्राणां कुलदुहितॄणाञ्च दानं ददतां एकाऽनुमोदनासह-गतेन चित्तोत्पादेन सर्व्वतत्कुशलमूलमभिभवितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। सर्व्वश्रावकप्रत्येकबुद्धया-निकानां कुलपुत्राणां कुलदुहितॄणाञ्च शीलं रचतां एकाऽनु-मोदनासहगतेन चित्तोत्पादेन सर्व्वतत्कुशलमूलमभिभवितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। सर्व्वश्रावक-प्रत्येकबुद्धयानिकानां कुलपुत्राणां कुलदुहितॄणाञ्च चान्तिं भाव-यतामेकाऽनुमोदनासहगतेन चित्तोत्पादेन सर्व्वतत्कुशलमूलमभि-भवितुकामेन प्रज्ञापारमितायां शिचितव्यं। सर्व्वश्रावकप्रत्येकबुद्ध-यानिकानां कुलपुत्राणां कुलदुहितॄणाञ्च वीर्य्य*मारभ्यतामेकाऽनु-मोदनासहगतेन चित्तोत्पादेन सर्व्वतत्कुशलमूलमभिभवितुका-मेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। सर्व्व-श्रावकप्रत्येकबुद्धयानिकानां कुलपुत्राणां कुलदुहितॄणाञ्च ध्यानानि समापद्यतामेकाऽनुमोदनासहगतेन चित्तोत्पादेन सर्व्वतत्कुशल-मूलमभिभवितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। सर्व्वश्रावकप्रत्येकबुद्धयानिकानां कुलपुत्राणां कुलदु-

* पारमिता क, ख, ग, घ पाठः ।

दुहितृणाञ्च[1] प्रज्ञां भावयतामेकाऽनुमोदनासहगतेन चित्तोत्पादेन सर्व्वं तत्कुशलमूलमभिभवितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सर्व्वश्रावकप्रत्येकबुद्धानां शीलसमाधिप्रज्ञाविमुक्तिज्ञानदर्शनमेकाऽनुमोदनासहगतेन चित्तोत्पादेनाऽभिभवितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सर्व्वश्रावकप्रत्येकबुद्धानां ध्यानविमोक्षसमापत्ती एकाऽनुमोदनासहगतेन चित्तोत्पादेनाऽभिभवितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अल्पं दानं ददतः सर्व्वसत्त्वेभ्यः उपायकौशलपरिनामनायोगेन सर्व्वाऽऽकारज्ञतायां कथमप्रमेयाऽसंख्येयाऽपरिमाणं भवेदिति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अल्पं शीलं रक्षतः सर्व्वसत्त्वेभ्यः उपायकौशलपरिनामनायोगेन सर्व्वाऽऽकारज्ञतायां कथमप्रमेयाऽसंख्येयाऽपरिमाणं भवेदिति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अल्पं क्षान्तिं भावयतः सर्व्वसत्त्वेभ्यः उपायकौशलपरिनामनायोगेन सर्व्वाऽऽकारज्ञतायां कथमप्रमेयाऽसंख्येयाऽपरिमाणं भवेदिति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अल्पं वीर्य्यमारभमानः सर्व्वसत्त्वेभ्यः उपायकौशलपरिनामनायोगेन सर्व्वाऽऽकारज्ञतायां कथमप्रेयाऽसंख्येयाऽपरिमाणं भवेदिति बोधि सत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अल्पं ध्यानं समापद्यतः सर्व्वसत्त्वेभ्यः उपायकौशलपरिनामनायोगेन सर्व्वाऽऽकारज्ञ-

---

(१) कुलपुत्र कुलदुहितेति शब्दः पूजावचनः। स्त्रीपुरुषयोरुपादानं षण्ढोद्धृतमुष्कादीनामधिगमनिरासज्ञापनार्थं॥

तायां कथमप्रमेयाऽसंख्येयाऽपरिमाणं भवेदिति प्रज्ञापारमितायां शिचितव्यं। अल्पप्रज्ञां भावयतः सर्व्वसत्त्वेभ्यः उपायकौशलपरिनामनायोगेन सर्व्वाऽऽकारज्ञतायां कथमप्रमेयाऽसंख्येयाऽपरिमाणं भवेदिति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन दानपारमितायां स्थातुकामेन दानपारमितां परिपूरयितुकामेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन शीलपारमितायां चरितुकामेन शीलपारमितां परिपूरयितुकामेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन चान्तिपारमितायां चरितुकामेन चान्तिपारमितां परिपूरयितुकामेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन वीर्य्यपारमितायां चरितुकामेन वीर्य्यपारमितां परिपूरयितुकामेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शाद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन ध्यानपारमितायां चरितुकामेन ध्यानपारमितां परिपूरयितुकामेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरितुकामेन प्रज्ञापारमितां परिपूरयितुकामेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन एवं चित्तमुत्पादयितव्यं। कथं मे सर्व्वजातौ बुद्धविग्रहदर्शनं भवेत्। बुद्धसमन्वाहारो बुद्धानिरोधनं बुद्धपरिग्रहं भवेदिति प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन बुद्धकायं परिनिष्पादयितुकामेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शार-

द्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन द्वात्रिंशतो महापुरुषलक्षणानि-प्रतिलब्धुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेनाऽशीतिमनुव्यञ्जनानि प्रतिलब्धुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वत्र जातौ जातिस्मरतां प्रतिलब्धुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन बोधिचित्ताऽपरिप्रनाशतां* प्रतिलब्धुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वबोधिसत्त्वचर्य्याऽसम्प्रमोषतां प्रतिलब्धुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वपापमित्रपापसहायान् विवर्जितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वबुद्ध बोधिसत्त्वकल्याणमित्राण्यारागयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वमारकायिकादेवतानिग्रहीतुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वाऽऽवरणीयानि विशोधयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वधर्म्माऽनावरणतां प्रतिलब्धुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन बोधिसत्त्वकुलं परिनिष्पादयितुकामेन प्रज्ञापारमि-

* बोधिचित्तादिप्रमाणाशतामिति ख, घ पुस्तके पाठः। बोधिचित्तादिप्रणाशतामिति ग पुस्तके पाठः।

तायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन बुद्धकुलमारागयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन त्रिरत्नवंशाऽनुपच्छेदाय स्थातुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन कुमारभूमिमनुप्राप्तुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन बुद्धबोधिसत्त्वैरविरहितेन भवितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। [*पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन बोधिसत्त्वभूमिमतिक्रमितुकामेन प्रज्ञापारमितायां शिक्षितव्यं।] पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन क्षिप्रन्तथागतभूमिं परिपूरयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन यैर्यैः कुशलमूलैर्यैर्यैराकारैराकाङ्क्षेत् सर्व्वबुद्धान् भगवतः सत्कर्त्तुं गुरुकर्त्तुं मानयितुं पूजयितुं। तानि मे कुशलमूलानि तथाकाराः सम्बध्येयुरितिप्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वसत्त्वान् सन्तोषयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। [†पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वसत्त्वानामाज्ञाः परिपूरयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं।] पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वसत्त्वानामाशाः परिपूरयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। अन्नपानवस्त्रयान-

* [ ] एतच्चिह्नद्वयान्तर्वर्त्तीपाठः ख, ग, घ पुस्तकेषु नास्ति।

† [ ] एतच्चिह्नद्वयान्तर्गतपाठः क पुस्तके नास्ति।

विभूषणपुष्पधूपचूर्णमाल्यविलेपनशयनाऽऽसनोपाश्रयग्लानप्रत्ययभैषज्यपरिष्कारैः धनधान्याऽलङ्कारमणिमुक्तावैदूर्यशङ्खशिलाप्रवालजातरूपरजतोद्यानराज्यादिभिः सर्व्वोपकरणोपभोगैः सर्व्वसत्त्वान् सन्तर्पयिष्यामीति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां योगः करणीयः। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन धर्म्मधातुपरमालोके आकाशधातुपर्य्यवसाने सर्व्वसत्त्वान् महायाने समादापयितुकामेन दानपारमितायां प्रतिष्ठापयितुकामेन शीलपारमितायां प्रतिष्ठापयितुकामेन क्षान्तिपारमितायां प्रतिष्ठापयितुकामेन वीर्य्यपारमितायां प्रतिष्ठापयितुकामेन ध्यानपारमितायां प्रतिष्ठापयितुकामेन प्रज्ञापारमितायां प्रतिष्ठापयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेनैकमपि कुशलचित्तोत्पादमक्षयं कर्त्तुकामेन बोधिसत्त्वोपनिषदनात् बोधिसत्त्वेन महासत्त्वेन* प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन ये पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्ते मे वर्णं भाषेरन्निति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्ते मे वर्णं भाषेरन्निति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये पश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्ते मे वर्णं भाषेरन्निति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये उत्तर-

* बोधिसत्त्वेन महासत्त्वेनेति द्विः पाठ कचपुस्तके। ख,ग, घपुस्तके च।

स्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्ते मे वर्णं भाषेरन्निति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। ये उत्तरपूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्ते मे वर्णं भाषेरन्निति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। ये पूर्व्वदचिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्ते मे वर्णं भाषेरन्निति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। ये दचिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्ते मे वर्णं भाषेरन्निति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। ये पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्ते मे वर्णं भाषेरन्निति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। येऽधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्ते मेवर्णं भाषेरन्निति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। ये उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्ते मेवर्णं भाषेरन्निति प्रज्ञापारमितायां शिचितव्य। पुनरपर शारद्वतीपुत्र यानिपूर्व्वस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धचेत्राणि तानि सर्व्वाण्येकचित्तोत्पादेनोपसंक्रमितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। यानिदचिणस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धचेत्राणि तानि सर्व्वाण्येकचित्तोत्पादेनोपसंक्रमितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। यानिपश्चिमायांदिशि गङ्गानदीवालुकोपमानि बुद्धचेत्राणि तानि सर्व्वाण्येकचित्तो-

त्पादेनोपसंक्रमितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। यान्युत्तरस्यान्दिशि गङ्गानदीवालुकोपमानि बुद्धचेचाणि तानि सर्व्वाण्येकचित्तोत्पादेनोपसंक्रमितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। यान्युत्तरपूर्व्वस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धचेचाणि तानि सर्व्वाण्येकचित्तोत्पादेनोपसंक्रमितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। यानि पूर्व्वदचिणस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धचेचाणि तानि सर्व्वाण्येकचित्तोत्पादेनोपसंक्रमितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। यानिदचिणपश्चिमायांदिशि गङ्गानदीवालुकोपमानि बुद्धचेचाणि तानि सर्व्वाण्येकचित्तोत्पादेनोपसंक्रमितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। यानिपश्चिमोत्तरस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धचेचाणि तानि सर्व्वाण्येकचित्तोत्पादेनोपसंक्रमितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। यान्यधस्ताद्दिशि गङ्गानदीवालुकोपमानि बुद्धचेचाणि तानि सर्व्वाण्येकचित्तोत्पादेनोपसंक्रमितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। यान्युपरिष्टाद्दिशि गङ्गानदीवालुकोपमानि बुद्धचेचाणि तानि सर्व्वाण्येकचित्तोत्पादेनोपसंक्रमितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र यानि पूर्व्वस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धचेचाणि तानि सर्व्वाण्येकस्वरघोषेण विज्ञापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। यानि दचिणस्यांदिशि गङ्गानदीवा-

लुकोपमानि बुद्धक्षेत्राणि तानि सर्वाण्येकस्वरघोषेण विज्ञापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यानिपश्चिमायांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राणि तानि सर्वाण्येकस्वरघोषेण विज्ञापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यान्युत्तरस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राणि तानि सर्वाण्येकस्वरघोषेण विज्ञापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यान्युत्तरपूर्वस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राणि तानि सर्वाण्येकस्वरघोषेण विज्ञापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यानि पूर्वदक्षिणस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राणि तानि सर्वाण्येकस्वरघोषेण विज्ञापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यानिदक्षिणपश्चिमायांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राणि तानि सर्वाण्येकस्वरघोषेण विज्ञापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यानिपश्चिमोत्तरस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राणि तानि सर्वाण्येकस्वरघोषेण विज्ञापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यान्यधस्ताद्दिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राणि तानि सर्वाण्येकस्वरघोषेण विज्ञापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यान्युपरिष्टाद्दिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राणि तानि सर्वाण्येकस्वरघोषेण विज्ञापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुन-

रपरं शारद्वतीपुत्र बुद्धोत्पादाऽनुपच्छेदाय* स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वकुलरचितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र बुद्धवंशाऽनुपच्छेदायस्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र अध्यात्मशून्यतायां(१) स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। वहिर्द्धाशून्यतायां(२) स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। अध्यात्मवहिर्द्धाशून्यतायां(३) स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। शून्यताशून्यतायां(४) स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। महा-

* बुद्धोत्पादाय स्थातुकामेन च पुस्तके पाठ।

(१) आध्यात्मिकाना चक्षुरादीनामकूटस्थविनाशितामप्रकृतिमुपादायाध्यात्मशून्यता॥

(२) बाह्याना रूपादीना तथा प्रकृतिमुपादाय वहिर्धा शून्यता॥

(३) आध्यात्मिकबाह्यानामायतनानान्तथाप्रकृतिमुपादायाध्यात्मवहिर्धाशून्यता॥ तत्राध्यात्मिकमायतन यदिन्द्रियरूपं सङ्गृहीतं। बाह्यश्च यद्विषयरूप सङ्गृहीत। तद्धि आध्यात्मिकस्य चित्तेनायासत्त्वादाध्यात्मेन्द्रियसंगृहीतत्वात् एतच्च शून्यतात्रयमधिमुक्तिचर्य्याभूमौ॥

(४) सर्व्वधर्म्मशून्यताया अध्यात्मादिशून्यताया आलम्बनज्ञानस्वभावाया अपि शून्यत्वेन शून्यताशून्यता॥

शून्यतायां[१] स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। परमार्थशून्यतायां[२] स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। संस्कृतशून्यतायां[३] स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। असंस्कृतशून्यतायां[४] स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अत्यन्तशून्यतायां[५] स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अनवराग्रशून्यतायां[६] स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां

(१) सर्व्वधर्म्मशून्यताज्ञानमत्र सर्व्वधर्म्मशून्यता तेन च शून्यताशून्या। तस्य ग्राहकविकल्प महाथादियं प्रयोगमार्गोदग्राना दिशान्दिविभः शून्यत्वेन महाशून्यता तासां महासन्निवेशत्वादिय सर्व्वत्रगार्थेन(?) प्रथमाया भूमौ॥

(२) परमस्य निर्व्वाणस्यार्थ रूपशून्यत्वेन परमार्थशून्यता तस्य विसं-योगमात्रत्वादियमग्रार्थेन(?) द्वितीयाया भूमौ॥

(३) संस्कृतस्य त्रैधातुकस्य कामादिधातुशून्यत्वेन संस्कृतशून्यता तस्या-परिनिष्पन्नस्वभावत्वेन प्र ह(?) प्रतिपक्षत्वात्। इयं निष्यन्दाग्रा-र्थन(?) तृतीयाया।

(४) असंस्कृतस्यानुत्पादानिरोधानन्यथात्वस्य तेन शून्यत्वादसंस्कृत-शून्यता। अनुत्पादादीनामुत्पादादिप्रतियोगिप्रज्ञप्तिनिमित्ताभा-वात्। इयं निष्परिग्रहार्थेन चतुर्थी॥

(५) अन्तस्यान्तेन शून्यत्वादतीतानान्तत्वेनात्यन्तता। अन्तोभागस्तत्रो-च्छेदशाश्वतान्तयोर्मध्ये न तदस्ति किञ्चिद्येन तयोर्भागव्यवच्छेद-निमित्तत्वेन स्वभावो व्यवस्थाप्यते। इयं सन्तानाभेदार्थेन पञ्चम्या॥

(६) आदिमध्यपर्य्यवसानाना तै शून्यत्वेनानवराग्रशून्यता। आद्यादीना धर्म्मताऽनुस्यूतत्वेनात्यन्तिकत्वादियं निःक्लेशविशुद्ध्यर्थेन षष्ठ्या॥

शिक्षितव्यं। अनवकारशून्यतायां[१] स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। प्रकृतिशून्यतायां[२] स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सर्व्वधर्म्मशून्यतायां[३] स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। स्वलक्षणशून्यतायां[४] स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अनुपलम्भशून्यतायां[५] स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अभावशून्यतायां[६] स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन

---

(१) अवकरणोत्सर्गलक्षणस्य धकारस्य ?) विपर्य्ययेणानवकारस्तस्य तेन शून्यत्वादनवकारशून्यता। अवकरणादेः प्रक्रियारूपत्वेनानुत्सर्ग-प्रज्ञप्तिनिमित्तत्वायोगादियमनागात्वार्थेन(?) मन्तव्यां ॥

(२) सर्व्वार्थैरकृताप्रकृतिस्तस्यास्तया शून्यत्वात् प्रकृतिशून्यता। तस्याः संस्कृतासंस्कृतविकाराविकारानापत्तेः ॥

(३) धर्म्मस्य धर्म्मेण शून्यत्वात् सर्व्वधर्म्मशून्यतासर्व्वधर्म्माणां संस्कृतासंस्कृतयोरितरेतरापेक्षत्वेन स्वभावापरिनिष्पन्नत्वात्। एतच्च शून्यताद्वयमष्टौनामधिकार्थेन निर्विकल्पकज्ञेयपरिशुद्धिवशितादया-श्रयत्वेन चर्य्यापत्तभूमित्वात् प्रतिवेधपरिकर्म्मणाऽष्टम्यां ॥

(४) रूपणादिलक्षणस्य रूपादेस्तल्लक्षणशून्यत्वात् लक्षणशून्यता लक्षण-व्यवस्थानस्य सामान्यविशेषप्रज्ञप्तिमात्रत्वात् ॥

(५) अतीतादीनां धर्म्माणामतीतादिष्वध्वस्वितरेतरविषय्ययानुपलभ्य-त्वेनाऽनुपलम्भशून्यता। अध्वनां भावप्रज्ञप्तिमात्रत्वात्। एतच्च शून्यताद्वयं ज्ञानवशिताश्रयत्वेन तथैव नवम्या ॥

(६) अभावशून्यता। अभावस्यासंस्कृतस्य शून्यतादेस्तेन शून्यत्वादभाव-शून्यता ॥

प्रज्ञापामितायां शिक्षितव्यं । स्वभावशून्यतायां(१) स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापरमितायां शिक्षितव्यं। अभावस्वभावशून्यतायां(२) स्थातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं(१) । पुनरपरं शारद्वतीपुत्रालम्बनामतेयमसमनन्तरहेतुप्रत्ययता* अवबोद्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं । पुनरपरं शारद्वतीपुत्राकारलक्षणान्यवबोद्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं ।

---

* एष पाठः पुस्तकमध्ये दृश्यते ।

---

(१) स्वभावशून्यता । स्वभावस्य शून्यताख्यस्यार्य्यायां ज्ञानेन दर्शनेन वाच्छतकत्वात्(?) स्वभावशून्यता । ज्ञानदर्शनस्य यथाभूतार्थद्योतकत्वात् ॥

(२) अभावस्वभावशून्यता नास्तिसंयोगिकस्य धर्मस्य भावः प्रतीत्यसमुत्पन्नत्वादिति संयोगस्य तेन- शून्यत्वादभावस्वभावशून्यता सामग्रीमात्रं भाव इति ॥

भावस्य उपादानस्कन्धलक्षणस्य तेन शून्यत्वात् भावशून्यता । अस्थितैवैषा धर्म्माणां धर्म्मतेति परेण कर्त्राशून्यत्वात् परभावशून्यता । शून्यताधिष्ठानो हि पुरुषव्यापारः केवलं विघातायेति कृत्वा । एतच्च शून्यतात्रयं यथाक्रमं सवासनक्लेशावरणप्रहाणाश्रयत्वेन सवासनज्ञेयावरणप्रहाणाश्रयत्वेन स्वयं भूतार्थेन बुद्धभूमौ वेदितव्यं । इत्यष्टसाहस्रीटीकायां विंशतिप्रकारा शून्यताख्याता अत्र तु मूले अष्टादशप्रकाराः दृश्यन्ते ॥

पुनरपरं शारद्वतीपुत्र सर्व्वधर्म्माणां तथता अवबोद्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अवितथता अवबोद्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अनन्यतथतामवबोद्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अविकारतथतामवबोद्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यथावत्तथतामवबोद्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वधर्म्माणां तथतामवबोद्धुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र सर्व्वधर्म्माणां भूतकोटिमवबोद्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र यावन्तस्त्रिसाहस्रमहासाहस्रे लोकधातौ गङ्गानदीवालुकास्ताः सर्व्वा ज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र त्रिसाहस्रमहासाहस्रे लोकधातौ महासमुद्रेष्वप्स्कन्धोनदीषु महानदीषु कुनदीषु सरस्तडागेषु पल्वलेषु तत्सर्व्वं शतधाभिन्नया वालाग्रकोट्याऽभ्युत्क्षेप्तुकामेन च तस्मिन्नियां* प्राणिनोविहेठयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र यावांस्त्रिसाहस्रमहासाहस्रे लोकधातावग्निस्कन्धः ससर्व्वएकज्वालीभूतोभवेत्। तद्यथापि नाम कल्पोद्दाहे वर्त्तमाने तमेकेनमुखवायुनानिर्व्वापयितु-

* एष पाठ· ५ पुस्तके। तद्गाश्रयानिति शुद्धं प्रतिभाति।

कामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र त्रिसाहस्रमहासाहस्रे लोकधातौ वातमण्डलाकाया इमं त्रिसाहस्रमहासाहस्रं लोकधातुं विधुनुयुर्विकिरेयुर्विध्वंसयेयुः तद्यथापि नाम बुसमुष्टिं तां सर्व्वांमहाविक्षोभनावातमण्डलीयकानां शुल्याः शान्तकेनसंच्छादयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं*। [†पुनरपरं शारद्वतीपुत्र यस्त्रिसाहस्रमहासाहस्रे लोकधातावाकाशधातुस्तं सर्व्वमेकपर्य्यङ्केन स्फुरितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं] पुनरपरं शारद्वतीपुत्र त्रिसाहस्रमहासाहस्रे लोकधातौ सुमेरुचक्रवाडमहाचक्रवाड़ाः पर्व्वतवाजास्तान् सर्व्वानेकवालेन वह्नाऽभ्युत्क्षिप्याऽप्रमेयाऽसंख्येयान् लोकधातून् समुत्क्षिपेयमिति‡ बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र यावान् त्रिसाहस्रमहासाहस्रे लोकधातौ तृणकाष्ठगुल्मौषधिवनस्पतिशर्करापाषाणपर्व्वतमहापृथिवीसंचयस्तं सर्व्वं परमाणुरजोयोगेन ज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र यावन्तः पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु§ बुद्धाभगवन्तः सबोधिसत्त्वपरिवाराः सश्रावकसंघास्तान् सर्व्वानेकपिण्डपातेन प्रतिपाद-

---

* एष पाठः पुस्तकपञ्चके।

† [ ] एतच्चिह्नद्वयान्तर्गतपाठः क पुस्तके नास्ति।

‡ अभ्युत्क्षिपेयमिति ग, घ, च पाठः।

§ लोकधातुष्विति ख, ग, च पाठः। बुद्धक्षेत्रेष्विति क, घ, पाठः।

यितुकामेन एकपुष्पेणैकमाल्येनैकगन्धेनैकविलेपनेनैकचूर्णेनैकवस्त्रेणै-काभरणेनैकच्छत्रेणैकध्वजेनैकपताकया सत्कर्त्तुकामेन गुरुकर्त्तु-कामेन मानयितुकामेन पूजयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं । यावन्तो दक्षिणस्यां दिशि गङ्गा-नदीवालुकोपमेषु बुद्धक्षेत्रेषु बुद्धाभगवन्तः सबोधिसत्त्वपरिवाराः सश्रावकसंघास्तान् सर्व्वानेकपिण्डपातेनप्रतिपादयितुकामेनैकपुष्पे-णैकमाल्येनैकगन्धेनैकविलेपनेनैकचूर्णेनैकवस्त्रेणैकाभरणेनैकच्छत्रेणैक-ध्वजेनैकपताकया सत्कर्त्तुकामेन गुरुकर्त्तुकामेनमानयितुकामेन पूज-यितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं । यावन्तः पश्चिमायां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धा-भगवन्तः बोसधिसत्त्वपरिवाराः सश्रावकसंघास्तान् सर्व्वानेकपिण्ड-पातेन प्रतिपादयितुकामेनैकपुष्पेणैकमाल्येनैकगन्धेनैकविलेपनेनैक-चूर्णेनैकवस्त्रेणैकाभरणेनैकच्छत्रेणैकध्वजेनैकपतकया सत्कर्त्तुकामेन गुरुकर्त्तुकामेन मानयितुकामेन पूजयितुकामेन बोधिसत्त्वेन महा-सत्त्वेन प्रज्ञापारमितायां शिचितव्यं । यावन्तउत्तरस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तः सबोधिसत्त्वपरि-वाराः सश्रावकसंघास्तान् सर्व्वान् एकपिण्डपातेन प्रतिपादयितु-कामेनैकपुष्पेणैकमाल्येनैकगन्धेनैकविलेपनेनैकचूर्णेनैकवस्त्रेणैकाभरणे-नैकच्छत्रेणैकपताकया सत्कर्त्तुकामेन गुरुकर्त्तुकामेन मानयितुकामेन पूजयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। यावन्त उत्तरपूर्व्वस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तः सबोधिसत्त्वपरिवाराः सश्रावकसंघास्तान् सर्व्वानेक-

पिण्डपातेन प्रतिपादयितुकामेनैकपुष्पैणैकमाल्येनैकविलेपनेनैकचूर्णै-नैकवस्त्रैणैकाभरणेनैकच्छत्रेणैकध्वजेनैकपताकया सत्कर्त्तुकामेन गुरु-कर्त्तुकामेन मानयितुकामेन पूजयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं । यावन्तः पूर्व्वदचिणस्यांदिशि गङ्गा-नदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तः सबोधिसत्त्वपरिवाराः सश्रावकसंघास्तान् सर्व्वानेकपिण्डपातेन प्रतिपादयितुकामेनैकपुष्पै-णैकमाल्येनैकविलेपनेनैकचूर्णैनैकवस्त्रैणैकाभरणेनैकच्छत्रेणैकध्वजेनैक-पताकया सत्कर्त्तुकामेन गुरुकर्त्तुकामेनमानयितुकामेन पूजयितु-कामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं । यावन्तोदचिणपश्चिमायांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तः सबोधिसत्त्वपरिवाराः सश्रावकसंघास्तान् सर्व्वानेक-पिण्डपातेन प्रतिपादयितुकामेनैकपुष्पैणैकमाल्येनैकविलेपनेनैकचूर्णै-नैकवस्त्रैणैकाभरणेनैकच्छत्रेणैकध्वजेनैकपताकया सत्कर्त्तुकामेन गुरु-कर्त्तुकामेनमानयितुकामेन पूजयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं । यावन्तः पश्चिमोत्तरस्यांदिशि गङ्गा-नदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तः सबोधिसत्त्वपरिवाराः सश्रावकसंघास्तान् सर्व्वानेकपिण्डपातेन प्रतिपादयितुकामेनैकपुष्पै-णैकमाल्येनैकविलेपनेनैकचूर्णैनैकाभरणेनैकच्छत्रेणैकध्वजेनैकपताकया सत्कर्त्तुकामेन गुरुकर्त्तुकामेन मानयितुकामेन पूजयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं । यावन्तो-ऽधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तः सबोधिसत्त्वपरिवाराः सश्रावकसंघास्तान् सर्व्वानेकपिण्डपातेन

प्रतिपादयितुकामेनैकपुष्पेणैकमाल्येनैकगन्धेनैकविलेपनेनैकचूर्णेनैक-
वस्त्रेणैकाभरणेनैकच्छत्रेणैकध्वजेनैकपताकया सत्कर्त्तुकामेन गुरुकर्त्तु-
कामेनमानयितुकामेन पूजयितुकामेन बोधिसत्त्वेन महासत्त्वेन
प्रज्ञापारमितायां शिक्षितव्यं। यावन्त उपरिष्टाद्दिशि गङ्गानदी-
वालुकोपमेषु लोकधातुषु बुद्धाभगवन्तः सबोधिसत्त्वपरिवाराः
सश्रावकसंघास्तान् सर्व्वानैकपिण्डपातेन प्रतिपादयितुकामेनैक-
पुष्पेणैकमाल्येनैकगन्धेनैकविलेपनेनैकचूर्णेनैकवस्त्रेणैकाभरणेनैकच्छत्रे-
णैकध्वजेनैकपताकया सत्कर्त्तुकामेन गुरुकर्त्तुकामेन मानयितुकामेन
पूजयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षि-
तव्यं। पुनरपरं शारद्वतीपुत्र पूर्व्वस्यां दिशि गङ्गानदीवालुकोपमेषु
लोकधातुषु येसत्त्वास्तान् सर्व्वान् शीलस्कन्धे[1] प्रतिष्ठापयितुकामेन
समाधिस्कन्धे प्रतिष्ठापयितुकामेन प्रज्ञास्कन्धे प्रतिष्ठापयितुकामेन
विमुक्तिस्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिज्ञानदर्शनस्कन्धे प्रति-
ष्ठापयितुकामेन स्रोत-आपत्तिफले प्रतिष्ठापयितुकामेन सकृदागा-
मिफले प्रतिष्ठापयितुकामेन अनागामिफले प्रतिष्ठापयितुकामेन
अर्हत्त्वे प्रतिष्ठापयितुकामेन प्रत्येकबोधौ प्रतिष्ठापयितुकामेन सर्व्व-
ज्ञतायां प्रतिष्ठापयितुकामेन* मार्गाऽऽकारज्ञतायां प्रतिष्ठापयितु-

---

* एष पाठः क पुस्तके नास्ति।

---

(१) अनास्रवं शीलं समाधिः प्रज्ञा च शीलस्कन्धः समाधिस्कन्धः प्रज्ञास्कन्धः। सर्व्वावरणप्रहाणादिमुक्तिस्कन्धः विशिष्टज्ञानसाक्षात्कारो विमुक्तिज्ञानस्कन्धः॥ इत्यष्टसाहस्रीटीका।

ज्ञतायां प्रतिष्ठापयितुकामेन अनुपधिशेषे निर्व्वाणधातौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये पूर्व्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तान् सर्व्वान् शीलस्कन्धे प्रतिष्ठापयितुकामेन समाधिस्कन्धे प्रतिष्ठापयितुकामेन प्रज्ञास्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिस्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिज्ञानदर्शनस्कन्धे प्रतिष्ठापयितुकामेन स्रोत-आपत्तिफले प्रतिष्ठापयितुकामेन सकृदागामिफले प्रतिष्ठापयितुकामेन अनागामिफले प्रतिष्ठापयितुकामेन अर्हत्त्वे प्रतिष्ठापयितुकामेन प्रत्येकबोधौ प्रतिष्ठापयितुकामेन सर्व्वज्ञतायां प्रतिष्ठापयितुकामेन मार्गाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन सर्व्वाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन अनुपधिशेषे निर्व्वाणधातौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं।

ये दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तान् सर्व्वान् शीलस्कन्धे प्रतिष्ठापयितुकामेन समाधिस्कन्धे प्रतिष्ठापयितुकामेन प्रज्ञास्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिस्कन्धे प्रतिष्ठापयितुकामेन 'विमुक्तिज्ञानदर्शनस्कन्धे प्रतिष्ठापयितुकामेन स्रोत-आपत्तिफले प्रतिष्ठापयितुकामेन सकृदागामिफले प्रतिष्ठापयितुकामेन अनागामिफले प्रतिष्ठापयितुकामेन अर्हत्त्वे प्रतिष्ठापयितुकामेन प्रत्येकबोधौ प्रतिष्ठापयितुकामेन सर्व्वज्ञतायां प्रतिष्ठापयितुकामेन मार्गाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन सर्व्वाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन अनुपधिशेषे निर्व्वाणधातौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां

शिचितव्यं। ये पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तान् सर्व्वान् शीलस्कन्धे प्रतिष्ठापयितुकामेन समाधिस्कन्धे प्रतिष्ठापयितुकामेन प्रज्ञास्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिस्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिज्ञानदर्शनस्कन्धे प्रतिष्ठापयितुकामेन स्रोत-आपत्तिफले प्रतिष्ठापयितुकामेन सकृदागामिफले प्रतिष्ठापयितुकामेन अनागामिफले प्रतिष्ठापयितुकामेन अर्हत्त्वे प्रतिष्ठापयितुकामेन प्रत्येकबोधौ प्रतिष्ठापयितुकामेन सर्व्वज्ञतायां प्रतिष्ठापयितुकामेन मार्गाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन सर्व्वाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन अनुपधिशेषे निर्व्वाणधातौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। येऽधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तान् सर्व्वान् शीलस्कन्धे प्रतिष्ठापयितुकामेन समाधिस्कन्धे प्रतिष्ठापयितुकामेन प्रज्ञास्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिस्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिज्ञानदर्शनस्कन्धे प्रतिष्ठापयितुकामेन स्रोत-आपत्तिफले प्रतिष्ठापयितुकामेन सकृदागामिफले प्रतिष्ठापयितुकामेन अनागामिफले प्रतिष्ठापयितुकामेन अर्हत्त्वे प्रतिष्ठापयितुकामेन प्रत्येकबोधौ प्रतिष्ठापयितुकामेन सर्व्वज्ञतायां प्रतिष्ठापयितुकामेन मार्गाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन सर्व्वाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन अनुपधिशेषे निर्व्वाणधातौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। ये उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तान् सर्व्वान् शीलस्कन्धे प्रतिष्ठापयितुकामेन

कामेन सर्व्वाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन अनुपधिशेषे निर्व्वाणधातौ[१] प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तान् सर्व्वान् शीलस्कन्धे प्रतिष्ठापयितुकामेन समाधिस्कन्धे प्रतिष्ठापयितुकामेन प्रज्ञास्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिस्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिज्ञानदर्शनस्कन्धे प्रतिष्ठापयितुकामेन स्रोत-आपत्तिफले प्रतिष्ठापयितुकामेन सकृदागामिफले प्रतिष्ठापयितुकामेन अनागामिफले प्रतिष्ठापयितुकामेन अर्हत्त्वे प्रतिष्ठापयितुकामेन प्रत्येकबोधौ प्रतिष्ठापयितुकामेन सर्व्वज्ञतायां प्रतिष्ठापयितुकामेन मार्गाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन सर्व्वाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन अनुपधिशेषे निर्व्वाणधातौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये पश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तान् सर्व्वान् शीलस्कन्धे प्रतिष्ठापयितुकामेन समाधिस्कन्धे प्रतिष्ठापयितुकामेन प्रज्ञास्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिस्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिज्ञानदर्शनस्कन्धे प्रतिष्ठापयितुकामेन स्रोत-आपत्तिफले प्रतिष्ठापयितुकामेन सकृदागामिफले प्रतिष्ठापयितुकामेन अनागामिफले प्रतिष्ठापयितुकामेन अर्हत्त्वे प्रतिष्ठापयितुकामेन प्रत्येकबोधौ प्रति-

(१) न विद्यन्ते उपधयः स्कन्धाः सर्व्वरागादिप्रहाणावशेषीभूतत्वेन शेषा यस्मिन्। निर्व्वान्त्यस्मिन् सर्व्वविकल्पाः इति निर्व्वाणं तत्तथा तदेव धातुस्तदालम्बनभावेनार्य्याणां निष्पत्तेर्हेतुरतस्तस्मिन्निति मोक्षमीयं। षट्साहस्रीटीका।

ष्ठापयितुकामेन सर्व्वज्ञतायां प्रतिष्ठापयितुकामेन मार्गाऽऽकार-ज्ञतायां प्रतिष्ठापयितुकामेन सर्व्वाऽऽकारज्ञतायां प्रतिष्ठापयितु-कामेन अनुपधिशेषे निर्व्वाणधातौ प्रतिष्ठापयितुकामेन बोधि-सत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। ये उत्तरस्या-न्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तान् सर्व्वान् शीलस्कन्धे प्रतिष्ठापयितुकामेन समाधिस्कन्धे प्रतिष्ठापयितुकामेन प्रज्ञास्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिस्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिज्ञानदर्शनस्कन्धे प्रतिष्ठापयितुकामेन स्रोत-आपत्तिफले प्रतिष्ठापयितुकामेन सकृदागामिफले प्रतिष्ठापयितुकामेन अना-गामिफले प्रतिष्ठापयितुकामेन अर्हत्त्वे प्रतिष्ठापयितुकामेन प्रत्येक-बोधौ प्रतिष्ठापयितुकामेन सर्व्वज्ञतायां प्रतिष्ठापयितुकामेन मार्गाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन सर्व्वाऽऽकारज्ञतायां प्रति-ष्ठापयितुकामेन अनुपधिशेषे निर्व्वाणधातौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। ये उत्तर-पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्तान् सर्व्वान् शीलस्कन्धे प्रतिष्ठापयितुकामेन समाधिस्कन्धे प्रतिष्ठाप-यितुकामेन प्रज्ञास्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिस्कन्धे प्रति-ष्ठापयितुकामेन विमुक्तिज्ञानदर्शनस्कन्धे प्रतिष्ठापयितुकामेन स्रोत-आपत्तिफले प्रतिष्ठापयितुकामेन सकृदागामिफले प्रतिष्ठापयितु-कामेन अनागामिफले प्रतिष्ठापयितुकामेन अर्हत्त्वे प्रतिष्ठापयितु-कामेन प्रत्येकबोधौ प्रतिष्ठापयितुकामेन सर्व्वज्ञतायां प्रतिष्ठाप-यितुकामेन मार्गाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन सर्व्वाऽऽकार-

समाधिस्कन्धे प्रतिष्ठापयितुकामेन प्रज्ञास्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिस्कन्धे प्रतिष्ठापयितुकामेन विमुक्तिज्ञानदर्शनस्कन्धे प्रतिष्ठापयितुकामेन स्रोत-आपत्तिफले प्रतिष्ठापयितुकामेन सकृदागामिफले प्रतिष्ठापयितुकामेन अनागामिफले प्रतिष्ठापयितुकामेन अर्हत्वे प्रतिष्ठापयितुकामेन प्रत्येकबोधौ प्रतिष्ठापयितुकामेन सर्व्वज्ञतायां प्रतिष्ठापयितुकामेन मार्गाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन सर्व्वाऽऽकारज्ञतायां प्रतिष्ठापयितुकामेन अनुपधिशेषे* निर्व्वाणधातौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र यावन्तो दशदिग्लोकधातुषु† सत्त्वास्तान् सर्व्वाञ्छ्रावकप्रत्येकबुद्धयानेन च महायानेन च परिनिर्व्वापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतादानं ददतैवं शिक्षितव्यं ॥

यदेवं दानं दत्त्वा महाफलं भवत्येवं दानं दत्त्वा क्षत्रिय महाशीलाकुलेषूपपद्यते। एवं दानं दत्त्वा ब्राह्मणमहाशीलकुलेषूपपद्यते। एवं दानं दत्त्वा तदेवं दानं निश्राय चातुर्महाराजिकेषु देवेषूपपद्यते। एवं दानं दत्त्वा तदेवं दानं निश्राय त्रायत्रिंशेषु देवेषूपपद्यते। एवं दानं दत्त्वा तदेवं दानं निश्राय यामेषु देवेषूपपद्यते। एवं दानं दत्त्वा तदेवं दानं निश्राय तुषितेषु

* परिनिर्व्वाणधातौ इति घ पुस्तके पाठः।

† दशदिग्लोके सर्व्वलोकधातुष्विति ख, ग, घ, च पुस्तके पाठः।

‡ महायान इति ख, ग, घ, च पुस्तकेषु पाठः।

देवेषूपपद्यते । एवं दानं दत्त्वा तदेवं दानं निश्राय निर्माण-रतिषु देवेषूपपद्यते । एवं दानं दत्त्वा तदेवं दानं निश्राय पर-निर्मितवशवर्त्तिषु देवेषूपपद्यते । एवं दानं दत्त्वा तदेव दानं निश्राय प्रथमं ध्यानं समापद्यते । एवं दानं दत्त्वा तदेवं दानं निश्राय द्वितीयं ध्यानं समापद्यते । एवं दानं दत्त्वा तदेवं दानं निश्राय तृतीयं ध्यानं समापद्यते । एवं दानं दत्त्वा तदेव दानं निश्राय चतुर्थं ध्यानं समापद्यते । एवं दानं दत्त्वा तदेव दानं निश्राय आकाशानन्त्यायतनसमापत्तिं समापद्यते । एवं दानं दत्त्वा तदेव दानं निश्राय विज्ञानानन्त्यायतनसमापत्तिं समापद्यते । एवं दानं दत्त्वा तदेव दानं निश्राय आकिञ्चन्यायतनसमापत्तिं समापद्यते । एवं दानं दत्त्वा तदेव दानं निश्राय नैवसंज्ञानासंज्ञायतन-समापत्तिं समापद्यते । एवं दानं दत्त्वा चत्वारि स्मृत्युपस्थानान्युत्प-द्यन्ते । एवं दानं दत्त्वा चत्वारि सम्यक्प्रहाणान्युत्पद्यन्ते । एवं दानं दत्त्वा पञ्चेन्द्रियाण्युत्पद्यन्ते । एवं दानं दत्त्वा पञ्चबलान्युत्प-द्यन्ते । एवं दानं दत्त्वा सप्तबोध्यङ्गान्युत्पद्यन्ते । एवं दानं दत्त्वा आर्य्याष्टाङ्गो मार्ग उत्पद्यते । एवं दानं दत्त्वाशून्यताऽऽनिमित्ता-ऽप्रणिहितविमोक्षमुखान्युत्पद्यन्ते । एवं दानं दत्त्वा स्रोतआपत्ति-फलमनुप्राप्यते । एवं दानं दत्त्वा सकृदागामिफलमनुप्राप्यते । एवं दानं दत्त्वा अनागामिफलमनुप्राप्यते । एवं दानं दत्त्वा अर्हत्त्व-मनुप्राप्यते । एवं दानं दत्त्वा प्रत्येकबोधिरनुप्राप्यते । एवं दानं दत्त्वा अनुत्तरासम्यक्सम्बोधिरनुप्राप्यते । पुनरपरं शारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ज्ञानात्येवमुपायकौश-

सत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। [*पुनरपरं शारद्वतीपुत्र भागीयानां विशेषभागीयानां धर्म्माणां पारं गन्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं।] पुनरपरं शारद्वतीपुत्र पृथग्जनधर्म्माणामार्य्यधर्म्माणां पारं गन्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र शैक्षधर्म्माणामशैक्षधर्म्माणां पारं गन्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र श्रावकधर्म्माणां प्रत्येकबुद्धधर्म्माणां पारं गन्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वधर्म्माणां बुद्धधर्म्माणाञ्च पारं गन्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र सर्व्वधर्म्माणां पारं गन्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन अतीतानागतप्रत्युत्पन्नानां धर्म्माणां तथतामनुबोद्धुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वधर्म्माणामनुत्पादकोटिमनुप्राप्तुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वधर्म्माणां भूतकोटिं प्रतिवेद्धुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र सर्व्वश्रावकप्रत्येकबुद्धानां पूर्व्वंगमेन भवितु कामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्व-

---

* एतच्चिह्नद्वयमध्यवर्त्तीपाठः क पुस्तके नास्ति।

बुद्धानां भगवतामुपस्थायकेन भवितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वबुद्धानां भगवतामत्यन्तपरिचारकेण* भवितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन महापरिवारेण भवितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेनातीतानागतप्रत्युत्पन्नानां बोधिसत्त्वपरिवाराणां प्रतिलब्धुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वदाक्षिणीं दक्षिणां परिशोधयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन दानेन च गृहीतचित्तेन भवितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन दौःशील्यचित्तपृथक्कर्त्तुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन व्यापादचित्तमुत्स्रष्टुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन कौसीद्यचित्तमनुत्पादयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन विक्षेपचित्तमनुत्पादयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन दौष्प्रज्ञचित्तमनुत्पादयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र

---

* सम्यन्तरपरिवारेण ग, घ पुस्तके पाठः।

त्त्वेन दानं दत्त्वं दानपारमितां परिपूरयत्येवं दानं दत्त्वं शीलपारमितां परिपूरयत्येवं दान दत्त्वं क्षान्तिपारमितां परिपूरयत्येवं दानं दत्त्वं वीर्यपारमितां परिपूरयत्येवं दानं दत्त्वं ध्यानपारमितां परिपूरयत्येव दानं दत्त्वं प्रज्ञापारमितां परिपूरयति।

अथायुष्मान् शारद्वतीपुत्त्रोभगवन्तमेतदवोचत्। कथं भगवन् बोधिसत्त्वेन महासत्त्वेन दानं ददता दानपारमिता परिपूरिता भवति। कथं भगवन् बोधिसत्त्वेन महासत्त्वेन शीलं रक्षता शील-पारमिता परिपूरिता भवति। कथं भगवन् बोधिसत्त्वेन महासत्त्वेन क्षान्तिं भावयता क्षान्तिपारमिता परिपूरिता भवति। कथं भगवन् बोधिसत्त्वेन महासत्त्वेन वीर्यमारभता वीर्यपारमिता परिपूरिता भवति। कथं भगवन् बोधिसत्त्वेन महासत्त्वेन ध्यान समापद्यता ध्यानपारमिता परिपूरिता भवति। कथं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञां भावयता प्रज्ञापारमिता परिपूरिता भवति। भगवानाह। अनुपलम्भयोगेन शारद्वतीपुत्र दानस्य दायकस्य प्रतिग्राहकस्य त्रिमण्डलपरिशुद्ध्या दानपारमिता परिपूरिता भवति। आपत्त्यनापत्त्यध्यापत्तितामुपादाय शीलपारमिता परिपूरिता भवति। अक्षोभनतामुपादाय क्षान्तिपारमिता परिपूरिता भवति। कायचित्तवीर्य्यास्रंसनतामुपादाय वीर्य्यपारमिता परिपूरिता भवति। *अविक्षेपाऽस्यन्दनतामुपादाय ध्यानपारमिता परिपूरिता भवति। सर्व्वधर्मप्रज्ञानताऽनुपलम्भयोगेन प्रज्ञापार-

* अविक्षेपाऽप्रपञ्चता इति ख, ग, घ पुस्तके पाठ।

† प्रज्ञानता इति ख, ग, घ पुस्तके पाठ।

मिता परिपूरिता भवति। पुनरपरं शारद्वतीपुत्र अतीतानागत-प्रत्युत्पन्नानां बुद्धानां भगवतां सर्व्वबुद्धगुणान् प्रज्ञातुकामेनाऽनुप्राप्तु-कामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र संस्कृताऽसंस्कृतानां धर्म्माणां पारं गन्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र साश्रवानाऽश्रवाणां धर्म्माणां पारं गन्तुकामेन बोधि-सत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शार-द्वतीपुत्र कुशलाऽकुशलानां धर्म्माणां पारं गन्तु कामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र लौकिकलोकोत्तराणां धर्म्माणां पारं गन्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र रूप्यरूपिणां धर्म्माणां पारं गन्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र व्याहृताऽ-व्याहृतानां धर्म्माणां पारं गन्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र नियताऽ-नियतानां धर्म्माणां पारं गन्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र नैर्याणिकाऽ-नैर्याणिकानां धर्म्माणां पारं गन्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र हान*-भागीयानां विशेषभागीयानां धर्म्माणां पारं गन्तुकामेन बोधि-

---

* हानभागीयानामिति ग पुस्तके पाठः, भागीयानामिति ख, घ पुस्तके पाठः।

बोधिसत्त्वेन महासत्त्वेन सर्व्वसत्त्वान् दानमये पुण्यक्रियावस्तुनिप्रतिष्ठापयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वसत्त्वाञ्छीलमये पुण्यक्रियावस्तुनि प्रतिष्ठापयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वसत्त्वान् भावनामये पुण्यक्रियावस्तुनिप्रतिष्ठापयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वसत्त्वानैर्य्योपथसहगते पुण्यक्रियावस्तुनिप्रतिष्ठापयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वसत्त्वान् सर्व्वौपधिकसहगते पुण्यक्रियावस्तुनिप्रतिष्ठापयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन सर्व्वाऽऽकारं पञ्चचक्षुर्विनिष्पादयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन यदुत्तमाऽऽत्मचक्षुर्निष्पादयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। दिव्यं चक्षुर्निष्पादयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। प्रज्ञाचक्षुर्निष्पादयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। धर्म्मचक्षुर्निष्पादयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। बुद्धचक्षुर्निष्पादयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र ये पूर्व्वस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तान् सर्व्वान् दिव्येनचक्षुषा संद्रष्टुकामेन बोधिसत्त्वेन महासत्त्वेन यच्च बुद्धाभगवन्तोधर्म्मं भाषन्ते

तत्सर्व्वं दिव्येन श्रोत्रेण श्रोतुकामेन तेषाञ्च बुद्धानां भगवतां चेतसैव चेतः प्रज्ञातुकामेन तेषाञ्च बुद्धानां भगवतां पूर्व्वयोगसङ्गतां बोधिसत्त्वचर्य्यां समनुस्मर्त्तुकामेन तेषां बुद्धानां भगवतामनेकविधमृद्धिविकुर्व्वितं* संद्रष्टुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां*शिक्षितव्यं। ये दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तान् सर्व्वान् दिव्येन चक्षुषा संद्रष्टुकामेन यच्च बुद्धाभगवन्तोधर्म्मं भाषन्ते तत्सर्व्वं दिव्येन श्रोत्रेण श्रोतुकामेन तेषाञ्च बुद्धानां भगवतां चेतसैव चेतः प्रज्ञातुकामेन तेषां बुद्धानां भगवतां पूर्व्वयोगसङ्गतां बोधिसत्त्वचर्य्यामनुस्मर्त्तुकामेन तेषां बुद्धानां भगवतामनेकविधमृद्धिविकुर्व्वितं संद्रष्टुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये पश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तान् सर्व्वान् दिव्येन चक्षुषा संद्रष्टुकामेन यच्च ते बुद्धाभगवन्तोधर्म्मं भाषन्ते तत्सर्व्वं दिव्येन श्रोत्रेण श्रोतुकामेन तेषां बुद्धानां भगवतां चेतसैव चेतः प्रज्ञातुकामेन तेषाञ्च बुद्धानां भगवतां पूर्व्वयोगसङ्गतां बोधिसत्त्वचर्य्यामनुस्मर्त्तुकामेन तेषाञ्च बुद्धानां भगवतामनेकविधमृद्धिविकुर्व्वितं संद्रष्टुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये उत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तान् सर्व्वान् दिव्येन चक्षुषा संद्रष्टुकामेन यच्च ते बुद्धाभगवन्तोधर्म्मं भाषन्ते तत् सर्व्वं दिव्येन श्रोत्रेण

* एष पाठः प्रायसु पुस्तकेषु किन्तु कुत्रचित्स्थले विकुर्व्वितुमिति

* कुत्रचित्, स्थले विकुर्व्वितमिति पाठोदृश्यते।

श्रोतुकामेन तेषाञ्च बुद्धानां भगवतां चेतसैव चेतः प्रज्ञातुकामेन तेषां बुद्धानां भगवतां पूर्व्वयोगसहगतां बोधिसत्त्वचर्य्यामनुस्मर्त्तुकामेन तेषां बुद्धानां भगवतामनेकविधर्द्धिविकुर्व्वितं संद्रष्टुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये उत्तरपूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तान् सर्व्वान् दिव्येन चक्षुषा संद्रष्टुकामेन यश्च ते बुद्धाभगवन्तो धर्म्मं भाषन्ते तत्सर्व्वं दिव्येन श्रोत्रेण श्रोतुकामेन तेषाञ्च बुद्धानां भगवतां चेतसैव चेतः प्रज्ञातुकामेन तेषाञ्च बुद्धानां भगवतां पूर्व्वयोगसहगतां बोधिसत्त्वचर्य्यामनुस्मर्त्तुकामेन तेषाञ्च बुद्धानां भगवतामनेकविधर्द्धिविकुर्व्वितं संद्रष्टुकानेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये पूर्व्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तान् सर्व्वान् दिव्येन चक्षुषा संद्रष्टुकामेन यश्चते बुद्धाभगवन्तोधर्म्मं भाषन्ते तत्सर्व्वं दिव्येन श्रोत्रेण श्रोतुकामेन तेषां बुद्धानां भगवतां चेतसैव चेतः प्रज्ञातुकामेन तेषाञ्च बुद्धानां भगवतां पूर्व्वयोगसहगतां बोधिसत्त्वचर्य्यामनुस्मर्त्तुकामेन तेषाञ्च बुद्धानां भगवतामनेकविधर्द्धिविकुर्व्वितं संद्रष्टुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तान् सर्व्वान् दिव्येन चक्षुषा संद्रष्टुकामेन यश्चते बुद्धाभगवन्तोधर्म्मं भाषन्ते तत्सर्व्वं दिव्येन श्रोत्रेण श्रोतुकामेन तेषाञ्च बुद्धानां भगवतां चेतसैव चेतः प्रज्ञातुकामेन तेषाञ्च बुद्धानां भगवतां पूर्व्वयोगसहगतां

बोधिसत्त्वचर्य्यामनुप्राप्तुंकामेन तेषाञ्च बुद्धानां भगवतामनेकविध-मृद्धिविकुर्व्वितं संद्रष्टुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापार-मितायां शिक्षितव्यं। ये पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुको-पमेषु लोकधातुषु बुद्धाभगवन्तस्तान् सर्व्वान् दिव्येन चक्षुषा संद्रष्टुकामेन यञ्चते बुद्धाभगवन्तोधर्म्मं भाषन्ते तत्सर्व्वं दिव्येन श्रोत्रेण श्रोतुकामेन तेषाञ्च बुद्धानां भगवतां चेतसैव चेतः प्रज्ञातु-कामेन तेषाञ्च बुद्धानां भगवतां पूर्व्वयोगसङ्गतां बोधिसत्त्वचर्य्या-मनुप्राप्तुंकामेन तेषाञ्च बुद्धानां भगवतामनेकविधमृद्धिविकुर्व्वितं संद्रष्टुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। येऽधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्त-स्तान् सर्व्वान् दिव्येन चक्षुषा संद्रष्टुकामेन यञ्चते बुद्धाभगवन्तो धर्म्मं भाषन्ते तत्सर्व्वं दिव्येन श्रोत्रेण श्रोतुकामेन तेषाञ्च बुद्धानां भगवतां चेतसैव चेतः प्रज्ञातुकामेन तेषाञ्च बुद्धानां भगवतां पूर्व्वयोगसङ्गतां बोधिसत्त्वचर्य्यामनुप्राप्तुंकामेन तेषाञ्च बुद्धानां भगवतामनेकविधमृद्धिविकुर्व्वितं संद्रष्टुकामेन बोधिसत्त्वेन महा-सत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। य उपरिष्टाद्दिशि गङ्गा-नदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तान् सर्व्वान् दिव्येन चक्षुषा संद्रष्टुकामेन यञ्चते बुद्धाभगवन्तोधर्म्मं भाषन्ते तत्सर्व्वं दिव्येन श्रोत्रेण श्रोतुकामेन तेषाञ्च बुद्धानां भगवतां चेतसैव चेतः प्रज्ञातुकामेन तेषाञ्च बुद्धानां भगवतां पूर्व्वयोगसङ्गतां बोधिसत्त्वचर्य्यामनुप्राप्तुंकामेन तेषाञ्च बुद्धानां भगवतामनेकविध-मृद्धिविकुर्व्वितं संद्रष्टुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमि-

तायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन यन्ते बुद्धाभगवन्तो धर्म्मं भाषन्ते समन्ताद्दशसु दिक्षु सर्व्वलोकधातुषु धर्म्मं भाषन्ते तत्सर्व्वं श्रुत्वा नाच्छेदेन स्मृतिबलाधानेन सन्धारयितुकामेन यावदनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धः एतस्मिन्नन्तरे सर्व्वमप्रणाशयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेनाऽतीताऽनागतप्रत्युत्पन्नानां भगवतां बुद्धानां बुद्धक्षेत्राणि च बुद्धक्षेत्रपरिशुद्धिञ्च* द्रष्टुकामेन परिनिष्पादयितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र यत्किञ्चित्तथागतैर्भाषितं सूत्रं गेयं व्याकरणं गाथोदाननिदानत्यक्तकजातकवैपुल्याऽद्भुतधर्म्मोपदेशावकैर्न श्रुतं तत्सर्व्वं श्रोतुकामेन उद्ग्रहीतुकामेन धारयितुकामेन वाचयितुकामेन पर्य्यवाप्तुकामेन तथता प्रतिपत्तुकामेन परेभ्यश्च विस्तरेण सम्प्रकाशयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र यत्किञ्चित् पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्व्वबुद्धैर्भगवद्भिर्भाषितं भाषन्ते भाषिष्यन्ते तत्सर्व्वं श्रोतुकामेन उद्ग्रहीतुकामेन धारयितुकामेन वाचयितुकामेन पर्य्यवाप्तुकामेन परेभ्यश्च विस्तरेण सम्प्रकाशयितुकामेन तथत्वाय प्रतिपत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यत्किञ्चिद्दक्षिणस्यान्दिशि सर्व्वबुद्धैर्भगवद्भिर्भाषितं भाषन्ते भाषिष्यन्ते तत्सर्व्वं श्रोतुकामेन उद्ग्रहीतुकामेन धारयितुकामेन वाचयितुकामेन पर्य्यवाप्तुकामेन परेभ्यश्च

* परिशुद्धीश्च इति ख, ग, घ, च पुस्तकेषु पाठः।

विस्तरेण सम्प्रकाशयितुकामेन तत्र च तथत्वाय प्रतिपत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यत्किञ्चित्पश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्व्वबुद्धैर्भगवद्भिर्भाषितं भाषन्ते भाषिष्यन्ते तत्सर्व्वं श्रोतुकामेन उद्ग्रहीतुकामेन धारयितुकामेन वाचयितुकामेन पर्य्यवाप्तुकामेन परेभ्यश्च विस्तरेण सम्प्रकाशयितुकामेन तत्र च तथत्वाय प्रतिपत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यत्किञ्चिदुत्तरस्यान्दिशि सर्व्वबुद्धैर्भगवद्भिर्भाषितं भाषन्ते भाषिष्यन्ते तत्सर्व्वं श्रोतुकामेन उद्ग्रहीतुकामेन धारयितुकामेन वाचयितुकामेन पर्य्यवाप्तुकामेन परेभ्यश्च विस्तरेण सम्प्रकाशयितुकामेन तत्र च तथत्वाय प्रतिपत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यत्किञ्चिदुत्तरपूर्व्वस्यान्दिशि सर्व्वबुद्धैर्भगवद्भिर्भाषितं भाषन्ते भाषिष्यन्ते तत्सर्व्वं श्रोतुकामेन उद्ग्रहीतुकामेन धारयितुकामेन वाचयितुकामेन पर्य्यवाप्तुकामेन परेभ्यश्च विस्तरेण सम्प्रकाशयितुकामेन तत्र च तथत्वाय प्रतिपत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यत्किञ्चित् पूर्व्वदक्षिणस्यान्दिशि सर्व्वबुद्धैर्भगवद्भिर्भाषितं भाषन्ते भाषिष्यन्ते तत्सर्व्वं श्रोतुकामेन उद्ग्रहीतुकामेन धारयितुकामेन वाचयितुकामेन पर्य्यवाप्तुकामेन परेभ्यश्च विस्तरेण सम्प्रकाशयितुकामेन तत्र च तथत्वाय प्रतिपत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यत्किञ्चिद्दक्षिणपश्चिमायान्दिशि सर्व्वबुद्धैर्भगवद्भिर्भाषितं भाषन्ते भाषिष्यन्ते तत्सर्व्वं श्रोतुकामेन उद्ग्रहीतुकामेन धारयितुकामेन

वाचयितुकामेन पर्य्यवाप्तुकामेन परेभ्यश्च विस्तरेण सम्प्रकाशयितुकामेन तत्र च तथत्वाय प्रतिपत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यत्किञ्चित् पश्चिमोत्तरस्यान्दिशि सर्व्वबुद्धैर्भगवद्भिर्भाषितं भाषन्ते भाषिष्यन्ते तत्सर्व्वं श्रोतुकामेन उद्ग्रहीतुकामेन धारयितुकामेन वाचयितुकामेन पर्य्यवाप्तुकामेन परेभ्यश्च विस्तरेण सम्प्रकाशयितुकामेन तत्र च तथत्वाय प्रतिपत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यत्किञ्चिदधस्ताद्दिशि सर्व्वबुद्धैर्भगवद्भिर्भाषितं भाषन्ते भाषिष्यन्ते तत्सर्व्वं श्रोतुकामेन उद्ग्रहीतुकामेन धारयितुकामेन वाचयितुकामेन पर्य्यवाप्तुकामेन परेभ्यश्च विस्तरेण सम्प्रकाशयितुकामेन तत्र च तथत्वाय प्रतिपत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यत्किञ्चिदुपरिष्टाद्दिशि सर्व्वबुद्धैर्भगवद्भिर्भाषितं भाषन्ते भाषिष्यन्ते तत्सर्व्वं श्रोतुकामेन उद्ग्रहीतुकामेन धारयितुकामेन वाचयितुकामेन पर्य्यवाप्तुकामेन परेभ्यश्च विस्तरेण सम्प्रकाशयितुकामेन तत्र च तथत्वाय प्रतिपत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र याः पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अन्धकारतमिस्राअघाअघस्फुटायचैमौ सूर्य्याचन्द्रमसावेवं महर्द्धिकावेवं महेशाख्यावेवं महानुभावौ न भासतोन तपतोन विरोचतस्ताः सर्व्वा अवभासयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। याः दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अन्धकारतमिस्राअघाअघस्फुटायचैमौ

सूर्य्याचन्द्रमसावेवं महर्द्धिकावेवं महेशाख्यावेवं महानुभावौ न भासतोन तपतोन विरोचतस्तः सर्व्वाश्रवभासयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। याः पश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अन्धकारतमिस्राश्रघाँश्रघस्फुटायचेमौ सूर्य्याचन्द्रमसावेवं महर्द्धिकावेवं महेशाख्यावेवं महानुभावौ न भासतोन तपतोन विरोचतस्तः सर्व्वाश्रवभासयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। याः उत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अन्धकारतमिस्राश्रघाश्रघस्फुटायचेमौ सूर्य्याचन्द्रमसावेवं महर्द्धिकावेवं महेशाख्यावेवं महानुभावौ न भासतोन तपतोन विरोचतस्तः सर्व्वाश्रवभासयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। याः उत्तरपूर्व्वस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अन्धकारतमिस्राश्रघाश्रघस्फुटायचेमौ सूर्य्याचन्द्रमसावेवं महर्द्धिकावेवं महेशाख्यावेवं महानुभावौ न भासतोन तपतोन विरोचतस्तः सर्व्वाश्रवभासयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। याः पूर्व्वदचिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अन्धकारतमिस्राश्रघाश्रघस्फुटायचेमौ सूर्य्याचन्द्रमसावेवं महर्द्धिकावेवं महेशाख्यावेवं महानुभावौ न भासतोन तपतोन विरोचतस्तः सर्व्वाश्रवभासयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। याः दचिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अन्धकारतमिस्राश्रघाश्रघस्फुटायचेमौ सूर्य्याचन्द्रम-

मावेवं महर्द्धिकावेवं महेशाख्यावेवं महानुभावौ न भासतो-न तपतो न विरोचतस्ताः सर्व्वाश्रवभासयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। याः पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अन्धकारतमिस्रा-अघाअघस्फुटायचेमौ सूर्य्याचन्द्रमसावेवं महर्द्धिकावेवं महेशाख्यावेवं महानुभावौ न भासतो न तपतो न विरोचतस्ताः सर्व्वाश्रवभासयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। याअधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अन्धकारतमिस्राअघाअघस्फुटायचेमौ सूर्य्याचन्द्रमसावेवं महर्द्धिकावेवं महेशाख्यावेवं महानुभावौ न भासतो न तपतो न विरोचतस्ताः सर्व्वाश्रवभासयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। याउपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अन्धकारतमिस्राअघाअघस्फुटायचेमौ सूर्य्याचन्द्रमसावेवं महर्द्धिका*वेवं महेशाख्यावेवं महानुभावौ न भासतो न तपतो न विरोचतस्ताः सर्व्वाश्रवभासयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र यावन्तः पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवोयत्र न बुद्धशब्दं न धर्म्मशब्दं न सङ्घशब्दं सत्त्वाः शृण्वन्ति तत्र लोकधातुषु तान् सर्व्वसत्त्वान् बुद्धधर्म्मसङ्घशब्दान् श्रावयितुकामेन सम्यग्दृष्टौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन

* घ पुस्तके एवं महेशाख्याविंत्यतः प्रागपि एवं महानुभावाविति पाठः सर्व्वत्र दृश्यते।

प्रज्ञापारमितायां शिक्षितव्यं। यावन्तः शारद्वतीपुत्र दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवोयत्र न बुद्धशब्दं न धर्म्मशब्दं न सङ्घशब्दं सत्त्वाः शृण्वन्ति, तत्र लोकधातुषु तान् सर्व्वसत्त्वान् बुद्धधर्म्मसङ्घशब्दान् श्रावयितुकामेन सम्यग्दृष्टौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यावन्तः शारद्वतीपुत्र पश्चिमायान्दिशि गङ्गानदीवालुकोपमालोकधातवोयत्र न बुद्धशब्दं न धर्म्मशब्दं न सङ्घशब्दं सत्त्वाः शृण्वन्ति तत्र लोकधातुषु तान् सर्व्वसत्त्वान् बुद्धधर्म्मसङ्घशब्दान् श्रावयितुकामेन सम्यग्दृष्टौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यावन्तः शारद्वतीपुत्र उत्तरस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवोयत्र न बुद्धशब्दं न धर्म्मशब्दं न सङ्घशब्दं सत्त्वाः शृण्वन्ति तत्र लोकधातुषु तान् सर्व्वसत्त्वान् बुद्धधर्म्मसङ्घशब्दान् श्रावयितुकामेन सम्यग्दृष्टौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यावन्तः शारद्वतीपुत्र उत्तरपूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवोयत्र न बुद्धशब्दं न धर्म्मशब्दं न सङ्घशब्दं सत्त्वाः शृण्वन्ति तत्र लोकधातुषु तान् सर्व्वसत्त्वान् बुद्धधर्म्मसङ्घशब्दान् श्रावयितुकामेन सम्यग्दृष्टौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यावन्तः शारद्वतीपुत्र पूर्व्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवोयत्र न बुद्धशब्दं न धर्म्मशब्दं न सङ्घशब्दं सत्त्वाः शृण्वन्ति तत्र लोकधातुषु तान् सर्व्वसत्त्वान् बुद्धधर्म्मसङ्घशब्दान् श्रावयितुकामेन

सम्यग्दृष्टौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यावन्तः शारद्वतीपुत्र दक्षिणपश्चिमाया-न्दिशि गङ्गानदीवालुकोपमालोकधातवोयत्र न बुद्धशब्दं न धर्मशब्दं न सङ्घशब्दं सत्त्वाः शृण्वन्ति तत्र लोकधातुषु तान् सर्व्वसत्त्वान् बुद्धधर्मसङ्घशब्दान् श्रावयितुकामेन सम्यग्दृष्टौ प्रति-ष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षि-तव्यं। यावन्तः शारद्वतीपुत्र पश्चिमोत्तरस्यान्दिशि गङ्गानदी-वालुकोपमालोकधातवोयत्र न बुद्धशब्दं न धर्मशब्दं न सङ्घशब्दं सत्त्वाः शृण्वन्ति तत्र लोकधातुषु तान् सर्व्वसत्त्वान् बुद्धधर्मसङ्घ-शब्दान् श्रावयितुकामेन सम्यग्दृष्टौ प्रतिष्ठापयितुकामेन बोधि-सत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यावन्तः शार-द्वतीपुत्राऽधस्ताद्दिशि गङ्गानदीवालुकोपमालोकधातवोयत्र न बुद्धशब्दं न धर्मशब्दं न सङ्घशब्दं सत्त्वाः शृण्वन्ति तत्र लोकधातुषु तान् सर्व्वसत्त्वान् बुद्धधर्मसङ्घशब्दान् श्रावयितुकामेन सम्यग्दृष्टौ प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। यावन्तः शारद्वतीपुत्रोपरिष्टाद्दिशि गङ्गानदीवालु-कोपमालोकधातवोयत्र न बुद्धशब्दं न धर्मशब्दं न सङ्घशब्दं सत्त्वाः शृण्वन्ति तत्र लोकधातुषु तान् सर्व्वसत्त्वान् बुद्धधर्मसङ्घ-शब्दान् श्रावयितुकामेन सम्यग्दृष्टौ प्रतिष्ठापयितुकामेन बोधि-सत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शार-द्वतीपुत्र ये पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुष्व-न्धाः सत्त्वास्ते ममाऽनुभावाच्चक्षुषा रूपाणि द्रक्ष्यन्ति बधिराः श्रोत्रेण

शब्दान् श्रोष्यन्त्युन्मत्ताः स्मृतिं प्रतिलप्स्यन्ते नग्नाश्चीवराणि प्रतिलप्स्यन्ते क्षुधितपिपासिताश्चान्नपानं प्रतिलप्स्यन्ते ग्लानाव्याधिभ्यः प्रतिमोक्ष्यन्ते बन्धनाऽवरोधगतायथाकामं गमिष्यन्ति* ममर्द्ध्या ममाऽनुभावेनेति तेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये शारद्वतीपुत्र दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुष्वन्धाः सत्त्वास्ते ममाऽनुभावाच्चक्षुषा रूपाणि द्रक्ष्यन्ति बधिराः श्रोत्रेण शब्दान् श्रोष्यन्ति उन्मत्ताः स्मृतिं प्रतिलप्स्यन्ते नग्नाश्चीवराणि प्रतिलप्स्यन्ते क्षुधितपिपासिताश्चान्नपानं प्रतिलप्स्यन्ते ग्लानाव्याधिभ्यः प्रतिमोक्ष्यन्ते बन्धनाऽवरोधगतायथाकामं गमिष्यन्ति ममर्द्ध्या ममाऽनुभावेनेति तेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये शारद्वतीपुत्र पश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुष्वन्धाः सत्त्वास्ते ममाऽनुभावाच्चक्षुषा रूपाणि द्रक्ष्यन्ति बधिराः श्रोत्रेण शब्दान् श्रोष्यन्ति उन्मत्ताः स्मृतिं प्रतिलप्स्यन्ते नग्नाश्चीवराणि प्रतिलप्स्यन्ते क्षुधितपिपासिताश्चान्नपानं प्रतिलप्स्यन्ते ग्लानाव्याधिभ्यः प्रतिमोक्ष्यन्ते बन्धनाऽवरोधगतायथाकामं गमिष्यन्ति ममर्द्ध्या ममाऽनुभावेनेति तेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये शारद्वतीपुत्रोत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुष्वन्धाः सत्त्वास्ते ममाऽनुभावाच्चक्षुषा रूपाणि द्रक्ष्यन्ति बधिराः श्रोत्रेण शब्दं श्रोष्यन्ति उन्मत्ताः स्मृतिं प्रतिलप्स्यन्ते नग्नाश्चीवराणि प्रतिलप्स्यन्ते क्षुधित-

---

* यथाकामंगमागमविष्यन्ति इति ख, ग, घ, च पुस्तकेषु पाठः एवं परत्र।

पिपासिताश्चान्नपानं प्रतिलप्स्यन्ते ग्लानाः व्याधिभ्यः प्रतिमोक्ष्यन्ते बन्धनाऽवरोधगतायथाकामंगमाभविष्यन्ति, ममर्द्धा । ममाऽनुभावेनेति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं॥ ये शारद्वतीपुत्रोत्तरपूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुष्वन्धाः सत्त्वास्ते ममाऽनुभावाच्चक्षुषा रूपाणि द्रक्ष्यन्ति बधिराः श्रोत्रेण शब्दं श्रोष्यन्ति उन्मत्ताः स्मृतिं प्रतिलप्स्यन्ते नग्नाश्चीवराणि प्रतिलप्स्यन्ते क्षुधितपिपासिताश्चान्नपानं प्रतिलप्स्यन्ते ग्लानाव्याधिभ्यः प्रतिमोक्ष्यन्ते बन्धनाऽवरोधगतायथाकामगमाभविष्यन्ति ममर्द्धा ममाऽनुभावेनेति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्य। ये शारद्वतीपुत्र पूर्व्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुष्वन्धाः सत्त्वास्ते ममाऽनुभावाच्चक्षुषा रूपाणि द्रक्ष्यन्ति बधिराः श्रोत्रेण शब्दान् श्रोष्यन्ति उन्मत्ताः स्मृतिं प्रतिलप्स्यन्ते नग्नाश्चीवराणि प्रतिलप्स्यन्ते क्षुधितपिपासिताश्चान्नपानं प्रतिलप्स्यन्ते ग्लानाः व्याधिभ्यः प्रतिमोक्ष्यन्ते, बन्धनाऽवरोधगतायथाकामंगमाभविष्यन्ति ममर्द्धा ममाऽनुभावेनेति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये शारद्वतीपुत्र दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुष्वन्धाः सत्त्वास्ते ममाऽनुभावाच्चक्षुषा रूपाणि द्रक्ष्यन्ति बधिराः श्रोत्रेण शब्दं श्रोष्यन्ति उन्मत्ताः स्मृतिं प्रतिलप्स्यन्ते नग्नाश्चीवराणि प्रतिलप्स्यन्ते क्षुधितपिपासिताश्चान्नपानं प्रतिलप्स्यन्ते ग्लानाः व्याधिभ्यः प्रतिमोक्ष्यन्ते बन्धनाऽवरोधगतायथाकामंगमाभविष्यन्ति ममर्द्धा ममाऽनुभावेनेति बोधिसत्त्वेन महासत्त्वेन प्रज्ञा-

पारमितायां शिक्षितव्यं। ये शारद्वतीपुत्र पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुष्वन्धाः सत्त्वास्ते ममाऽनुभावाच्चक्षुषा रूपाणि द्रक्ष्यन्ति बधिराः श्रोत्रेण शब्दं श्रोष्यन्ति उन्मत्ताः स्मृतिं प्रतिलप्स्यन्ते नग्नाश्चीवराणि प्रतिलप्स्यन्ते क्षुधितपिपासिता-श्चान्नपानं प्रतिलप्स्यन्ते ग्लानाः व्याधिभ्यः परिमोक्ष्यन्ते बन्धनाऽवरोधगतायथाकामंगमाभविष्यन्ति ममर्द्ध्या ममाऽनुभावेनेति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये शारद्वतीपुत्राऽधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुष्वन्धाः सत्त्वास्ते ममाऽनुभावाच्चक्षुषा रूपाणि द्रक्ष्यन्ति, बधिराः श्रोत्रेण शब्दं श्रोष्यन्ति उन्मत्ताः स्मृतिं प्रतिलप्स्यन्ते नग्नाश्चीवराणि प्रतिलप्स्यन्ते क्षुधितपिपासिताश्चान्नपानं प्रतिलप्स्यन्ते ग्लानाः व्याधिभ्यः परिमोक्ष्यन्ते, बन्धनाऽवरोधगतायथाकामं गमिष्यन्ति ममर्द्ध्या ममाऽनुभावेनेति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ये शारद्वतीपुत्रोपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुष्वन्धाः सत्त्वास्ते ममाऽनुभावाच्चक्षुषा रूपाणि द्रक्ष्यन्ति, बधिराः श्रोत्रेण शब्दं श्रोष्यन्ति, उन्मत्ताः स्मृतिं प्रतिलप्स्यन्ते, नग्नाश्चीवराणि प्रतिलप्स्यन्ते, क्षुधितपिपासिताश्चान्नपानं प्रतिलप्स्यन्ते, ग्लानाव्याधिभ्यः परिमोक्ष्यन्ते* बन्धनाऽवरोधगतायथाकामंगमाभविष्यन्ति, ममर्द्ध्या ममाऽनुभावेनेति बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। किमिति ये तत्र

---

* केषु स्थलेषु प्रतिमोक्ष्यन्ते इति केषु च स्थलेषु परिमोक्ष्यन्ते इति पाठ सर्व्वेषु पुस्तकेषु दृश्यते।

समन्ताद्दशसु दिक्षु एकैकस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अक्षणाऽपायगताः सत्त्वाः नैरयिकाः तैर्य्यग्योनिकावा याम्लौकिकावा ते ममाऽनुभावात्ततश्चुत्वा मानुष्यमात्मभावं प्रतिलप्स्यन्ते सर्व्वांस्तान् सत्त्वाञ्छीले प्रतिष्ठापयितुकामेन, समाधौ प्रतिष्ठापयितुकामेन, प्रज्ञायां प्रतिष्ठापयितुकामेन, विमुक्तौ प्रतिष्ठापयितुकामेन, विमुक्तिज्ञानदर्शने प्रतिष्ठापयितुकामेन, स्रोतआपत्तिफले प्रतिष्ठापयितुकामेन सकृदागामिफले प्रतिष्ठापयितुकामेन, अनागामिफले प्रतिष्ठापयितुकामेन अर्हत्वे प्रतिष्ठापयितुकामेन, प्रत्येकबोधौ प्रतिष्ठापयितुकामेन, सर्व्वज्ञतायां प्रतिष्ठापयितुकामेन, मार्गाकारज्ञतायां प्रतिष्ठापयितुकामेन, सर्व्वाकारज्ञतायां प्रतिष्ठापयितुकामेन, अनुत्तरायां सम्यक्सम्बोधौ प्रतिष्ठापयितुकामेन, बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन तथागतेर्य्यापथं शिक्षितुकामेन, तथागतचर्य्याचारित्रविशुद्धं तथागतस्य ज्ञानपूर्व्वङ्गमकायकर्म्मवाक्कर्म्ममनस्कर्म्मपरिशुद्धिं शिक्षितुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतैवमुपपरीक्षितव्यं। किमित्यहं महानागाऽवलोकितमवलोक्य सत्त्वेभ्योऽचुशधर्म्मं देशयेयं। किमित्यहमतो* सिंहविक्रम्भितेन विक्रमयेयं। किमित्यहममोघविक्रामितेन† विक्रामयेयं। किमित्यहं चतुरङ्गुलमात्रेण महापृथिवीं

* अयमेव पाठः पुस्तकपञ्चके।

† विक्रामितया इति च पुस्तके पाठः।

पद्मानस्पृशन् गच्छेयं। किमित्यहं सहस्रपत्रेषु पद्मेषु पादतले निःक्षिपन् पादतलसन्निश्रितान् प्राणिनोऽविहेठेयं। किमित्यहं सहस्रारचक्राभ्यां पादतलाभ्यां महापृथिवीं विचित्रयन् गच्छेयं। किमित्यहं चङ्क्रममाणमात्रं महापृथिव्याः परिवर्त्तयं क्रमेयं। किमित्यहं सर्व्वां पृथिवीमनुचंक्रममाणः पृथिवीरजसानाऽनुक्षिपेयं। किमित्यहमेकं वा योजनं द्वे वा त्रीणि वा चत्वारि वा पञ्च वा दश वा विंशतं वा त्रिंशतं वा योजनशतं वा योजनसहस्रं वा योजनशतसहस्रं वा योजनकोटीं वा योजनकोटीशतं वा योजनकोटीसहस्रं वा योजनकोटीशतसहस्रं वा यावदप्रमेयाणि वा असंख्येयानि वा अचिन्त्यानि वा अतुल्यानि वा अनन्तानि वा अपर्य्यन्तानि वा अभाष्याणि वा अनभिलाप्यानि अनभिलाप्यानभिलाप्यानि वा बुद्धक्षेत्राण्यनुविचरता*ऽनुचङ्क्रम्यमाणस्य न कायक्लम† मे चित्तमिति प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतैवं व्युपपरीक्षितव्यं। किमित्यहमधस्तात् क्रमतलयोः‡ सहस्राराभ्यां चक्राभ्यां रश्मिकोटीनियुतशतसहस्राणि प्रमुञ्चन् सर्व्वाऽक्षणाऽपायदुःखानि प्रशमय्य सर्व्वसत्त्वान् सुखितान् कुर्य्यामिति प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतैवं व्युपपरीक्षितव्यं। किमत्यहं चातुर्महा-

* विचरता इति सर्व्वपुस्तकेषु पाठः विचरत इति पाठोयुक्तः।

† क्लम मे इति पाठः सर्व्वपुस्तकेषु दृश्यते क्लमं मे इति युक्तं प्रतिभाति।

‡ क्रमतलयोरिति ख, ग, घ, च पुस्तकेषु पाठः।

राजकायिकैर्देवैः त्रायस्त्रिंशैर्यामैस्तुषितैर्निर्माणरतिभिः परनिर्मि-
तवशवर्त्तिभिः ब्रह्मकायिकैर्ब्रह्मपुरोहितैर्ब्रह्मपार्षद्यैर्महाब्रह्मभिराभैः
परीता*भैरप्रमाणाभैराभास्वरैः शुभैः परीत्तशुभैः अप्रमाणशुभैः
शुभकृत्स्नैर्वृहैः परीत्तवृहैरप्रमाणवृहैर्वृहत्फलैः अवृहैः अतपैः
सुदृशैः सुदर्शनैः अकनिष्ठैः अनेकदेवकोटीनियुतशतसहस्रैः परि-
वृतः पुरस्कृतो बोधिमण्डलमुपसंक्रमिष्यामीति प्रज्ञापारमितायां
शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञा-
पारमितायां चरतैवं व्युपपरीक्षितव्यं। किमिति मे बोधिवृक्षतले(१)
निषीदतः चातुर्महाराजकायिकादेवास्त्रायस्त्रिंशादेवाः तुषितादेवाः
निर्माणरतयोदेवाः परनिर्मितवशवर्त्तिनोदेवाः ब्रह्मकायिकादेवाः
ब्रह्मपुरोहितादेवाः ब्रह्मपार्षद्यादेवाः महाब्रह्माणोदेवाः परी-
त्ताभादेवाः आभास्वरादेवाः शुभादेवाः परीत्तशुभादेवाः अप्र-
माणशुभादेवाः शुभकृत्स्नादेवाः वृहादेवाः वृहत्फलादेवाः अवृहा-
देवाः अतपादेवाः सुदृशादेवाः सुदर्शनादेवाः अकनिष्ठादेवाः
दुष्प्रसंस्तरं कुर्युरिति प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं
शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतैवं
व्युपपरीक्षितव्यं। किमित्यहं बोधिमण्डलनिषण्णः पाणिनालक्षण-
समलङ्कृतेन महापृथिवीं पराहत्य सपरिवारं कृष्णबन्धुन्नमुचिं

---

* परीत्ताभैरिति ख, ग, घ पुस्तके पाठः।

† बोधिमण्डाद्द्रुममूलमिति ख, ग, घ पुस्तके पाठ।

‡ उपसंक्रमेयमिति च पुस्तके पाठः।

---

(१) बोधिद्रुमश्चलदलः पिप्पल कुञ्जराशन· चाश्वत्थे इत्यमरः।

पराजयेयमिति प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतैवं व्युपपरीचितव्यं। किमिति मेऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धस्य गच्छतस्तिष्ठतोनिषीदतोनिषण्णस्य शयानस्य पृथिवीप्रदेशोवज्रमयः सन्तिष्ठेतेति तेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतैवं[१] व्युपपरीचितव्यं। किमित्यहं यत्रैव दिवसेऽभिनिष्क्रामेयं तत्रैव दिवसे सपरिवृतकं छष्णबन्धुं जित्वा अनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं, अभिसम्बुध्य तत्रैव दिवसे धर्म्मचक्रं प्रवर्त्तयेयं। प्रवर्त्तितस्याऽप्रमेयाऽसंख्येयानां विरजोविगतमलं धर्म्मेषु धर्म्मचक्षुर्विशुद्ध्*सप्रमेयाऽसंख्येयानां सत्त्वानामनुपादायाऽऽश्रवेभ्यश्चित्तानि विमुच्येरन्। अप्रमेयाऽसंख्येयाः सत्त्वाः अवैवर्त्तिकाभवेयुरनुत्तरायां सम्यक्सम्बोधाविति तेन प्रज्ञापारमितायां शिचितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतैवं व्युपपरीचितव्यं। किमितिमेऽनुत्तरां सम्यक् सम्बोधिमभिसम्बुद्धस्याऽप्रमेयाऽसंख्ययश्रावकसंघोभवेदेकधर्म्मदेशनयाचाऽप्रमेयाऽसंख्येयाएकासनिकाअर्हन्तोभवेयुर्बोधिसत्त्वाश्च महासत्त्वाश्च अवैवर्त्तिकाभवेयुरनुत्तरायां सम्यक् सम्बोधौ अप्रमेयाऽसंख्येयाऽपरिमाणश्च बोधिसत्त्वसंघोभवेदमितं मायुःप्रमाणं

---

* विशुद्धेद इति ख, ग, घ पुस्तके पाठः।

---

(१) चरता भावयता सर्व्वेत्रायर्थो बोधार्थाः।

अमिताप्रभा सम्यग्भवेदिति प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतैवं चित्तमुत्पादयितव्यं। किमितिमेऽनुत्तरां सम्यक् सम्बोधिमभिसम्बुद्धस्य तत्र बुद्धक्षेत्रे रागद्वेषमोहशब्दोऽपि न भवेदिति प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतैवं चित्तमुत्पादयितव्यं। किमितिमेऽनुत्तरां सम्यक् सम्बोधिमभिसम्बुद्धस्य तत्र बुद्धक्षेत्रे सर्व्वसत्त्वा एवं रूपया प्रज्ञया समन्वागताभवेयुर्यदेवं जानीरन् साधुदानं साधुदमं साधु ब्रह्मचर्य्यं साध्वविहिंसा सर्व्वप्राणिभूतेष्विति प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतैवं चित्तमुत्पादयितव्यं। किमितिमेपरिनिर्वृतस्य सद्धर्म्मोऽन्तर्द्धानशब्दोऽपि न भवेदिति प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतैवं चित्तमुत्पादयितव्यं। किमितिमे सहश्रवणमात्रेण नामधेयस्य गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानियताभवेयुरनुत्तरायां सम्यक् सम्बोधाविति प्रज्ञापारमितायां शिक्षितव्यं। यस्मिन् शारद्वतीपुत्र समये बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्निमान् गुणानुत्पादयति तस्मिन् समये आत्तमनस्काभवन्ति चत्वारोमहाराजावयमत्र चत्वारिपात्राणि प्रतिष्ठापयिष्यामोयानि पौर्व्विकैर्महाराजैः पौर्व्विकेषु तथागतेषु प्रतिष्ठापितानि। आत्तमनस्काभवन्तित्रायस्त्रिंशादेवाः आत्तमनस्काभवन्ति यामादेवाः आत्तमनस्काभवन्ति तुषितादेवा आत्तमनस्काभवन्तिनिर्म्माणरतयोदेवाः आत्त-

मनस्काभवन्ति परनिर्म्मितवशवर्त्तिनोदेवाः [आत्तमनस्का भवन्ति]* वयमप्यस्य उपस्थापनपरिचर्य्याकर्म्मकरिष्यामः एवमासुराः कायाः† परिहास्यन्ते दिव्याः कायाअभिवर्द्धन्ते आत्तमनस्काभवन्ति ब्रह्म-कायिकादेवाआत्तमनस्काभवन्ति ब्रह्मपुरोहितादेवाआत्तमनस्काभ-वन्ति ‡ब्रह्मपार्षद्यादेवाआत्तमनस्काभवन्ति महाब्रह्मणोदेवाआत्तम-नस्काभवन्ति परीत्ताभादेवाआत्तमनस्काभवन्ति अप्रमाणाभादेवा-आत्तमनस्काभवन्ति आभास्वरादेवाआत्तमनस्काभवन्ति परीत्तशु-भादेवाआत्तमनस्काभवन्ति अप्रमाणशुभादेवाआत्तमनस्काभवन्ति शुभकृत्स्नादेवाआत्तमनस्काभवन्ति वृहादेवाआत्तमनस्काभवन्ति परीत्तवृहादेवाआत्तमनस्काभवन्ति अप्रमाणवृहादेवाआत्तमनस्का-भवन्ति वृहत्फलादेवाआत्तमनस्काभवन्ति अवृहादेवाआत्तमनस्का-भवन्तिअतपादेवाआत्तमनस्काभवन्ति सुदृशादेवाआत्तमनस्काभवन्ति सुदर्शनादेवाआत्तमनस्काभवन्ति अकनिष्ठादेवावयमेनमभिसम्बुद्ध-मध्येषिष्यामहेधर्म्मचक्रप्रवर्त्तनाय, यस्मिन् समये शारद्वतीपुत्र बोधि-सत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् विवर्द्धते षड्भिः पार-मिताभिरात्तमनस्कास्तस्मिन् समये भवन्ति बोधिसत्त्वयानिकाः कुलपुत्राः कुलदुहितरस्य वयमस्य महासत्त्वस्य मातापितरौ भविष्यामोभ्रातृभगिनीभार्य्यापुत्रदुहितृमित्रामात्यज्ञातिसहायाश्च-

* [ ] एतच्चिह्नद्वयान्तर्गतः पाठोऽधिकः प्रतिभाति पुस्तकयस्यकेऽस्तीति रक्षितः।

† कामा इति च पुस्तके पाठः।

‡ महायाः इति युक्तं प्रतिभाति।

मोदिताभविष्यामहत्यात्तमनस्काभवन्ति चत्वारोमहाराजायातुर्महाराजकायिकादेवास्त्रायस्त्रिंशादेवायामादेवाः तुषितादेवाः निर्म्माणरतयोदेवाः परनिर्म्मितवशवर्त्तिनोदेवाः ब्रह्मकायिकादेवाः ब्रह्मपुरोहितादेवाः ब्रह्मपार्षद्यादेवा, महाब्रह्माणो*देवाः आभास्वरादेवाः शुभादेवाः परीत्तशुभादेवाः अप्रमाणशुभादेवाः शुभकृत्स्नादेवाः अप्रमाणवृहादेवाः वृहत्फलादेवाः अवृहादेवाः अतपादेवाः सुदृशादेवाः सुदर्शनादेवाः अकनिष्ठादेवाः बोधिसत्त्वस्य महासत्त्वस्य मैथुनसंयोगप्रज्ञानतायै, स खलुब्रह्मचारी भवति। सत्त्वानां बोधिनियोजनतायै न संयोजनतायै† धर्म्मैः संयुज्यते स एवं प्रणिदधाति। प्रथमचित्तोत्पाद मथोपादाय ब्रह्मचारिणाभवितव्यं नाऽब्रह्मचारिणा तत् कस्य हेतोः। कामान् खलु पुनः प्रतिषेधमानस्य‡ ब्रह्मलोकोपपत्तेरप्यन्तरायोभवति। कः पुनर्व्वादोऽनुत्तरायाः सम्यक् सम्बोधेस्तस्मात्तर्हि बोधिसत्त्वेन महासत्त्वेन ब्रह्मचारिणाऽभिनिष्क्रम्याऽनुत्तरा सम्यक् सम्बोधिरभिसम्बोद्धव्या नाऽब्रह्मचारिणा। एवमुक्ते आयुष्मान् शारद्वतीपुत्रोभगवन्तमेतदवोचत्। किं पुनर्भगवन् बोधिसत्त्वस्य महासत्त्वस्याऽवश्यं मातापितृभार्य्यापुत्रदुहितृभिर्भवितव्यं। भगवानाह। केषाञ्चिच्छारद्वतीपुत्र बोधिसत्त्वानां महासत्त्वानामवश्यं मातापितृभ्यां भवितव्यं। भार्य्यापुत्रदुहितृभिर्भवितव्यं।

---

* सर्व्वत्रपुस्तके महाब्रह्मणो देवा इत्यस्ति महाब्रह्माण इति युक्तं प्रतिभाति।

† संयोजनीयैरिति ख, ग, घ, च पुस्तके पाठ।

‡ सेवमानस्य इति युक्तं प्रतिभाति।

केषाञ्चिद्वयं मातापितृभार्य्यापुत्रदुहितृभिर्भवितव्यं। केषाञ्चिच्छारद्वतीपुत्र बोधिसत्त्वानां महासत्त्वानां प्रथमचित्तोत्पादमेव उपादाय ब्रह्मचर्य्यसमादानं भवति ते नित्यं कुमारभूताएव यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते। केचित्पुनर्ब्बोधिसत्त्वामहासत्त्वाउपायकौशलेन सत्त्वपरिपाकाय पञ्चकामगुणान् भुञ्जन्तः पुरमध्यादभिनिष्क्रम्याऽनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते। केचित् पुनर्ब्बोधिसत्त्वामहासत्त्वाः गम्भीरप्रज्ञापारमिताप्रतिलब्धाः अपगतकामक्लेशास्ते सत्त्वपरिपाकाय कामगुणपरिभोगं* च उपदिशन्ति न च परिभुञ्जते। तद्यथाऽपि नाम शारद्वतीपुत्र दक्षोमायाकारोमायाकाराऽन्तेवासीवा सुशिक्षितोमायाविद्यासंयोगज्ञानेन स पञ्चकामगुणानभिनिर्म्माय पञ्चभिः कामगुणैरसमाणं क्रीड़न्तं परिचारयन्तमात्मानमुपदर्शयेत् तत् किं मन्यसे शारद्वतीपुत्राऽपितु तेनमायाकारेण मायाकाराऽन्तेवासिना वा पञ्चकामगुणाः परिभुक्ताभवेयुः। नोहीदं भगवन्। भगवानाह। एवमेव शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वामहायाने सुशिक्षितामायोपमधर्म्मताविहारप्रतिलब्धाः सर्व्वक्लेशविगतविनयेसत्त्वपरिपाकाय महाकरुणावशेन कामगुणपरिभोगञ्च उपदिशन्ति। न च कामगुणान्परिभुञ्जन्ते। न च तैः सार्द्धं सम्वसन्ति। न तैः परिक्लिश्यन्ते। अनेकपर्य्यायेण शारद्वतीपुत्र बोधिसत्त्वाः महासत्त्वाः कामानां वर्णान् भाषन्ते। आदीप्ताः कामाः, वधकाः कामाः, प्रत्यर्थिकाः कामाः, प्रत्यमित्राः कामाः, तृणोल्कोपमाः कामाः, किम्पाक-

* कामगुणपरिभोगमिति ख, ग, घ पुस्तकेषु पाठः।

फलोपमाः कामाः, असिधारोपमाः कामाः अङ्गाररश्म्युपमाः कामाः, विषमा*न्नोपमाः कामाः वड़िशोपमाः कामाः मोह-कूपोपमाः कामाः। एवं हि शारद्वतीपुत्र बोधिसत्त्वाः महासत्त्वाः कामान् परिजानन्ति। सत्त्वानामनुपायकुशलानां परिपाचनार्थं पञ्चभ्यः कामगुणेभ्यः विवेचनार्थं पञ्चकामगुणानुपदर्शयन्ति। न च तैर्मोद्यन्ति न कामहेतोर्नकामनिदानं पापकर्माऽध्यवस्यन्ति। एवमुक्ते आयुष्मान् शारद्वतीपुत्रोभगवन्तमेतदवोचत्। कथं पुनर्भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरितव्यं। भगवानाह। इह शारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापा-रमितायां चरन् बोधिसत्त्वं न समनुपश्यति। बोधिसत्त्वचर्या-मपि न समनुपश्यति। प्रज्ञापारमितां न समनुपश्यति। प्रज्ञापारमितानामाऽपि न समनुपश्यति। चरतीति न समनुपश्यति। न चरतीति न समनुपश्यति। रूपमपि न समनुपश्यति। वेदना-मपि न समनुपश्यति। संज्ञामपि न समनुपश्यति। संस्कारानपि न समनुपश्यति। विज्ञानमपि न समनुपश्यति। तत्कस्यहेतोः तथाहि शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः स्वभावेन शून्यः एवं हि बोधिसत्त्वनाम बोधिसत्त्वनाम्ना शून्यं। तत्कस्यहेतोः प्रकृतिरस्यैषा तथाहि न शून्यतया रूपं शून्यं नान्यत्र रूपात् शून्यता रूपमेव शून्यता शून्यतैव रूपं। न शून्यतया वेदना शून्या नान्यत्र वेदनायाः शून्यता वेदनैव शून्यता शून्यतैव वेदना। न शून्यतया संज्ञा शून्या नान्यत्र संज्ञायाः शून्यता संज्ञैव शून्यता शून्यतैव संज्ञा। न शून्यतया

* मान्नो इति च पुस्तके पाठः।

संस्काराः शून्याः नान्यत्र संस्कारेभ्यः शून्यता संस्कारा एव शून्यता शून्यतैव संस्काराः। न शून्यतया विज्ञानं शून्यं नान्यत्र विज्ञानात् शून्यता। विज्ञानमेव शून्यता शून्यतैव विज्ञानं। तत्-कस्यहेतोस्तथाहि नाममात्रमिदं यदुत बोधिसत्त्वः नाममात्रमिदं यदुत* शून्यता नाममात्रमिदं यदुत रूपं नाममात्रमिदं यदुत वेदना, नाममात्रमिदं यदुत संज्ञा नाममात्रमिदं यदुत संस्काराः। नाममात्रमिदं यदुत विज्ञानं। तथा हि मायोपमं रूपं मायोपमावेदना, मायोपमासंज्ञा, मायोपमाः संस्काराः मायोपमं विज्ञानं। माया च नाममात्रं न देशस्थान प्रदेशस्था असदसम्भूतं वितथसमं मायादर्शनं स्वभावविरहितमस्वभावस्याऽनुत्पादोऽनिरोधः। अस्थानं न हानिर्न वृद्धिर्न संक्लेशेन व्यवदानं एवं चरन् बोधि-सत्त्वोमहासत्त्वः कस्यचिद्धर्मस्य उत्पादं न समनुपश्यति निरोधं न समनुपश्यति स्थानं न समनुपश्यति हानिं न समनुपश्यति वृद्धिं न समनुपश्यति संक्लेशं न समनुपश्यति व्यवदानं न समनुपश्यति। रूपं न समनुपश्यति। वेदनां न समनुपश्यति। संज्ञां न समनु-पश्यति। संस्कारान् न समनुपश्यति। विज्ञानं न समनुपश्यति। बोधिरिति बोधिसत्त्व इति यदुच्यते तदपि न समनुपश्यति। तत्कस्यहेतोः तथाहि कृत्रिमनामप्रति*पत्तिधर्मा ते कल्पिता-आगन्तुकेन नामधेयेनाऽभूतपरिकल्पितेन व्यवह्रियन्ते, व्यवहारा-च्चाऽभिनिविश्यन्ते तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वधर्म्मान् न समनुपश्यति नोपलभते असमनुपश्यन् अनुपलभ-

---

** प्रति प्रति इति ख, ग, घ पुस्तके पाठः।

मानोन मन्यते नाऽभिनिविशते। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नेवं व्युपपरीक्षेत नाममात्रं यदुत बोधिसत्त्व इति नाममात्रमिदं यदुत बोधिरिति नाममात्रमिदं यदुत बुद्ध इति नाममात्रमिदं यदुत प्रज्ञापारमितेति नाममात्रमिदं यदुत प्रज्ञापारमितायां चरतीति। नाममात्रमिदं यदुत रूपमिति नाममात्रमिदं यदुत वेदनेति। नाममात्रमिदं यदुत संज्ञेति। नाममात्रमिदं यदुत संस्कारादति। नाममात्रमिदं यदुत विज्ञानमिति। तद्यथाऽपि नाम शारद्वतीपुत्र आत्मेति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। सत्त्वः सत्त्वइति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। जीवोजीवइति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते अनुपलम्भशून्यतामुपादाय। पोषः पोषइति व्यवह्रियते स च यथाभूतं परिगवेष्यमाणोनोपलभ्यते। पुरुषः पुरुषइति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। पुद्गलः पुद्गलइति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। मनुजोमनुज इति व्यवह्रियते स च यथाभूतं परिगवेष्यमाणोनोपलभ्यते। मानवोमानवइति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। कारापकः कारापकइति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। वेदकः वेदकइति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। वेदयितृकोवेदयितृकइति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। उत्थापकउत्थापकइति व्यवह्रियते

सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। समुत्थापकः समुत्थापक-इति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। जानकोजानकइति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। पश्यकः पश्यकइति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। स्पर्शकः स्पर्शकइति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। तद्यथाऽपि नाम विजानकोविजानकइति व्यवह्रियते सच यथाभूतं परिगवेष्यमाणोनोपलभ्यते। अनुपलम्भशून्यतामुपादाय। यावदेव नामसङ्केतमात्रेण व्यवह्रियते एवमेव बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् बोधिसत्त्वं न समनुपश्यति बुद्धं न समनुपश्यति प्रज्ञापारमितां न समनुपश्यति। रूपं न समनुपश्यति वेदनां न समनुपश्यति संज्ञां न समनुपश्यति संस्कारांश्च समनुपश्यति विज्ञानं न समनुपश्यति। येन नाम्ना व्यवह्रियते तदपि नाम न समनुपश्यति। एवं चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् तथागतप्रज्ञां स्थापयित्वा सत्त्वा* प्रज्ञायावत् सर्व्वश्रावकप्रत्येकबुद्धानां प्रज्ञामभिभवत्यनुपलम्भशून्यतामुपादाय। तत्कस्य हेतोस्तथाहि एतदपि न समनुपश्यति नोपलभते येनाऽभिनिविशेत। एवं चरन् शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरति। सचेच्छारद्वतीपुत्र अयं जम्बुद्वीपः† परिपूर्णोभवेत् मौद्गल्यायनसदृशैर्भिक्षुभिः। तद्यथाऽपि नाम नड्वनं वा शरवनं वा वेणुवनं वा इक्षुवनं वा शालिवनं वा तिलवनं वा

* सत्त्वा इति ख, ग, घ, च पुस्तके ऽधिकः पाठः, पर्य्यसङ्गतिर्न भवति कस्यापि पाठस्य।

† जाम्बुद्वीप इति च पुस्तके पाठः।

तेषां या प्रज्ञा सा बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः प्रज्ञायाः शततमीमपि कलां नोपैति सहस्रतमीमपि कलां नोपैति शतसहस्रतमीमपि कलां नोपैति कोटीतमीमपि कलां नोपैति कोटीशततमीमपि कलां नोपैति कोटीसहस्रतमीमपि कलां नोपैति कोटीशतसहस्रतमीमपि कलां नोपैति कोटिनियुतमीमपि कलां नोपैति कोटीनियुतशततमीमपि कलां नोपैति कोटीनियुतसहस्रतमीमपि कलां नोपैति कोटीनियुतशतसहस्रतमीमपि कलां नोपैति संख्यामपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि नोपैति उपनिशामपि न क्षमते तत् कस्य हेतोस्तथाहि शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य या प्रज्ञा सा सर्व्वसत्त्वानां परिनिर्व्वाणाय प्रत्युपस्थिता न तु सर्व्वश्रावकप्रत्येकबुद्धानां । पुनरपरं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतोया एकदिवसपरिभाविता प्रज्ञा सा सर्व्वश्रावकप्रत्येकबुद्धानां प्रज्ञाश्रभिभूयतिष्ठति। तिष्ठतु शारद्वतीपुत्र जम्बुद्वीपः परिपूर्णः शारद्वतीपुत्र* मौद्गल्यायनसदृशैर्भिक्षुभिः । सचेच्छारद्वतीपुत्र त्रिसाहस्रमहासाहस्रोलोकधातुः परिपूर्णोभवेद्युष्माभिरीदृशैर्भिक्षुभिस्तेषां या प्रज्ञा सा बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः प्रज्ञायाः शततमीकलां नोपैति सहस्रतमीमपि कलां नोपैति शतसहस्रतमीमपि कलां नोपैति कोटीतमीमपि कलां नोपैति कोटीशततमीमपि कलां नोपैति कोटीसहस्रतमीमपि

---

* शारद्वतीपुत्र इति पाठ पुस्तकपञ्चके पुनरपि दृश्यते ।

कलां नोपैति कोटीशतसहस्रतमीमपि कलां नोपैति कोटीनियुततमीमपि कलां नोपैति कोटीनियुतशततमीमपि कलां नोपैति कोटीनियुतसहस्रतमीमपि कलां नोपैति कोटीनियुतशतसहस्रतमीमपि कलां नोपैति संख्यामपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि नोपैति उपनिशामपि नक्षमते। तिष्ठतु शारद्वतीपुत्र त्रिसाहस्रमहासाहस्रोलोकधातुः। [१]सचेच्छारद्वतीपुत्र पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णा भवेयुः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिस्तेषां या प्रज्ञा सा बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः एकदिवसपरिभावितायाः प्रज्ञायाः शततमीमपि कलां नोपैति सहस्रतमीमपि कलां नोपैति शतसहस्रतमीमपि कलां नोपैति कोटीतमीमपि कलां नोपैति कोटीशततमीमपि कलां नोपैति कोटीसहस्रतमीमपि कलां नोपैति कोटीशतसहस्रतमीमपि कलां नोपैति कोटीनियुततमीमपि कलां नोपैति कोटीनियुतशततमीमपि कलां नोपैति कोटीनियुतसहस्रतमीमपि कलां नोपैति कोटीनियुतशतसहस्रतमीमपि कलां नोपैति। संख्यामपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि नोपैति उपनिशामपि नक्षमते। तिष्ठतु[२] शारद्वतीपुत्र पूर्व्वस्यांदिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिः। सचेच्छारद्वतीपुत्र दक्षिणस्यान्दिशि गङ्गानदीवालुकोप-

(१) स इत्यस्यान्वयिपदं नोपलभ्यते।

(२) तिष्ठतु इत्यस्यान्वयिपदं न दृश्यते।

मालोकधातवः परिपूर्णाभवेयुः शारद्वतीपुत्र मौद्गल्यायनसदृशै-
र्भिक्षुभिः तेषां या प्रज्ञा सा बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापार-
मितायां चरतः एकदिवसपरिभावितायाः प्रज्ञायाः शततमीमपि
कलां नोपैति सहस्रतमीमपि कलां नोपैति शतसहस्रतमीमपि
कलां नोपैति कोटीतमीमपि कलां नोपैति कटीशततमीमपि
कलां नोपैति कोटीसहस्रतमीमपि कलां नोपैति कोटीशत-
सहस्रतमीमपिकलां नोपैति कोटीनियुततमीमपि कलां नोपैति
कोटीनियुतशततमीमपि कलां नोपैति कोटीनियुतसहस्रतमीमपि
कलां नोपैति कोटीनियुतशतसहस्रतमीमपि कलां नोपैति संख्या-
मपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि
नोपैति उपनिशामपि नक्षमते। तिष्ठतु शारद्वतीपुत्र दक्षिण-
स्यान्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाः शारद्वतीपुत्र
मौद्गल्यायनसदृशैर्भिक्षुभिः। सचेच्छारद्वतीपुत्र पश्चिमायान्दिशि
गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाभवेयुः शारद्वतीपुत्र
मौद्गल्यायनसदृशैर्भिक्षुभिः तेषां या प्रज्ञा सा बोधिसत्त्वस्य महा-
सत्त्वस्य प्रज्ञापारमितायां चरतः एकदिवसपरिभावितायाः प्रज्ञायाः
शततमीमपि कलां नोपैति सहस्रतमीमपि कलां नोपैति शत-
सहस्रतमीमपि कलां नोपैति कोटीतमीमपि कलां नोपैति कोटी-
शततमीमपि कलां नोपैति कोटीसहस्रतमीमपि कलां नोपैति
कोटीशतसहस्रतमीमपि कलां नोपैति कोटीनियुततमीमपि
कलां नोपैति कोटीनियुतशततमीमपि कलां नोपैति कोटीनि-
युतसहस्रतमीमपि कलां नोपैति कोटीनियुतशतसहस्रतमीमपि

कलां नोपैति संख्यामपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि नोपैति उपनिशामपि न चमते। तिष्ठतु शारद्वतीपुत्र पश्चिमायान्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिः। सचेच्छारद्वतीपुत्र उत्तरस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाभवेयुः शारद्वतीपुत्र[1] मौद्गल्यायनसदृशैर्भिक्षुभिः तेषां या प्रज्ञा सा बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः एकदिवसपरिभावितायाः प्रज्ञायाः शततमीमपि कलां नोपैति सहस्रतमीमपि कलां नोपैति शतसहस्रतमीमपि कलां नोपैति कोटीतमीमपि कलां नोपैति। कोटीशततमीमपि कलां नोपैति कोटीसहस्रतमीमपि कलां नोपैति कोटीशतसहस्रतमीमपि कलां नोपैति। कोटीनियुततमीमपि कलां नोपैति कोटीनियुतशततमीमपि कलां नोपैति कोटीनियुतसहस्रतमीमपि कलां नोपैति। कोटीनियुतशतसहस्रतमीमपि कलां नोपैति। संख्यामपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि नोपैति उपनिशामपि न चमते। तिष्ठतु शारद्वतीपुत्र उत्तरस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिः। सचेच्छारद्वतीपुत्र उत्तरपूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाभवेयुः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिस्तेषां या प्रज्ञा सा बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः एकदिवसपरिभावितायाः प्रज्ञायाः शततमीमपि कलां

(१) शारद्वतीपुत्र इत्यस्य पुनः पाठः सर्व्वेषु पुस्तकेषु।

नोपैति सहस्रतमीमपि कलां नोपैति शतसहस्रतमीमपि कलां नोपैति कोटीतमीमपि कलां नोपैति कोटीशततमीमपि कलां नोपैति कोटीसहस्रतमीमपि कलां नोपैति कोटीशतसहस्रतमीमपि कलां नोपैति कोटीनियुततमीमपि कलां नोपैति कोटीनियुतशततमीमपि कलां नोपैति कोटीनियुतसहस्रतमीमपि कलां नोपैति। कोटीनियुतशतसहस्रतमीमपि कलां नोपैति संख्यामपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि नोपैति उपनिशामपि न क्षमते। तिष्ठतु शारद्वतीपुत्र उत्तरपूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिः। सचेच्छारद्वतीपुत्र पूर्व्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाभवेयुः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिस्तेषां या प्रज्ञा सा बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः एकदिवसपरिभावितायाः प्रज्ञायाः शततमीमपि कलां नोपैति सहस्रतमीमपि कलां नोपैति शतसहस्रतमीमपि कलां नोपैति कोटीतमीमपि कलां नोपैति कोटीशततमीमपि कलां नोपैति कोटीसहस्रतमीमपि कलां नोपैति कोटीशतसहस्रतमीमपि कलां नोपैति कोटीनियुततमीमपि कलां नोपैति कोटीनियुतशततमीमपि कलां नोपैति कोटीनियुतसहस्रतमीमपि कलां नोपैति कोटीनियुतशतसहस्रतमीमपि कलां नोपैति। संख्यामपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि नोपैति उपनिशामपि न क्षमते। तिष्ठतु शारद्वतीपुत्र पूर्व्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाः

शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिः। सचेच्छारद्वतीपुत्र दक्षिण-पश्चिमायान्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णा-भवेयुः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिः तेषां या प्रज्ञा सा बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः एकदिवस-परिभावितायाः प्रज्ञायाः शततमीमपि कलां नोपैति सहस्रतमी-मपि कलां नोपैति शतसहस्रतमीमपि कलां नोपैति कोटीतमी-मपि कलां नोपैति। कोटीशततमीमपि कलां नोपैति कोटी-सहस्रतमीमपि कलां नोपैति कोटीशतसहस्रतमीमपि कलां नोपैति कोटीनियुततमीमपि कलां नोपैति कोटीनियुतशत-तमीमपि कलां नोपैति कोटीनियुतसहस्रतमीमपि कलां नोपैति कोटीनियुतशतसहस्रतमीमपि कलां नोपैति संख्यामपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि नोपैति उपनिशामपि न क्षमते। तिष्ठतु शारद्वतीपुत्र दक्षिणपश्चिमाया-न्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिः। सचेच्छारद्वतीपुत्र पश्चिमोत्तरस्या-न्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाभवेयुः शार-द्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिः तेषां या प्रज्ञा सा बोधि-सत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः एकदिवसपरिभावि-तायाः प्रज्ञायाः शततमीमपि कलां नोपैति सहस्रतमीमपि कलां नोपैति शतसहस्रतमीमपि कलां नोपैति कोटीतमीमपि कलां नोपैति कोटीशततमीमपि कलां नोपैति कोटीसहस्रतमीमपि कलां नोपैति कोटीशतसहस्रतमीमपि कलां नोपैति कोटी-

नियुततमीमपि कलां नोपैति कोटीनियुतशततमीमपि कलां नोपैति कोटीनियुतसहस्रतमीमपि कलां नोपैति कोटीनियुतशतसहस्रतमीमपि कलां नोपैति संख्यामपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि नोपैति उपनिशामपि न क्षमते। तिष्ठतु शारद्वतीपुत्र पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिः। सचेच्छारद्वतीपुत्राऽधस्ताद्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाभवेयुः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिः तेषां या प्रज्ञा सा बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः एकदिवसपरिभावितायाः प्रज्ञायाः शततमीमपि कलां नोपैति सहस्रतमीमपि कलां नोपैति शतसहस्रतमीमपि कलां नोपैति कोटीतमीमपि कलां नोपैति कोटीशततमीमपि कलां नोपैति कोटीसहस्रतमीमपि कलां नोपैति कोटीशतसहस्रतमीमपि कलां नोपैति कोटीनियुततमीमपि कलां नोपैति कोटीनियुतशततमीमपि कलां नोपैति कोटीनियुतसहस्रतमीमपि कलां नोपैति कोटीनियुतशतसहस्रतमीमपि कलां नोपैति संख्यामपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि नोपैति उपनिशामपि न क्षमते। तिष्ठतु शारद्वतीपुत्राऽधस्ताद्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिः। सचेच्छारद्वतीपुत्रोपरिष्टाद्दिशि गङ्गानदीवालुकोपमालोकधातवः परिपूर्णाभवेयुः शारद्वतीपुत्र मौद्गल्यायनसदृशैर्भिक्षुभिः। तेषां या प्रज्ञा सा बोधिसत्त्वस्य

महासत्त्वस्य प्रज्ञापारमितायां चरतः एकदिवसपरिभावितायाः प्रज्ञायाः शततमीमपि कलां नोपैति सहस्रतमीमपि कलां नोपैति शतसहस्रतमीमपि कलां नोपैति कोटीतमीमपि कलां नोपैति कोटीशततमीमपि कलां नोपैति कोटीसहस्रतमीमपि कलां* नोपैति कोटीशतसहस्रतमीमपि कलां नोपैति कोटीनियुततमीमपि कलां नोपैति कोटीनियुतशततमीमपि कलां नोपैति कोटीनियुतसहस्रतमीमपि कलां नोपैति कोटीनियुतशतसहस्रतमीमपि कलां नोपैति संख्यामपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि नोपैति उपनिशामपि न क्षमते। शारद्वतीपुत्र आह येयं भगवञ्छ्रावकानां प्रज्ञा स्रोतआपन्नस्य सकृदागामिनोऽनागामिनोऽर्हतोया च प्रत्येकबुद्धस्य या च बोधिसत्त्वस्य या च तथागतस्याऽर्हतः सम्यक्सम्बुद्धस्य प्रज्ञा सर्व्वास्ताः प्रज्ञाः अभिन्नाः अभेदः शून्याविविक्ताऽनुत्पाद-प्रकृतिकाः स्वभावशून्याः न च भगवन्नभेदस्य विविक्तस्याऽनुत्पादस्य स्वभावशून्यस्य विशेषोवा नानाकरणं वा उपलभ्यते। तत्कथं भगवन् येयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः एकदिवसपरिभाविता प्रज्ञां सा सर्व्वश्रावकप्रत्येकबुद्धानां प्रज्ञा-अभिभवति। भगवानाह। तत् किं मन्यसे शारद्वतीपुत्र येन कृत्येन बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः एक-दिवसपरिभाविता प्रज्ञा प्रत्युपस्थिता मार्गाकारज्ञतायां चरता सर्व्व-सत्त्वानामर्थं कुर्व्वता सर्व्वाकार*सर्व्वधर्म्मानभिसम्बुध्य सर्व्वसत्त्वाः परि-

---

* सर्व्वाकारैरिति ग पुस्तके पाठः सर्व्वाकारः इति ख, घ पुस्तके पाठः।

निर्व्वापयितव्यादिति अपि नु तेन क्लत्येन सर्व्वश्रावकप्रत्येकबुद्धानां प्रज्ञा प्रत्युपस्थिता। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे शारदतीपुत्राऽपि नु सर्व्वश्रावकप्रत्येकबुद्धानां एवं भवत्यस्माभिरनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्य सर्व्वसत्त्वा-अनुपधिशेषे निर्व्वाणधातौ परिनिर्व्वापयितव्याः। आह। नोहीदं भगवन्। भगवानाह। तदनेनापि ते शारदतीपुत्र पर्य्यायेणेदं वेदितव्यं। येयं सर्व्वश्रावकप्रत्येकबुद्धानां प्रज्ञा या बोधिसत्त्वस्य महासत्त्वस्य इमां प्रज्ञामपनिधाय एषा सर्व्वश्रावरप्रत्येकबुद्धानां प्रज्ञा शततमीमपि कलां नोपैति सहस्रतमीमपि कलां नोपैति शतसहस्रतमीमपि कलां नोपैति कोटीतमीमपि कलां नोपैति कोटीशततमीमपि कलां नोपैति कोटीसहस्रतमीमपि कलां नोपैति कोटीशतसहस्रतमीमपि कलां नोपैति कोटीनियुततमीमपि कलां नोपैति कोटीनियुतशततमीमपि कलां नोपैति कोटीनियुतसहस्रतमीमपि कलां नोपैति कोटीनियुतशतसहस्रतमीमपि कलां नोपैति संख्यामपि नोपैति कलामपि नोपैति गणनामपि नोपैति उपमामपि नोपैति उपनिशामपि न क्षमते। तत् किं मन्यसे शारदतीपुत्राऽपि नु सर्व्वश्रावकप्रत्येकबुद्धानामेवं भवति वयं षट्पारमितासु चरित्वा सत्त्वान् परिपाच्य बुद्धक्षेत्रं परिशोध्य दशतथागतबलानि परिपूर्य्य चत्वारिवैशारद्यानि चतस्रः प्रतिसम्विदः महामैत्रीं महाकरुणां अष्टादशाऽऽवेणिकबुद्धधर्म्माः*

* धर्म्मानिति पाठोयुक्तः ख, घ पुस्तके दृश्यते च।

परिपूर्य्याऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्याऽप्रमेयाऽसंख्येयाऽपरिमाणान् सत्त्वान् परिनिर्व्वापयिष्यामीति। आह। नोहीदं भगवन्। भगवानाह। बोधिसत्त्वस्य पुनः शारद्वतीपुत्र महासत्त्वस्य एवं भवति मया षट्पारमितासु चरित्वा सत्त्वान् परिपाच्य बुद्धक्षेत्रं परिशोध्य तथागतबलानि परिपूर्य्य चत्वारि वैशारद्यानि चतस्रः प्रतिसम्विदो-महामैत्रीं महाकरुणां अष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् परिपूर्य्याऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्याऽप्रमेयाऽसंख्येयाऽपरिमाणाः सत्त्वाः परिनिर्व्वापयितव्याः तद्यथाऽपि नाम शारद्वतीपुत्र खद्योतकस्य प्राणकजातस्य नैवं भवत्यहमाभया जाम्बुद्वीपमवभासयेयं ममाऽऽभया जाम्बुद्वीपः स्फुटोभवेत् एवमेव शारद्वतीपुत्र सर्व्वश्रावकप्रत्येकबुद्धानां नैव भवति। वयं षट्पारमितासु चरित्वा सत्त्वान् परिपाच्य बुद्धक्षेत्रं परिशोध्य दशतथागतबलानि परिपूर्य्य चत्वारि-वैशारद्यानि चतस्रः प्रतिसम्विदः महामैत्रीं महाकरुणां अष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् परिपूर्य्याऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्याऽप्रमेयाऽसंख्येयाऽपरिमाणान् सत्त्वान् परिनिर्व्वापयिष्यामि इति। तद्यथाऽपि नाम शारद्वतीपुत्र सूर्य्यमण्डलमुदागच्छन् सर्व्वजाम्बुद्वीपमवभासेन स्फुरति सर्व्वं जाम्बुद्वीपमवभासेन स्फुटीकरोति। एवमेव शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः षट्सु पारमितासु चरन् सत्त्वान् परिपाच्य बुद्धक्षेत्रं परिशोध्य दशतथागतबलानि परिपूर्य्य चत्वारिवैशारद्यानि चतस्रः प्रतिसम्विदः महामैत्रीं महाकरुणां अष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् परिपूर्य्याऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्याऽप्रमेयाऽसंख्येयाऽपरिमाणान् सत्त्वान् परिनिर्व्वापयति।

एवमुक्ते आयुष्मान् शारद्वतीपुत्रोभगवन्तमेतदवोचत्। कथं भगवन् बोधिसत्त्वोमहासत्त्वः सर्व्वश्रावकप्रत्येकबुद्धभूमी अतिक्रम्य अवैवर्त्तिकबोधिसत्त्वभूमीमनुप्राप्नोति बोधिसत्त्वमार्गञ्च परिशोधयति। एवमुक्ते भगवानायुष्मन्तं शारद्वतीपुत्रमेतदवोचत्। इह शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रथमचित्तोत्पादमुपादाय षट्पारमितासु चरन् शून्यताऽऽनिमित्ताऽप्रणिहितेषु धर्म्मेषु स्थित्वा श्रावकप्रत्येकबुद्धभूमीरतिक्रम्याऽवैवर्त्तिकबोधिसत्त्वभूमीमनुप्राप्नोति। शारद्वतीपुत्र-आह कतमस्यां भूमौ स्थित्वा बोधिसत्त्वोमहासत्त्वः सर्व्वश्रावकप्रत्येकबुद्धानां दक्षिणीयोभवति। भगवानाह। प्रथमचित्तोत्पादं शारद्वतीपुत्र उपादाय बोधिसत्त्वोमहासत्त्वः षट्सु पारमितासु चरन् यावद्बोधिमण्डनिषण्णः अत्रान्तरा सर्व्वश्रावकप्रत्येकबुद्धानां दक्षिणीयो वक्तव्यः। तत्कस्य हेतोस्तथाहि शारद्वतीपुत्र बोधिसत्त्वं महासत्त्वमागम्य सर्व्वेषां कुशलानां धर्म्माणां लोके प्रादुर्भावो-भवति। यदुत दशानां कुशलानां कर्म्मपथानां लोके प्रादुर्भावो-भवति। पञ्चानां शिक्षापदानां लोके प्रादुर्भावोभवति। अष्टाङ्ग-समन्वागतस्य पोषधर्म्मस्य लोके प्रादुर्भावोभवति। चतुर्णां ध्यानानां लोके प्रादुर्भावोभवति चतुर्णामप्रमाणानां लोके प्रादुर्भावोभवति। चतसृणामारूप्यसमापत्तीनां लोके प्रादुर्भावोभवति। पञ्चानाम-भिज्ञानां लोके प्रादुर्भावोभवति। षण्णामनुस्मृतीनां लोके प्रादु-र्भावोभवति। दानपारमितायाः लोके प्रादुर्भावोभवति। शील-पारमितायाः लोके प्रादुर्भावोभवति। क्षान्तिपारमितायाः लोके प्रादुर्भावोभवति। वीर्य्यपारमितायाः लोके प्रादुर्भावोभवति।

ध्यानपारमितायाः लोके प्रादुर्भावोभवति । प्रज्ञापारमितायाः लोके प्रादुर्भावोभवति,। अध्यात्मशून्यतायाः लोके प्रादुर्भावोभवति। बहिर्धाशून्यतायाः लोके प्रादुर्भावोभवति। अध्यात्मबहिर्द्धाशून्यतायाः लोके प्रादुर्भावोभवति। शून्यताशून्यतायाः लोके प्रादुर्भावोभवति। महाशून्यतायाः लोके प्रादुर्भावोभवति। परमार्थशून्यतायालोके प्रादुर्भावोभवति। संस्कृतशून्यतायालोके प्रादुर्भावोभवति। असंस्कृतशून्यतायालोके प्रादुर्भावोभवति। अत्यन्तशून्यतायालोके प्रादुर्भावोभवति। अनवराग्रशून्यतायालोके प्रादुर्भावोभवति। अनवकारशून्यतायालोके प्रादुर्भावोभवति। प्रकृतिशून्यतायालोके प्रादुर्भावोभवति। सर्व्वधर्म्मशून्यतायालोके प्रादुर्भावोभवति। स्वलक्षणशून्यतायालोके प्रादुर्भावोभवति। अनुपलम्भशून्यतायालोके प्रादुर्भावोभवति। अभावशून्यतायालोके प्रादुर्भावोभवति। स्वभावशून्यतायालोके प्रादुर्भावोभवति। अभावस्वभावशून्यतायालोके प्रादुर्भावोभवति। चतुर्णां स्मृत्युपस्थानानां लोके प्रादुर्भावोभवति। चतुर्णां सम्यक्प्रहाणानां लोके प्रादुर्भावोभवति। चतुर्णां ऋद्धिपादानां लोके प्रादुर्भावोभवति। पञ्चानामिन्द्रियाणां लोके प्रादुर्भावोभवति। पञ्चानां बलानां लोके प्रादुर्भावोभवति। सप्तानां बोध्यङ्गानां लोके प्रादुर्भावोभवति। आर्य्याऽष्टाङ्गमार्गस्य लोके प्रादुर्भावोभवति। चतुर्णामार्य्यसत्यानां लोके प्रादुर्भावोभवति। अष्टानां विमोक्षाणां लोके प्रादुर्भावोभवति। नवानामनुपूर्व्वविहारसमापत्तीनां लोके प्रादुर्भावोभवति। शून्यताऽऽनिमित्ताऽप्रणिहितानां विमोक्षमुखानां लोके प्रादुर्भावोभवति। सर्व्वसमाधीनां लोके

प्रादुर्भावोभवति। सर्व्वधारणीमुखानां लोके प्रादुर्भावोभवति। दशानां तथागतबलानां लोके प्रादुर्भावोभवति। चतुर्णां वैशारद्यानां लोके प्रादुर्भावोभवति। चतसृणां प्रतिसम्विदां लोके प्रादुर्भावोभवति। महामैत्र्यालोके प्रादुर्भावोभवति। महाकरुणायालोके प्रादुर्भावोभवति। अष्टादशाऽऽवेणिकानां बुद्धधर्म्माणां लोके प्रादुर्भावोभवति। एवमादीनां शारद्वतीपुत्र कुशलानां धर्म्माणां लोके प्रादुर्भावोभवति। एषाञ्च कुशलमूलानां धर्म्माणां प्रादुर्भावात् क्षत्रियमहाशालकुलानि प्रज्ञायन्ते। ब्राह्मणमहाशालकुलानि प्रज्ञायन्ते। गृहपतिमहाशालकुलानि प्रज्ञायन्ते। चतुर्महाराजकायिकादेवाः प्रज्ञायन्ते। त्रायस्त्रिंशादेवाः प्रज्ञायन्ते। यामादेवाः प्रज्ञायन्ते। तुषितादेवाः प्रज्ञायन्ते। निर्म्माणरतयोदेवाः प्रज्ञायन्ते। परनिर्म्मितवशवर्त्तिनोदेवाः प्रज्ञायन्ते। ब्रह्मकायिकादेवाः प्रज्ञायन्ते। ब्रह्मपुरोहितादेवाः प्रज्ञायन्ते। ब्रह्मपार्षद्याः देवाः प्रज्ञायन्ते। महाब्रह्माणोदेवाः प्रज्ञायन्ते। आभादेवाः प्रज्ञायन्ते। परीत्ताभादेवाः प्रज्ञायन्ते। अप्रमाणाभादेवाः प्रज्ञायन्ते। आभास्वरादेवाः प्रज्ञायन्ते। शुभादेवाः प्रज्ञायन्ते। परीत्तशुभादेवाः प्रज्ञायन्ते। अप्रमाणशुभादेवाः प्रज्ञायन्ते। शुभकृत्स्नादेवाः प्रज्ञायन्ते। वृहादेवाः प्रज्ञायन्ते। परीत्तवृहादेवाः प्रज्ञायन्ते। अप्रमाणवृहादेवाः प्रज्ञायन्ते। वृहत्फलादेवाः प्रज्ञायन्ते। अवृहादेवाः प्रज्ञायन्ते। अतपादेवाः प्रज्ञायन्ते। सदृशादेवाः प्रज्ञायन्ते। सुदर्शनादेवाः प्रज्ञायन्ते। अकनिष्ठादेवाः प्रज्ञायन्ते। आकाशानन्त्याऽऽयतनादेवाः प्रज्ञायन्ते। विज्ञानानन्त्याऽऽयतनादेवाः

प्रज्ञायन्ते। आकिञ्चन्यायतनादेवाःप्रज्ञायन्ते। नैवसंज्ञानासंज्ञाऽऽयतनादेवाः प्रज्ञायन्ते। स्रोतआपन्नादेवाः प्रज्ञायन्ते। सकृदागामिनः प्रज्ञायन्ते। अनागामिनः प्रज्ञायन्ते। अर्हन्तः प्रज्ञायन्ते। प्रत्येकबुद्धाः प्रज्ञायन्ते। बोधिसत्त्वामहासत्त्वाः प्रज्ञायन्ते। तथागताऽर्हन्तः सम्यक्सम्बुद्धाः प्रज्ञायन्ते। आह। किं पुनर्भगवन् बोधिसत्त्वोमहासत्त्वोदक्षिणां शोधयति। भगवानाह। पर्य्यायेण शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोदक्षिणां शोधयति। तत्कस्य हेतोरत्यन्तविशुद्धाहि शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य दक्षिणास्तथाहि दायकः शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः कस्य-दायकः अनेकेषां कुशलानां धर्म्माणां यदुत दशानां कुशलानां कर्म्मपथानां पञ्चानां शिक्षापदानां अष्टाङ्गसमन्वागतस्य पोषस्य चतुर्णां ध्यानानां चतुर्णामप्रमाणानां चतुस्नामारूप्यसमापत्तीनां पञ्चानामभिज्ञानां षसामनुस्मृतीनां दानपारमितायाः शीलपारमितायाः क्षान्तिपारमितायाः वीर्य्यपारमितायाः ध्यानपारमितायाः प्रज्ञापारमितायाः अध्यात्मशून्यतायाः वहिर्धाशून्यतायाः अध्यात्मवहिर्द्धाशून्यतायाः शून्यताशून्यतायाः महाशून्यतायाः परमार्थशून्यतायाः संस्कृतशून्यतायाः असंस्कृतशून्यतायाः अत्यन्तशून्यतायाः अनवराग्रशून्यतायाः अनवकारशून्यतायाः प्रकृतिशून्यतायाः सर्व्वधर्म्मशून्यतायाः स्वलक्षणशून्यतायाः अनुपलम्भशून्यतायाः अभावशून्यतायाः स्वभावशून्यतायाः अभावस्वभावशून्यतायाः चतुर्णां स्मृत्युपस्थानानां चतुर्णां सम्यक् प्रहाणानां चतुर्णामृद्धिपादानां पञ्चानामिन्द्रियाणां पञ्चानां बलानां सप्तानां बोध्यङ्गानां आर्य्याऽष्टाङ्गस्य

मार्गस्य चतुर्णामार्य्यसत्यानां अष्टानां विमोक्षाणां नवानामनुपूर्व्व-विहारसमापत्तीनां शून्यताऽऽनिमित्ताऽप्रणिहितानां विमोक्षमुखानां धारणीमुखानां दशानां तथागतबलानां चतुर्णां वैशारद्यानां चतसृणां प्रतिसम्विदां महामैत्र्यामहाकरुणायाः अष्टादशानां आवेणिकानां बुद्धधर्म्माणां। आह। कथं युज्यमानो बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः। भगवानाह। इह शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः रूपशून्यतायां युक्तोयुक्तइति वक्तव्यः वेदनाशून्यतायां युक्तोयुक्तइति वक्तव्यः। संज्ञाशून्यतायां युक्तोयुक्तइति वक्तव्यः। संस्कारशून्यतायां युक्तोयुक्तइति वक्तव्यः। विज्ञानशून्यतायां युक्तोयुक्तइति वक्तव्यः। चक्षुः शून्यतायां युक्तोयुक्तइति वक्तव्यः। श्रोत्रशून्यतायां युक्तोयुक्तइति वक्तव्यः। घ्राणशून्यतायां युक्तोयुक्तइति वक्तव्यः। जिह्वाशून्यतायां युक्तोयुक्तइति वक्तव्यः। कायशून्यतायां युक्तोयुक्तइति वक्तव्यः। मनः शून्यतायां युक्तोयुक्तइति वक्तव्यः। रूपशून्यतायां युक्तोयुक्तइति वक्तव्यः। शब्दशून्यतायां युक्तोयुक्तइति वक्तव्यः। गन्धशून्यतायां युक्तोयुक्तइति वक्तव्यः। रसशून्यतायां युक्तोयुक्तइति वक्तव्यः। स्पर्शशून्यतायां युक्तोयुक्तइति 'वक्तव्यः। धर्म्मशून्यतायां युक्तोयुक्तइति वक्तव्यः। चक्षुर्धातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। रूपधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। चक्षुर्व्विज्ञानधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। श्रोत्रधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। शब्दधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। श्रोत्रविज्ञानधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। घ्राणधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। गन्धधातु-

शून्यतायां युक्तोयुक्तइति वक्तव्यः। घ्राणविज्ञानधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। जिह्वाधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। रसधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। जिह्वाविज्ञानधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। कायधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। स्पर्शधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। कायविज्ञानधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। मनोधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। धर्म्मधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। मनोविज्ञानधातुशून्यतायां युक्तोयुक्तइति वक्तव्यः। दुःखशून्यतायां युक्तोयुक्तइति वक्तव्यः। समुदयशून्यतायां युक्तोयुक्तइति वक्तव्यः। निरोधशून्यतायां युक्तोयुक्तइति वक्तव्यः। मार्गशून्यतायां युक्तोयुक्तइति वक्तव्यः। अविद्याशून्यतायां युक्तोयुक्तइति वक्तव्यः। संस्कारशून्यतायां युक्तोयुक्तइति वक्तव्यः। विज्ञानशून्यतायां युक्तोयुक्तइति वक्तव्यः। नामरूपशून्यतायां युक्तोयुक्तइति वक्तव्यः। षडायतनशून्यतायां युक्तोयुक्तइति वक्तव्यः। स्पर्शशून्यतायां युक्तोयुक्तइति वक्तव्यः। वेदनाशून्यतायां युक्तोयुक्तइति वक्तव्यः। तृष्णाशून्यतायां युक्तोयुक्तइति वक्तव्यः। उपादानशून्यतायां युक्तोयुक्तइति वक्तव्यः। भवशून्यतायां युक्तोयुक्तइति वक्तव्यः। जातिशून्यतायां युक्तोयुक्तइति वक्तव्यः। जरामरणशून्यतायां युक्तोयुक्तइति वक्तव्यः। सर्व्वधर्म्मशून्यतायां युक्तोयुक्तइति वक्तव्यः केचित् संज्ञागताः संस्कृतासंस्कृताधर्म्माः सर्व्वेषां धर्म्माणां शून्यतायां युक्तोयुक्तइति वक्तव्यः। पुनरपरं शारद्वतीपुत्र बोधिसत्वोमहासत्वः प्रज्ञापारमितायां चरन् प्रकृतिशून्यतायां युक्तोयुक्तइति वक्तव्यः। एवं खलु शारद्वतीपुत्र

बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् आसु सप्तसु शून्यतासु युक्तो युक्त इति वक्तव्यः। एवं खलु शारद्वतीपुत्र सप्ताभिः सप्तभिः शून्यताभिः प्रज्ञापारमितायां चरन् न तावद्युक्त इति वा अयुक्त इति वा वक्तव्यः। तत्कस्य हेतोस्तथाहि सन् रूपं(१) युक्तमिति वा अयुक्तमिति वा समनुपश्यति नवेदना युक्तेति वा अयुक्तेति वा समनुपश्यति। न सञ्ज्ञा युक्तेति वा अयुक्तेति वा समनुपश्यति। न संस्काराः युक्ता इति वा अयुक्ता इति वा समनुपश्यति। न

(१) रूप्यन्ते एभिरिति रूप्यन्ते इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः। यद्यपि रूप्यमाणा पृथिव्यादयो बाह्यास्तथापि काय-स्थत्वाद्वा इन्द्रियसम्बन्धाद्वा भवन्त्याध्यात्मिकाः। विज्ञानस्कन्धो-ऽहमित्याकारो रूपादिविषयेन्द्रियजन्यो वा दण्डायमानः। वेदना-स्कन्धो या प्रियाऽप्रियाऽनुभयविषयस्पर्शे सुखदुःखतद्रहितविशेषा-वस्था चित्तस्य जायते स वेदनास्कन्धः। संज्ञास्कन्धः स विकल्पप्रत्ययः संज्ञासंसर्गयोग्यप्रतिभासो यथा डित्थः कुण्डली गौरो ब्राह्मणो गच्छती-त्येवं जातीयकः। संस्कारस्कन्धो रागादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ चेति तदेतेषां समुदायः पञ्चस्कन्धो॥ इति भामती।

चित्तचैत्तात्मकः स्कन्धः पञ्चविधः रूपविज्ञानवेदनासंज्ञासंस्कार-संज्ञकः। तत्र रूप्यन्ते एभिर्विषया इति रूप्यन्ते इति ■ व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः। आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः। प्रागुक्तस्कन्धद्वयसम्बन्धजन्यः सुखदुःखादिप्रत्यय-प्रवाहो वेदनास्कन्धः। गौरित्यादिशब्दोल्लेखिविज्ञानप्रवाहः संज्ञा-स्कन्धः। वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशा उपक्लेशाश्च मद-मानादयो धर्माधर्मौ च संस्कारस्कन्धः॥ इति सर्वदर्शनसंग्रहः।

विज्ञानं युक्तमिति वा अयुक्तमिति वा समनुपश्यति न रूप-मुत्पादधर्म्मि वा निरोधधर्म्मि वा समनुपश्यति। न वेदनामुत्पाद-धर्म्मिणीं वा निरोधधर्म्मिणीं वा समनुपश्यति। न संज्ञामुत्पाद-धर्म्मिणीं वा निरोधधर्म्मिणीं वा समनुपश्यति। संस्कारानुत्पाद-धर्म्मिणो वा निरोधधर्म्मिणो वा समनुपश्यति। न विज्ञानमुत्पाद-धर्म्मि वा निरोधधर्म्मि वा समनुपश्यति। न रूपं संक्लेशधर्म्मि वा व्यवदानधर्म्मि वा समनुपश्यति। न वेदनां संक्लेशधर्म्मिणीं वा व्यवदानधर्म्मिणीं वा समनुपश्यति। न संज्ञां संक्लेशधर्म्मिणीं वा व्यवदानधर्म्मिणीं वा समनुपश्यति। न संस्कारान् संक्लेशधर्म्मिणोवा व्यवदानधर्म्मिणोवा समनुपश्यति। न विज्ञान संक्लेशधर्म्मि वा व्यव-दानधर्म्मि वा समनुपश्यति। न रूप वेदनया सह समवसरतीति समनुपश्यति। न वेदनारूपेण सह समवसरतीति समनुपश्यति। न वेदना संज्ञयासह समवसरतीति समनुपश्यति। न संज्ञा वेदन-यासह समवसरतीति समनुपश्यति। न संज्ञा संस्कारैः सह सम-वसरतीति समनुपश्यति। न संस्काराः संज्ञयासह समवसरन्तीति समनुपश्यति। न संस्काराः विज्ञानेन सह समवसरन्तीति समनु-पश्यति। न विज्ञानं संस्कारैः सह समवसरतीति समनुपश्यति। तत्कस्य हेतोस्तथाहि न कश्चिद्धर्म्मः केनचिद्धर्म्मेण सह समवसरति न विसरति न युज्यते न वियुज्यते प्रकृतिशून्यतामुपादाय। या शारद्वतीपुत्र शून्यता न तद्रूपं तथाहि या रूपस्य शून्यता न सा रूपयति। या वेदनाशून्यता न सा वेदना तथाहि या वेदनाशून्यता न सा वेदयति। या संज्ञाशून्यता न सा संज्ञा तथाहि या संज्ञा-

शून्यता न सा सञ्जानाति। या संस्कारशून्यता न ते संस्कारास्तथाहि या संस्कारशून्यता न साऽभिसंस्करोति। या विज्ञानस्य शून्यता न तद्विज्ञानं तथाहि या विज्ञानशून्यता न सा विजानाति। तत्कस्यहेतोर्न हि शारद्वतीपुत्र अन्यद्रूपमन्या शून्यता नाऽन्या शून्यता नाऽन्यद्रूपं। रूपमेव शून्यता शून्यतैव रूपं। नाऽन्यावेदना नाऽन्याशून्यता। नाऽन्याशून्यता नाऽन्या वेदना वेदनैव शून्यता शून्यतैव वेदना। नाऽन्यासंज्ञा नाऽन्याशून्यता नाऽन्याशून्यता नाऽन्यासंज्ञा शून्यतैव संज्ञा संज्ञैव शून्यता। नाऽन्ये संस्काराः नाऽन्याशून्यता नाऽन्याशून्यता नाऽन्ये संस्काराः संस्काराएव शून्यता शून्यतैव संस्काराः। नाऽन्यद्विज्ञानं नाऽन्याशून्यता नाऽन्या शून्यता नाऽन्यद्विज्ञानं। विज्ञानमेव शून्यता शून्यतैव विज्ञानं। या शारद्वतीपुत्र शून्यता न सा उत्पद्यते न निरुध्यतेन संक्लिश्यते। न व्यवदायते न हीयते न वर्द्धते न साऽतीता नाऽनागता न प्रत्युत्पन्ना या न उत्पद्यते न निरुध्यते न संक्लिश्यते न व्यवदायते न हीयते न वर्द्धते नाऽतीता नाऽनागता न प्रत्युत्पन्ना न तत्र रूपं न वेदना न संज्ञा न संस्काराः न विज्ञानं। न तत्र चक्षुर्न श्रोत्रं न घ्राणं न जिह्वा न कायोन मनः। न तत्र रूपं न शब्दोन गन्धोन रसोन स्प्रष्टव्यं न धर्माः। न तत्र पृथिवीधातुर्नाब्धातुर्न तेजोधातुर्न वायुधातुर्नाऽऽकाशधातुर्न विज्ञानधातुः। न तत्र चक्षुर्धातुर्न रूपधातुर्न चक्षुर्विज्ञानधातुः। न तत्र श्रोत्रधातुर्न शब्दधातुर्न श्रोत्रविज्ञान-धातुः। न तत्र घ्राणधातुर्न गन्धधातुर्न घ्राणविज्ञानधातुः। न तत्र जिह्वाधातुर्न रसधातुर्न जिह्वाविज्ञानधातुः न कायधातुर्न स्प्रष्टव्य-

धातुर्न कायविज्ञानधातुः। न तत्र मनोधातुर्न धर्म्मधातुर्न मनोविज्ञानधातुः। न तत्राऽविद्या नाऽविद्यानिरोधोन तत्र संस्कारा न संस्कारनिरोधोन तत्र विज्ञानं न विज्ञाननिरोधोन तत्र नामरूपं न नामरूपनिरोधोन तत्र षड़ायतनं न षड़ायतननिरोधोन तत्र स्पर्शोन स्पर्शनिरोधोन तत्र वेदना न वेदनानिरोधोन तत्र तृष्णा न तृष्णानिरोधोन तत्र उपादानं न उपादाननिरोधोन तत्र भवोन भवनिरोधोन तत्र जातिर्न जातिनिरोधोन तत्र जरामरणं न जरामरणनिरोधोन तत्र दुखं न दुःखपरिज्ञानं। न तत्र समुदयोन समुदयप्रहाणं। न तत्र निरोधोनिरोधसाचात्क्रिया। न तत्र मार्गोन मार्गभावना न तत्र प्राप्तिर्नाऽभिसमयः। न तत्र स्रोतआपन्नाः न स्रोत-आपन्नफलं। न तत्र सकृदागामी न सकृदागामिफलं। न तत्राऽनागामी नाऽनागामिफलं न तत्राऽर्हत्वार्हत्फलं। न तत्र प्रत्येकबुद्धोन प्रत्येकबोधिः। न तत्र बोधिसत्त्वोन मार्गाकारज्ञता न तत्र बुद्धो न तत्र बोधिः। एवं खलु शारद्वतीपुत्र बोधिसत्त्वो-महासत्त्वः प्रज्ञापारमितायां चरन् युक्तइति वक्तव्यः। एवं प्रज्ञा-पारमितायां चरन्रूपे युक्तइति वा अयुक्तइति वा न समनुपश्यति। न वेदनायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न संज्ञायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न संस्कारे युक्तइति वा अयुक्तइति वा समनुपश्यति। न विज्ञाने युक्तइति वा अयुक्तइति वा समनुपश्यति। एवं प्रज्ञापारमितायां चरन् न चक्षुषि युक्तइति वा अयुक्तइतिवा समनुश्यति। न श्रोत्रे युक्तइति वा अयुक्तइति वा समनुपश्यति। न घ्राणे युक्तइति वा अयुक्तइति वा समनु-

पश्यति। न जिह्वायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न काये युक्तइति वा अयुक्तइति वा समनुपश्यति। न मनसि युक्तइति वा अयुक्तइति वा समनुपश्यति। एवं प्रज्ञापारमितायां चरन् न रूपे युक्तइति वा अयुक्तइति वा समनुपश्यति। न शब्दे युक्तइति वा अयुक्तइति वा समनुपश्यति। न गन्धे युक्तइति वा अयुक्तइति वा समनुपश्यति। न रसे युक्तइति वा अयुक्तइति वा समनुपश्यति। न स्पर्शे युक्तइति वा अयुक्तइति वा समनुपश्यति न धर्मे युक्तइति वा अयुक्तइति वा समनुपश्यति। एवं प्रज्ञापारमितायां चरन् न चक्षुर्धातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न रूपधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न चक्षुर्विज्ञानधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। एवं प्रज्ञापारमितायां चरन्। न श्रोत्रधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न शब्दधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न श्रोत्रविज्ञानधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। एवं प्रज्ञापारमितायां चरन् न घ्राणधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न गन्धधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न घ्राणविज्ञानधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। एवं प्रज्ञापारमितायां चरन्। न जिह्वाधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न रसधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न जिह्वाविज्ञानधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न कायधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न स्प्रष्टव्यधातौ युक्तइति वा

अयुक्तइति वा समनुपश्यति। न कायविज्ञानधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न मनोधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न धर्मधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न मनोविज्ञानधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। स एवं प्रज्ञापारमितायां चरन् न पृथिवीधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। नाब्धातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न तेजोधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न वायुधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽऽकाशधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न विज्ञानधातौ युक्तइति वा अयुक्तइति वा समनुपश्यति स एवं प्रज्ञापारमितायां चरन्नविद्यायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न संस्कारे युक्तइति वा अयुक्तइति वा समनुपश्यति। न विज्ञाने युक्तइति वा अयुक्तइति वा समनुपश्यति। न नामरूपे युक्तइति वा अयुक्तइति वा समनुपश्यति। न षडायतने युक्तइति वा अयुक्तइति वा समनुपश्यति। न स्पर्शे युक्तइति वा अयुक्तइति वा समनुपश्यति। न वेदनायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न तृष्णायां युक्तइति वा अयुक्तइति वा समनुपश्यति। नोपादाने युक्तइति वा अयुक्तइति वा समनुपश्यति। न भवे युक्तइति वा अयुक्तइति वा समनुपश्यति। न जातौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न जरामरणे युक्तइति वा अयुक्तइति वा समनुपश्यति सएवं प्रज्ञापारमितायां चरन् न दानपारमितायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न

शीलपारमितायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न क्षान्तिपारमितायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न वीर्य्यपारमितायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न ध्यानपारमितायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न प्रज्ञापारमितायां युक्तइति वा अयुक्तइति वा समनुपश्यति। स एवं प्रज्ञापारमितायां चरन् नाऽध्यात्मशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न बहिर्धाशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽध्यात्मबहिर्द्धाशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न शून्यताशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न महाशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न परमार्थशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न संस्कृतशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽसंस्कृतशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽत्यन्तशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽनवराग्रशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽनवकारशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न प्रकृतिशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न सर्व्वधर्म्मशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न स्वलक्षणशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽनुपलम्भशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽभावशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। नस्वभावशून्यतायां युक्तइति वा अयुक्तइति

वा समनुपश्यति। नाभावस्वभावशून्यतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। सएवं प्रज्ञापारमितायां चरन् स्मृत्युपस्थानेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न सम्यक्प्रहाणेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न ऋद्धिपादेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। नेन्द्रियेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न बलेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न बोध्यङ्गेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न मार्गेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽऽर्य्यसत्येषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न ध्यानेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽप्रमाणेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽऽरूप्यसमापत्तिषु युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽष्टविमोक्षेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न नवाऽनुपूर्व्वविहारेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न शून्यतायां समाधौ युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽऽनिमित्ते समाधौ युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽप्रणिहिते समाधौ युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽभिज्ञासु युक्तइति वा अयुक्तइति वा समनुपश्यति। न सर्व्वसमाधिषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न सर्व्वधारणीमुखेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न दशसु तथागतबलेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न चतुर्षु वैशारद्येषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न चतसृषु प्रतिसम्विल्सु युक्तइति वा अयुक्तइति वा समनुपश्यति। न

महामैत्र्यां युक्तइति वा अयुक्तइति वा समनुपश्यति। न महाकरुणायां युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽष्टादशाऽऽवेणिकबुद्धधर्मेषु युक्तइति वा अयुक्तइति वा समनुपश्यति। न श्रोतआपत्तिफले युक्तइति वा अयुक्तइति वा समनुपश्यति। न सकृदागामिफले युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽनागामिफले युक्तइति वा अयुक्तइति वा समनुपश्यति। नाऽर्हत्त्वे युक्तइति वा अयुक्तइति वा समनुपश्यति। न प्रत्येकबोधौ युक्तइति वा अयुक्तइति वा समनुपश्यति। न मार्गाऽऽकारज्ञतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। न सर्व्वाऽऽकारज्ञतायां युक्तइति वा अयुक्तइति वा समनुपश्यति। अनेनाऽपि शारीपुत्र पर्य्यायेण बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्तइति वक्तव्यः। सर्व्वधर्म्मायोगाऽवियोगतामुपादाय। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न शून्यतां शून्यतया योजयति न वियोजयति। न शून्यतायोगं नाऽऽनिमित्तेन योजयति न वियोजयति। नाऽऽनिमित्तयोगं नाऽप्रणिहितेन योजयति न वियोजयति नाऽप्रणिहितयोगं*। तत्कस्यहेतोस्तथाहि शून्यता† न योगो न वियोगः। आनिमित्तं न योगो न वियोगः अप्रणिहितं न योगो न वियोगः। एवं युज्यमानः शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् धर्म्माणां

* नाऽप्रणिहितयोगमित्यधिकं प्रतिभाति।

† शून्यता इति युक्तं प्रतिभाति।

स्वलक्षणशून्यतामवतरन् रूपं न योजयति न वियोजयति न वेदनां योजयति न वियोजयति न संज्ञां योजयति न वियोजयति न संस्कारान् योजयति न वियोजयति। न विज्ञानं योजयति न वियोजयति। न रूपं पूर्व्वान्तेन योजयति न वियोजयति। तथाहि पूर्व्वान्तमेव न समनुपश्यति। न रूपमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न रूपं प्रत्युत्पन्नेन योजयति न वियोजयति। तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न वेदनां पूर्व्वान्तेन योजयति न वियोजयति। तथाहि पूर्व्वान्तमेव न समनुपश्यति। न वेदनामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न वेदनां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न संज्ञां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न संज्ञामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न संज्ञां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न संस्कारान् पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न संस्कारानपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न संस्कारान् प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न विज्ञानं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न विज्ञानमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनु-

पश्यति। न विज्ञानं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न चक्षुः पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न चक्षुरपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न चक्षुः प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न श्रोत्रं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न श्रोत्रमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न श्रोत्रं प्रत्युत्पन्नेन योजयति न वियोजयति। तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न घ्राणं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न घ्राणमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न घ्राणं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न जिह्वां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न जिह्वामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न जिह्वां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न कायं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न कायमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न कायं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न मनः पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव

न समनुपश्यति। न मनोऽपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न मनः प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न रूपं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न रूपमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न रूपं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न शब्दं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न शब्दमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न शब्दं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न गन्धं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न गन्धमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न गन्धं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न रसं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न रसमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न रसं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न स्पर्शं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न स्पर्शमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न स्पर्शं प्रत्युत्पन्नेन योजयति न वियोजयति

तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न धर्म्मं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति । न धर्म्ममपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति । न धर्म्मं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न चक्षुर्विज्ञानं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति । न चक्षुर्विज्ञानमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति । न चक्षुर्विज्ञानं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न श्रोत्रविज्ञानं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति । न श्रोत्रविज्ञानमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुश्यति । न श्रोत्रविज्ञानं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न घ्राणविज्ञानं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति । न घ्राणविज्ञानमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति । न घ्राणविज्ञानं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न जिह्वाविज्ञानं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति । न जिह्वाविज्ञानमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति । न जिह्वाविज्ञानं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न कायविज्ञानं पूर्व्वान्तेन योजयति न

वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न काय-विज्ञानमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न कायविज्ञानं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न मनोविज्ञानं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न मनोविज्ञानमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न मनोविज्ञानं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न चक्षुः संस्पर्शं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न चक्षुः संस्पर्शमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न चक्षुः संस्पर्शं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न श्रोत्रसंस्पर्शं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न श्रोत्रसंस्पर्शमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न श्रोत्रसंस्पर्शं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न घ्राणसंस्पर्शं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न घ्राणसंस्पर्शमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न घ्राणसंस्पर्शं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न जिह्वासंस्पर्शं पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति।

न जिह्वासंस्पर्शमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न जिह्वासंस्पर्शं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न कायसंस्पर्शं पूर्वान्तेन योजयति न वियोजयति तथाहि पूर्वान्तमेव न समनुपश्यति। न कायसंस्पर्शमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न कायसंस्पर्शं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न मनः संस्पर्शं पूर्वान्तेन योजयति न वियोजयति तथाहि पूर्वान्तमेव न समनुपश्यति। न मनः संस्पर्शमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न मनः संस्पर्शं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न चक्षुः संस्पर्शजां वेदनां पूर्वान्तेन योजयति न वियोजयति तथाहि पूर्वान्तमेव न समनुपश्यति। न चक्षुः संस्पर्शजां वेदनामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न चक्षुः संस्पर्शजां वेदनां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न श्रोत्रसंस्पर्शजां वेदनां पूर्वान्तेन योजयति न वियोजयति तथाहि पूर्वान्तमेव न समनुपश्यति। न श्रोत्रसंस्पर्शजां वेदनामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न श्रोत्रसंस्पर्शजां वेदनां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न घ्राणसंस्पर्शजां वेदनां पूर्वान्तेन योजयति न वियोजयति तथाहि पूर्वा-

न्तमेव न समनुपश्यति। न घ्राणसंस्पर्शजां वेदनामपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न घ्राणसंस्पर्शजां वेदनां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न जिह्वासंस्पर्शजां वेदनां पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न जिह्वासंस्पर्शजां वेदनामपराऽन्तेन योजयति न वियोजयति यथाह्यपराऽन्तमेव न समनुपश्यति। न जिह्वासंस्पर्शजां वेदनां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न कायसंस्पर्शजां वेदनां पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न कायसंस्पर्शजां वेदनामपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न कायसंस्पर्शजां वेदनां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न मनः संस्पर्शजां वेदनां पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न मनः संस्पर्शजां वेदनामपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न मनः संस्पर्शजां वेदनां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न पृथिवीधातुं पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न पृथिवीधातुमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न पृथिवीधातुं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाब्धातुं

पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। नाब्धातुमपराऽन्तेन योजयति न वियोजयति ,तथाह्यपराऽन्तमेव न समनुपश्यति। नाब्धातु प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न तेजोधातु पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव नं समनुपश्यति। न तेजोधातुमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न तेजोधातु प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न वायुधातु पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न वायुधातुमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न वायुधातु प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽऽकाशधातु पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। नाऽऽकाशधातुमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। नाऽऽकाशधातु प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न विज्ञानधातु पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न विज्ञानधातुमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न विज्ञानधातु प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽविद्या पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति।

नाऽविद्यामपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । नाऽविद्यां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न संस्कारान् पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति । न संस्कारानपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न संस्कारान् प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न विज्ञानं पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न विज्ञानमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न विज्ञानं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न नामरूपं पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति । न नामरूपमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न नामरूपं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न षडायतनं पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति । न षडायतनमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न षडायतनं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न स्पर्शं पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति । न स्पर्शमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न स्पर्शं प्रत्युत्पन्नेन योजयति न

वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न वेदनां पूर्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्वाऽन्तमेव न समनुपश्यति । न वेदनामपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न वेदनां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न तृष्णां पूर्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्वाऽन्तमेव न समनुपश्यति । न तृष्णामपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न तृष्णां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । नोपादानं पूर्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्वाऽन्तमेव न समनुपश्यति । नोपादानमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । नोपादानं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न भवं पूर्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्वाऽन्तमेव न समनुपश्यति । न भवमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न भवं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न जातिं पूर्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्वाऽन्तमेव न समनुपश्यति । न जातिमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न जातिं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न जरामरणं पूर्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्वाऽन्तमेव न समनु-

पश्यति। न जरामरणमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न जरामरणं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न दानपारमितां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न दानपारमितामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न दानपारमितां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न शीलपारमितां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न शीलपारमितामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न शीलपारमितां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न क्षान्तिपारमितां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न क्षान्तिपारमितामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न क्षान्तिपारमितां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न वीर्य्यपारमितां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न वीर्य्यपारमितामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न वीर्य्यपारमितां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न ध्यानपारमितां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न ध्यानपार-

मितामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न ध्यानपारमितां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न प्रज्ञापारमितां पूर्वान्तेन योजयति न वियोजयति तथाहि पूर्वान्तमेव न समनुपश्यति। न प्रज्ञापारमितामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न प्रज्ञापारमितां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाध्यात्मशून्यतां पूर्वान्तेन योजयति न वियोजयति तथाहि पूर्वान्तमेव न समनुपश्यति। नाध्यात्मशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। नाध्यात्मशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न बहिर्धाशून्यतां पूर्वान्तेन योजयति न वियोजयति तथाहि पूर्वान्तमेव न समनुपश्यति। न बहिर्धाशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न बहिर्धाशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाध्यात्मबहिर्धाशून्यतां पूर्वान्तेन योजयति न वियोजयति तथाहि पूर्वान्तमेव न समनुपश्यति। नाध्यात्मबहिर्धाशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। नाध्यात्मबहिर्धाशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न शून्यताशून्यतां पूर्वान्तेन योजयति न वियोजयति तथाहि पूर्वान्त-

मेव न समनुपश्यति। न शून्यताशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न शून्यताशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न महाशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न महाशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न महाशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति। तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न परमार्थशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न परमार्थशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न परमार्थशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न संस्कृतशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न संस्कृतशून्यतामपरान्तेन योजयति न वियोजयति तथाहि अपरान्तमेव न समनुपश्यति। न संस्कृतशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न संस्कृतशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न संस्कृतशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न संस्कृतशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नात्यन्तशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न

समनुपश्यति। नात्यन्तशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। नात्यन्तशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽनवराग्रशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। नाऽनवराग्रशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। नाऽनवराग्रशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽनवकारशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। नाऽनवकारशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। नाऽनवकारशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न प्रकृतिशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न प्रकृतिशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न प्रकृतिशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न सर्व्वधर्मशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न सर्व्वधर्मशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न सर्व्वधर्मशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न स्वलक्षणशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनु-

पश्यति। न स्वलक्षणशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न स्वलक्षणशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽनुपलम्भशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। नाऽनुपलम्भशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। नाऽनुपलम्भशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽभावशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। नाऽभावशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। नाऽभावशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न स्वभावशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न स्वभावशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न स्वभावशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽभावस्वभावशून्यतां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। नाऽभावस्वभावशून्यतामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। नाऽभावस्वभावशून्यतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न स्मृत्युपस्थानानि पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनु-

पश्यति। न स्मृत्युपस्थानान्यपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न स्मृत्युपस्थानानि प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न सम्यक्प्रहाणानि पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न सम्यक्प्रहाणान्यपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न सम्यक्प्रहाणानि प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न ऋद्धिपादान् पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न ऋद्धिपादानपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न ऋद्धिपादान् प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नेन्द्रियाणि पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। नेन्द्रियाण्यपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। नेन्द्रियाणि प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न बलानि पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न बलान्यपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न बलानि प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न बोध्यङ्गानि पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न बोध्यङ्गान्यपरान्तेन योजयति न वियोजयति

तथाह्यपराऽन्तमेव न समनुपश्यति। न बोध्यङ्गानि प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽऽर्याऽष्टाऽङ्गमार्गं पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। नाऽऽर्याऽष्टाऽङ्गमार्गमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। नाऽऽर्याऽष्टाऽङ्ग-मार्गं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽऽर्य्यसत्यानि पूर्व्वाऽन्तेन योजयति न वियो-जयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। नाऽऽर्य्यसत्यान्यप-राऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनु-पश्यति। नाऽऽर्य्यसत्यानि प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न ध्यानानि पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न ध्यानान्यपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न ध्यानानि प्रत्युत्पन्नेन योजयति न वियो-जयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽप्रमाणानि पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न सम-नुपश्यति। नाऽप्रमाणान्यपराऽन्तेन योजयति न वियोजयति तथा-ह्यपराऽन्तमेव न समनुपश्यति। नाऽप्रमाणानि प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽऽरूप्यसमापत्तिं पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। नाऽऽरूप्यसमापत्तिमपराऽन्तेन योज-यति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। नाऽऽरूप्य-

समापत्तिं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽष्टौ विमोचान् पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। नाऽष्टौ विमोचानपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। नाऽष्टौ विमोचान् प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न नवाऽनुपूर्व्वविहारसमापत्तीः पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न नवाऽनुपूर्व्वविहारसमापत्तीरपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न नवाऽनुपूर्व्वविहारसमापत्तीः प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखानि पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखान्यपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखानि प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽभिज्ञाः पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। नाऽभिज्ञाअपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। नाऽभिज्ञाः प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न समाधीन् पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न समा-

धीनपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न समाधीन् प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न धारणीमुखानि पूर्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्वाऽन्तमेव न समनुपश्यति । न धारणीमुखान्यपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न धारणीमुखानि प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न दशतथागतबलानि पूर्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्वाऽन्तमेव न समनुपश्यति । न दशतथागतबलान्यपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न दशतथागतबलानि प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न चत्वारि वैशारद्यानि पूर्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्वाऽन्तमेव न समनुपश्यति । न चत्वारि वैशारद्यान्यपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न चत्वारि वैशारद्यानि प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न चतस्रः प्रतिसम्विदः पूर्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्वाऽन्तमेव न समनुपश्यति । न चतस्रः प्रतिसम्विदोऽपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति । न चतस्रः प्रतिसम्विदः प्रत्युत्पन्नेन योजयति न वियोजयति । तथाहि प्रत्युत्पन्नमेव न समनुपश्यति । न महामैत्रीं पूर्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्वाऽन्तमेव न समनुपश्यति । न महा-

मैत्रीमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न महामैत्रीं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न महाकरुणां पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न महाकरुणामपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न महाकरुणां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। नाष्टादशाऽऽवेणिकान् बुद्धधर्म्मानपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। नाष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न स्रोतआपत्तिफल पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न स्रोत आपत्तिफलमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न स्रोतआपत्तिफलं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न सकृदागामिफल पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न समनुपश्यति। न सकृदागामिफलमपरान्तेन योजयति न वियोजयति तथाह्यपरान्तमेव न समनुपश्यति। न सकृदागामिफल प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽनागामिफल पूर्व्वान्तेन योजयति न वियोजयति तथाहि पूर्व्वान्तमेव न

समनुपश्यति। नाऽनागामिफलमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। नाऽनागामिफलं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। नाऽर्हत्त्वं पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। नाऽर्हत्त्वमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। नाऽर्हत्त्वं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न प्रत्येकबोधिं पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न प्रत्येकबोधिमपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न प्रत्येकबोधिं प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न मार्गाऽऽकारज्ञतां पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न मार्गाऽऽकारज्ञतामपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न मार्गाऽऽकारज्ञतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। न सर्व्वाऽऽकारज्ञतां पूर्व्वाऽन्तेन योजयति न वियोजयति तथाहि पूर्व्वाऽन्तमेव न समनुपश्यति। न सर्व्वाऽऽकारज्ञतामपराऽन्तेन योजयति न वियोजयति तथाह्यपराऽन्तमेव न समनुपश्यति। न सर्व्वाऽऽकारज्ञतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। एवं युज्यमानः शारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः। पुनरपरं शारद्वतीपुत्र

बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न पूर्व्वाऽन्तमपराऽन्तेन योजयति न वियोजयति। नाऽपराऽन्तं पूर्व्वाऽन्तेन योजयति न वियोजयति। न पूर्व्वाऽन्तमपराऽन्तं वा प्रत्युत्पन्नेन योजयति न वियोजयति अध्वसमानता*मुपादाय। एवं युक्तः शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्तइति वक्तव्यः। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नेवं युज्यते यथा युज्यमानो† सर्व्वज्ञतामतीतेन योजयति न वियोजयति तथाह्यतीतमेव न समनुपश्यति। असमनुपश्यन् कथं सर्व्वज्ञतामतीतेन योजयिष्यति वियोजयिष्यति वा। न सर्व्वज्ञतामनागतेन योजयति न वियोजयति तथाह्यनागतमेव न समनुपश्यति असमनुपश्यन् कथं सर्व्वज्ञतामनागतेन योजयिष्यति वियोजयिष्यति वा। न सर्व्वज्ञतां प्रत्युत्पन्नेन योजयति न वियोजयति तथाहि प्रत्युत्पन्नमेव न समनुपश्यति। असमनुपश्यन् कथं सर्व्वज्ञतां प्रत्युत्पन्नेन योजयिष्यति वियोजयिष्यति वा। एवञ्च-रञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितातां युक्तइति वा वक्तव्यः। पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न रूपं सर्व्वज्ञतया योजयति न वियोजयति तथाहि रूपमेव न समनुपश्यति असमनुपश्यन् कथं रूपं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न वेदनां सर्व्वज्ञतया योजयति न वियोजयति तथाहि वेदनामेव न समनुपश्यति

---

* अध्वसमताशून्यता, घ पुस्तके पाठः।

† युज्यमानेन इति पाठोयुक्तः प्रतिभाति।

असमनुपश्यन् कथं वेदनां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न संज्ञां सर्व्वज्ञतया योजयति न वियोजयति तथाहि संज्ञामेव न समनुपश्यति। असमनुपश्यन् कथं संज्ञां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न संस्कारान् सर्व्वज्ञतया योजयति न वियोजयति तथाहि संस्कारानेव न समनुपश्यति। असमनुपश्यन् कथं संस्कारान् सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न विज्ञानं सर्व्वज्ञतया योजयति न वियोजयति तथाहि विज्ञानमेव न समनुपश्यति। असमनुपश्यन् कथं विज्ञानं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न चक्षुः सर्व्वज्ञतया योजयति न वियोजयति। तथाहि चक्षुरेव न समनुपश्यति। असमनुपश्यन् कथं चक्षुः सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न श्रोत्रं सर्व्वज्ञतया योजयति न वियोजयति तथाहि श्रोत्रमेव न समनुपश्यति। असमनुपश्यन् कथं श्रोत्रं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न घ्राणं सर्व्वज्ञतया योजयति न वियोजयति तथाहि घ्राणमेव न समनुपश्यति। असमनुपश्यन् कथं घ्राणं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न जिह्वां सर्व्वज्ञतया योजयति न वियोजयति तथाहि जिह्वामेव न समनुपश्यति। असमनुपश्यन् कथं जिह्वां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न कायं सर्व्वज्ञतया योजयति न वियोजयति तथाहि कायमेव न समनुपश्यति। असमनुपश्यन् कथं कायं सर्व्वज्ञतया योजयिष्यति

वियोजयिष्यति वा। न मनः सर्व्वज्ञतया योजयति न वियोजयति तथाहि मनएव न समनुपश्यति। असमनुपश्यन् कथं मनः सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्रूपं सर्व्वज्ञतया योजयति न वियोजयति तथाहि रूपमेव न समनुपश्यति। असमनुपश्यन् कथं रूपं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न शब्दं सर्व्वज्ञतया योजयति न वियोजयति तथाहि शब्दमेव न समनुपश्यति। असमनुपश्यन् कथं शब्दं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न गन्धं सर्व्वज्ञतया योजयति न वियोजयति तथाहि गन्धमेव न समनुपश्यति। असमनुपश्यन् कथं गन्धं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न रसं सर्व्वज्ञतया योजयति न वियोजयति तथाहि रसमेव न समनुपश्यति। असमनुपश्यन् कथं रसं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न स्पर्शं सर्व्वज्ञतया योजयति न वियोजयति तथाहि स्पर्शमेव न समनुपश्यति। असमनुपश्यन् कथं स्पर्शं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न धर्म्मान् सर्व्वज्ञतया योजयति न वियोजयति तथाहि धर्म्मानेव न समनुपश्यति। असमनुपश्यन् कथं धर्म्मान् सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नचक्षुर्धातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि चक्षुर्धातुमेव न समनुपश्यति। असमनुपश्यन् कथं चक्षुर्धातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न रूपधातुं

सर्व्वज्ञतया योजयति न वियोजयति तथाहि रूपधातुमेव न समनुपश्यति । असमनुपश्यन् कथं रूपधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा न चक्षुर्विज्ञानधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि चक्षुर्विज्ञानधातुमेव न समनुपश्यति। असमनुपश्यन् कथं चक्षुर्विज्ञानधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा । न श्रोत्रधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाति श्रोत्रधातुमेव न समनुपश्यति। असमनुपश्यन् कथं श्रोत्रधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न शब्दधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि शब्दधातुमेव न समनुपश्यति। असमनुपश्यन् कथं शब्दधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा । न श्रोत्रविज्ञानधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि श्रोत्रविज्ञानधातुमेव न समनुपश्यति। असमनुपश्यन् कथं श्रोत्रविज्ञानधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न घ्राणधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि घ्राणधातुमेव न समनुपश्यति। असमनुपश्यन् कथं घ्राणधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न गन्धधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि गन्धधातुमेव न समनुपश्यति। असमनुपश्यन् कथं गन्धधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न घ्राणविज्ञानधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि घ्राणविज्ञानधातुमेव न समनुपश्यति । असमनुपश्यन् कथं घ्राणविज्ञानधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न जिह्वाधातुं सर्व्वज्ञतया

योजयति न वियोजयति तथाहि जिह्वाधातुमेव न समनुपश्यति। असमनुपश्यन् कथं जिह्वाधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न रसधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि रसधातुमेव न समनुपश्यति। असमनुपश्यन् कथं रसधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न जिह्वाविज्ञानधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि जिह्वाविज्ञानधातुमेव न समनुपश्यति। असमनुपश्यन् कथं जिह्वाविज्ञानधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न कायधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि कायधातुमेव न समनुपश्यति। असमनुपश्यन् कथं कायधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न स्प्रष्टव्यधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि स्प्रष्टव्यधातुमेव न समनुपश्यति। असमनुपश्यन् कथं स्प्रष्टव्यधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न कायविज्ञानधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि कायविज्ञानधातुमेव न समनुपश्यति। असमनुपश्यन् कथं कायविज्ञानधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न मनोधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि मनोधातुमेव न समनुपश्यति। असमनुपश्यन् कथं मनोधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न धर्म्मधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि धर्म्मधातुमेव न समनुपश्यति। असमनुपश्यन् कथं धर्म्मधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न मनोविज्ञानधातुं सर्व्वज्ञतया योजयति न वियोजयति

तथाहि मनोविज्ञानधातुमेव न समनुपश्यति। असमनुपश्यन् कथं मनोविज्ञानधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न पृथिवीधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि पृथिवीधातुमेव न समनुपश्यति। असमनुपश्यन् कथं पृथिवीधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽब्धातुं सर्व्वज्ञतया योजयति न वियोजयति तथाह्यब्धातुमेव न समनुपश्यति। असमनुपश्यन् कथमब्धातु सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न तेजोधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाहि तेजोधातुमेव न समनुपश्यति। असमनुपश्यन् कथं तेजोधातु सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा न वायुधातु सर्व्वज्ञतया योजयति न वियोजयति तथाहि वायुधातुमेव न समनुपश्यति। असमनुपश्यन् कथं वायुधातु सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽऽकाशधातुं सर्व्वज्ञतया योजयति न वियोजयति तथाह्याकाशधातुमेव न समनुपश्यति। असमनुपश्यन् कथमाकाशधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न विज्ञानधातु सर्व्वज्ञतया योजयति न वियोजयति तथाहि विज्ञानधातुमेव न समनुपश्यति। असमनुपश्यन् कथ विज्ञानधातुं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्नाऽविद्यां सर्व्वज्ञतया योजयति न वियोजयति तथाह्यविद्यामेव न समनुपश्यति। असमनुपश्यन् कथमविद्यां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न संस्कारान् सर्व्वज्ञतया योजयति न वियोजयति तथाहि संस्कारानेव न समनुपश्यति

यिष्यति वियोजयिष्यति वा । न वहिर्द्धाशून्यतां सर्व्वज्ञतया योजयति न वियोजयति तथाहि वहिर्द्धाशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथं वहिर्द्धाशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा । नाऽध्यात्मवहिर्द्धाशून्यतां सर्व्वज्ञतया योजयति न वियोजयति तथाह्यध्यात्मवहिर्द्धाशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथमध्यात्मवहिर्द्धाशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा । न शून्यताशून्यतां सर्व्वज्ञतया योजयति न वियोजयति तथाहि शून्यताशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथं शून्यताशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न महाशून्यतां सर्व्वज्ञतया योजयति न वियोजयति तथाहि महाशून्यतामेव न समनुपश्यति । असमनुपश्यन् कथं महाशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा । न परमाऽर्थशून्यतां सर्व्वज्ञतया योजयति न वियोजयति तथाहि परमाऽर्थशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथं परमाऽर्थशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा । न संस्कृतशून्यतां सर्व्वज्ञतया योजयति न वियोजयति तथाहि संस्कृतशून्यतामेव न समनुपश्यति । असमनुपश्यन् कथं संस्कृतशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा । नाऽसंस्कृतशून्यतां सर्व्वज्ञतया योजयति न वियोजयति तथाह्यसंस्कृतशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथमसंस्कृतशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽत्यन्तशून्यतां सर्व्वज्ञतया योजयति न वियोजयति तथाह्यत्यन्तशून्यतामेव न समनुपश्यति। असमनुपश्यन्

कथमत्यन्तशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽनवराऽग्रशून्यतां सर्व्वज्ञतया योजयति न वियोजयति। तथाह्यनवराऽग्रशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथमनवराऽग्रशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽनवकारशून्यतां सर्व्वज्ञतया योजयति न वियोजयति। तथाह्यनवकारशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथमनवकारशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न प्रकृतिशून्यतां सर्व्वज्ञतया योजयति न वियोजयति। तथाहि प्रकृतिशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथं प्रकृतिशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न सर्व्वधर्म्मशून्यतां सर्व्वज्ञतया योजयति न वियोजयति। तथाहि सर्व्वधर्म्मशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथं सर्व्वधर्म्मशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न स्वलक्षणशून्यतां सर्व्वज्ञतया योजयति न वियोजयति। तथाहि स्वलक्षणशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथं स्वलक्षणशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽनुपलम्भशून्यतां सर्व्वज्ञतया योजयति न वियोजयति। तथाह्यनुपलम्भशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथमनुपलम्भशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽभावशून्यतां सर्व्वज्ञतया योजयति न वियोजयति। तथाह्यभावशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथमभावशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न स्वभावशून्यतां सर्व्वज्ञतया योजयति न वियोजयति। तथाहि स्वभावशून्यतामेव

असमनुपश्यन् कथं संस्कारान् सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न नामरूपं सर्व्वज्ञतया योजयति न वियोजयति तथाहि नामरूपमेव न समनुपश्यति। असमनुपश्यन् कथं नामरूपं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न षड़ायतनं सर्व्वज्ञतया योजयति न वियोजयति तथाहि षड़ायतनमेव न समनुपश्यति। असमनुपश्यन् कथं षड़ायतनं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न स्पर्शं सर्व्वज्ञतया योजयति न वियोजयति तथाहि स्पर्शमेव न समनुपश्यति। असमनुपश्यन् कथं स्पर्शं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न वेदनां सर्व्वज्ञतया योजयति न वियोजयति तथाहि वेदनामेव न समनुपश्यति। असमनुपश्यन् कथं वेदनां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न तृष्णां सर्व्वज्ञतया योजयति न वियोजयति तथाहि तृष्णामेव न समनुपश्यति। असमनुपश्यन् कथं तृष्णां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नोपादानं सर्व्वज्ञतया योजयति न वियोजयति तथाह्युपादानमेव न समनुपश्यति। असमनुपश्यन् कथमुपादानं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न भवं सर्व्वज्ञतया योजयति न वियोजयति तथाहि भवमेव न समनुपश्यति। असमनुपश्यन् कथं भवं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न जातिं सर्व्वज्ञतया योजयति न वियोजयति तथाहि जातिमेव न समनुपश्यति। असमनुपश्यन् कथं जातिं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न जरामरणं सर्व्वज्ञतया योजयति न वियोजयति तथाहि

जरामरणमेव न समनुपश्यति। असमनुपश्यन् कथं जरामरणं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् न दानपारमितां सर्व्वज्ञतया योजयति न वियोजयति तथाहि दानपारमितामेव न समनुपश्यति। असमनुपश्यन् कथं दानपारमितां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। शीलपारमितां सर्व्वज्ञतया योजयति न वियोजयति तथाहि शीलपारमितामेव न समनुपश्यति। असमनुपश्यन् कथं शीलपारमितां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न क्षान्तिपारमितां सर्व्वज्ञतया योजयति न वियोजयति तथाहि क्षान्तिपारमितामेव न समनुपश्यति। असमनुपश्यन् कथं क्षान्तिपारमितां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न वीर्य्यपारमितां सर्व्वज्ञतया योजयति न वियोजयति तथाहि वीर्य्यपारमितामेव न समनुपश्यति। असमनुपश्यन् कथं वीर्य्यपारमितां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न ध्यानपारमितां सर्व्वज्ञतया योजयति न वियोजयति तथाहि ध्यानपारमितामेव न समनुपश्यति। असमनुपश्यन् कथं ध्यानपारमितां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न प्रज्ञापारमितां सर्व्वज्ञतया योजयति न वियोजयति तथाहि प्रज्ञापारमितामेव न समनुपश्यति। असमनुपश्यन् कथं प्रज्ञापारमितां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽध्यात्मशून्यतां सर्व्वज्ञतया योजयति न वियोजयति तथाह्यध्यात्मशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथमध्यात्मशून्यतां सर्व्वज्ञतया योज-

न समनुपश्यति। असमनुपश्यन् कथं स्वभावशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽभावस्वभावशून्यतां सर्व्वज्ञतया योजयति न वियोजयति। तथाह्यभावस्वभावशून्यतामेव न समनुपश्यति। असमनुपश्यन् कथमभावस्वभावशून्यतां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न स्मृत्युपस्थानानि सर्व्वज्ञतया योजयति न वियोजयति। तथाहि स्मृत्युपस्थानान्येव न समनुपश्यति। असमनुपश्यन् कथं स्मृत्युपस्थानानि सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न सम्यक्प्रहाणानि सर्व्वज्ञतया योजयति न वियोजयति। तथाहि सम्यक्प्रहाणान्येव न समनुपश्यति। असमनुपश्यन् कथं सम्यक्प्रहाणानि सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न ऋद्धिपादान् सर्व्वज्ञतया योजयति न वियोजयति। तथाह्यृद्धिपादानेव न समनुपश्यति। असमनुपश्यन् कथमृद्धिपादान् सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नेन्द्रियाणि सर्व्वज्ञतया योजयति न वियोजयति। तथाहीन्द्रियाण्येव न समनुपश्यति। असमनुपश्यन् कथमिन्द्रियाणि सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न बलानि सर्व्वज्ञतया योजयति न वियोजयति। तथाहि बलान्येव न समनुपश्यति। असमनुपश्यन् कथं बलानि सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न बोध्यङ्गानि सर्व्वज्ञतया योजयति न वियोजयति। तथाहि बोध्यङ्गान्येव न समनुपश्यति। असमनुपश्यन् कथं बोध्यङ्गानि सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न मार्गं सर्व्वज्ञतया योजयति न वियोजयति। तथाहि मार्गमेव न समनुपश्यति। असमनुपश्यन् कथं

मार्गं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽऽर्य्यसत्यानि सर्व्वज्ञतया योजयति न वियोजयति। तथाह्यार्य्यसत्यान्येव न समनुपश्यति। असमनुपश्यन् कथमार्य्यसत्यानि सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न ध्यानानि सर्व्वज्ञतया योजयति न वियोजयति। तथाहि ध्यानान्येव न समनुपश्यति। असमनुपश्यन् कथं ध्यानानि सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽप्रमाणानि सर्व्वज्ञतया योजयति न वियोजयति। तथाह्यप्रमाणान्येव न समनुपश्यति। असमनुपश्यन् कथमप्रमाणानि सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽऽरूप्यसमापत्तीः सर्व्वज्ञतया योजयति न वियोजयति। तथाह्याऽऽरूप्यसमापत्तीरेव न समनुपश्यति। असमनुपश्यन कथमाऽऽरूप्यसमापत्तीः सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न विमोक्षान् सर्व्वज्ञतया योजयति न वियोजयति। तथाहि विमोक्षानेव न समनुपश्यति। असमनुपश्यन् कथं विमोक्षान् सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नवाऽनुपूर्व्वविहारसमापत्तीः सर्व्वज्ञतया योजयति न वियोजयति। तथाहि नवाऽनुपूर्व्वविहारसमापत्तीरेव न समनुपश्यति। असमनुपश्यन् कथ नवाऽनुपूर्व्वविहारसमापत्ती. सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न शून्यतां सर्व्वज्ञतया योजयति न वियोजयति। तथाहि शून्यतामेव न समनुपश्यति। असमनुपश्यन् कथं शून्यता सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽऽनिमित्तं सर्व्वज्ञतया योजयति न वियोजयति। तथाह्यानिमित्तमेव न समनुपश्यति। असमनुपश्यन् कथमानिमित्त सर्व्वज्ञतया योजयि-

भावइति योजयति न संस्कारानभावइति योजयति । न विज्ञानं भावइति योजयति न विज्ञानमभावइति योजयति। न चक्षुर्भावइति योजयति न चक्षुरभावइति योजयति। न श्रोत्रं भावइति योजयति न श्रोत्रमभावइति योजयति । न घ्राणं भावइति योजयति न घ्राणमभावइति योजयति। न जिह्वां भावइति योजयति न जिह्वामभावइति योजयति । न कायं भावइति योजयति न कायमभावइति योजयति । न मनोभावइति योजयति न मनोऽभावइति योजयति। न रूपं[1] भावइति योजयति न रूपमभावइति योजयति । न शब्दं भावइति योजयति न शब्दमभावइति योजयति । न गन्धं भावइति योजयति न गन्धमभावइति योजयति। न रसम्भावइति योजयति न रसमभावइति योजयति। न स्पर्शं भावइति योजयति न स्पर्शमभावइति योजयति । न धर्मान् भावइति योजयति न धर्मानभावइति योजयति । न चक्षुर्विज्ञानं भावइति योजयति न चक्षुर्विज्ञानमभावइति योजयति। न श्रोत्रविज्ञानं भावइति योजयति न श्रोत्रविज्ञानमभावइति योजयति । न घ्राणविज्ञान भावइति योजयति न घ्राणविज्ञानमभावइति योजयति। न जिह्वाविज्ञानं भावइति योजयति न जिह्वाविज्ञानमभावइति योजयति । न कायविज्ञानं भावइति योजयति न कायविज्ञानमभावइति योजयति। न

(१) पूर्व्वंपठितो रूपशब्दो रूपस्कन्धाभिप्राय, त्वयन्तु विषयाभिप्राय इति न पौनरुक्त्यम्। यद्यपि स विषयानान्द्रियानि रूपस्कान्ध स्तथापि विशिष्टस्य तदघटकानस्वे व्रांह्मणसमण्टिन्यायेन पृथक परिकीर्त्तनम ।

मनोविज्ञानं भावइति योजयति न मनोविज्ञानमभावइति योजयति। न चक्षुःसंस्पर्शं भावइति योजयति न चक्षुःसंस्पर्शमभावइति योजयति। न श्रोत्रसंस्पर्शं भावइति योजयति न श्रोत्रसंस्पर्शमभावइति योजयति। न घ्राणसंस्पर्शं भावइति योजयति न घ्राणसंस्पर्शमभावइति योजयति। न जिह्वासंस्पर्शं भावइति योजयति न जिह्वासंस्पर्शमभावइति योजयति। न कायसंस्पर्शं भावइति योजयति न कायसंस्पर्शमभावइति योजयति। न मनःसंस्पर्शं भावइति योजयति न मनःसंस्पर्शमभावइति योजयति। न चक्षुःसंस्पर्शप्रत्ययां[1] वेदनां भावइति योजयति न चक्षुःसंस्पर्शप्रत्ययां वेदनामभावइति योजयति। न श्रोत्रसंस्पर्शप्रत्ययां वेदनां भावइति योजयति न श्रोत्रसंस्पर्शप्रत्ययां वेदनामभावइति योजयति। न घ्राणसंस्पर्शप्रत्ययां वेदनां भावइति योजयति न घ्राणसंस्पर्शप्रत्ययां वेदनामभावइति योजयति। न जिह्वासंस्पर्शप्रत्ययां वेदनां भावइति योजयति न जिह्वासंस्पर्शप्रत्ययां वेदनामभावइति योजयति। न कायसंस्पर्शप्रत्ययां वेदनां भावइति योजयति न कायसंस्पर्शप्रत्ययां वेदनामभावइति योजयति। न मनःसंस्पर्शप्रत्ययां वेदनां भावइति योजयति न मनःसंस्पर्शप्रत्ययां वेदनामभावइति योजयति। न पृथिवीधातुं भावइति योजयति न पृथिवीधातुमभावइति योजयति। नाऽब्धातुं भावइति योजयति नाऽब्धातुमभावइति योजयति। न तेजोधातुं भावइति योजयति

(१) चक्षुःसंस्पर्शं प्रत्ययः कारणं यस्या वेदनाया सा तथा। वेदनानुभवः। एवमुत्तरत्रापि योजनीयम्।

ष्यति वियोजयिष्यति वा। नाऽप्रणिहितं सर्व्वज्ञतया योजयति न वियोजयति। तथाह्यप्रणिहितमेव न समनुपश्यति। असमनुपश्यन् कथमप्रणिहितं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽभिज्ञां सर्व्वज्ञतया योजयति न वियोजयति। तथाह्यभिज्ञामेव न समनुपश्यति। असमनुपश्यन् कथमभिज्ञां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न समाधिं सर्व्वज्ञतया योजयति न वियोजयति। तथाहि समाधिमेव न समनुपश्यति। असमनुपश्यन् कथं समाधिं सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न धारणीमुखानि सर्व्वज्ञतया योजयति न वियोजयति। तथाहि धारणीमुखान्येव न समनुपश्यति। असमनुपश्यन् कथं धारणीमुखानि सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न दश तथागतबलानि सर्व्वज्ञतया योजयति न वियोजयति। तथाहि दश तथागतबलान्येव न समनुपश्यति। असमनुपश्यन् कथं दश तथागतबलानि सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न वैशारद्यानि सर्व्वज्ञतया योजयति न वियोजयति। तथाहि वैशारद्यान्येव न समनुपश्यति। असमनुपश्यन् कथं वैशारद्यानि सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न प्रतिसंविदः सर्व्वज्ञतया योजयति न वियोजयति। तथाहि प्रतिसंविद एव न समनुपश्यति। असमनुपश्यन् कथं प्रतिसंविदः सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। न महामैत्रीं सर्व्वज्ञतया योजयति न वियोजयति। तथाहि महामैत्रीमेव न समनुपश्यति। असमनुपश्यन् कथं महामैत्रीं सर्व्वज्ञतया योजयिष्यति

वियोजयिष्यति वा। न महाकरुणां सर्व्वज्ञतया योजयति न वियोजयति। तथाहि महाकरुणामेव न समनुपश्यति। असमनुपश्यन् कथं महाकरुणां सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। नाऽष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् सर्व्वज्ञतया योजयति न वियोजयति। तथाह्यष्टादशाऽऽवेणिकान् बुद्धधर्म्मानेव न समनुपश्यति। असमनुपश्यन् कथमष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् सर्व्वज्ञतया योजयिष्यति वियोजयिष्यति वा। एवं युज्यमानः शारद्वतीपुत्र, बोधिसत्त्वो-महासत्त्वः प्रज्ञापारमितायां युक्तइति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र, बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न बुद्धं सर्व्वज्ञतया योजयति न वियोजयति, न सर्व्वज्ञतां बुद्धेन योजयति न वियोजयति। तथाहि बुद्धमेव न समनुपश्यति, सर्व्वज्ञतामेव न समनुपश्यति। असमनुपश्यन् कथं बुद्धं सर्व्वज्ञतया सर्व्वज्ञतां वा बुद्धेन योजयिष्यति वियोजयिष्यति वा। न बोधिं सर्व्वज्ञतया योजयति न वियोजयति, न बोध्या सर्व्वज्ञतां योजयति न वियोजयति। तथाहि बोधिमेव न समनुपश्यति सर्व्वज्ञतामेव न समनुपश्यति। असमनुपश्यन् कथं बोधिं सर्व्वज्ञतया सर्व्वज्ञतां वा बोध्या योजयिष्यति वियोजयिष्यति वा। एवं हि शारद्वतीपुत्र, बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्तइति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र, बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न रूपं भावइति योजयति न रूपमभावइति योजयति। न वेदनां भावइति योजयति न वेदनामभावइति योजयति। न संज्ञां भावइति योजयति न संज्ञामभावइति योजयति। न संस्कारान्

न तेजोधातुमभावइति योजयति। न वायुधातुं भावइति योजयति न वायुधातुमभावइति योजयति। नाऽऽकाशधातुं भावइति योजयति नाऽऽकाशधातुमभावइति योजयति। न विज्ञानधातुं भावइति योजयति न विज्ञानधातुमभावइति योजयति। नाऽविद्यां भावइति योजयति नाऽविद्यामभावइति योजयति। न संस्कारान् भावइति योजयति न संस्कारानभावइति योजयति। न विज्ञानं भावइति योजयति न विज्ञानमभावइति योजयति। न नामरूपं भावइति योजयति न नामरूपमभावइति योजयति। न षडायतनं भावइति योजयति न षडायतनमभावइति योजयति। न स्पर्शं भावइति योजयति न स्पर्शमभावइति योजयति। न वेदनां भावइति योजयति न वेदनामभावइति योजयति। न तृष्णां भावइति योजयति न तृष्णामभावइति योजयति। नोपादानं भावइति योजयति नोपादानमभावइति योजयति। न भवं भावइति योजयति न भवमभावइति योजयति। न जातिं भावइति योजयति न जातिमभावइति योजयति। न जरामरणं भावइति योजयति न जरामरणमभावइति योजयति। न दानपारमितां भावइति योजयति न दानपारमितामभावइति योजयति। न शीलपारमितां भावइति योजयति न शीलपारमितामभावइति योजयति। न क्षान्तिपारमितां भावइति योजयति न क्षान्तिपारमितामभावइति योजयति। न वीर्य्यपारमितां भावइति योजयति न वीर्य्यपारमितामभावइति योजयति। न ध्यानपारमितां भावइति योजयति न ध्यानपारमितामभावइति योजयति। न प्रज्ञापारमितां

भावइति योजयति न प्रज्ञापारमितामभावइति योजयति। नाऽध्यात्मशून्यतां भावइति योजयति नाऽध्यात्मशून्यतामभावइति योजयति। न वहिर्द्धाशून्यतां भाव इति योजयति न वहिर्द्धाशून्यतामभावइति योजयति। नाऽध्यात्मवहिर्द्धाशून्यतां भावइति योजयति नाऽध्यात्मवहिर्द्धाशून्यतामभावइति योजयति। न शून्यताशून्यतां भावइति योजयति न शून्यताशून्यतामभावइति योजयति। न महाशून्यतां भावइति योजयति न महाशून्यतामभावइति योजयति। न परमार्थशून्यतां भावइति योजयति न परमार्थशून्यतामभावइति योजयति। न संस्कृतशून्यतां भावइति योजयति न संस्कृतशून्यतामभावइति योजयति। नाऽसंस्कृतशून्यतां भावइति योजयति नाऽसंस्कृतशून्यतामभावइति योजयति। नाऽत्यन्तशून्यतां भावइति योजयति नाऽत्यन्तशून्यतामभावइति योजयति। नाऽनवराग्रशून्यतां भावइति योजयति नाऽनवराग्रशून्यतामभावइति योजयति। नाऽनवकारशून्यतां भावइति योजयति नाऽनवकारशून्यतामभावइति योजयति। न प्रकृतिशून्यतां भावइति योजयति न प्रकृतिशून्यतामभावइति योजयति। न सर्व्वधर्म्मशून्यतां भावइति योजयति न सर्व्वधर्म्मशून्यतामभावइति योजयति। न स्वलक्षणशून्यतां भावइति योजयति न स्वलक्षणशून्यतामभावइति योजयति। नाऽनुपलम्भशून्यतां भावइति योजयति नाऽनुपलम्भशून्यतामभावइति योजयति। नाऽभावशून्यतां भावइति योजयति नाऽभावशून्यतामभावइति योजयति। न स्वभावशून्यतां भावइति योजयति न स्वभावशून्यतामभावइति

योजयति। नाऽभावस्वभावशून्यतां भावइति योजयति नाऽभावस्वभावशून्यतामभावइति योजयति। न स्मृत्युपस्थानानि भावइति योजयति न स्मृत्युपस्थानान्यभावइति योजयति। न सम्यक्प्रहाणानि भावइति योजयति। न सम्यक्प्रहाणान्यभावइति योजयति। न ऋद्धिपादान् भावइति योजयति। न ऋद्धिपादानभावइति योजयति। नेन्द्रियाणि भावइति योजयति नेन्द्रियाण्यभावइति योजयति। न बलानि भावइति योजयति न बलान्यभावइति योजयति। न बोध्यङ्गानि भावइति योजयति न बोध्यङ्गान्यभावइति योजयति। नाऽप्रमाणानि भावइति योजयति नाऽप्रमाणान्यभावइति योजयति। नाऽऽर्य्यसत्यानि भावइति योजयति नाऽऽर्य्यसत्यान्यभावइति योजयति। न ध्यानानि भावइति योजयति न ध्यानान्यभावइति योजयति। न मार्गं भावइति योजयति न मार्गमभावइति योजयति। नाऽऽरूप्यसमापत्तीर्भावइति योजयति नाऽऽरूप्यसमापत्तीरभावइति योजयति। नाऽष्टौ विमोक्षान् भावइति योजयति नाऽष्टौ विमोक्षानभावइति योजयति। न नवाऽनुपूर्व्वविहारसमापत्तीर्भावइति योजयति न नवाऽनुपूर्व्वविहारसमापत्तीरभावइति योजयति। न शून्यतां भावइति योजयति न शून्यतामभावइति योजयति। नाऽऽनिमित्तं भावइति योजयति नाऽऽनिमित्तमभावइति योजयति। नाऽप्रणिहितं भावइति योजयति नाऽप्रणिहितमभावइति योजयति। नाऽभिज्ञां भावइति योजयति नाऽभिज्ञामभाव इति योजयति। न समाधीन् भावइति योजयति न समाधीनभावइति योजयति।

न धारणीमुखानि भावद्रति योजयति न धारणीमुखान्यभावद्रति योजयति। न दशतथागतबलानि भावद्रति योजयति न दशतथागतबलान्यभावद्रति योजयति। न चत्वारि वैशारद्यानि भावद्रति योजयति न चत्वारि वैशारद्यान्यभावद्रति योजयति। न चतस्रः प्रतिसम्विदोभावद्रति योजयति न चतस्रः प्रतिसम्विदोऽभावद्रति योजयति। न महामैत्रीं भावद्रति योजयति न महामैत्रीमभावद्रति योजयति। न महाकरुणां भावद्रति योजयति न महाकरुणामभावद्रति योजयति। नाऽष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् भावद्रति योजयति नाऽष्टादशाऽऽवेणिकान् बुद्धधर्म्मानभावद्रति योजयति। न स्रोत-आपत्तिफलं भावद्रति योजयति न स्रोत-आपत्तिफलमभावद्रति योजयति। न सकृदाऽऽगामिफलं भावद्रति योजयति न सकृदाऽऽगामिफलमभावद्रति योजयति। नाऽनागामिफलं भावद्रति योजयति नाऽनागामिफलमभावद्रति योजयति। नाऽर्हत्त्वं भावद्रति योजयति नाऽर्हत्त्वमभावद्रति योजयति। न प्रत्येकबोधिं भावद्रति योजयति न प्रत्येकबोधिमभावद्रति योजयति। न मार्गाऽऽकारज्ञतां भावद्रति योजयति न मार्गाऽऽकारज्ञतामभावद्रति योजयति। न सर्व्वाऽऽकारज्ञतां भावद्रति योजयति न सर्व्वाऽऽकारज्ञतामभावद्रति योजयति।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न रूपं नित्यमिति योजयति न रूपमनित्यमिति योजयति। न वेदनां नित्यमिति योजयति न वेदनामनित्यमिति योजयति। न संज्ञां नित्यमिति योजयति न संज्ञामनित्यमिति

योजयति। न संस्काराग्नित्य*इति योजयति न संस्कारानित्यां† इति योजयति। न विज्ञानं नित्यमिति योजयति न विज्ञानमनित्यमिति योजयति। न चक्षुर्नित्यमिति योजयति न चक्षुरनित्यमिति योजयति। न श्रोत्रं नित्यमिति योजयति न श्रोत्रमनित्यमिति योजयति। न घ्राणं नित्यमिति योजयति न घ्राणमनित्यमिति योजयति। न जिह्वां नित्यमिति योजयति न जिह्वामनित्यमिति योजयति। न कायं नित्यमिति योजयति न कायमनित्यमिति योजयति। न मनो नित्यमिति योजयति न मनोऽनित्यमिति योजयति। न रूपं नित्यमिति योजयति न रूपमनित्यमिति योजयति। न शब्दं नित्यमिति योजयति न शब्दमनित्यमिति योजयति। न गन्धं नित्यमिति योजयति न गन्धमनित्यमिति योजयति। न रसं नित्यमिति योजयति न रसमनित्यमिति योजयति। न स्पर्शं नित्यमिति योजयति न स्पर्शमनित्यमिति योजयति। न धर्मान्नित्यानिति योजयति न धर्मानमित्यानिति योजयति। न चक्षुर्विज्ञानं नित्यमिति योजयति न चक्षुर्विज्ञानमनित्यमिति योजयति। न श्रोत्रविज्ञानं नित्यमिति योजयति न श्रोत्रविज्ञानमनित्यमिति योजयति। न घ्राणविज्ञानं नित्यमिति योजयति न घ्राणविज्ञानमनित्यमिति योजयति। न जिह्वाविज्ञानं नित्यमिति योजयति न जिह्वाविज्ञानमनित्यमिति

* संस्कारान्नित्यानिति युक्तं प्रतिभाति।

† संस्कारानित्यानिति युक्तं प्रतिभाति।

योजयति । न कायविज्ञानं नित्यमिति योजयति न कायविज्ञानमनित्यमिति योजयति । न मनोविज्ञानं नित्यमिति योजयति न मनोविज्ञानमनित्यमिति योजयति । न चक्षुः संस्पर्शं नित्यमिति योजयति न चक्षुः संस्पर्शमनित्यमिति योजयति । न श्रोत्रसंस्पर्शं नित्यमिति योजयति न श्रोत्रसंस्पर्शमनित्यमिति योजयति । न घ्राणसंस्पर्शं नित्यमिति योजयति न घ्राणसंस्पर्शमनित्यमिति योजयति । न जिह्वासंस्पर्शं नित्यमिति योजयति न जिह्वासंस्पर्शमनित्यमिति योजयति । न कायसंस्पर्शं नित्यमिति योजयति न कायसंस्पर्शमनित्यमिति योजयति । न मनः संस्पर्शं नित्यमिति योजयति न मनः संस्पर्शमनित्यमिति योजयति । न चक्षुः संस्पर्शप्रत्ययां वेदनां नित्य*मिति योजयति न चक्षु. संस्पर्शप्रत्ययां वेदनामनित्यमिति योजयति । न श्रोत्रसंस्पर्शप्रत्ययां वेदनां नित्यमिति योजयति न श्रोत्रसंस्पर्शप्रत्ययां वेदनामनित्यमिति योजयति । न घ्राणसंस्पर्शप्रत्ययां वेदनां नित्यमिति योजयति न घ्राणसंस्पर्शप्रत्ययां वेदनामनित्यमिति योजयति । न जिह्वासंस्पर्शप्रत्ययां वेदनां नित्यमिति योजयति न जिह्वासंस्पर्शप्रत्ययां वेदनामनित्यमिति योजयति । न कायसंस्पर्शप्रत्ययां वेदनां नित्यमिति योजयति न कायसंस्पर्शप्रत्ययां वेदनामनित्यमिति योजयति । न मन संस्पर्शप्रत्ययां वेदनां नित्यमिति योजयति न मनः संस्पर्शप्रत्ययां वेदनामनित्यमिति योजयति । न पृथिवीधातु नित्यइति योजयति न पृथिवीधातुमनित्यइति

* नित्या इति ख, ग, घ पुस्तके पाठ ।

योजयति । नाऽब्धातुं नित्यइति योजयति नाऽब्धातुमनित्यइति योजयति । न तेजोधातुं नित्यइति योजयति न तेजोधातुमनित्यइति योजयति । न वायुधातुं नित्यइति योजयति न वायुधातुमनित्यइति योजयति । नाऽऽकाशधातुं नित्यइति योजयति नाऽऽकाशधातुमनित्यइति योजयति । न विज्ञानधातुं नित्यइति योजयति न विज्ञानधातुमनित्यइति योजयति । नाऽविद्यां नित्यामिति योजयति नाऽविद्यामनित्यामिति योजयति । न संस्कारान् नित्यानिति* योजयति न संस्कारानित्यानिति योजयति । न विज्ञानं नित्यमिति योजयति न विज्ञानमनित्यमिति योजयति । न नामरूपं नित्यमिति योजयति न नामरूपमनित्यमिति योजयति । न षडायतनं नित्यमिति योजयति न षडायतनमनित्यमिति योजयति । न स्पर्शं नित्यमिति योजयति न स्पर्शमनित्यमिति योजयति । न वेदनां नित्यामिति योजयति न वेदनामनित्यामिति योजयति । न तृष्णां नित्यामिति योजयति न तृष्णामनित्यामिति योजयति । नोपादानं नित्यमिति योजयति नोपादानमनित्यमिति योजयति । न भवं नित्यमिति योजयति न भवमनित्यमिति योजयति । न जातिं नित्यामिति योजयति न जातिमनित्यामिति योजयति । न

---

* इति शब्दसमभिव्याहृत नित्यादि शब्दस्य क्वचित् प्रथमान्तत्वं क्वचित् द्वितीयान्तत्वं एवं क्वचित् विशेष्यपदलिङ्गभागित्वं । क्वचित् क्लीवलिङ्गत्वं दृश्यते । वैषम्यमेतल्लेखकदोषेण जातमिति प्रतिभाति । एवं वैषम्यं परत्रापि बहुस्थले दृश्यते । पुस्तकपञ्चकदृष्टत्वादृशपाठो लिखित ।

जरामरणं नित्यमिति योजयति न जरामरणमनित्यमिति योज-
यति । न दानपारमितां नित्येति योजयति न दानपारमिताम-
नित्येति योजयति । न शीलपारमितां नित्येति योजयति न
शीलपारमितामनित्येति योजयति । न क्षान्तिपारमितां नित्येति
योजयति न क्षान्तिपारमितामनित्येति योजयति । न वीर्य्यपार-
मितां नित्येति योजयति न वीर्य्यपारमितामनित्येति योजयति ।
न ध्यानपारमितां नित्येति योजयति न ध्यानपारमितामनित्येति
योजयति । न प्रज्ञापारमितां नित्येति योजयति न प्रज्ञापार-
मितामनित्येति योजयति । नाऽध्यात्मशून्यतां नित्येति योजयति
नाऽध्यात्मशून्यतामनित्येति योजयति । न बहिर्द्धाशून्यतां नित्येति
योजयति न बहिर्द्धाशून्यतामनित्येति योजयति । नाऽध्यात्म-
बहिर्द्धाशून्यतां नित्येति योजयति नाऽध्यात्मबहिर्द्धाशून्यताम-
नित्येति योजयति । न शून्यताशून्यतां नित्येति योजयति न
शून्यताशून्यतामनित्येति योजयति । न महाशून्यतां नित्येति
योजयति न महाशून्यतामनित्येति योजयति । न परमाऽर्थशून्यतां
नित्येति योजयति न परमाऽर्थशून्यतामनित्येति योजयति । न
संस्कृतशून्यतां नित्येति योजयति न संस्कृतशून्यतामनित्येति योज-
यति । नाऽसंस्कृतशून्यतां नित्येति योजयति नाऽसंस्कृतशून्यताम-
नित्येति योजयति । नाऽत्यन्तशून्यतां नित्येति योजयति नाऽत्यन्त-
शून्यतामनित्येति योजयति । नाऽनवराऽग्रशून्यतां नित्येति योज-
यति नाऽनवराऽग्रशून्यतामनित्येति योजयति । नाऽनवकारशून्यतां
नित्येति योजयति नाऽनवकारशून्यतामनित्येति योजयति । न

प्रकृतिशून्यतां नित्येति योजयति न प्रकृतिशून्यतामनित्येति योजयति। न सर्व्वधर्मशून्यतां नित्येति योजयति न सर्व्वधर्म-शून्यतामनित्येति योजयति। न स्वलक्षणशून्यतां नित्येति योजयति न स्वलक्षणशून्यतामनित्येति योजयति। नाऽनुपलम्भशून्यतां नित्येति योजयति नाऽनुपलम्भशून्यतामनित्येति योजयति। नाऽभावशून्यतां नित्येति योजयति नाऽभावशून्यतामनित्येति योजयति। न स्वभावशून्यतां नित्येति योजयति न स्वभाव-शून्यतामनित्येति योजयति। नाऽभावस्वभावशून्यतां नित्येति योजयति नाऽभावस्वभावशून्यतामनित्येति योजयति। न स्मृत्युप-स्थानानि नित्यानीति योजयति न स्मृत्युपस्थानान्यनित्यानीति योजयति। न सम्यक्प्रहाणानि नित्यानीति योजयति न सम्यक्-प्रहाणान्यनित्यानीति योजयति। न ऋद्धिपादान् नित्यानिति योजयति न ऋद्धिपादाननित्यानिति योजयति। नेन्द्रियाणि नित्यानीति योजयति नेन्द्रियाण्यनित्यानीति योजयति। न बलानि नित्यानीति योजयति न बलान्यनित्यानीति योजयति। न बोध्यङ्गानि नित्यानीति योजयति न बोध्यङ्गान्यनित्यानीति योजयति। नाऽऽर्य्योऽष्टाऽङ्गमार्गं नित्यमिति योजयति नाऽऽर्य्योऽ-ष्टाऽङ्गमार्गमनित्यमिति योजयति। नाऽऽर्य्यसत्यानि नित्यानीति योजयति नाऽऽर्य्यसत्यान्यनित्यानीति योजयति। न ध्यानानि नित्यानीति योजयति न ध्यानान्यनित्यानीति योजयति। नाऽप्र-माणानि नित्यानीति योजयति नाऽप्रमाणान्यनित्यानीति योज-यति। नाऽऽरूप्यसमापत्तीर्नित्याइति योजयति नाऽऽरूप्यसमापत्ती-

रनित्यादिति योजयति। नाऽष्टौ विमोक्षान्नित्यानिति योजयति नाऽष्टौ विमोक्षाननित्यानिति योजयति। न नवाऽनुपूर्व्वविहार-समापत्तीर्नित्यादिति योजयति न नवाऽनुपूर्व्वविहारसमापत्तीर-नित्यादिति योजयति। न शून्यतां नित्यामिति योजयति न शून्यतामनित्यामिति योजयति। नाऽऽनिमित्तं नित्यमिति योजयति नाऽऽनिमित्तमनित्यमिति योजयति। नाऽप्रणिहितं नित्यमिति योजयति नाऽप्रणिहितमनित्यमिति योजयति। नाऽभिज्ञा नित्यादिति योजयति नाऽभिज्ञा अनित्यादिति योजयति। न समाधीन्नित्यानिति योजयति। न समाधीननित्यानिति योजयति। न धारणीमुखानि नित्यानीति योजयति। न धारणी-मुखान्यनित्यानीति योजयति। न दशतथागतबलानि नित्यानीति योजयति। न दशतथागतबलान्यनित्यानीति योजयति। न चत्वारि वैशारद्यानि नित्यानीति योजयति। न चत्वारि वैशारद्या-न्यनित्यानीति योजयति। न चतस्रः प्रतिसंविदो नित्यादिति योज-यति। न चतस्रः प्रतिसंविदोऽनित्यादिति योजयति। न महामैत्रीं नित्यामिति योजयति। न महामैत्रीमनित्यामिति योजयति। न महाकरुणां नित्यामिति योजयति। न महाकरुणामनित्यामिति योजयति। नाऽष्टादशाऽऽवेणिकान् बुद्धधर्म्मान्नित्यानिति योजयति। नाऽष्टादशाऽऽवेणिकान् बुद्धधर्म्माननित्यानिति योजयति। न स्रोत-आपत्तिफलं नित्यमिति योजयति। न स्रोत-आपत्तिफलमनित्य-मिति योजयति। न सकृदागामिफलं नित्यमिति योजयति। न सकृदागामिफलमनित्यमिति योजयति। नाऽनागामिफलं नित्य-

मिति योजयति। नाऽनागामिफलमनित्यमिति योजयति। नाऽर्हत्वं नित्यमिति योजयति। नाऽर्हत्वमनित्यमिति योजयति। न प्रत्येकबोधिं नित्यमिति योजयति। न प्रत्येकबोधिमनित्यमिति योजयति। न मार्गाऽऽकारज्ञतां नित्यामिति योजयति। न मार्गाऽऽकारज्ञतामनित्यामिति योजयति। न सर्व्वाऽऽकारज्ञतां नित्यामिति योजयति। न सर्व्वाऽऽकारज्ञतामनित्यामिति योजयति। एवं चरन् शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न रूपं सुखमिति योजयति। न रूपं दुःखमिति योजयति। न वेदनां सुखेति योजयति। न वेदनां दुःखेति योजयति। न संज्ञां सुखेति योजयति। न संज्ञां दुःखेति योजयति। न संस्कारान् सुखानिति योजयति। न संस्कारान् दुःखानिति योजयति। न विज्ञानं सुखमिति योजयति। नविज्ञानं दुःखमिति योजयति। न चक्षुः सुखमिति योजयति। न चक्षुर्दुःखमिति योजयति। न श्रोत्रं सुखमिति योजयति। न श्रोत्रं दुःखमिति योजयति। न घ्राणं सुखमिति योजयति। न घ्राणं दुःखमिति योजयति। न जिह्वां सुखमिति योजयति। न जिह्वां दुःखमिति योजयति। न कायं सुखमिति योजयति। न कायं दुःखमिति योजयति। न मनः सुखमिति योजयति। न मनोदुःखमिति योजयति। न रूपं सुखमिति योजयति। न रूपं दुःखमिति योजयति। न शब्दं सुखमिति योजयति। न शब्दं दुःखमिति योजयति। न गन्धं

सुखमिति योजयति । न गन्धं दुःखमिति योजयति । न रसं सुखमिति योजयति । न रसं दुःखमिति योजयति । न स्पर्शं सुखमिति योजयति । न स्पर्शं दुःखमिति योजयति । न धर्म्मान् सुखानिति योजयति। न धर्म्मान् दुःखानिति योजयति। न चक्षुर्व्विज्ञानं सुखमिति योजयति । न चक्षुर्व्विज्ञानं दुःखमिति योजयति । न श्रोत्रविज्ञानं सुखमिति योजयति । न श्रोत्रविज्ञानं दुःखमिति योजयति । न घ्राणविज्ञानं सुखमिति योजयति । न घ्राणविज्ञानं दुःखमिति योजयति । न जिह्वाविज्ञानं सुखमिति योजयति । न जिह्वाविज्ञानं दुःखमिति योजयति। न कायविज्ञानं सुखमिति योजयति । न कायविज्ञानं दुःखमिति योजयति । न मनोविज्ञानं सुखमिति योजयति । न मनोविज्ञानं दुःखमिति योजयति । न चक्षुःसंस्पर्शं सुखमिति योजयति । न चक्षुःसंस्पर्शं दुःखमिति योजयति । न श्रोत्रसंस्पर्शं सुखमिति योजयति । न श्रोत्रसंस्पर्शं दुःखमिति योजयति । न घ्राणसंस्पर्शं सुखमिति योजयति। न घ्राणसंस्पर्शं दुःखमिति योजयति। न जिह्वासंस्पर्शं सुखमिति योजयति । न जिह्वासंस्पर्शं दुःखमिति योजयति। न कायसंस्पर्शं सुखमिति योजयति। न कायसंस्पर्शं दुःखमिति योजयति। न मनःसंस्पर्शं सुखमिति योजयति। न मनःसंस्पर्शं दुःखमिति योजयति । न चक्षुःसंस्पर्शप्रत्ययां वेदनां सुखामिति योजयति । न चक्षुःसंस्पर्शप्रत्ययां वेदनां दुःखामिति योजयति । न श्रोत्रसंस्पर्शप्रत्ययां वेदनां सुखामिति योजयति। न श्रोत्रसंस्पर्शप्रत्ययां वेदनां दुःखामिति योजयति । न घ्राणसंस्पर्शप्रत्ययां वेदनां सुखामिति

योजयति। न घ्राणसंस्पर्शप्रत्ययां वेदनां दुःखामिति योजयति। न जिह्वासंस्पर्शप्रत्ययां वेदनां सुखामिति योजयति। न जिह्वासंस्पर्शप्रत्ययां वेदनां दुःखामिति योजयति। न कायसंस्पर्शप्रत्ययां वेदनां सुखामिति योजयति। न कायसंस्पर्शप्रत्ययां वेदनां दुःखामिति योजयति। न मनःसंस्पर्शप्रत्ययां वेदनां सुखामिति योजयति। न मनःसंस्पर्शप्रत्ययां वेदनां दुःखामिति योजयति। न पृथिवीधातुं सुखमिति योजयति। न पृथिवीधातुं दुःखमिति योजयति। न ऽब्धातुं सुखमिति योजयति। न ऽब्धातुं दुःखमिति योजयति। न तेजोधातु सुखमिति योजयति। न तेजोधातुं दु खमिति योजयति। न वायुधातुं सुखमिति योजयति। न वायुधातुं दुःखमिति योजयति। नाऽऽकाशधातुं सुखमिति योजयति। नाऽऽकाशधातुं दुःखमिति योजयति। न विज्ञानधातुं सुखमिति योजयति। न विज्ञानधातुं दुःखमिति योजयति। नाऽविद्यां सुखेति योजयति। नाऽविद्यां दुःखेति योजयति। न संस्कारान् सुखाइति योजयति। न संस्कारान् दुःखाइति योजयति। न विज्ञानं सुखमिति योजयति। न विज्ञानं दुःखमिति योजयति। न नामरूपं सुखमिति योजयति। न नामरूपं दुःखमिति योजयति। न षडायतनं सुखमिति योजयति। न षडायतनं दुःखमिति योजयति। न स्पर्शं सुखमिति योजयति। न स्पर्शं दुःखमिति योजयति। न वेदनां सुखेति योजयति। न वेदनां दुःखेति योजयति। न तृष्णां सुखेति योजयति। न तृष्णां दुःखेति योजयति। नोपादानं सुखमिति योजयति।नोपादानं दुःखमिति योजयति। न भवं सुख-

मिति योजयति। न भवं दुःखमिति योजयति। न जातिं सुखेति योजयति। न जातिं दुःखेति योजयति। न जरामरणं सुखमिति योजयति। न जरामरणं दुःखमिति योजयति। न दानपारमितां सुखेति योजयति। न दानपारमितां दुःखेति योजयति। न शीलपारमितां सुखेति योजयति। न शीलपारमितां दुःखेति योजयति। न चान्तिपारमितां सुखेति योजयति। न चान्तिपारमितां दुःखेति योजयति। न वीर्य्यपारमितां सुखेति योजयति। न वीर्य्यपारमितां दुःखेति योजयति। न ध्यानपारमितां सुखेति योजयति। न ध्यानपारमितां दुःखेति योजयति। न प्रज्ञापारमितां सुखेति योजयति। न प्रज्ञापारमितां दुःखेति योजयति। नाऽध्यात्मशून्यतां सुखेति योजयति। नाऽध्यात्मशून्यतां दुःखेति योजयति। न बहिर्द्धाशून्यतां सुखेति योजयति। न बहिर्द्धाशून्यतां दुःखेति योजयति। नाऽध्यात्मबहिर्द्धाशून्यतां सुखेति योजयति। नाऽध्यात्मबहिर्द्धाशून्यतां दुःखेति योजयति। न शून्यताशून्यतां सुखेति योजयति। न शून्यताशून्यतां दुःखेति योजयति। न महाशून्यतां सुखेति योजयति। न महाशून्यतां दुःखेति योजयति। न परमार्थशून्यतां सुखेति योजयति। न परमार्थशून्यतां दुःखेति योजयति। न संस्कृतशून्यतां सुखेति योजयति। न संस्कृतशून्यतां दुःखेति योजयति। नाऽसंस्कृतशून्यतां सुखेति योजयति। नाऽसंस्कृतशून्यतां दुःखेति योजयति। नाऽत्यन्तशून्यतां सुखेति योजयति। नाऽत्यन्तशून्यतां दुःखेति योजयति। नाऽनवराग्रशून्यतां सुखेति योजयति। नाऽनवराग्रशून्यतां दुःखेति योजयति। नाऽनवकार-

शून्यतां सुखेति योजयति। नाऽनवकारशून्यतां दुःखेति योजयति। न प्रकृतिशून्यतां सुखेति योजयति। न प्रकृतिशून्यतां दुखेति योजयति। न सर्व्वधर्मशून्यतां सुखेति योजयति। न सर्व्वधर्मशून्यतां दुःखेति योजयति। न स्वलक्षणशून्यतां सुखेति योजयति। न स्वलक्षणशून्यतां दुःखेति योजयति। नाऽनुपलम्भशून्यतां सुखेति योजयति। नाऽनुपलम्भशून्यतां दुःखेति योजयति। नाऽभावशून्यतां सुखेति योजयति। नाऽभावशून्यतां दुःखेति योजयति। न स्वभावशून्यतां सुखेति योजयति। न स्वभावशून्यतां दुःखेति योजयति। नाऽभावस्वभावशून्यतां सुखेति योजयति। नाऽभावस्वभावशून्यतां दुखेति योजयति। न स्मृत्युपस्थानानि सुखानीति योजयति। न स्मृत्युपस्थानानि दुःखानीति योजयति। न सम्यक् प्रहाणानि सुखानीनि योजयति। न सम्यक् प्रहाणानि दुःखानीति योजयति। न ऋद्धिपादान् सुखाइति योजयति। न ऋद्धिपादान् दुःखाइति योजयति। नेन्द्रियाणि सुखानीति योजयति। नेन्द्रियाणि दुखानीति योजयति। न बलानि सुखानीति योजयति। न बलानि दुःखानीति योजयति। न बोध्यङ्गानि सुखानीति योजयति। न बोध्यङ्गानि दुःखानीति योजयति। नाऽऽर्य्याऽष्टाऽङ्गमार्गं सुखइति योजयति। नाऽऽर्य्याऽष्टाऽङ्गमार्गं दुःखइति योजयति। नाऽऽर्य्यसत्यानि सुखानीति योजयति। नाऽऽर्य्यसत्यानि दुःखानीति योजयति। न ध्यानानि सुखानीति योजयति। न ध्यानानि दुखानीति योजयति। नाप्रमाणानि सुखानीति योजयति। नाप्रमाणानि दुःखानीति योजयति। नाऽऽरूप्यसमापत्तीः सुखाइति योजयति। नाऽऽरूप्य-

समापत्ती दुःखादति योजयति। नाऽष्टौविमोचान् सुखादति योजयति। नाऽष्टौ विमोचान् दुःखादति योजयति। न नवाऽनुपूर्व्वविहारसमापत्तीः सुखादति योजयति। न नवाऽनुपूर्व्वविहारसमापत्तीः दुःखादति योजयति। न शून्यतां सुखेति योजयति। न शून्यतां दुःखेति योजयति। नाऽऽनिमित्तं सुखमिति योजयति। नाऽऽनिमित्तं दुःखमिति योजयति। नाऽप्रणिहितं सुखमिति योजयति। नाऽप्रणिहितं दुःखमिति योजयति। नाऽभिज्ञां सुखेति योजयति। नाऽभिज्ञां दुःखेति योजयति। न समाधिं सुखदति योजयति। न समाधिं दुःखदति योजयति। न धारणीसुखानि सुखानीति योजयति। न धारणीसुखानि दुःखानीति योजयति। न दशतथागतबलानि सुखानीति योजयति। न दशतथागतबलानि दुःखानीति योजयति। न चत्वारिवैशारद्यानि सुखानीति योजयति। न चत्वारिवैशारद्यानि दुःखानीति योजयति। न चतस्रः प्रतिसंविदः सुखादति योजयति। न चतस्रः प्रतिसंविदोदुःखादति योजयति। न महामैत्रीं सुखेति योजयति। महामैत्रीं दुःखेति योजयति। न महाकरुणां सुखेति योजयति। न महाकरुणां दुःखेति योजयति। नाऽष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् सुखादति योजयति। नाऽष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् दुःखादति योजयति। न श्रोत-आपत्तिफलं सुखमिति योजयति। न श्रोत-आपत्तिफलं दुःखमिति योजयति। न सकृदागामिफलं सुखमिति योजयति। न सकृदागामिफलं दुःखमिति योजयति। नाऽनागामिफलं सुखमिति योजयति। नाऽनागामिफलं दुःखमिति

योजयति। नाऽर्हत्त्वं सुखमिति योजयति। नाऽर्हत्त्वं दुःखमिति योजयति। न प्रत्येकबोधिं सुखमिति योजयति। न प्रत्येकबोधिं दुःखमिति योजयति। न मार्गाऽऽकारज्ञतां सुखेति योजयति। न मार्गाऽऽकारज्ञतां दुःखेति योजयति। न सर्व्वाऽऽकारज्ञतां सुखेति योजयति। न सर्व्वाऽऽकारज्ञतां दुःखेति योजयति। एवं हि शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न रूपमात्मेति योजयति। न रूपमनात्मेति योजयति। न वेदनामात्मेति योजयति। न वेदनामनात्मेति योजयति। न संज्ञामात्मेति योजयति। न संज्ञामनात्मेति योजयति। न संस्कारानात्मान इति योजयति। न संस्काराननात्मानइति योजयति। न विज्ञानमात्मेति योजयति। न विज्ञानमनात्मेति योजयति। न चक्षुरात्मेति योजयति न चक्षुरनात्मेति योजयति। न श्रोत्रमात्मेति योजयति। न श्रोत्रमनात्मेति योजयति। न घ्राणमात्मेति योजयति न घ्राणमनात्मेति योजयति। न जिह्वामात्मेति योजयति। न जिह्वामनात्मेति योजयति। न कायमात्मेति योजयति। न कायमनात्मेति योजयति। न मनश्चात्मेति योजयति। न मनोऽनात्मेति योजयति। न रूपमात्मेति योजयति। न रूपमनात्मेति योजयति। न शब्दमात्मेति योजयति। न शब्दमनात्मेति योजयति। न गन्धमात्मेति योजयति। न गन्धमनात्मेति योजयति। न रसमात्मेति योजयति। न रसमनात्मेति

3412

योजयति । न स्पर्शमात्मेति योजयति । न स्पर्शमनात्मेति योजयति । न धर्म्मानात्मान इति योजयति । न धर्म्माननात्मान इति योजयति। न चक्षुर्विज्ञानमात्मेति योजयति। न चक्षुर्विज्ञानमनात्मेति योजयति । न श्रोत्रविज्ञानमात्मेति योजयति । न श्रोत्रविज्ञानमनात्मेति योजयति । न घ्राणविज्ञानमात्मेति योजयति। न घ्राणविज्ञानमनात्मेति योजयति । न जिह्वाविज्ञानमात्मेति योजयति। न जिह्वाविज्ञानमनात्मेति योजयति। न कायविज्ञानमात्मेति योजयति । न कायविज्ञानमनात्मेति योजयति । न मनोविज्ञानमात्मेति योजयति। न मनोविज्ञानामनात्मेति योजयति । न चक्षुः संस्पर्शमात्मेति योजयति । न चक्षुः संस्पर्शमनात्मेति योजयति । न श्रोत्रसंस्पर्शमात्मेति योजयति । न श्रोत्रसंस्पर्शमनात्मेति योजयति । न घ्राणसंस्पर्शमात्मेति योजयति। न घ्राणसंस्पर्शमनात्मेति योजयति। न जिह्वासंस्पर्शमात्मेति योजयति। न जिह्वासंस्पर्शमनात्मेति योजयति । न कायसंस्पर्शमात्मेति योजयति न कायसंस्पर्शमनात्मेति योजयति । न मनः संस्पर्शमात्मेति योजयति न मनः संस्पर्शमनात्मेति योजयति। न चक्षुःसंस्पर्शप्रत्ययां वेदनामात्मेति योजयति न चक्षुःसंस्पर्शप्रत्ययां वेदनामनात्मेति योजयति। न श्रोत्रसंस्पर्शप्रत्ययां वेदनामात्मेति योजयति न श्रोत्रसंस्पर्शप्रत्ययां वेदनामनात्मेति योजयति । न घ्राणसंस्पर्शप्रत्ययां वेदनामात्मेति योजयति न घ्राणसंस्पर्शप्रत्ययां वेदनामनात्मेति योजयति । न जिह्वासंस्पर्शप्रत्ययां वेदनामात्मेति योजयति न जिह्वासंस्पर्शप्रत्ययां वेदनामनात्मेति योजयति। न कायसंस्पर्शप्रत्ययां-


3412

वेदनामात्मेति योजयति । न कायसंस्पर्शप्रत्ययां वेदनामनात्मेति योजयति। न मनः संस्पर्शप्रत्ययां वेदनामात्मेति। योजयतिन मनः संस्पर्शप्रत्ययां वेदनामनात्मेति योजयति । न पृथिवीधातुमात्मेति योजयति। न पृथिवीधातुमनात्मेति योजयति । नाऽब्धातुमात्मेति योजयति । नाऽब्धातुमनात्मेति योजयति । न तेजोधातुमात्मेति योजयति। न तेजोधातुमनात्मेति योजयति । न वायुधातुमात्मेति योजयति। न वायुधातुमनात्मेति योजयति। नाऽऽकाशधातुमात्मेति योजयति। नाऽऽकाशधातुमनात्मेति योजयति । न विज्ञानधातुमात्मेति योजयति । न विज्ञानधातुमनात्मेति योजयति। नाऽविद्यामात्मेति योजयति। नाऽविद्यामनात्मेति योजयति । न संस्कारानात्मानइति योजयति। न संस्काराननात्मानइति योजयति। न विज्ञानमात्मेति योजयति । न विज्ञानमनात्मेति योजयति । न नामरूपमात्मेति योजयति। न नामरूपमनात्मेति योजयति । न षडायतनमात्मेति योजयति। न षडायतनमनात्मेति योजयति। न स्पर्शमात्मेति योजयति। न स्पर्शमनात्मेति योजयति । न वेदनामात्मेति योजयति। न वेदनामनात्मेति योजयति। न तृष्णामात्मेति योजयति। न तृष्णामनात्मेति योजयति। नोपादानमात्मेति योजयति। नोपादानमनात्मेति योजयति। न भवमात्मेति योजयति। न भवमनात्मेति योजयति । न जातिमात्मेति योजयति। न जातिमनात्मेति योजयति । न जरामरणमात्मेति योजयति। न जरामरणमनात्मेति योजयति । न दानपारमितामात्मेति योजयति । न दानपारमितामनात्मेति योजयति । न शीलपारमितामात्मेति

योजयति। न शीलपारमितामनात्मेति योजयति। न क्षान्तिपार-मितामात्मेति योजयति। न क्षान्तिपारमितामनात्मेति योजयति। न वीर्य्यपारमितामात्मेति योजयति। न वीर्य्यपारमितामनात्मेति योजयति। न ध्यानपारमितामात्मेति योजयति। न ध्यानपारमिता-मनात्मेति योजयति। न प्रज्ञापारमितामात्मेति योजयति। न प्रज्ञापारमितामनात्मेति योजयति। नाऽध्यात्मशून्यतामात्मेति योज-यति। नाऽध्यात्मशून्यतामनात्मेति योजयति। न बहिर्द्धाशून्यता-मात्मेति योजयति। न बहिर्द्धाशून्यतामनात्मेति योजयति। नाऽ-ध्यात्मबहिर्द्धाशून्यतामात्मेति योजयति। नाऽध्यात्मबहिर्द्धाशून्यताम-नात्मेति योजयति। न शून्यताशून्यतामात्मेति योजयति। न शून्य-ताशून्यतामनात्मेति योजयति। न महाशून्यतामात्मेति योजयति। न महाशून्यतामनात्मेति योजयति। न परमार्थशून्यतामात्मेति योजयति। न परमार्थशून्यतामनात्मेति योजयति। न संस्कृतशून्य-तामात्मेति योजयति। न संस्कृतशून्यतामनात्मेति योजयति। ना-ऽसंस्कृतशून्यतामात्मेति योजयति। नाऽसंस्कृतशून्यतामनात्मेति योज-यति। नाऽत्यन्तशून्यतामात्मेति योजयति। नाऽत्यन्तशून्यतामनात्मेति योजयति। नाऽनवराग्रशून्यतामात्मेति योजयति। नाऽनवराग्रशून्य-तामनात्मेति योजयति। नाऽनवकारशून्यतामात्मेति योजयति। नाऽनवकारशून्यतामनात्मेति योजयति। न प्रकृतिशून्यतामात्मेति योजयति। न प्रकृतिशून्यतामनात्मेति योजयति। न सर्व्वधर्मशून्य-तामात्मेति योजयति। न सर्व्वधर्मशून्यतामनात्मेति योजयति। न स्वलक्षणशून्यतामात्मेति योजयति। न स्वलक्षणशून्यतामनात्मेति

योजयति। नाऽनुपलम्भशून्यतामात्मेति योजयति। नाऽनुपलम्भशून्यतामनात्मेति योजयति। नाऽभावशून्यतामात्मेति योजयति। नाऽभावशून्यतामनात्मेति योजयति। न स्वभावशून्यतामात्मेति योजयति। न स्वभावशून्यतामनात्मेति योजयति। नाऽभावस्वभावशून्यतामात्मेति योजयति। नाऽभावस्वभावन्यशूतामनात्मेति योजयति। न स्मृत्युपस्थानान्यात्मानीति योजयति। न स्मृत्युपस्थानान्यनात्मानीति योजयति। न सम्यक् प्रहाणान्यात्मानीति योजयति। न सम्यक् प्रहाणान्यनात्मानीति योजयति। न ऋद्धिपादानात्मानइति योजयति। न ऋद्धिपादाननात्मानइति योजयति। नेन्द्रियाण्यात्मानीति योजयति। नेन्द्रियाण्यनात्मानीति योजयति। न बलान्यात्मानीति योजयति। न बलान्यनात्मानीति योजयति। न बोध्यङ्गान्यात्मानीति योजयति। न बोध्यङ्गान्यनात्मानीति योजयति। नाऽर्य्याऽष्टाऽङ्गमार्गमात्मेति योजयति। नाऽर्य्याऽष्टाऽङ्गमार्गमनात्मेति योजयति। नाऽऽर्य्यसत्यान्यात्मानीति योजयति। नाऽऽर्य्यसत्यान्यनात्मानीति योजयति। न ध्यानान्यात्मानीति योजयति। न ध्यानान्यनात्मानीति योजयति। नप्रमाणान्यात्मानीति योजयति। नप्रमाणान्यनात्मानीति योजयति। नाऽऽरूप्यसमापत्तीरात्मेति योजयति। नाऽऽरूप्यसमापत्तीरनात्मेति योजयति। नाऽष्टौ विमोचानात्मानइति योजयति। नाऽष्टौ विमोचाननात्मानइति योजयति। न नवाऽनुपूर्व्वविहारसमापत्तीरात्मेति* योजयति। न नवाऽनुपूर्व्वविहार-

* आत्मानइति पाठोयुक्त प्रतिभाति।

समापत्तीरनात्मेति* योजयति । न शून्यताऽऽनिमित्ताऽप्रणिहित-विमोक्षमुखान्यात्मानीति योजयति । न शून्यताऽऽनिमित्ताऽप्रणिहित-विमोक्षमुखान्यनात्मानीति योजयति । नाऽभिज्ञामात्मेति योजयति । नाऽभिज्ञामनात्मेति योजयति । न समाधीनात्मानइति योजयति न समाधीननात्मानइति योजयति । न धारणीमुखान्यात्मानीति योजयति । न धारणीमुखान्यनात्मानीति योजयति । न दशतथागत-बलान्यात्मानीति योजयति । न दशतथागतबलान्यनात्मानीति योज-यति । न वैशारद्यान्यात्मानीति योजयति । न वैशारद्यान्यनात्मा-नीति योजयति । न प्रतिसम्विद आत्मानइति योजयति । न प्रति-सम्विदोऽनात्मानइति योजयति । न महामैत्रीमात्मेति योजयति । न महामैत्रीमनात्मेति योजयति । न महाकरुणामात्मेति योज-यति । न महाकरुणामनात्मेति योजयति । नाऽष्टादशाऽऽवेणिक बुद्धधर्म्मानात्मानइति योजयति । नाऽष्टादशाऽऽवेणिकबुद्धधर्म्माननात्मानइति योजयति । न स्रोतआपत्तिफलमात्मेति योजयति । न स्रोतआपत्तिफलमनात्मेति योजयति । न सकृदागामिफलमात्मेति योजयति । न सकृदागामिफलमनात्मेति योजयति । नाऽनागामि-फलमात्मेति योजयति । नाऽनागामिफलमनात्मेति योजयति । ना-ऽर्हत्त्वमात्मेति योजयति । नाऽर्हत्त्वमनात्मेति योजयति । न प्रत्येक-बोधिमात्मेति योजयति । न प्रत्येकबोधिमनात्मेति योजयति । न मार्गाऽऽकारज्ञतामात्मेति योजयति । न मार्गाऽऽकारज्ञतामनात्मेति योजयति । न सर्व्वाऽऽकारज्ञतामात्मेति योजयति । न सर्व्वाऽऽकार-

* अनात्मानइति युक्तं प्रतिभाति ।

ज्ञतामनात्मेति योजयति । एवं चरन् शारद्वतीपुत्र बोधिसत्त्वो-महासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः ।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न रूपं शान्तमिति योजयति। न रूपमशान्तमिति योजयति। न वेदनां शान्तेति योजयति। न वेदनामशान्तेति योजयति । न संज्ञां शान्तेति योजयति। न संज्ञामशान्तेति योजयति। न संस्कारान् शान्ता इति योजयति। न संस्कारानशान्ता इति योजयति। न विज्ञानं शान्तमिति योजयति । न विज्ञानमशान्तमिति योजयति । न चक्षुः शान्तमिति योजयति। न चक्षुरशान्तमिति योजयति । न श्रोत्रं शान्तमिति योजयति। न श्रोत्रमशान्तमिति योजयति । न घ्राणं शान्तमिति योजयति। न घ्राणमशान्तमिति योजयति । न जिह्वां शान्तेति योजयति। न जिह्वामशान्तेति योजयति। न कायं शान्तमिति योजयति। न कायमशान्तमिति* योजयति । न मनः शान्तमिति योजयति । न मनोऽशान्तमिति योजयति । न रूपं शान्तमिति योजयति। न रूपमशान्तमिति योजयति । न शब्दं शान्तमिति योजयति। न शब्दमशान्तमिति योजयति । न गन्धं शान्तमिति योजयति। न गन्धमशान्तमिति योजयति । न रसं शान्तमिति योजयति । न रसमशान्तमिति योजयति । न स्पर्शं शान्तमिति योजयति। न स्पर्शमशान्तमिति योजयति। न धर्मान् शान्ता इति योजयति। न धर्मानशान्ता इति योजयति। न चक्षुर्विज्ञानं शान्तमिति योजयति। न चक्षुर्विज्ञान-

* अशान्तेति पाठः क ।

मशान्तमिति योजयति। न श्रोत्रविज्ञानं शान्तमिति योजयति। न श्रोत्रविज्ञानमशान्तमिति योजयति। न घ्राणविज्ञानं शान्तमिति योजयति। न घ्राणविज्ञानमशान्तमिति योजयति। न जिह्वाविज्ञानं शान्तमिति योजयति। न जिह्वाविज्ञानमशान्तमिति योजयति। न कायविज्ञानं शान्तमिति योजयति। न कायविज्ञानमशान्तमिति योजयति। न मनोविज्ञानं शान्तमिति योजयति। न मनोविज्ञानमशान्तमिति योजयति। न चक्षुःसंस्पर्शं शान्तमिति योजयति। न चक्षुःसंस्पर्शमशान्तमिति योजयति। न श्रोत्रसंस्पर्शं शान्तमिति योजयति। न श्रोत्रसंस्पर्शमशान्तमिति योजयति। न घ्राणसंस्पर्शं शान्तमिति योजयति। न घ्राणसंस्पर्शमशान्तमिति योजयति। न जिह्वासंस्पर्शं शान्तमिति योजयति। न जिह्वासंस्पर्शमशान्तमिति योजयति। न कायसंस्पर्शं शान्तमिति योजयति। न कायसंस्पर्शमशान्तमिति योजयति। न मनः संस्पर्शं शान्तमिति योजयति। न मनःसंस्पर्शमशान्तमिति योजयति। न चक्षुःसंस्पर्शप्रत्ययां[१] वेदनां शान्तेति योजयति। न चक्षुःसंस्पर्शप्रत्ययां वेदनामशान्तेति योजयति। न श्रोत्रसंस्पर्शप्रत्ययां वेदनां शान्तेति योजयति। न श्रोत्रसंस्पर्शप्रत्ययां वेदनामशान्तेति योजयति। न घ्राणसंस्पर्शप्रत्ययां वेदनां शान्तेति योजयति। न घ्राणसंस्पर्शप्रत्ययां वेदनामशान्तेति योजयति। न जिह्वासंस्पर्शप्रत्ययां वेदनां शान्तेति योजयति। न जिह्वासंस्पर्शप्रत्ययां वेदनामशान्तेति योजयति। न कायसंस्पर्शप्रत्ययां

(१) कार्यं प्रत्ययते गच्छतीति प्रत्ययः कारणमितिरत्नप्रभा। प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुष्वित्यमरः।

वेदनां शान्तेति योजयति। न कायसंस्पर्शप्रत्ययां वेदनामशान्तेति योजयति। न मनःसंस्पर्शप्रत्ययां वेदनां शान्तेति योजयति। न मनः संस्पर्शप्रत्ययां वेदनामशान्तेति योजयति। न पृथिवीधातुं शान्ते*ति योजयति। न पृथिवीधातुमशान्तेति योजयति। नाऽब्धातुं शान्तेति योजयति। नाऽब्धातुमशान्तेति योजयति। न तेजोधातुं शान्तेति योजयति। न तेजोधातुमशान्तेति योजयति। न वायुधातुं शान्तेति योजयति। न वायुधातुमशान्तेति योजयति। नाऽऽकाशधातुं शान्तइति योजयति। नाऽऽकाशधातुमशान्तइति योजयति। न विज्ञानधातुं शान्तइति योजयति। न विज्ञानधातुमशान्तइति योजयति। नाऽविद्यां[1] शान्तेति योजयति। नाऽविद्यामशान्तेति योजयति। न संस्कारान् शान्ताइति योजयति। न संस्कारानशान्ताइति योजयति। न विज्ञानं शान्तमिति योजयति।

* शान्तेति च पाठः।

(१) क्षणिकेषु स्थिरत्वबुद्धिरविद्या। ततोरागद्वेषमोहाः संस्काराभवन्ति। तेभ्योगर्भस्थस्याद्यं विज्ञानमुत्पद्यते। तस्माच्चालयविज्ञानात् पृथिव्यादि चतुष्टयं नामाश्रयत्वान्नाम भवति। ततो रूपं सितासितात्मकं शुक्रशोणितं निष्पद्यते गर्भस्यकललबुद्बुदाऽवस्था नामरूपपदार्थइति निष्कर्षः। विज्ञानं पृथिव्यादिचतुष्टयं रूपञ्चेति षट् चायतनानियस्येन्द्रियजातस्य तत् षडायतनं। नामरूपेन्द्रियाणां मिथः संयोगः स्पर्शः। ततः सुखादिकावेदना, तया पुनर्विषयतृष्णा, तया प्रवृत्तिरुपादानं। तेन भवत्यस्माज्जन्मेति भवोधर्म्मादिस्ततोजातिर्देहजन्म पञ्चस्कन्धसमुदायइति यावत् जातानां स्कन्धानां परिपाकोजरास्कन्धः नाशोमरणम्। इति शारीरकभाष्य टीका, रत्नप्रभा।

न विज्ञानमशान्तमिति योजयति। न नामरूपं शान्तमिति योजयति न नामरूपमशान्तमिति योजयति। न षड़ायतनं शान्तमिति योजयति न षड़ायतनमशान्तमिति योजयति। न स्पर्शं शान्तमिति योजयति न स्पर्शमशान्तमिति योजयति। न वेदनां शान्तेति योजयति न वेदनामशान्तेति योजयति। न तृष्णां शान्तेति योजयति न तृष्णामशान्तेति योजयति। नोपादानं शान्तमिति* योजयति नोपादानमशान्तमिति† योजयति। न भवं शान्तमिति योजयति न भवमशान्तमिति योजयति। न जातिं शान्तेति योजयति न जातिमशान्तेति योजयति। न जरामरणं शान्तमिति योजयति न जरामरणमशान्तमिति योजयति। न दानपारमितां शान्तेति योजयति न दानपारमितामशान्तेति योजयति। न शीलपारमितां शान्तेति योजयति न शीलपारमितामशान्तेति योजयति। न क्षान्तिपारमितां शान्तेति योजयति न क्षान्तिपारमितामशान्तेति योजयति न वीर्य्यपारमितां शान्तेति योजयति न वीर्य्यपारमितामशान्तेति योजयति। न ध्यानपारमितां शान्तेति योजयति। न ध्यानपारमितामशान्तेति योजयति। न प्रज्ञापारमितां शान्तेति योजयति। न प्रज्ञापारमितामशान्तेति योज-

---

* अशान्तेति घ पुस्तके पाठः। एवं परत्र शान्तेति अशान्तेति पु॰ नपु॰ सक्रयोर्विशेष्यत्वेपि प्रयोगः। पुस्तकचतुष्टये दृश्यते।

† शान्त इति ख, ग, घ पुस्तके पाठः। एवं परत्र धातुशब्द विशेष्य स्थले शान्त इति अशान्त इति सर्व्वत्र पाठः ख, ग, घ, पुस्तकेषु दृश्यते।

यति। नाऽध्यात्मशून्यतां शान्तेति योजयति। नाऽध्यात्मशून्यतामशान्तेति योजयति। न वहिर्द्धाशून्यतां शान्तेति योजयति। न वहिर्द्धाशून्यतामशान्तेति योजयति। नाऽध्यात्मवहिर्द्धाशून्यतां शान्तेति योजयति। नाऽध्यात्मवहिर्द्धाशून्यतामशान्तेति योजयति। न शून्यताशून्यतां शान्तेति योजयति। न शून्यताशून्यतामशान्तेति योजयति। न महाशून्यतां शान्तेति योजयति। न महाशून्यतामशान्तेति योजयति। न परमार्थशून्यतां शान्तेति योजयति। न परमार्थशून्यतामशान्तेति योजयति। न संस्कृतशून्यतां शान्तेति योजयति। न संस्कृतशून्यतामशान्तेति योजयति। नाऽसंस्कृतशून्यतां शान्तेति योजयति। नाऽसंस्कृतशून्यतामशान्तेति योजयति। नाऽत्यन्तशून्यतां शान्तेति योजयति। नाऽत्यन्तशून्यतामशान्तेति योजयति। नाऽनवराऽग्रशून्यतां शान्तेति योजयति। नाऽनवराऽग्रशून्यतामशान्तेति योजयति। नाऽनवकारशून्यतां शान्तेति योजयति। नाऽनवकारशून्यतामशान्तेति योजयति। न प्रकृतिशून्यतां शान्तेति योजयति। न प्रकृतिशून्यतामशान्तेति योजयति। न सर्व्वधर्म्मशून्यतां शान्तेति योजयति। न सर्व्वधर्म्मशून्यतामशान्तेति योजयति। न स्वलक्षणशून्यतां शान्तेति योजयति न। स्वलक्षणशून्यतामशान्तेति योजयति। नाऽनुपलम्भशून्यतां शान्तेति योजयति। नाऽनुपलम्भशून्यतामशान्तेति योजयति। नाऽभावशून्यतां शान्तेति योजयति। नाऽभावशून्यतामशान्तेति योजयति। न स्वभावशून्यतां शान्तेति योजयति। न स्वभावशून्यतामशान्तेति योजयति। नाऽभावस्वभावशून्यतां शान्तेति योजयति। नाऽभावस्व-

भावशून्यतामशान्तेति योजयति । न स्मृत्युपस्थानानि शान्तानीति योजयति । न स्मृत्युपस्थानान्यशान्तानीति योजयति । न सम्यक् प्रहाणानिशान्तानीति । योजयति न सम्यक् प्रहाणान्यशान्तानीति योजयति । न ऋद्धिपादान् शान्तादिति योजयति । न ऋद्धिपादानशान्तादिति योजयति । नेन्द्रियाणिशान्तानीति योजयति । नेन्द्रियाण्यशान्तानीति योजयति । न बलानिशान्तानीति योजयति । न बलान्यशान्तानीति योजयति । न बोध्यङ्गानिशान्तानीति योजयति । न बोध्यङ्गान्यशान्तानीति योजयति । नाऽऽर्य्योऽष्टाङ्गमार्गं शान्त*मिति योजयति । नाऽऽर्य्योऽष्टाङ्गमार्गमशान्तमिति योजयति । न ध्यानानिशान्तानीति योजयति । न ध्यानान्यशान्तानीति योजयति । नाऽप्रमाणानिशान्तानीति योजयति । नाऽऽप्रमाणान्यशान्तानीति योजयति । नाऽऽरूप्यसमापत्तीः शान्तादिति योजयति । नाऽऽरूप्यसमापत्तीरशान्तादिति योजयति । न विमोक्षान् शान्तादिति योजयति । न विमोक्षानशान्तादिति योजयति । ननवाऽऽनुपूर्व्वविहारसमापत्तीः शान्तादिति योजयति । न नावऽनुपूर्व्वविहारसमापत्तीरशान्तादिति योजयति । न शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखानि शान्तानीति योजयति । न शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखान्यशान्तानीति योजयति । नाऽभिज्ञाः शान्तादिति योज-

---

* नाऽऽर्य्यसत्यानिशान्तानीति योजयति नाऽऽर्य्यसत्यानिशान्तानीति योजयति घ पाठः ।

† शान्ताऽइति ख, ग, घ, पुस्तकेषु पाठः

‡ नाऽनुपूर्व्वेति च पाठः

यति। नाऽभिज्ञाश्च्छशान्तादति योजयति। न समाधीन् शान्तादति, योजयति। न समाधीनशान्तादति योजयति। न धारणीमुखानि शान्तानीति योजयति। न धारणीमुखान्यशान्तानीति योजयति। न दशतथागतबलानिशान्तानीति योजयति। न दशतथागतबला-न्यशान्तानीति योजयति। न चत्वारिवैशारद्यानि शान्तानीति योजयति। न चत्वारिवैशारद्यान्यशान्तानीति योजयति।, न चतस्रः प्रतिसंविदः शान्तादति योजयति। न चतस्रः प्रतिसंविदोऽशान्ता इति योजयति। न महामैत्रीं शान्तेति योजयति। न महामैत्री-मशान्तेति योजयति। न महाकरुणां शान्तेति योजयति। न महा-करुणामशान्तेति योजयति। नाऽष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् शान्तादति योजयति। नाऽष्टादशाऽऽवेणिकान् बुद्धधर्म्मानशान्ता इति योजयति। न स्रोत-आपत्तिफलं शान्तमिति योजयति। न स्रोत-आपत्तिफलमशान्तमिति योजयति। न सकृदागामिफलं शान्तमिति योजयति न सकृदागामिफलमशान्तमिति योजयति। नाऽनागामिफलं शान्तमिति योजयति नाऽनागामिफलमशान्तमिति योजयति। नाऽर्हत्त्व शान्तमिति योजयति नाऽर्हत्त्वमशान्तमिति योजयति। न प्रत्येकबोधिं शान्तइति योजयति न प्रत्येकबोधि-मशान्तइति योजयति। न मार्गाऽऽकारज्ञतां शान्तेति योज-यति। न मार्गाऽऽकारज्ञतामशान्तेति योजयति। न सर्व्वाऽऽकार-ज्ञतां शान्तेति योजयति। न सर्व्वाऽऽकारज्ञतामशान्तेति योजयति। एवं चरन् शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्तइति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युज्यमानो नरूपं शून्यमिति वाऽशून्यमिति वा युज्यते। न वेदनां शून्यमिति वाऽशून्यमिति वा युज्यते। न संज्ञां शून्यमिति वाऽशून्यमिति वा युज्यते। न संस्काराः *शून्याइति वाऽशून्याइति वा युज्यते। न विज्ञानं शून्यमिति वाऽशून्यमिति वा युज्यते। न चक्षुः शून्यमिति वाऽशून्यमिति वा युज्यते। न श्रोत्रं शून्यमिति वाऽशून्यमिति वा युज्यते। न घ्राणं शून्यमिति वाऽशून्यमिति वा युज्यते। न जिह्वां शून्यमिति वाऽशून्यमिति वा युज्यते। न कायं शून्यमिति वाऽशून्यमिति वा युज्यते। न मनः शून्यमिति वाऽशून्यमिति वा युज्यते। न रूपं शून्यमिति वाऽशून्यमिति वा युज्यते। न शब्दं शून्यमिति वाऽशून्यमिति वा युज्यते। न गन्धं शून्यमिति वाऽशून्यमिति वा युज्यते। न रसं शून्यमिति वाऽशून्यमिति वा युज्यते। न स्पर्शं शून्यमिति वाऽशून्यमिति वा युज्यते। न धर्मान् शून्याइति वाऽशून्याइति वा युज्यते। न चक्षुर्व्विज्ञानं शून्यमिति वाऽशून्यमिति वा युज्यते। न श्रोत्रविज्ञानं शून्यमिति वाऽशून्यमिति वा युज्यते। न घ्राणविज्ञानं शून्यमिति वाऽशून्यमिति वा युज्यते। न जिह्वाविज्ञानं शून्यमिति वाऽशून्यमिति वा युज्यते। न कायविज्ञानं शून्यमिति वाऽशून्यमिति वा युज्यते। न मनोविज्ञानं शून्यमिति वाऽशून्यमिति वा युज्यते। न चक्षुः संस्पर्शं शून्यमिति वाऽशून्यमिति वा युज्यते। न श्रोत्रसंस्पर्शं शून्यमिति वाऽशून्यमिति वा युज्यते। न घ्राणसंस्पर्शं शून्यमिति

* न संस्कारान् इति ख, ग, घ, च पाठः।

वाऽशून्यमिति वा युज्यते। न जिह्वासंस्पर्शं शून्यमिति वाऽशून्यमिति वा युज्यते। न कायसंस्पर्शं शून्यमिति वाऽशून्यमिति वा युज्यते। न मनःसंस्पर्शं शून्यमिति वाऽशून्यमिति वा युज्यते। न चक्षुःसंस्पर्शप्रत्ययां वेदनां शून्येति वाऽशून्येति वा युज्यते। न श्रोत्रसंस्पर्शप्रत्ययां वेदनां शून्येति वाऽशून्येति वा युज्यते। न घ्राणसंस्पर्शप्रत्ययां वेदनां शून्येति वाऽशून्येति वा युज्यते। न जिह्वासंस्पर्शप्रत्ययां वेदनां शून्येति वाऽशून्येति वा युज्यते। न कायसंस्पर्शप्रत्ययां वेदनां शून्येति वाऽशून्येति वा युज्यते। न मनःसंस्पर्शप्रत्ययां वेदनां शून्येति वाऽशून्येति वा युज्यते। न पृथिवीधातुं शून्य*मिति वाऽशून्यमिति वा युज्यते। नाऽब्धातुं शून्यमिति वाऽशून्यमिति वा युज्यते। न तेजोधातुं शून्यमिति वाऽशून्यमिति वा युज्यते। न वायुधातुं शून्यमिति वाऽशून्यमिति वा युज्यते। नाऽऽकाशधातुं शून्यमिति वाऽशून्यमिति वा युज्यते। न विज्ञानधातुं शून्यइति वाऽशून्यइति वा युज्यते। नाविद्यां शून्येति वाऽशून्येति वा युज्यते। न संस्कारान् शून्याइति† वाऽशून्याइति वा युज्यते। न विज्ञानं शून्यमिति वाऽशून्यमिति वा युज्यते। न नामरूपं शून्यमिति वाऽशून्यमिति वा युज्यते। न षडायतनं शून्यमिति वाऽशून्यमिति वा युज्यते। न स्पर्शं शून्यमिति वाऽ-

---

* ख, ग, घ, च पुस्तकेषु शून्य इति वा अशून्य इति वा पाठः। एवं सर्वत्र धातुशब्दविशेष्यस्थले दृश्यते।

† शून्येति अशून्येति, च पुस्तके पाठः। ख, ग, घ, च पुस्तकेषु शून्याइति अशून्या, इति यथायथं पाठः।

शून्यमिति वा युज्यते । न वेदनां शून्येति वाऽशून्येति वा युज्यते । न तृष्णां शून्येति वाऽशून्येति वा युज्यते । नोपादानं शून्यमिति वाऽशून्यमिति वा युज्यते । न भवं शून्यइति वाऽशून्यइति वा युज्यते । न जातिं शून्येति वाऽशून्येति वा युज्यते । न जरामरणं शून्यमिति वाऽशून्यमिति वा युज्यते । न दानपारमितां शून्येति वाऽशून्येति वा युज्यते । न शीलपारमितां शून्येति वाऽशून्येति वा युज्यते । न क्षान्तिपारमितां शून्येति वाऽशून्येति वा युज्यते । न वीर्य्यपारमितां शून्येति वाऽशून्येति वा युज्यते । न ध्यानपारमितां शून्येति वाऽशून्येति वा युज्यते । न प्रज्ञापारमितां शून्येति वाऽशून्येति वा युज्यते । नाऽध्यात्मशून्यतां शून्येति वाऽशून्येति वा युज्यते । न वहिर्द्धाशून्यतां शून्येति वाऽशून्येति वा युज्यते । नाऽध्यात्मवहिर्द्धाशून्यतां शून्येति वाऽशून्येति वा युज्यते । न शून्यताशून्यतां शून्येति वाऽशून्येति वा युज्यते । न महाशून्यतां शून्येति वाऽशून्येति वा युज्यते । न परमार्थशून्यतां शून्येति वाऽशून्येति वा युज्यते । न संस्कृतशून्यतां शून्येति वाऽशून्येति वा युज्यते । नाऽसंस्कृतशून्यतां शून्येति वाऽशून्येति वा युज्यते । नाऽत्यन्तशून्यतां शून्येति वाऽशून्येति वा युज्यते । नाऽनवराग्रशून्यतां शून्येति वाऽशून्येति वा युज्यते । नाऽनवकारशून्यतां शून्येति वाऽशून्येति वा युज्यते । न प्रकृतिशून्यतां शून्येति वाऽशून्येति वा युज्यते । न सर्व्वधर्म्मशून्यतां शून्येति वाऽशून्येति वा युज्यते । न स्वलक्षणशून्यतां शून्येति वाऽशून्येति वा युज्यते । नाऽनुपलम्भशून्यतां शून्येति वाऽशून्येति वा युज्यते । नाऽभावशून्यतां शून्येति वाऽशून्येति वा युज्यते ।

न स्वभावशून्यतां शून्येति वाऽशून्येति वा युज्यते। नाऽभावस्वभावशून्यतां शून्येति वाऽशून्येति वा युज्यते। न स्मृत्युपस्थानानि शून्यानीति वाऽशून्यानीति वा युज्यते। न सम्यक् प्रहाणानि शून्यानीति वाऽशून्यानीति वा युज्यते। नर्द्धिपादान् शून्याइति वाऽशून्याइति वा युज्यते। नेन्द्रियाणि शून्यानीति वाऽशून्यानीति वा युज्यते। नबलानि शून्यानीति वाऽशून्यानीति वा युज्यते। न बोध्यङ्गानि शून्यानीति वाऽशून्यानीति वा युज्यते। नाऽऽर्य्योऽष्टाऽङ्गमार्गं शून्यइति वाऽशून्यइति वा युज्यते। नार्य्यसत्यानि शून्यानीति वाऽशून्यानीति वा युज्यते। न ध्यानानि शून्यानीति वाऽशून्यानीति वा युज्यते। नाऽप्रमाणानि शून्यानीति वाऽशून्यानीति वा युज्यते। नाऽऽरूप्यसमापत्तीः शून्याइति वाऽशून्याइति वा युज्यते। नाऽष्टौ विमोक्षान् शून्याइति वाऽशून्याइति वा युज्यते। न नवाऽनुपूर्व्वविहारसमापत्तीः शून्याइति वाऽशून्याइति वा युज्यते। न शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखानि शून्यानीति वाऽशून्यानीति वा युज्यते। नाभिज्ञाः शून्याइति वा अशून्याइति वा युज्यते। न समाधीन् शून्याइति वाऽशून्याइति वा युज्यते। न धारणीमुखानि शून्यानीति वाऽशून्यानीति वा युज्यते। न तथागतबलानि शून्यानीति वाऽशून्यानीति वा युज्यते। न वैशारद्यानि शून्यानीति वाऽशून्यानीति वा युज्यते। न प्रतिसंविदः शून्याइति वाऽशून्याइति वा युज्यते। न महामैत्रीं शून्येति वाऽशून्येति वा युज्यते। न महाकरुणां शून्येति वाऽशून्येति वा युज्यते। नाऽऽवेणिकबुद्धधर्म्मान् शून्याइति वाऽशून्याइति वा युज्यते। न श्रोत-

श्रापत्तिफलं शून्यमिति वाऽशून्यमिति वा युज्यते। न सकृदागामिफलं शून्यमिति वाऽशून्यमिति वा युज्यते। नाऽनागामिफलं शून्यमिति वाऽशून्यमिति वा युज्यते। नाऽर्हत्त्वं शून्यमिति वाऽशून्यमिति वा युज्यते। न प्रत्येकबोधिं शून्यइति वाऽशून्यइति वा युज्यते। न सर्व्वज्ञतां शून्येति वाऽशून्येति वा युज्यते। न मार्गाऽऽकारज्ञतां शून्येति वाऽशून्येति वा युज्यते। न सर्व्वाऽऽकारज्ञतां शून्येति वाऽशून्येति वा युज्यते। एवं चरन् शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्तइति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न रूपं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न वेदनां निमित्तेति वाऽनिमित्तेति वा युज्यते। न संज्ञां निमित्तेति वाऽनिमित्तेति वा युज्यते। न संस्कारान् निमित्तादति वाऽनिमित्तादति वा युज्यते। न विज्ञानं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न चक्षुर्निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न श्रोत्रं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न घ्राणं निमित्तमिति वा अनिमित्तमिति वा युज्यते। न जिह्वां निमित्त*मिति वाऽनिमित्तमिति वा युज्यते। न कायं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न मनोनिमित्तमिति वाऽनिमित्तमिति वा युज्यते। न रूपं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न शब्दं निमित्तदति वा ऽनिमित्तदति वा युज्यते। न गन्धं निमित्तदति वाऽनिमित्तदति वा युज्यते। न रसं निमित्तमिति

* निमित्तेति वानिमित्तेति ख, ग, ङ पुस्तकेषु यथायथं पाठः।

वाऽनिमित्तमिति वा युज्यते। न स्पर्शं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न धर्मान् निमित्तादति वाऽनिमित्तादति वा युज्यते। न चक्षुर्विज्ञानं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न श्रोत्रविज्ञानं निमित्तमिति वा अनिमित्तमिति वा युज्यते। न घ्राणविज्ञानं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न जिह्वाविज्ञानं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न कायविज्ञानं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न मनोविज्ञानं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न चक्षुः संस्पर्शं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न श्रोत्रसंस्पर्शं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न घ्राणसंस्पर्शं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न जिह्वासंस्पर्शं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न कायसंस्पर्शं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न मनः संस्पर्शं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न चक्षुः संस्पर्शप्रत्ययां वेदनां निमित्तेति वाऽनिमित्तेति वा युज्यते। न श्रोत्रसंस्पर्शप्रत्ययां वेदनां निमित्तेति वाऽनिमित्तेति वा युज्यते। न घ्राणसंस्पर्शप्रत्ययां वेदनां निमित्तेति वाऽनिमित्तेति वा युज्यते। न जिह्वासंस्पर्शप्रत्ययां वेदनां निमित्तेति वाऽनिमित्तेति वा युज्यते। न कायसंस्पर्शप्रत्ययां वेदनां निमित्तेति वाऽनिमित्तेति वा युज्यते। न मनः संस्पर्शप्रत्ययां वेदनां निमित्तेति वा अनिमित्तेति वा युज्यते। न पृथिवीधातुं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। नाऽब्धातुं निमित्तमिति वाऽनिमित्तमिति वा

युज्यते। न तेजोधातुं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न वायुधातुं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। नाऽऽकाशधातुं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न विज्ञानधातुं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। नाऽविद्यां निमित्तेति वाऽनिमित्तेति वा युज्यते। न संस्कारान् निमित्ता-इति वाऽनिमित्ताइति वा युज्यते। न विज्ञानं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न नामरूपं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न षड़ायतनं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न स्पर्शं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न वेदनां निमित्तेति वाऽनिमित्तेति वा युज्यते। न तृष्णां निमित्तेति वाऽनिमित्तेति वा युज्यते। नोपादानं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न भवं* निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न जातिं निमित्तेति वाऽनिमित्तेति वा युज्यते। न जरामरणं निमित्तमिति वाऽनिमित्तमिति वा युज्यते। न दानपारमितां निमित्तेति वाऽनिमित्तेति वा युज्यते। न शीलपारमितां निमित्तेति वाऽनिमित्तेति वा युज्यते। न क्षान्तिपारमितां निमित्तेति वाऽनिमित्तेति वा युज्यते। न वीर्य्यपारमितां निमित्तेति वाऽनिमित्तेति वा युज्यते। न ध्यान-पारमितां निमित्तेति वाऽनिमित्तेति वा युज्यते। न प्रज्ञापारमितां निमित्तेति वाऽनिमित्तेति वा युज्यते। नाऽध्यात्मशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। न बहिर्द्धाशून्यतां निमित्तेति

* निमित्तमिति वानिमित्तमिति ख, ग, घ पुस्तकेषु पाठः।

वाऽनिमित्तेति वा युज्यते। नाऽध्यात्मबहिर्द्धाशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। न शून्यताशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। न महाशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। न परमार्थशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। न संस्कृतशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। नाऽसंस्कृतशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। नाऽत्यन्तशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। नाऽनवराग्रशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। नाऽनवकारशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। न प्रकृतिशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। न सर्व्वधर्म्मशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। न स्वलक्षणशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। नाऽनुपलम्भशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। नाऽभावशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। न स्वभावशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। नाऽभावस्वभावशून्यतां निमित्तेति वाऽनिमित्तेति वा युज्यते। न स्मृत्युपस्थानानि निमित्तानीति वाऽनिमित्तानीति वा युज्यते। न सम्यक्प्रहाणानि निमित्तानीति वाऽनिमित्तानीति वा युज्यते। नर्द्धिपादान् निमित्ता*निति वाऽनिमित्तानिति वा युज्यते। नेन्द्रियाणि निमित्तानीति वाऽनिमित्तानीति वा युज्यते। न बलानि निमित्तानीति वाऽनिमित्तानीति वा युज्यते। न बोध्यङ्गानि निमि-

---

* निमित्ता इति ख, घ पुस्तकयो: पाठः।

न्तानीति वाऽनिमित्तानीति वा युज्यते । नाऽऽर्याऽष्टाऽङ्गमार्गं निमित्तमिति वाऽनिमित्तमिति वा युज्यते । नाऽऽर्यसत्यानि निमित्तानीति वाऽनिमित्तानीति वा युज्यते । न ध्यानानि निमित्तानीति वाऽनिमित्तानीति वा युज्यते । नाऽप्रमाणानि निमित्तानीति वाऽनिमित्तानीति वा युज्यते । नाऽऽरूप्यसमापत्ती-र्निमित्तादिति वाऽनिमित्तादिति वा युज्यते । न विमोक्षान् निमित्तादिति वाऽनिमित्तादिति वा युज्यते । न नवाऽनुपूर्व्वविहार-समापत्तीर्निमित्तादिति वाऽनिमित्तादिति वा युज्यते । न शून्यता-ऽऽनिमित्ताऽप्रणिहितविमोक्षमुखानि निमित्तानीति वाऽनिमित्ता-नीति वा युज्यते । नाऽभिज्ञानिमित्तादिति वाऽनिमित्तादिति वा युज्यते । न समाधीन् निमित्तादिति वाऽनिमित्तादिति वा युज्यते । न धारणीमुखानि निमित्तानीति वाऽनिमित्तानीति वा युज्यते । न तथागतबलानि निमित्तानीति वाऽनिमित्तानीति वा युज्यते । न वैशारद्यानि निमित्तानीति वाऽनिमित्तानीति वा युज्यते । न प्रतिसम्विदोनिमित्तादिति वाऽनिमित्तादिति वा युज्यते । न महामैत्री निमित्तेति वाऽनिमित्तेति वा युज्यते । न महाकरुणा निमित्तेति वाऽनिमित्तेति वा युज्यते । नाऽष्टादशाऽऽवेणिकबुद्ध-धर्म्मान् निमित्तादिति वाऽनिमित्तादिति वा युज्यते । न स्रोतआ-पत्तिफलं निमित्तमिति वाऽनिमित्तमिति वा युज्यते । न सकृदा-गामिफलं निमित्तमिति वाऽनिमित्तमिति वा युज्यते । नाऽना-गामिफलं निमित्तमिति वाऽनिमित्तमिति वा युज्यते । नाऽर्हत्त्वं निमित्तमिति वाऽनिमित्तमिति वा युज्यते । न प्रत्येकबोधिं

निमित्तमिति वाऽनिमित्तमिति वा युज्यते । न सर्व्वज्ञतां निमित्तेति वाऽनिमित्तेति वा युज्यते । न मार्गाऽऽकारज्ञतां निमित्तेति वाऽनिमित्तेति वा युज्यते । न सर्व्वाऽऽकारज्ञतां निमित्तेति वाऽनिमित्तेति वा युज्यते । एवञ्चरञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्तइति वक्तव्यः ।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न रूपं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते* । न वेदनां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते । न संज्ञां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते† । न संस्कारान् प्रणिहिताइति वाऽप्रणिहिता इति वा युज्यते । न विज्ञानं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते । न चक्षुः प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न श्रोत्रं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न घ्राणं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न जिह्वां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते । न कायं प्रणिहितइति वाऽप्रणिहितइति वा युज्यते । न मनः प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते । न रूपं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते । न शब्दं प्रणिहितइति वाऽप्रणिहितइति वा युज्यते । न गन्धं प्रणिहितइति वाऽप्रणिहितइति वा युज्यते। न रसं प्रणिहितइति वाऽप्रणिहितइति वा युज्यते। न स्पर्शं प्रणिहितइति वाऽप्रणिहितइति वा युज्यते। न धर्म्मान् प्रणिहिताइति

* च पुस्तके सर्व्वत्रप्रणिहितमिति पाठः ।

† प्रणिहितमिति अप्रणिहितमिति ख, ग, घ पुस्तकेषु पाठः। एवं परत्र।

वाऽप्रणिहितादिति वा युज्यते। न चक्षुर्विज्ञानं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न श्रोत्रविज्ञानं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न घ्राणविज्ञानं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न जिह्वाविज्ञानं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न कायविज्ञानं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न मनोविज्ञानं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न चक्षुः संस्पर्शं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न श्रोत्रसंस्पर्शं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न घ्राणसंस्पर्शं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न जिह्वासंस्पर्शं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न कायसंस्पर्शं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न मनः संस्पर्शं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न चक्षुः संस्पर्शप्रत्ययां वेदनां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न श्रोत्रसंस्पर्शप्रत्ययां वेदनां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न घ्राणसंस्पर्शप्रत्ययां वेदनां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न जिह्वासंस्पर्शप्रत्ययां वेदनां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न कायसंस्पर्शप्रत्ययां वेदनां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न मनः संस्पर्शप्रत्ययां वेदनां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न पृथिवीधातुं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। नाऽब्धातुं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न तेजोधातुं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न

वायुधातुं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। नाऽऽकाशधातुं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न विज्ञानधातुं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। नाऽविद्यां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न संस्कारान् प्रणिहिताइति वाऽप्रणिहिताइति वा युज्यते। न विज्ञानं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न नामरूपं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न षडायतनं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न स्पर्शं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न वेदनाप्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न तृष्णाप्रणिहितेति वाऽप्रणिहितेति वा युज्यते। नोपादान प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न भवं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न जातिं प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न जरामरणं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न दानपारमितां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न शीलपारमितां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न क्षान्तिपारमितां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न वीर्य्यपारमितां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न ध्यानपारमितां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न प्रज्ञापारमितां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। नाऽध्यात्मशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न बहिर्द्धाशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। नाऽध्यात्मबहिर्द्धाशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते।

न शून्यताशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न महाशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न परमार्थशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न संस्कृतशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। नाऽसंस्कृतशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। नाऽत्यन्तशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। नाऽनवराऽग्रशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। नाऽनवकारशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न प्रकृतिशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न सर्व्वधर्म्मशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न स्वलक्षणशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। नाऽनुपलम्भशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। नाऽभावशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न स्वभावशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। नाऽभावस्वभावशून्यतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न स्मृत्युपस्थानानि प्रणिहितानीति वाऽप्रणिहितानीति वा युज्यते। न सम्यक्प्रहाणानि प्रणिहितानीति वाऽप्रणिहितानीति वा युज्यते। नर्द्धिपादान् प्रणिहितादिति वाऽप्रणिहितादिति वा युज्यते। नेन्द्रियाणि प्रणिहितानीति वाऽप्रणिहितानीति वा युज्यते। न बलानि प्रणिहितानीति 'वाऽप्रणिहितानीति वा युज्यते। न बोध्यङ्गानि प्रणिहितानीति वाऽप्रणिहितानीति वा युज्यते। न मार्गं प्रणिहितइति वाऽप्रणिहितइति वा युज्यते। नाऽऽर्य्यसत्यानि

प्रणिहितानीति वाऽप्रणिहितानीति वा युज्यते। न ध्यानानि प्रणिहितानीति वाऽप्रणिहितानीति वा युज्यते । नाऽप्रमाणानि प्रणिहितानीति वाऽप्रणिहितानीति वा युज्यते । नाऽऽरूप्यसमापत्तीः प्रणिहिताइति वाऽप्रणिहिताइति वा युज्यते । नाऽष्टौविमोक्षान् प्रणिहिताइति वाऽप्रणिहिताइति वा युज्यते । न नवाऽनुपूर्व्वविहारसमापत्तीः प्रणिहिताइति वाऽप्रणिहिताइति वा युज्यते । न शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखानि प्रणिहितानीति वाऽप्रणिहितानीति वा युज्यते । नाऽभिज्ञाः प्रणिहिताइति वाऽप्रणिहिताइति वा युज्यते । न समाधीन् प्रणिहिताइति वाऽप्रणिहिताइति वा युज्यते । न धारणीमुखानि प्रणिहितानीति वाऽप्रणिहितानीति वा युज्यते। न तथागतबलानि प्रणिहितानीति वाऽप्रणिहितानीति वा युज्यते । न वैशारद्यानि प्रणिहितानीति वाऽप्रणिहितानीति वा युज्यते । न प्रतिसम्विदः प्रणिहिताइति वाऽप्रणिहिताइति वा युज्यते। न महामैत्रीं प्रणिहितेति वाऽप्रणिहितेति वा युज्यते । न महाकरुणां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। नाऽष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् प्रणिहिताइति वाऽप्रणिहिताइति वा युज्यते । न स्रोतआपत्तिफलं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न सकृदागामिफलं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते । नाऽनागामिफलं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते । नाऽर्हत्त्वं प्रणिहितमिति वाऽप्रणिहितमिति वा युज्यते। न प्रत्येकबोधिं प्रणिहितइति वाऽप्रणिहितइति वा युज्यते । न सर्व्वज्ञतां प्रणिहितेति

वाऽप्रणिहितेति वा युज्यते। न मार्गाऽऽकारज्ञतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। न सर्व्वाऽऽकारज्ञतां प्रणिहितेति वाऽप्रणिहितेति वा युज्यते। एवमुरञ्छारद्वतीपुत्र बोधिसत्त्वो-महासत्त्वः प्रज्ञापारमितायां युक्तइति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नरूपमुत्पद्यतेइति वा निरुध्यतेइति वा युज्यते। न वेदनामुत्प-द्यतइति वा निरुध्यत इति वा युज्यते। न संज्ञामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न संस्कारान् उत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। न विज्ञानमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न चक्षुरुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न श्रोत्रमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न घ्राणमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न जिह्वामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न कायमुत्पद्यतइति वा निरुध्यत-इति वा युज्यते। न मनउत्पद्यतइति वा निरुध्यतइति वा युज्यते। न रूपमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न शब्दमुत्पद्यत-इति वा निरुध्यतइति वा युज्यते। न गन्धमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न रसमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न स्पर्शमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न धर्म्मानुत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। न चक्षुर्व्विज्ञान-मुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न श्रोत्रविज्ञान-मुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न घ्राणविज्ञान-मुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न जिह्वाविज्ञानमुत्प-

द्यतइति वा निरुध्यतइति वा युज्यते। न कायविज्ञानमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न मनोविज्ञानमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न चक्षुः संस्पर्शमुत्पद्यतइति वा निरुध्यत इति वा युज्यते। न श्रोत्रसंस्पर्शमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न घ्राणसंस्पर्शमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न जिह्वासंस्पर्शमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न कायसंस्पर्शमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न मनः संस्पर्शमुत्पद्यतइति वा निरुध्यत इति वा युज्यते। न चक्षुः संस्पर्शप्रत्ययां* वेदनामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न श्रोत्रसंस्पर्शप्रत्ययां वेदनामुत्पद्यत इति वा निरुध्यतइति वा युज्यते। न घ्राणसंस्पर्शप्रत्ययां वेदनामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न जिह्वासंस्पर्शप्रत्ययां वेदनामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न कायसंस्पर्शप्रत्ययां वेदनामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न मनः संस्पर्शप्रत्ययां वेदनामुत्पद्यतइति वा निरुध्यत इति वा युज्यते। न पृथिवीधातुमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽब्धातुमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न तेजोधातुमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न वायुधातुमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽऽकाशधातुमुत्पद्यतइति वा निरुध्यतइति, वा युज्यते। न विज्ञानधातुमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽविद्यामुत्पद्यतइति वा निरुध्यतइति

* न चक्षुः संस्पर्शजामिति ख, ग, घ, च पुस्तके पाठः। एवं परत्र।

वा युज्यते। न संस्कारानुत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। न विज्ञानमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न नामरूपमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न षडायतनमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न स्पर्शमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न वेदनामुत्पद्यत इति वा निरुध्यतइति वा युज्यते। न तृष्णामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नोपादानमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न भवमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न जातिमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न जरामरणमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न दानपारमितामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न शीलपारमितामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न चान्तिपारमितामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न वीर्य्यपारमितामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न ध्यानपारमितामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न प्रज्ञापारमितामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽध्यात्मशून्यतामुत्पद्यतइति वा निरुध्यत इति वा युज्यते। न बहिर्द्धाशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽध्यात्मवहिर्द्धाशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न शून्यताशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न महाशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न परमार्थशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न संस्कृतशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽसंस्कृतशून्यतामुत्पद्यतइति वा निरुध्यतइति

वा युज्यते। नाऽत्यन्तशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽनवराऽग्रशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽनवकारशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न प्रकृतिशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न सर्व्वधर्म्मशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न स्वलक्षणशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽनुपलम्भशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽभावशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न स्वभावशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽभावस्वभावशून्यतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। न स्मृत्युपस्थानान्युत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। न सम्यक्प्रहाणान्युत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। नर्द्धिपादानुत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। नेन्द्रियाण्युत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। न बलान्युत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। न बोध्यङ्गान्युत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। नाऽऽर्य्याऽष्टाऽङ्गमार्गमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽऽर्य्यसत्यान्युत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। न ध्यानान्युत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। नाऽप्रमाणान्युत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। नाऽऽरूप्यसमापत्तीः उत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। नाऽष्टौविमोक्षानुत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। न नवाऽनुपूर्व्वविहारसमापत्तीः उत्पद्यन्तइति वा निरुध्यन्तइति वा

युज्यते । न शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखान्युत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। नाऽभिज्ञाउत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते । न समाधीनुत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। न धारणीमुखान्युत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते । न तथागतबलान्युत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते । न वैशारद्यान्युत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते। न प्रतिसम्विदः उत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते । न महामैत्रीमुत्पद्यतइति वा निरुध्यतइति वा युज्यते । न महाकरुणामुत्पद्यतइति वा निरुध्यतइति वा युज्यते । नाऽऽवेणिकबुद्धधर्मानुत्पद्यन्तइति वा निरुध्यन्तइति वा युज्यते । न स्रोतआपत्तिफलमुत्पद्यतइति वा निरुध्यत इति वा युज्यते। न सकृदागामिफलमुत्पद्यतइति वा निरुध्यतइति वा युज्यते। नाऽनागामिफलमुत्पद्यतइति वा निरुध्यतइति वा युज्यते । नाऽर्हत्त्वमुत्पद्यतइति वा निरुध्यतइति वायुज्यते। न प्रत्येकबोधिमुत्पद्यतइति वा निरुध्यतइति वा युज्यते । न मार्गाऽऽकारज्ञतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते । न सर्व्वाऽऽकारज्ञतामुत्पद्यतइति वा निरुध्यतइति वा युज्यते। एवञ्च-रुञ्कारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्तइति वक्तव्यः ।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नरूपमतीतमिति युज्यते । न रूपमनागतमिति युज्यते । न रूपं प्रत्युत्पन्नमिति युज्यते। न वेदनामतीतेति युज्यते।- न वेदनामनागतेति युज्यते । न वेदनां प्रत्युत्पन्नेति युज्यते । न

संज्ञामतीतेति युज्यते। न संज्ञामनागतेति युज्यते। न संज्ञां प्रत्युत्पन्नेति युज्यते। न संस्कारानतीतादिति युज्यते। न संस्काराननागतादिति युज्यते। न संस्कारान् प्रत्युत्पन्नादिति युज्यते। न विज्ञानमतीतमिति युज्यते। न विज्ञानमनागतमिति युज्यते। न विज्ञानं प्रत्युत्पन्नमिति युज्यते। न चक्षुरतीतमिति युज्यते। न चक्षुरनागतमिति युज्यते। न चक्षुः प्रत्युत्पन्नमिति युज्यते। न श्रोत्रमतीतमिति युज्यते। न श्रोत्रमनागतमिति युज्यते। न श्रोत्रं प्रत्युत्पन्नमिति युज्यते। न घ्राणमतीतमिति युज्यते। न घ्राणमनागतमिति युज्यते। न घ्राणं प्रत्युत्पन्नमिति युज्यते। न जिह्वामतीतेति युज्यते। न जिह्वामनागतेति युज्यते। न जिह्वां प्रत्युत्पन्नेति युज्यते। न कायमतीतमिति युज्यते। न कायमनागतमिति युज्यते। न कायं प्रत्युत्पन्नमिति युज्यते। न मनोऽतीतमिति युज्यते। न मनोऽनागतमिति युज्यते। न मनः प्रत्युत्पन्नमिति युज्यते। न रूपमतीतमिति युज्यते। न रूपमनागतमिति युज्यते। न रूपं प्रत्युत्पन्नमिति युज्यते। न शब्दमतीतमिति युज्यते। न शब्दमनागतमिति युज्यते। न शब्दं प्रत्युत्पन्नमिति युज्यते। न गन्धमतीतमिति युज्यते। न गन्धमनागतमिति युज्यते। न गन्धं प्रत्युत्पन्नमिति युज्यते। न रसमतीतमिति युज्यते। न रसमनागतमिति युज्यते। न रसंप्रत्युत्पन्नमिति युज्यते। न स्पर्शमतीतमिति युज्यते। न स्पर्शमनागतमिति युज्यते। न स्पर्शं प्रत्युत्पन्नमिति युज्यते। न धर्मानतीतादिति युज्यते। न धर्माननागतादिति युज्यते।

न धर्म्मान् प्रत्युत्पन्नादिति युज्यते। न चक्षुर्व्विज्ञानमतीतमिति युज्यते। न चक्षुर्व्विज्ञानमनागतमिति युज्यते। न चक्षुर्व्विज्ञानं प्रत्युत्पन्नमिति युज्यते। न श्रोत्रविज्ञानमतीतमिति युज्यते। न श्रोत्रविज्ञानमनागतमिति युज्यते। न श्रोत्रविज्ञानं प्रत्युत्पन्नमिति युज्यते। न घ्राणविज्ञानमतीतमिति युज्यते। न घ्राणविज्ञानमनागतमिति युज्यते। न घ्राणविज्ञानं प्रत्युत्पन्नमिति युज्यते। न जिह्वाविज्ञानमतीतमिति युज्यते। न जिह्वाविज्ञानमनागतमिति युज्यते। न जिह्वाविज्ञानं प्रत्युत्पन्नमिति युज्यते। न कायविज्ञानमतीतमिति युज्यते। न कायविज्ञानमनागतमिति युज्यते। न कायविज्ञानं प्रत्युत्पन्नमिति युज्यते। न मनोविज्ञानमतीतमिति युज्यते। न मनोविज्ञानमनागतमिति युज्यते। न मनोविज्ञानं प्रत्युत्पन्नमिति युज्यते। न चक्षुःसंस्पर्शमतीतमिति युज्यते*। न चक्षुःसंस्पर्शमनागतमिति युज्यते। न चक्षुःसंस्पर्शं प्रत्युत्पन्नमिति युज्यते। न श्रोत्रसंस्पर्शमतीतमिति युज्यते। न श्रोत्रसंस्पर्शमनागतमिति युज्यते। न श्रोत्रसंस्पर्शं प्रत्युत्पन्नमिति युज्यते। न घ्राणसंस्पर्शमतीतमिति युज्यते। न घ्राणसंस्पर्शमनागतमिति युज्यते। न घ्राणसंस्पर्शं प्रत्युत्पन्नमिति युज्यते। न जिह्वासंस्पर्शमतीतमिति युज्यते। न जिह्वासंस्पर्शमनागतमिति युज्यते। न जिह्वासंस्पर्शं प्रत्युत्पन्नमिति युज्यते। न कायसंस्पर्शमतीतमिति युज्यते। न कायसंस्पर्शमनागतमिति युज्यते। न कायसंस्पर्शं प्रत्यु-

* संस्पर्शशब्दविशेषणानामतीतानागतप्रत्युत्पन्नशब्दानां पुंसिप्रयोगः घ-पुस्तके दृश्यते।

त्पन्नमिति युज्यते। न मनःसंस्पर्शमतीतमिति युज्यते। न मनःसंस्पर्शमनागतमिति युज्यते। न मनःसंस्पर्शं प्रत्युत्पन्नमिति युज्यते। न चक्षुःसंस्पर्शप्रत्ययां वेदनामतीतेति युज्यते। न चक्षुःसंस्पर्शप्रत्ययां वेदनामनागतेति युज्यते। न चक्षुःसंस्पर्शप्रत्ययां वेदनां प्रत्युत्पन्नेति युज्यते। न श्रोत्रसंस्पर्शप्रत्ययां वेदनामतीतेति युज्यते। न श्रोत्रसंस्पर्शप्रत्ययां वेदनामनागतेति युज्यते। न श्रोत्रसंस्पर्शप्रत्ययां वेदनां प्रत्युत्पन्नेति युज्यते। न घ्राणसंस्पर्शप्रत्ययां वेदनामतीतेति युज्यते। न घ्राणसंस्पर्शप्रत्ययां वेदनामनागतेति युज्यते। न घ्राणसंस्पर्शप्रत्ययां वेदनां प्रत्युत्पन्नेति युज्यते। न जिह्वासंस्पर्शप्रत्ययां वेदनामतीतेति युज्यते। न जिह्वासंस्पर्शप्रत्ययां वेदनामनागतेति युज्यते। न जिह्वासंस्पर्शप्रत्ययां वेदनां प्रत्युत्पन्नेति युज्यते। न कायसंस्पर्शप्रत्ययां वेदनामतीतेति युज्यते। न कायसंस्पर्शप्रत्ययां वेदनामनागतेति युज्यते। न कायसंस्पर्शप्रत्ययां वेदनां प्रत्युत्पन्नेति युज्यते। न मनःसंस्पर्शप्रत्ययां वेदनामतीतेति युज्यते। न मनःसंस्पर्शप्रत्ययां वेदनामनागतेति युज्यते। न मनःसंस्पर्शप्रत्ययां वेदनां प्रत्युत्पन्नेति युज्यते। न पृथिवीधातुमतीतइति युज्यते। न पृथिवीधातुमनागतइति युज्यते। न पृथिवीधातुं प्रत्युत्पन्नइति युज्यते। नाऽब्धातुमतीतइति युज्यते। नाऽब्धातुमनागतइति युज्यते। नाऽब्धातुं प्रत्युत्पन्नइति युज्यते। न तेजोधातुमतीतइति युज्यते। न तेजोधातुमनागतइति युज्यते। न तेजोधातुं प्रत्युत्पन्नइति युज्यते। न वायुधातुमतीतइति युज्यते। न वायुधातुमनागतइति युज्यते। न वायुधातुं प्रत्युत्पन्नइति युज्यते। नाऽऽ-

काग्रधातुमतीतदति युज्यते। नाऽऽकाग्रधातुमनागतदति युज्यते। नाऽऽकाग्रधातुं प्रत्युत्पन्नदति युज्यते। न विज्ञानधातुमतीतदति युज्यते। न विज्ञानधातुमनागतदति युज्यते। न विज्ञानधातुं प्रत्युत्पन्नदति युज्यते। नाऽविद्यामतीतेति युज्यते। नाऽविद्यामनागतेति युज्यते। नाऽविद्यां प्रत्युत्पन्नेति युज्यते। न संस्कारानतीता-दति युज्यते। न संस्काराननागतादति युज्यते। न संस्कारान् प्रत्युत्पन्नादति युज्यते। न विज्ञानमतीतमिति युज्यते। न विज्ञा-नमनागतमिति युज्यते। न विज्ञानं प्रत्युत्पन्नमिति युज्यते। न नामरूपमतीतमिति युज्यते। न नामरूपमनागतमिति युज्यते। न नामरूपं प्रत्युत्पन्नमिति युज्यते। न षडायतनमतीतमिति युज्यते। न षडायतनमनागतमिति युज्यते। न षडायतनं प्रत्युत्पन्न-मिति युज्यते। न स्पर्शमतीतमिति युज्यते। न स्पर्शमनागतमिति युज्यते। न स्पर्शं प्रत्युत्पन्नमिति युज्यते। न वेदनामतीतेति युज्यते। न वेदनामनागतेति युज्यते। न वेदनां प्रत्युत्पन्नेति युज्यते। न तृष्णामतीतेति युज्यते। न तृष्णामनागतेति युज्यते। न तृष्णां प्रत्युत्पन्नेति युज्यते। नोपादानमतीतमिति युज्यते। नोपादानमनागतमिति युज्यते। नोपादानं प्रत्युत्पन्नमिति युज्यते। न भव*मतीतमिति युज्यते। न भवमनागतमिति युज्यते। न भवं प्रत्युत्पन्नमिति युज्यते। न जातिमतीतेति युज्यते। न जातिमना-गतेति युज्यते। न जातिं प्रत्युत्पन्नेति युज्यते। न जरामरणमतीत-

* भवशब्दविशेषणानामतीतादिशब्दानां क्लीवलिङ्गे प्रयोगः पुस्तक-मध्ये दृश्यते।

मिति युज्यते। न जरामरणमनागतमिति युज्यते। न जरामरणं प्रत्युत्पन्नमिति युज्यते। न दानपारमितामतीतेति युज्यते। न दानपारमितामनागतेति युज्यते। न दानपारमितां प्रत्युत्पन्नेति युज्यते। न शीलपारमितामतीतेति युज्यते। न शीलपारमितामनागतेति युज्यते। न शीलपारमितां प्रत्युत्पन्नेति युज्यते। न क्षान्तिपारमितामतीतेति युज्यते। न क्षान्तिपारमितामनागतेति युज्यते। न क्षान्तिपारमितां प्रत्युत्पन्नेति युज्यते। न वीर्य्यपारमितामतीतेति युज्यते। न वीर्य्यपारमितामनागतेति युज्यते। न वीर्य्यपारमितां प्रत्युत्पन्नेति युज्यते। न ध्यानपारमितामतीतेति युज्यते। न ध्यानपारमितामनागतेति युज्यते। न ध्यानपारमितां प्रत्युत्पन्नेति युज्यते। न प्रज्ञापारमितामतीतेति युज्यते। न प्रज्ञापारमितामनागतेति युज्यते। न प्रज्ञापारमितां प्रत्युत्पन्नेति युज्यते। नाऽध्यात्मशून्यतामतीतेति युज्यते। नाऽध्यात्मशून्यतामनागतेति युज्यते। नाऽध्यात्मशून्यतां प्रत्युत्पन्नेति युज्यते। न वहिर्द्धाशून्यतामतीतेति युज्यते। न वहिर्द्धाशून्यतामनागतेति युज्यते। न वहिर्द्धाशून्यतां प्रत्युत्पन्नेति युज्यते। नाऽध्यात्मवहिर्द्धाशून्यतामतीतेति युज्यते। नाऽध्यात्मवहिर्द्धाशून्यतामनागतेति युज्यते। नाऽध्यात्मवहिर्द्धाशून्यतां प्रत्युत्पन्नेति युज्यते। न शून्यताशून्यतामतीतेति युज्यते। न शून्यताशून्यतामनागतेति युज्यते। न शून्यताशून्यतां प्रत्युत्पन्नेति युज्यते। न महाशून्यतामतीतेति युज्यते न महाशून्यतामनागतेति युज्यते। न महाशून्यतां प्रत्युत्पन्नेति युज्यते। न परमार्थशून्यतामतीतेति युज्यते। न परमार्थशून्य-

तामनागतेति युज्यते । न परमार्थशून्यतां प्रत्युत्पन्नेति युज्यते । न संस्कृतशून्यतामतीतेति युज्यते । न संस्कृतशून्यतामनागतेति युज्यते । न संस्कृतशून्यतां प्रत्युत्पन्नेति युज्यते । नाऽसंस्कृतशून्यतामतीतेति युज्यते । नाऽसंस्कृतशून्यतामनागतेति युज्यते । नाऽसंस्कृतशून्यतां प्रत्युत्पन्नेति युज्यते । नाऽत्यन्तशून्यतामतीतेति युज्यते । नाऽत्यन्तशून्यतामनागतेति युज्यते । नाऽत्यन्तशून्यतां प्रत्युत्पन्नेति युज्यते । नाऽनवराऽग्रशून्यतामतीतेति युज्यते । नाऽनवराऽग्रशून्यतामनागतेति युज्यते । नाऽनवराऽग्रशून्यतां प्रत्युत्पन्नेति युज्यते । नाऽनवकारशून्यतामतीतेति युज्यते । नाऽनवकारशून्यतामनागतेति युज्यते । नाऽनवकारशून्यतां प्रत्युत्पन्नेति युज्यते । न प्रकृतिशून्यतामतीतेति युज्यते । न प्रकृतिशून्यतामनागतेति युज्यते । न प्रकृतिशून्यतां प्रत्युत्पन्नेति युज्यते । न सर्व्वधर्म्मशून्यतामतीतेति युज्यते । न सर्व्वधर्म्मशून्यतामनागतेति युज्यते । न सर्व्वधर्म्मशून्यतां प्रत्युत्पन्नेति युज्यते । न स्वलक्षणशून्यतामतीतेति युज्यते । न स्वलक्षणशून्यतामनागतेति युज्यते । न स्वलक्षणशून्यतां प्रत्युत्पन्नेति युज्यते । नाऽनुपलम्भशून्यतामतीतेति युज्यते । नाऽनुपलम्भशून्यतामनागतेति युज्यते । नाऽनुपलम्भशून्यतां प्रत्युत्पन्नेति युज्यते । नाऽभावशून्यतामतीतेति युज्यते । नाऽभावशून्यतामनागतेति युज्यते । नाऽभावशून्यतां प्रत्युत्पन्नेति युज्यते । न स्वभावशून्यतामतीतेति युज्यते । न स्वभावशून्यतामनागतेति युज्यते । न स्वभावशून्यतां प्रत्युत्पन्नेति युज्यते । नाऽभावस्वभावशून्यतामतीतेति युज्यते । नाऽभावस्वभावशून्यतामनागतेति युज्यते । नाऽभावस्वभावशून्यतां प्रत्युत्पन्नेति युज्यते । न

स्मृत्युपस्थानान्यतीतानीति युज्यते। न स्मृत्युपस्थानान्यनागतानीति युज्यते। न स्मृत्युपस्थानानि प्रत्युत्पन्नानीति युज्यते। न सम्यक्प्रहाणान्यतीतानीति युज्यते। न सम्यक्प्रहाणान्यनागतानीति युज्यते। न सम्यक्प्रहाणानि प्रत्युत्पन्नानीति युज्यते। नर्द्धिपादामतीताइति युज्यते। नर्द्धिपादाननागता इति युज्यते। नर्द्धिपादान् प्रत्युत्पन्ना इति युज्यते। नेन्द्रियाण्यतीतानीति युज्यते। नेन्द्रियाण्यनागतानीति युज्यते। नेन्द्रियाणि प्रत्युत्पन्नानीति युज्यते। न बलान्यतीतानीति युज्यते। न बलान्यनागतानीति युज्यते। न बलानि प्रत्युत्पन्नानीति युज्यते। न बोध्यङ्गान्यतीतानीति युज्यते। न बोध्यङ्गान्यनागतानीति युज्यते। न बोध्यङ्गानि प्रत्युत्पन्नानीति युज्यते। नाऽऽर्यांऽष्टाऽङ्गमार्गमतीतइति युज्यते। नाऽऽर्यांऽष्टाऽङ्गमार्गमनागतइति युज्यते। नाऽर्यांऽष्टाऽऽङ्गमार्गं प्रत्युत्पन्नइति युज्यते। नाऽऽर्य्यसत्यान्यतीतानीति युज्यते। नाऽऽर्य्यसत्यान्यनागतानीति युज्यते। नाऽर्य्यसत्यानि प्रत्युत्पन्नानीति युज्यते। न ध्यानान्यतीतानीति युज्यते। न ध्यानान्यनागतानीति युज्यते। न ध्यानानि प्रत्युत्पन्नानीति युज्यते। नाऽप्रमाणान्यतीतानीति युज्यते। नाऽप्रमाणान्यनागतानीति युज्यते। नाऽप्रमाणानि प्रत्युत्पन्नानीति युज्यते। नाऽऽरूप्यसमापत्तीरतीताइति युज्यते। नाऽऽरूप्यसमापत्तीरनागताइति युज्यते। नाऽऽरूप्यसमापत्तीः प्रत्युत्पन्नाइति युज्यते। नाऽष्टौविमोचानतीताइति युज्यते। नाऽष्टौविमोचाननागताइति युज्यते। नाऽष्टौविमोचान् प्रत्युत्पन्नाइति युज्यते। न नवाऽनुपूर्व्वविहारसमापत्तीरतीताइति युज्यते। न

नवाऽनुपूर्व्वविहारसमापत्तीरनागतादिति युज्यते । न नवाऽनुपूर्व्वविहारसमापत्तीः प्रत्युत्पन्नादिति युज्यते । न शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखान्यतीतानीति युज्यते । न शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखान्यनागतानीति युज्यते । न शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखानि प्रत्युत्पन्नानीति युज्यते । नाऽभिज्ञा अतीतादिति युज्यते । नाऽभिज्ञाअनागतादिति युज्यते । नाऽभिज्ञाः प्रत्युत्पन्नादिति युज्यते । न समाधीनतीतादिति युज्यते । न समाधीननागतादिति युज्यते । न समाधीन् प्रत्युत्पन्नादिति युज्यते । न धारणीमुखान्यतीतानीति युज्यते । न धारणीमुखान्यनागतानीति युज्यते । न धारणीमुखानि प्रत्युत्पन्नानीति युज्यते । न दश तथागतबलान्यतीतानीति युज्यते । न दश तथागतबलान्यनागतानीति युज्यते । न दश तथागतबलानि प्रत्युत्पन्नानीति युज्यते । न चत्वारि वैशारद्यान्यतीतानीति युज्यते । न चत्वारि वैशारद्यान्यनागतानीति युज्यते। न चत्वारि वैशारद्यानि प्रत्युत्पन्नानीति युज्यते न चतस्रः प्रतिसंविदोऽतीतादिति युज्यते । न चतस्रः प्रतिसंविदोऽनागतादिति युज्यते। न चतस्रः प्रतिसंविदः प्रत्युत्पन्नादिति युज्यते। न महामैत्रीमतीतेति युज्यते । न महामैत्रीमनागतेति युज्यते । न महामैत्रीं प्रत्युत्पन्नेति युज्यते । न महाकरुणामतीतेति युज्यते । न महाकरुणामनागतेति युज्यते। न महाकरुणां प्रत्युत्पन्नेति युज्यते। नाऽष्टादशाऽऽवेणिकबुद्धधर्मानतीता इति युज्यते । नाऽष्टादशाऽऽवेणिकबुद्धधर्माननागतादिति युज्यते । नाऽष्टादशाऽऽवेणिकबुद्धधर्मान् प्रत्युत्पन्नादिति युज्यते । न स्रोतआपत्तिफलमतीतमिति

युज्यते। न स्रोतआपत्तिफलमनागतमिति युज्यते। न स्रोतआपत्तिफलं प्रत्युत्पन्नमिति युज्यते। न सकृदागामिफलमतीतमिति युज्यते। न सकृदागामिफलमनागतमिति युज्यते। न सकृदागामिफलं प्रत्युत्पन्नमिति युज्यते। नाऽनागामिफलमतीतमिति युज्यते। नाऽनागामिफलमनागतमिति युज्यते। नाऽनागामिफलं प्रत्युत्पन्नमिति युज्यते। नाऽर्हत्त्वमतीतमिति युज्यते। नाऽर्हत्त्वमनागतमिति युज्यते।. नाऽर्हत्त्वं प्रत्युत्पन्नमिति युज्यते। न प्रत्येकबोधिमतीतेति युज्यते। न प्रत्येकबोधिमनागतेति युज्यते। न प्रत्येकबोधिं प्रत्युत्पन्नेति युज्यते। न मार्गाऽऽकारज्ञतामतीतेति युज्यते। न मार्गाऽऽकारज्ञतामनागतेति युज्यते। न मार्गाऽऽकारज्ञतां प्रत्युत्पन्नेति युज्यते। न सर्व्वाऽऽकारज्ञतामतीतेति युज्यते। न सर्व्वाऽऽकारज्ञतामनागतेति युज्यते। न सर्व्वाऽऽकारज्ञतां प्रत्युत्पन्नेति युज्यते। एवच्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्तः इति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न रूपं सारमिति न दुर्बलमिति युज्यते। न वेदना सारेति न दुर्बलेति युज्यते। न संज्ञा सारेति न दुर्बलेति युज्यते। न संस्कारान्सारादिति न दुर्बलादिति युज्यते। न विज्ञानं सारमिति न दुर्बलमिति युज्यते। न चक्षुः सारमिति न दुर्बलमिति युज्यते। न श्रोत्रं सारमिति न दुर्बलमिति युज्यते। न घ्राणं सारमिति न दुर्बलमिति युज्यते। न जिह्वां सारेति न दुर्बलेति युज्यते। न कायं सारमिति न दुर्बलमिति युज्यते। न मनः

सारमिति न दुर्ब्बलमिति युज्यते। न रूपं सारमिति न दुर्ब्बल-मिति युज्यते। न शब्दं सारमिति न दुर्ब्बलमिति युज्यते। न गन्धं सारमिति न दुर्ब्बलमिति युज्यते। न रसं सारमिति न दुर्ब्बलमिति युज्यते। न स्पर्शं सारमिति न दुर्ब्बलमिति युज्यते। न धर्म्मान् सारादति न दुर्ब्बलादति युज्यते। न चक्षुर्व्विज्ञानं सार-मिति न दुर्ब्बलमिति युज्यते। न श्रोत्रविज्ञानं सारमिति न दुर्ब्ब-लमिति युज्यते। न घ्राणविज्ञानं सारमिति न दुर्ब्बलमिति युज्यते। न जिह्वाविज्ञानं सारमिति न दुर्ब्बलमिति युज्यते। न काय-विज्ञानं सारमिति न दुर्ब्बलमिति युज्यते। न मनोविज्ञानं सारमिति न दुर्ब्बलमिति युज्यते। न चक्षुःसंस्पर्शः* सारमिति न दुर्ब्बलमिति वा युज्यते। न श्रोत्रसंस्पर्शः सारमिति न दुर्ब्बलमिति युज्यते। न घ्राणसंस्पर्शः सारमिति वा न दुर्ब्बलमिति वा युज्यते। न जिह्वासंस्पर्शः सारमिति न दुर्ब्बलमिति युज्यते। न कायसंस्पर्शः सारमिति न दुर्ब्बलमिति युज्यते। न मनःसंस्पर्शः सारमिति न दुर्ब्बलमिति युज्यते। न चक्षुःसंस्पर्शप्रत्यया वेदना सारेति न दुर्ब्बलेति युज्यते। न श्रोत्रसंस्पर्शप्रत्यया वेदना सारेति न दुर्ब्बलेति युज्यते। न घ्राणसंस्पर्शप्रत्यया वेदना सारेति न दुर्ब्बलेति युज्यते। न

* कपुस्तके, ख, ग, घ पुस्तकेषु च संस्पर्शविशेषणयोः सारदुर्ब्बल-शब्दयोः पुंसिप्रयोगदृश्यते। रूपवेदनादिशब्दानां द्वितीयान्तत्वं पूर्व्वं निर्दिष्टं संस्पर्शादिशब्दानाञ्चात्र प्रथमान्तत्वं। दृग् केनाभिप्रायेणेदृग् वैषम्यं ग्रन्थकृताकृतं नास्माकमनुभवपथमधिरोहति। अथवा लेखकदोष-प्रसिद्धिमागतः।

जिह्वासंस्पर्शप्रत्यया वेदना सारेति न दुर्व्वलेति युज्यते । न कायसंस्पर्शप्रत्यया वेदना सारेति न दुर्व्वलेति युज्यते। न मनःसंस्पर्शप्रत्यया वेदना सारेति न दुर्व्वलेति युज्यते । न पृथिवीधातुः सारइति न दुर्व्वलइति युज्यते। नाऽब्धातुः सारइति न दुर्व्वलइति युज्यते। न तेजोधातुः सारइति न दुर्व्वलइति युज्यते। न वायुधातुः सारइति न दुर्व्वलइति युज्यते। नाऽऽकाशधातुः सारइति न दुर्व्वलइति युज्यते । न विज्ञानधातुः सारइति न दुर्व्वलइति युज्यते। नाऽविद्यासारेति न दुर्व्वलेति युज्यते। न संस्कारान् सारादति न दुर्व्वलादति युज्यते । न विज्ञानं सारमिति न दुर्व्वलमिति युज्यते। न नामरूपं सारमिति न दुर्व्वलमिति युज्यते। न षडायतनं सारमिति न दुर्व्वलमिति युज्यते । न स्पर्शः सारइति न दुर्व्वलइति युज्यते। न वेदनासारेति न दुर्व्वलेति युज्यते। न तृष्णासारेति न दुर्व्वलेति युज्यते। नोपादानं सारमिति न दुर्व्वलमिति युज्यते। न भवं सारमिति न दुर्व्वलमिति युज्यते। न जातिं सारेति न दुर्व्वलेति युज्यते। न जरामरणं सारमिति न दुर्व्वलमिति युज्यते। न दानपारमितासारेति न दुर्व्वलेति युज्यते। न शीलपारमिता सारेति न दुर्व्वलेति युज्यते। न क्षान्तिपारमिता सारेति न दुर्व्वलेति युज्यते । न वीर्य्यपारमिता सारेति न दुर्व्वलेति युज्यते । न ध्यानपारमिता सारेति न दुर्व्वलेति युज्यते। न प्रज्ञापारमिता सारेति न दुर्व्वलेति युज्यते। नाऽध्यात्मशून्यता सारेति न दुर्व्वलेति युज्यते। न वहिर्द्धाशून्यता सारेति न दुर्व्वलेति युज्यते। नाऽध्यात्मवहिर्द्धाशून्यता सारेति न दुर्व्वलेति युज्यते। न शून्यताशून्यता सारेति

न दुर्ब्बलेति युज्यते। न महाशून्यता सारेति न दुर्ब्बलेति युज्यते। न परमार्थशून्यता सारेति न दुर्ब्बलेति युज्यते। न संस्कृतशून्यता सारेति न दुर्ब्बलेति युज्यते। नाऽसंस्कृतशून्यता सारेति न दुर्ब्बलेति युज्यते। नाऽत्यन्तशून्यता सारेति न दुर्ब्बलेति युज्यते। नाऽनवराऽग्रशून्यता सारेति न दुर्ब्बलेति युज्यते। नाऽनवकारशून्यता सारेति न दुर्ब्बलेति युज्यते। न प्रकृतिशून्यता सारेति न दुर्ब्बलेति युज्यते। न सर्व्वधर्मशून्यताधारेति न दुर्ब्बलेति युज्यते। न स्वलक्षणशून्यता सारेति न दुर्ब्बलेति युज्यते। नाऽनुपलम्भशून्यता सारेति न दुर्ब्बलेति युज्यते। नाऽभावशून्यता सारेति न दुर्ब्बलेति युज्यते। न स्वभावशून्यता सारेति न दुर्ब्बलेति युज्यते। नाऽभावस्वभावशून्यता सारेति न दुर्ब्बलेति युज्यते। न स्मृत्युपस्थानानि साराणीति न दुर्ब्बलानीति युज्यते। न सम्यक्प्रहाणानि साराणीति न दुर्ब्बलानीति युज्यते। नर्द्धिपादाः सारादति न दुर्ब्बलादति युज्यते। नेन्द्रियाणिसाराणीति न दुर्ब्बलानीति युज्यते। न बलानि सारानीति न दुर्ब्बलानीति युज्यते। न बोध्यङ्गानिसाराणीति न दुर्ब्बलानीति युज्यते। नार्य्योऽऽष्टाऽङ्गमार्गः सारदति न दुर्ब्बलदति युज्यते। नाऽर्य्यसत्यानि साराणीति न दुर्ब्बलानीति युज्यते। न ध्यानानि साराणीति न दुर्ब्बलानीति युज्यते। नाऽप्रमाणानि साराणीति न दुर्ब्बलानीति युज्यते। नाऽऽरूप्यसमापत्तीः सारादति न दुर्ब्बलादति युज्यते। नाऽष्टौविमोक्षाः सारादति न दुर्ब्बलादति युज्यते। न नवाऽनुपूर्व्वविहारसमापत्तीः सारादति न दुर्ब्बलादति युज्यते। न शून्यतासारादति न दुर्ब्बलेति युज्यते। न समाधयः सारादति न

दुर्ब्बलादृति युज्यते। नाऽऽनिमित्तं सारमिति न दुर्ब्बलमिति युज्यते। नाऽप्रणिहितं सारमिति न दुर्ब्बलमिति युज्यते। नाऽभिज्ञाः सारादृति न दुर्ब्बलादृति युज्यते। न धारणीमुखानि साराणीति न दुर्ब्बलानीति युज्यते। न दृशतथागतबलानि साराणीति न दुर्ब्बलानीति युज्यते। न चत्वारिवैशारद्यानि साराणीति न दुर्ब्बलानीति युज्यते। न चतस्रः प्रतिसम्विदः सारादृति न दुर्ब्बलादृति युज्यते। न महामैत्री सारेति न दुर्ब्बलेति युज्यते। न महाकरुणा सारेति न दुर्ब्बलेति युज्यते। नाऽष्टादशाऽऽवेणिकबुद्धधर्म्माः सारादृति न दुर्ब्बलादृति युज्यते। न स्रोतआपत्तिफलं सारमिति न दुर्ब्बलमिति युज्यते। न सकृदागामिफलं सारमिति न दुर्ब्बलमिति युज्यते। नाऽनागामिफलं सारमिति न दुर्ब्बलमिति युज्यते। नाऽर्हत्वं सारमिति न दुर्ब्बलमिति युज्यते। न प्रत्येकबोधिं सारेति न दुर्ब्बलेति युज्यते। न मार्गाऽऽकारज्ञता सारेति न दुर्ब्बलेति युज्यते। न सर्व्वाऽऽकारज्ञता सारेति न दुर्ब्बलेति युज्यते। एवम्वरच्छारदतीपुत्त्रबोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्तदृति वक्तव्यः।

पुनरपरं शारद्वतीपुत्त्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्, न रूपमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न वेदनाऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न संज्ञाऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न संस्कारा* अस्तीति

---

* न संस्कारा अस्तीति न नास्तीति पाठः पुस्तकपञ्चके दृश्यते। सन्तीति न सन्तीति पाठोयुक्तः।

न नाऽस्तीति युज्यते न वियुज्यते। न विज्ञानमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न चक्षुरस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न श्रोत्रमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न घ्राणमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न जिह्वामस्तीति* नाऽस्तीति युज्यते न वियुज्यते। न कायमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न मनोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न रूपमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न शब्दोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न गन्धोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न रसोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न स्पर्शोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न धर्म्मोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न चक्षुर्विज्ञानमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न श्रोत्रविज्ञानमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न घ्राणविज्ञानमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न जिह्वाविज्ञानमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न कायविज्ञानमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न मनोविज्ञानमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न चक्षुः संस्पर्शोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न श्रोत्रसंस्पर्शोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न घ्राणसंस्पर्शोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न

* एष पाठः पुस्तकपञ्चके दृश्यते। जिह्वेति पाठोयुक्तः प्रतिभाति।

न जिह्वासंस्पर्शोऽस्तीति न नास्तीति युज्यते न वियुज्यते। न कायसंस्पर्शोऽस्तीति न नास्तीति युज्यते न वियुज्यते। न मनःसंस्पर्शोऽस्तीति न नास्तीति युज्यते न वियुज्यते। न चक्षुःसंस्पर्शप्रत्यया वेदनाऽस्तीति न नास्तीति युज्यते न वियुज्यते। न श्रोत्रसंस्पर्शप्रत्यया वेदनाऽस्तीति न नास्तीति युज्यते न वियुज्यते। न घ्राणसंस्पर्शप्रत्यया वेदनाऽस्तीति न नास्तीति युज्यते न वियुज्यते। न जिह्वासंस्पर्शप्रत्यया वेदनाऽस्तीति न नास्तीति युज्यते न वियुज्यते। न कायसंस्पर्शप्रत्यया वेदनाऽस्तीति न नास्तीति युज्यते न वियुज्यते। न मनः संस्पर्शप्रत्यया वेदनाऽस्तीति न नास्तीति युज्यते न वियुज्यते। न पृथिवीधातुरस्तीति न नास्तीति युज्यते न वियुज्यते। नाऽब्धातुरस्तीति न नास्तीति युज्यते न वियुज्यते। न तेजोधातुरस्तीति न नास्तीति युज्यते न वियुज्यते। न वायुधातुरस्तीति न नास्तीति युज्यते न वियुज्यते। नाऽऽकाशधातुरस्तीति न नास्तीति युज्यते न वियुज्यते। न विज्ञानधातुरस्तीति न नास्तीति युज्यते न वियुज्यते। नाऽविद्याऽस्तीति न नास्तीति युज्यते न वियुज्यते। न संस्कारा अस्तीति न नास्तीति युज्यते न वियुज्यते। न विज्ञानमस्तीति न नास्तीति युज्यते न वियुज्यते। न नामरूपमस्तीति न नास्तीति युज्यते न वियुज्यते। न षडायतनमस्तीति न नास्तीति युज्यते न वियुज्यते। न स्पर्शोऽस्तीति न नास्तीति युज्यते न वियुज्यते। न वेदनाऽस्तीति न नास्तीति युज्यते न वियुज्यते। न तृष्णाऽस्तीति न नास्तीति युज्यते न वियुज्यते। नोपादानमस्तीति

न नास्तीति युज्यते न वियुज्यते । न भवोऽस्तीति न नास्तीति युज्यते न वियुज्यते । न जातिरस्तीति न नास्तीति युज्यते न वियुज्यते । न जरामरणमस्तीति न नास्तीति युज्यते न वियुज्यते । न दानपारमिताऽस्तीति न नास्तीति युज्यते न वियुज्यते । न शीलपारमिताऽस्तीति न नास्तीति युज्यते न वियुज्यते । न क्षान्तिपारमिताऽस्तीति न नास्तीति युज्यते न वियुज्यते । न वीर्य्यपारमिताऽस्तीति न नास्तीति युज्यते न वियुज्यते । न ध्यानपारमिताऽस्तीति न नास्तीति युज्यते न वियुज्यते । न प्रज्ञापारमिताऽस्तीति न नास्तीति युज्यते न वियुज्यते । नाऽध्यात्मशून्यताऽस्तीति न नास्तीति युज्यते न वियुज्यते । न वहिर्द्धाशून्यताऽस्तीति न नास्तीति युज्यते न वियुज्यते । नाऽध्यात्मवहिर्द्धाशून्यताऽस्तीति न नास्तीति युज्यते न वियुज्यते । न शून्यताशून्यताऽस्तीति न नास्तीति युज्यते न वियुज्यते । न महाशून्यताऽस्तीति न नास्तीति युज्यते न वियुज्यते । न परमार्थशून्यताऽस्तीति न नास्तीति युज्यते न वियुज्यते । न संस्कृतशून्यताऽस्तीति न नास्तीति युज्यते न वियुज्यते । नाऽसंस्कृतशून्यताऽस्तीति न नास्तीति युज्यते न वियुज्यते । नाऽत्यन्तशून्यताऽस्तीति न नास्तीति युज्यते न वियुज्यते । नाऽनवराग्रशून्यताऽस्तीति न नास्तीति युज्यते न वियुज्यते । नाऽनवकारशून्यताऽस्तीति न नास्तीति युज्यते न वियुज्यते । न प्रकृतिशून्यताऽस्तीति न नास्तीति युज्यते न वियुज्यते । न सर्व्वधर्मशून्यताऽस्तीति न नास्तीति युज्यते न

वियुज्यते। न स्वलक्षणशून्यताऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नाऽनुपलम्भशून्यताऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नाऽभावशून्यताऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न स्वभावशून्यताऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नाऽभावस्वभावशून्यताऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न स्मृत्युपस्थानान्यस्तीति* न नाऽस्तीति युज्यते न वियुज्यते। न सम्यक्प्रहाणान्यस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नर्द्धिपादा अस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नेन्द्रियाण्यस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न बलान्यस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न बोध्यङ्गान्यस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नाऽऽर्याऽष्टाऽङ्गमार्गोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नाऽऽर्यासत्यान्यस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न ध्यानान्यस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नाऽप्रमाणान्यस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नाऽऽरूप्यसमापत्तयोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नाऽष्टौ विमोक्षा अस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न नवाऽनुपूर्वविहारसमापत्तयोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखान्यस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नाऽभिज्ञाः अस्तीति न नाऽस्तीति युज्यते न

---

* अस्ति सत्त्वे रुषोक्तावुं इत्यमरोक्तेर्विद्यमानतावाचिनाऽस्तीत्यव्ययेनोपपादनीयानि बहुवचनान्ते पदे सामानाधिकरण्यानि। क्रियापदत्वे असङ्गतिरेव स्यादस्तीत्यस्य।

वियुज्यते। न समाधयोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न धारणीमुखान्यस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न दशतथागतबलान्यस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न चत्वारिवैशारद्यान्यस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न चतस्रः प्रतिसम्विदोऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न महामैत्र्यस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न महाकरुणाऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नाऽष्टादशाऽऽवेणिकबुद्धधर्मा अस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न स्रोतआपत्तिफलमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न सकृदागामिफलमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नाऽनागामिफलमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। नाऽर्हत्त्वमस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न प्रत्येकबोधिरस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न मार्गाऽऽकारज्ञताऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते। न सर्व्वाऽऽकारज्ञताऽस्तीति न नाऽस्तीति युज्यते न वियुज्यते(१)। एवञ्चरञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न दानपारमितायाः कृते प्रज्ञापारमितायां चरति। न शील पारमितायाः कृते प्रज्ञापारमितायां चरति। न क्षान्तिपारमितायाः

(१) स प्रज्ञापारमितायां चरतीति नोपैति न चरतीति नोपैति चरति न चरतीति नोपैति नैव चरति न चरतीति नोपैति। एष पाठः ख, ग, घ पुस्तकेऽधिकः। प्रक्रान्ताऽननुरूपतया प्रामादिकः प्रतिभाति।

कृते प्रज्ञापारमितायां चरति। न वीर्यपारमितायाः कृते प्रज्ञापारमितायां चरति। न ध्यानपारमितायाः कृते प्रज्ञापारमितायां चरति। न प्रज्ञापारमितायाः कृते प्रज्ञापारमितायां चरति। नाऽध्यात्मशून्यतायाः कृते प्रज्ञापारमितायां चरति। न बहिर्द्धाशून्यतायाः कृते प्रज्ञापारमितायां चरति। नाऽध्यात्मबहिर्द्धाशून्यताया. कृते प्रज्ञापारमितायां चरति। न शून्यताशून्यतायाः कृते प्रज्ञापारमितायां चरति। न महाशून्यतायाः कृते प्रज्ञापारमितायां चरति। न परमार्थशून्यतायाः कृते प्रज्ञापारमितायां चरति। न संस्कृतशून्यतायाः कृते प्रज्ञापारमितायां चरति। नाऽसंस्कृतशून्यतायां कृते प्रज्ञापारमितायां चरति। नाऽत्यन्तशून्यतायाः कृते प्रज्ञापारमितायां चरति। नाऽनवराग्रशून्यतायाः कृते प्रज्ञापारमितायां चरति। नाऽनवकारशून्यतायाः कृते प्रज्ञापारमितायां चरति। न प्रकृतिशून्यतायाः कृते प्रज्ञापारमितायां चरति। न सर्व्वधर्म्मशून्यतायाः कृते प्रज्ञापारमितायां चरति। न स्वलक्षणशून्यतायाः कृते प्रज्ञापारमितायां चरति। नाऽनुपलम्भशून्यतायाः कृते प्रज्ञापारमितायां चरति। नाऽभावशून्यतायाः कृते प्रज्ञापारमितायां चरति। न स्वभावशून्यतायाः कृते प्रज्ञापारमितायां चरति। नाऽभावस्वभावशून्यतायाः कृते प्रज्ञापारमितायां चरति। नाऽवैवर्त्यभूमेः कृते प्रज्ञापारमितायां चरति। न सत्त्वपरिपाकहेतोः प्रज्ञापारमितायां चरति। न बुद्धक्षेत्रपरिशोधनार्थं प्रज्ञापारमितायां चरति। न स्मृत्युपस्थानानां कृते प्रज्ञापारमितायां चरति। न सम्यक्प्रहाणानां कृते प्रज्ञापारमितायां चरति। नर्द्धिपादानां

कृते प्रज्ञापारमितायां चरति। नेन्द्रियाणां कृते प्रज्ञापारमितायां चरति। न बलानां कृते प्रज्ञापारमितायां चरति। न बोध्यङ्गानां कृते प्रज्ञापारमितायां चरति। नाऽऽर्याऽष्टाऽङ्गमार्गस्य कृते प्रज्ञापारमितायां चरति। नाऽऽर्यसत्यानां कृते प्रज्ञापारमितायां चरति। न ध्यानानां कृते प्रज्ञापारमितायां चरति। नाऽप्रमाणानां कृते प्रज्ञापारमितायां चरति। नाऽऽरूप्यसमापत्तीनां कृते प्रज्ञापारमितायां चरति। नाऽष्टानां विमोक्षाणां कृते प्रज्ञापारमितायां चरति। न नवाऽऽनुपूर्व्वविहारसमापत्तीनां कृते प्रज्ञापारमितायां चरति। न शून्यतायाः कृते प्रज्ञापारमितायां चरति। नाऽऽनिमित्तस्य कृते प्रज्ञापारमितायां चरति। नाऽप्रणिहितस्य कृते प्रज्ञापारमितायां चरति। नाऽभिज्ञानां कृते प्रज्ञापारमितायां चरति। न समाधीनां कृते प्रज्ञापारमितायां चरति। न धारणीमुखानां कृते प्रज्ञापारमितायां चरति। न दशानां तथागतबलानां कृते प्रज्ञापारमितायां चरति। न चतुर्णां वैशारद्यानां कृते प्रज्ञापारमितायां चरति। न चतसृणां प्रतिसम्विदां कृते प्रज्ञापारमितायां चरति। न महामैत्र्याः कृते प्रज्ञापारमितायां चरति। न महाकरुणायाः कृते प्रज्ञापारमितायां चरति। नाऽष्टादशानामावेणिकानां बुद्धधर्म्माणां कृते प्रज्ञापारमितायां चरति। न तथतायाः कृते प्रज्ञापारमितायां चरति। न धर्म्मधातोः कृते प्रज्ञापारमितायां चरति। न भूतकोटेः कृते प्रज्ञापारमितायां चरति।

तत्कस्य हेतोर्न हि बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां

चरति* । कस्यचिद्धर्मस्य प्रभेदं वा नानाकरणं वा विशेषं वा समनुपश्यति । एवञ्चरञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः ।

न स दिव्यस्य चक्षुषः कृते प्रज्ञापारमितायां चरति । न दिव्यस्य श्रोत्रस्य कृते प्रज्ञापारमितायां चरति । न परचित्तज्ञानस्य कृते प्रज्ञापारमितायां चरति । न पूर्व्वनिवासाऽनुस्मृतेः कृते प्रज्ञापारमितायां चरति । नर्द्धिविधेः कृते प्रज्ञापारमितायां चरति । नाऽऽश्रवक्षयज्ञानस्य कृते प्रज्ञापारमितायां चरति ।

तत्कस्य हेतोः । तथाहि प्रज्ञापारमितायां चरन्प्रज्ञापारमितामेव समनुपश्यति प्रागेव बोधिसत्त्वः कुत एव सर्व्वाकारं सर्व्वाऽभिज्ञा उपलप्स्यते । एवञ्चरञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः ।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो नैवं भवत्यहमृद्धिपादेषु स्थित्वा पूर्व्वस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये बुद्धाभगवन्तस्तान् सर्व्वान् सत्करिष्यामि गुरु करिष्यामि मानयिष्यामि पूजयिष्यामि । नैवं भवत्यहमृद्धिपादेषु स्थित्वा दक्षिणस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये बुद्धाभगवन्तस्तान् सर्व्वान् सत्करिष्यामि गुरु करिष्यामि मानयिष्यामि पूजयिष्यामि । नैवं भवत्यहमृद्धिपादेषु स्थित्वा पश्चिमायांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये बुद्धाभगवन्तस्तान् सर्व्वान् सत्करिष्यामि गुरु करिष्यामि मानयि-

---

* चरतीति पाठोयुक्तः ।

ष्यामि पूजयिष्यामि । नैवं भवत्यहमृद्धिपादेषु स्थित्वा उत्तरस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये बुद्धाभगवन्तस्तान् सर्व्वान् सत्करिष्यामि गुरू करिष्यामि मानयिष्यामि पूजयिष्यामि । नैवं भवत्यहमृद्धिपादेषु स्थित्वा उत्तरपूर्व्वस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये बुद्धाभगवन्तस्तान् सर्व्वान् सत्करिष्यामि गुरू करिष्यामि मानयिष्यामि पूजयिष्यामि । नैवं भवत्यहमृद्धिपादेषु स्थित्वा पूर्व्वदक्षिणस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये बुद्धाभगवन्तस्तान् सर्व्वान् सत्करिष्यामि गुरूकरिष्यामि मानयिष्यामि पूजयिष्यामि । नैवं भवत्यहमृद्धिपादेषु स्थित्वा दक्षिणपश्चिमायांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये बुद्धाभगवन्तस्तान् सर्व्वान् सत्करिष्यामि गुरूकरिष्यामि मानयिष्यामि पूजयिष्यामि । नैवं भवत्यहमृद्धिपादेषु स्थित्वा पश्चिमोत्तरस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये बुद्धाभगवन्तस्तान् सर्व्वान् सत्करिष्यामि गुरूकरिष्यामि मानयिष्यामि पूजयिष्यामि । नैवं भवत्यहमृद्धिपादेषु स्थित्वा उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये बुद्धाभगवन्तस्तान् सर्व्वान् सत्करिष्यामि गुरूकरिष्यामि मानयिष्यामि पूजयिष्यामि । नैवं भवत्यहमृद्धिपादेषु स्थित्वाऽधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये बुद्धाभगवन्तस्तान् सर्व्वान् सत्करिष्यामि गुरूकरिष्यामि मानयिष्यामि पूजयिष्यामि ।

न चाऽस्यैवं भवति यत्ते बुद्धाभगवन्तो भाषन्ते तत्सर्व्वं दिव्येन श्रोत्रेण श्रोष्याम्यहं । तत्र लोकधातुषु सत्त्वानां चेतसैवचित्तं प्रज्ञा-

स्याम्यहं। तेषां पूर्व्वनिवासमनुस्मरिष्याम्यहं। दिव्येन चक्षुषा ताम् सर्व्वांश्च्यवमानानुपपद्यमानानुपपन्नांश्च द्रक्ष्यामि। अहमप्रमेया- ऽसंख्येयान् सत्त्वान् परिनिर्व्वापयिष्यामीति। एवं खलु शारद्वती- पुत्र बोधिसत्त्वोमहासत्त्व प्रज्ञापारमितां युक्तइति वक्तव्यः।

एवं खलु शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापार- मितायां चरतोमाच्छिद्रान्वेष्यवतारगवेष्यवतारं न लभते। यान्यपि कानिचिल्लौकिकलोकोत्तराणिकरणीयानि तान्यपि सर्व्वाणि प्रद- क्षितानि भवन्ति। अनाभोगेनापरिकल्पितानि ये चाऽस्य केचि- ल्लौकिकाः क्लेशास्ते सर्व्वे प्रदक्षिता भवन्ति। ये च ते पूर्व्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तेऽपि तं बोधिसत्त्वं महासत्त्वमारचन्ति। माश्रावकभूमिं वा प्रत्येकबुद्धभूमिं वा पतेदिति।

ये च चत्वारो महाराजाः(१) त्रायस्त्रिंशादेवाः यामा(२)स्तु-

(१) त्रिंशत्यधिकशतद्वयसंख्याते गणदेवताभेदे। अष्टौ वसव एकादश- रुद्रा द्वादशादित्याः इमे एव द्यावापृथिवीत्रयस्त्रिंशद्दै देवाः प्रजापतिश्चतु- स्त्रिंशस्तदेनं प्रजापतिम्। शतपथब्राह्मणः।

(२) स्वायम्भुव मनोः प्रसूतिनामिकायां कन्यायां दक्षप्रजापतिना यज्ञो दक्षिणा च दम्पतीजनितौ। यज्ञेन दक्षिणायां द्वादशयामसंज्ञकाः उत्पादिताः।

यज्ञस्य दक्षिणायान्तु पुत्राद्वादशजज्ञिरे।
यामा इति समाख्याता देवाः स्वायम्भुवेऽन्तरे॥
तस्य पुत्रास्तु यज्ञस्य दक्षिणायां समास्वराः। मार्कण्डेयपुराणम्।
मन्वन्तराणि वक्ष्याम आद्यः स्वायम्भुवो मनुः।
यामोधायास्तस्य सुताः यामनाम तदासुराः॥ अग्निपुराणम्।

पिता[१]निर्म्माणरतयः[२] परनिर्म्मितवशवर्त्तिनोदेवा ब्रह्मकायिकादेवाः ब्रह्मपुरोहितादेवाः[३] ब्रह्मपार्षद्याः महाब्रह्माणः आभाः परीत्ताऽऽभाः अप्रमाणाऽऽभाः आभास्वराः[४] शुभाः परीत्तशुभाः अप्रमाणशुभाः शुभकृत्स्नाः वृहाः परीत्तवृहाः अप्रमाणवृहाः वृहत्फलाः अवृहाः अतपाः सुदृशाः सुदर्शनाः अकनिष्ठा[५] देवास्तेऽपि तं बोधिसत्त्वं

---

(१) चाक्षुषे तुषिता देवास्तेऽदित्या कश्यपात् पुनः ।
आसन् विष्णुश्च शक्रश्च त्वष्टाधाता तथार्य्यमा ॥
पूषाविवस्वान् सविता मित्रोऽथ वरुणो भगः ।
अंशुश्च द्वादशादित्या आसन् वैवस्वतेऽन्तरे ॥ अग्निपुराणम् ।
आदित्या द्वादश प्रोक्ता विश्वे देवा दश स्मृताः ।
वसवश्चाष्टसंख्याता षट्त्रिंशत् तुषिता मताः ॥ इत्यमरटीका ।

(२) भविष्या धर्म्मपुत्रस्य सावर्णस्यान्तरं शृणु ।
विहङ्गमाः कामगाश्च निर्म्माणरतयस्तथा ॥
त्रिप्रकारा भविष्यन्ति एकैकस्त्रिंशतो गणा । मार्कण्डेयपुराणम् ।

(३) ब्रह्मवृहस्पतिः पुरोहितो यस्य, देवे । त्रयस्त्रिंशश्च देवा ब्रह्मपुरोहिता । ब्रह्म वै वृ ।

(४) आसमन्तात् भासनशीला । कसिपिसीत्यादिना वरप्रत्यये वकारमध्य आभास्वराश्चतुःषष्ठिर्व्वाता महाराजिकनामानि द्वेशते विंशतिस्तथा । इत्यमरटीका ।

सम्यग्दृष्टियोंले चतु षष्ठिमिते गणदेवताभेदे ।
आत्माज्ञाता दमोदान्तः शान्तिर्ज्ञानं शमस्तपः ॥
कामक्रोधोमदोमोहो द्वादशा भास्वरा इमे ॥
इत्युक्तं द्वादशमिते गणभेदे । एषाश्च स्वस्वरूपा भास्वरो तथात्मम् ।

(५) अकनिष्ठ । अके वेदनिन्दारूपे पापे निष्ठायस्याकनिष्ठभिन्ने ज्येष्ठे । बुद्धगणदेवता भेदे ।

महासत्त्वमारचन्ति माऽैव कश्चिद्बोधिसत्त्वस्य महासत्त्वस्याऽन्तरायं कार्षीदिति । ये केचित् कायिकादोषास्तेऽपि तस्य दृष्ट एवधर्म्मे सर्व्वेण सर्व्वं न भवन्ति । तत्कस्य हेतोस्तथाहि बोधिसत्त्वोमहासत्त्वः सर्व्वसत्वान् मैत्र्यास्फुरति । ये च ते दक्षिणस्यांदिशि गङ्गानदी-वालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तेऽपि तं बोधिसत्त्वं महा-सत्त्वमारचन्ति माश्रावकभूमिं प्रत्येकबुद्धभूमिं वा पतेदिति ।

ये च चत्वारो महाराजास्त्रायस्त्रिंशादेवायामास्तुषितानिर्म्माण-रतयः परनिर्म्मितवशवर्त्तिनोदेवाः ब्रह्मकायिकाः ब्रह्मपुरोहिताः ब्रह्मपार्षद्याः महाब्रह्माः आभाः परीत्ताऽऽभाः अप्रमाणाऽऽभाः आभास्वराः शुभाः परीत्तशुभाः अप्रमाणशुभाः शुभकृत्स्नाः वृहाः परीत्तवृहा अप्रमाणवृहाः वृहत्फलाः अवृहाः अतपाः सुदृशाः सुदर्शनाः अकनिष्ठादेवास्तेऽपि तं बोधिसत्त्वं महासत्त्वमारचन्ति । माऽैव कश्चिद्बोधिसत्त्वस्य महासत्त्वस्याऽन्तरायं कार्षीदिति । येऽपि केचित्* कायिकादोषास्तेऽपि तस्य दृष्ट एव धर्म्मे सर्व्वेण सर्व्वं न भवन्ति तत्कस्य हेतोस्तथाहि बोधिसत्त्वोमहासत्त्वः सर्व्वसत्त्वान् मैत्र्यास्फुरति। ये च ते पश्चिमायांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तेऽपि तं बोधिसत्त्वं महासत्त्वमारचन्ति माश्रावकभूमिं वा प्रत्येकबुद्धभूमिं वा पतेदिति ।

ये च चत्वारो महाराजास्त्रायस्त्रिंशादेवायामाः तुषिताः निर्म्माणरतयः परनिर्म्मितवशवर्त्तिनोदेवाः ब्रह्मकायिकादेवाब्रह्मपुरो-

---

* चकायिका (च) पुस्तके पाठ ।

हिताब्रह्मपार्षद्याः महाब्रह्माणः आभाः परीत्ताऽऽभाः अप्रमाणाऽऽभाः आभास्वराः शुभाः परीत्तशुभाः अप्रमाणशुभाः शुभकृत्स्नाः बृहाः परीत्तबृहाः अप्रमाणबृहाः बृहत् फलाः अबृहाः अतपाः सुदृशाः सुदर्शनाः अकनिष्ठादेवास्तेऽपि तं बोधिसत्त्वं महासत्त्वमारक्षन्ति। माहैव कश्चिद्बोधिसत्त्वस्य महासत्त्वस्याऽन्तरायं कार्षीदिति। येऽपि च केचित् कायिका दोषास्तेऽपि तस्य दृष्ट एव धर्म्मे सर्व्वेण सर्व्वं न भवन्ति। तत्कस्य हेतोस्तथाहि बोधिसत्त्वोमहासत्त्वः सर्व्वसत्त्वान् मैत्र्यास्फुरति। ये चोत्तरस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तेऽपि तं बोधिसत्त्वं महासत्त्वमारक्षन्ति माश्रावकभूमिं वा प्रत्येकबुद्धभूमिं वा पतेदिति।

ये च चत्वारो महाराजास्त्रायस्त्रिंशादेवायामाः तुषितानिर्म्माणरतयः परनिर्म्मितवशवर्त्तिनोदेवाब्रह्मकायिकाब्रह्मपुरोहिताब्रह्मपार्षद्यामहाब्रह्माणः आभाः परीत्ताऽऽभाः अप्रमाणाऽऽभाः आभास्वराः शुभाः परीत्तशुभाः अप्रमाणशुभाः शुभकृत्स्नाः बृहाः परीत्तबृहाः अप्रमाणबृहाः बृहत्फलाः अबृहाअतपाः सुदृशाः सुदर्शनाः अकनिष्ठादेवास्तेऽपि तं बोधिसत्त्वं महासत्त्वमारक्षन्ति। माहैव कश्चिद्बोधिसत्त्वस्य महासत्त्वस्याऽन्तरायं कार्षीदिति। येऽपि केचित् कायिकादोषास्तेऽपि तस्य दृष्ट एव धर्म्मे सर्व्वेण सर्व्वं न भवन्ति। तत्कस्य हेतोस्तथाहि बोधिसत्त्वोमहासत्त्वः सर्व्वसत्त्वान् मैत्र्यास्फुरति। ये च ते उत्तरपूर्व्वस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तेऽपि तं बोधिसत्त्वं महासत्त्वमारक्षन्ति माश्रावकभूमिं वा प्रत्येकबुद्धभूमिं वा पतेदिति।

ये च चत्वारो महाराजास्त्रायस्त्रिंशादेवायामाः तुषिताः निर्म्माणरतयः परनिर्म्मितवशवर्त्तिनोदेवाब्रह्मकायिकाब्रह्मपुरोहिताः ब्रह्मपार्षद्यामहाब्रह्माणः आभाः परीत्ताऽऽभाः अप्रमाणाऽऽभाः आभास्वराः शुभाः परीत्तशुभाः अप्रमाणशुभाः शुभकृत्स्नाः वृहाः परीत्तवृहाः अप्रमाणवृहाः वृहत् फलाः अवृहाः अतपाः सुदृशाः सुदर्शनाः अकनिष्ठादेवास्तेपि तं बोधिसत्त्वं महासत्त्वमारचन्ति। माहैव कश्चिद्बोधिसत्त्वस्य महासत्त्वस्याऽन्तरायं कार्षीदिति। येऽपि केचित् कायिकादेवास्तेऽपि तस्य दृष्ट एव धर्म्मे सर्व्वेण सर्व्वं न भवन्ति। तत्कस्य हेतोस्तथाहि बोधिसत्त्वोमहासत्त्वः सर्व्वसत्त्वान् मैत्र्यास्फुरति। ये च ते पूर्व्वदक्षिणस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु, बुद्धाभगवन्तस्तेऽपि तं बोधिसत्त्वं महासत्त्वमारचन्ति माश्रावकभूमिं वा प्रत्येकबुद्धभूमिं वा पतेदिति।

ये च चत्वारो महाराजास्त्रायस्त्रिंशादेवायामाः तुषिताः निर्म्माणरतयः परनिर्म्मितवशवर्त्तिनोदेवाः ब्रह्मकायिका-ब्रह्मपुरोहिताः ब्रह्मपार्षद्याः महाब्रह्माणः आभाः परीत्ताऽऽभाः अप्रमाणाऽऽभाः आभास्वराः शुभाः परीत्तशुभाः अप्रमाणशुभाः शुभकृत्स्नाः वृहाः परीत्तवृहाः अप्रमाणवृहाः वृहत्फलाः अवृहाः अतपाः सुदृशाः सुदर्शनाः अकनिष्ठास्तेऽपि तं बोधिसत्त्वं महासत्त्वमारचन्ति। माहैव कश्चिद्बोधिसत्त्वस्य महासत्त्वस्याऽन्तरायं कार्षीदिति। येऽपि केचित् कायिकादेवास्तेऽपि तस्य दृष्ट एव धर्म्मे सर्व्वेण सर्व्वं न भवन्ति। तत्कस्य हेतोस्तथाहि बोधिसत्त्वोमहासत्त्वः सर्व्वसत्त्वान् मैत्र्या-स्फुरति। ये च ते दक्षिणपश्चिमायांदिशि गङ्गानदीवालुकोपमेषु

लोकधातुषु बुद्धाभगवन्तस्तेऽपि तं बोधिसत्त्वं महासत्त्वमारक्षन्ति माश्रावकभूमिं वा प्रत्येकबुद्धभूमिं वा पतेदिति।

ये च चत्वारोमहाराजास्त्रायस्त्रिंशाद्देवायामाः तुषिताः निर्म्माणरतयः परनिर्म्मितवशवर्त्तिनोदेवाब्रह्मकायिकाब्रह्मपुरोहिता-ब्रह्मपार्षद्याः महाब्रह्माणः आभाः परीत्ताऽऽभाः अप्रमाणाऽऽभाः आभास्वराः शुभाः परीत्तशुभाः अप्रमाणशुभाः शुभकृत्स्नाः वृहाः परीत्तवृहाः अप्रमाणवृहाः वृहत्फलाः अवृहाः अतपाः सुदृशाः सुदर्शनाः अकनिष्ठादेवास्तेऽपि तं बोधिसत्त्वं महासत्त्व मारक्षन्ति। माहैव कश्चिद्बोधिसत्त्वस्य महासत्त्वस्याऽन्तरायं कार्षीदिति। येऽपि केचित् कायिकादोषास्तेऽपि तस्य दृष्ट एव धर्म्मे सर्व्वेण सर्व्वं न भवन्ति। तत्कस्य हेतोस्तथाहि बोधिसत्त्वोमहासत्त्वः सर्व्वसत्त्वान् मैत्र्यास्फुरति। येऽपि च ते पश्चिमोत्तरस्यांदिशि गङ्गानदी-वालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तेऽपि तं बोधिसत्त्वं महा-सत्त्वमारक्षन्ति। माश्रावकभूमिं वा प्रत्येकबुद्धभूमिं वा पतेदिति।

ये च चत्वारोमहाराजास्त्रायस्त्रिंशाद्देवा यामाः तुषिता निर्म्माणरतयः परनिर्म्मितवशवर्त्तिनोदेवाब्रह्मकायिकाब्रह्मपुरोहिता-ब्रह्मपार्षद्याः महाब्रह्माणः आभाः परीत्ताऽऽभाः अप्रमाणाऽऽभाः आभास्वराः शुभाः परीत्तशुभाः अप्रमणशुभाः शुभकृत्स्नाः वृहाः परीत्तवृहाः अप्रमाणवृहाः वृहत्फलाः अवृहाः अतपाः सुदृशाः सुदर्शनाः अकनिष्ठादेवास्तेऽपि तं बोधिसत्त्वं महासत्त्वमारक्षन्ति। माहैव कश्चिद्बोधिसत्त्वस्य महासत्त्वस्याऽन्तरायं कार्षीदिति। येऽपि केचित् कायिकादोषास्तेऽपि तस्य दृष्ट एव धर्म्मे सर्व्वेण सर्व्वं न

भवन्ति। तत्कस्य हेतोस्तथाहि बोधिसत्त्वोमहासत्त्वः सर्व्वसत्त्वान् मैत्र्यास्फुरति। ये च तेऽधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तेऽपि तं बोधिसत्त्वं महासत्त्वमारचन्ति माश्रावकभूमिं वा प्रत्येकबुद्धभूमिं वा पतेदिति।

ये च चत्वारोमहाराजास्त्रायस्त्रिंशादेवायामाः तुषिताः निर्म्माणरतयः परनिर्म्मितवशवर्त्तिनोदेवा ब्रह्मकायिकाः ब्रह्मपुरोहिताः ब्रह्मपार्षद्याः महाब्रह्माणः आभाः परीत्ताऽऽभाः अप्रमाणाऽऽभाः आभास्वराः शुभाः परीत्तशुभाः अप्रमाणशुभाः शुभकृत्स्नाः वृहाः परीत्तवृहाः अप्रमाणवृहाः वृहत्फलाः अवृहाः अतपाः सुदृशाः सुदर्शनाः अकनिष्ठादेवास्तेऽपि तं बोधिसत्त्वं महासत्त्वमारचन्ति। माहैव कश्चिद्बोधिसत्त्वस्य महासत्त्वस्याऽन्तरायं कार्षीदिति। येऽपि च केचित् कायिकादेवास्तेऽपि तस्य दृष्ट एव धर्म्मे सर्व्वेण सर्व्वं न भवन्ति। तत्कस्य हेतोस्तथाहि बोधिसत्त्वोमहासत्त्वः सर्व्वसत्त्वान् मैत्र्यास्फुरति। ये च ते उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तस्तेऽपि तं बोधिसत्त्वं महासत्त्वमारचन्ति माश्रावकभूमिं वा प्रत्येकबुद्धभूमिं वा पतेदिति।

ये च चत्वारोमहाराजास्त्रायस्त्रिंशादेवायामाः तुषिता देवा निर्म्माणरतयः परनिर्म्मितवशवर्त्तिनो देवा ब्रह्मकायिकाः ब्रह्मपुरोहिताः ब्रह्मपार्षद्याः महाब्रह्माणः आभाः परीत्ताऽऽभाः अप्रमाणाऽऽभाः आभास्वराः शुभाः परीत्तशुभाः अप्रमाणशुभाः शुभकृत्स्नाः वृहाः परीत्तवृहाः अप्रमाणवृहाः वृहत्फलाः अवृहाः अतपाः सुदृशाः सुदर्शनाः अकनिष्ठादेवास्तेऽपि तं बोधिसत्त्वं महा-

सत्त्वमारचन्ति। माऽैव कश्चिद्बोधिसत्त्वस्य महासत्त्वस्याऽन्तरायं कार्षीदिति। येऽपि च केचित् कायिका दोषास्तेऽपि तस्य दृष्ट एव धर्म्मे सर्व्वेण सर्व्वे न भवन्ति। तत्कस्य हेतोस्तथाहि बोधिसत्त्वो-महासत्त्वः सर्व्वसत्त्वान् मैत्र्यास्फुरति। एवञ्चरञ्छारद्वतीपुत्र बोधि-सत्त्वोमहासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमि-तायां चरतोऽल्पकृच्छ्रेण धारणीमुखसमाधिमुखानि प्रतिभानप्रतिस-म्विन्मुखानि वाऽभिमुखीभवन्ति। सर्व्वोपपत्त्यायतनेषु च तथागता-र्हतः सम्यक्सम्बुद्धानारागयति। तैश्च बुद्धैर्भगवद्भिर्नैकदाचिद्विर-हितो भवति यावदनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमि-तायां चरतो नैवं भवत्यस्ति कश्चिद्धर्म्मोयोधर्म्मैः सार्द्धं संयुज्यते वा वियुज्यते वा। समेति वा न समेति वा। तत्कस्य हेतोस्तथाहि स तद्धर्मं न समनुपश्यति योयुज्यते वा वियुज्यते वा। समीयादा न समीयादा। एवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञा-पारमितायां चरन् युक्त इति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमि-तायां चरतो नैवं भवति कश्चिदहं धर्म्मधातुमभिसम्बुध्येयं न वाऽ-भिसम्बुध्येयं वा। तत्कस्य हेतोस्तथाहि न हि धर्म्मधातुमभिसम्बु-द्धोनाऽभिसम्बुध्यते नाऽभिसम्भोत्स्यते। एवं खलु शारद्वतीपुत्र बो-धिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् युक्त इति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां

चरन् *न कश्चिद्धर्मं धर्मधातुव्यतिरिक्तं समनुपश्यति एवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् युक्त इति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न धर्मधातोर्धर्माणाञ्च नानाकरणं करोति। एवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् युक्त इति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो नैवं भवति धर्मधातुं प्रतिविध्येयं। तथा हि न स कश्चिद्धर्मं समनुपश्यति येन धर्मेण योधर्मः प्रतिविध्येत। तथाहि स न धर्मधातुं शून्यइति योजयति नाऽशून्यइति योजयति। एवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् युक्त इति वक्तव्यः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न रूपं शून्यतया योजयति न शून्यतां रूपेण योजयति। न वेदनां शून्यतया योजयति न शून्यतां वेदनया योजयति। न संज्ञां शून्यतया योजयति न शून्यतां संज्ञया योजयति। न संस्कारान् शून्यतया योजयति न शून्यतां संस्कारैर्योजयति। न विज्ञानं शून्यतया योजयति न शून्यतां विज्ञानेन योजयति। न चक्षुः शून्यतया योजयति न शून्यतां चक्षुषा योजयति। न श्रोत्रं शून्यतया योजयति न शून्यतां श्रोत्रेण योजयति। न घ्राणं शून्य-

* न कश्चिद्धर्मं धर्मधातुव्यतिरिक्तमिति ग पुस्तके पाठ।

तया योजयति न शून्यतां घ्राणेन योजति । न जिह्वां शून्यतया योजयति न शून्यतां जिह्वया योजयति । न कायं शून्यतया योजयति न शून्यतां कायेन योजयति । न मनः शून्यतया योजयति न शून्यतां मनसा योजयति । न रूपं शून्यतया योजयति न शून्यतां रूपेण योजयति । न शब्दं शून्यतया योजयति न शून्यतां शब्देन योजयति । न गन्धं शून्यतया योजयति न शून्यतां गन्धेन योजयति । न रसं शून्यतया योजयति न शून्यतां रसेन योजयति । न स्पर्शं शून्यतया योजयति न शून्यतां स्पर्शेन योजयति । न धर्मांश्शून्यतया योजयति न शून्यतां धर्मेण योजयति । न चक्षुर्धातुं शून्यतया योजयति न शून्यतां चक्षुर्धातुना योजयति । न रूपधातुं शून्यतया योजयति न शून्यतां रूपधातुना योजयति । न चक्षुर्विज्ञानधातुं शून्यतया योजयति न शून्यतां चक्षुर्विज्ञानधातुना योजयति । न श्रोत्रधातुं शून्यतया योजयति न शून्यतां श्रोत्रधातुना योजयति । न शब्दधातुं शून्यतया योजयति न शून्यतां शब्दधातुना योजयति । न श्रोत्रविज्ञानधातुं शून्यतया योजयति न शून्यतां श्रोत्रविज्ञानधातुना योजयति । न घ्राणधातुं शून्यतया योजयति न शून्यतां घ्राणधातुना योजयति । न गन्धधातुं शून्यतया योजयति न शून्यतां गन्धधातुना योजयति । न घ्राणविज्ञानधातुं शून्यतया योजयति न शून्यतां घ्राणविज्ञानधातुना योजयति । न जिह्वाधातुं शून्यतया योजयति न शून्यतां जिह्वाधातुना योजयति । न रसधातुं शून्यतया योजयति न शून्यतां रसधातुना योजयति । न जिह्वावि-

ज्ञानधातुं शून्यतया योजयति न शून्यतां जिह्वाविज्ञानधातुना योजयति। न कायधातुं शून्यतया योजयति न शून्यतां कायधातुना योजयति। न स्प्रष्टव्यधातुं शून्यतया योजयति न शून्यतां स्प्रष्टव्यधातुना योजयति। न कायविज्ञानधातुं शून्यतया योजयति। न शून्यतां कायविज्ञानधातुना योजयति। न मनोधातुं शून्यतया योजयति न शून्यतां मनोधातुना योजयति। न धर्मधातुं शून्यतया योजयति न शून्यतां धर्मधातुना योजयति। न रूपधातुं शून्यतया योजयति न शून्यतां रूपधातुना योजयति। न चक्षुर्विज्ञानधातुं शून्यतया योजयति न शून्यतां चक्षुर्विज्ञानधातुना योजयति। न मनोविज्ञानधातुं शून्यतया योजयति न शून्यतां मनोविज्ञानधातुना योजयति। तत्कस्य हेतोरेषद्धि शारद्वतीपुत्र परमोयोगोयदुत शून्यतायोगः शून्यतायां शारद्वतीपुत्र चरन् बोधिसत्त्वोमहासत्त्वोन श्रावकभूमौ वा न प्रत्येक बुद्धभूमौ वा पतति। बुद्धक्षेत्रञ्च परिशोधयति सत्त्वांश्च परिपाचयति। क्षिप्रञ्चाऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। ये केचिच्छारद्वतीपुत्र योगाः प्रज्ञापारमितायोगस्तेषामग्रआख्यायते ज्येष्ठआख्यायते श्रेष्ठआख्यायते वर आख्यायते प्रवर आख्यायते प्रणीत आख्यायते। तत्कस्य हेतोरनुत्तरएष योगोयदुत प्रज्ञापारमितायोगः शून्यताऽऽनिमित्ताऽप्रणिहितयोगः। एवं युज्यमानः शारद्वतीपुत्रबोधिसत्त्वोमहासत्त्वो व्याकृतोवक्तव्यः।

आसन्नीभूतश्चाऽनुत्तरायां सम्यक्सम्बोधौ। एवं युज्यमानः शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽप्रमेयाऽसंख्येयानां सत्त्वानां अर्थ

करोतीति । न चाप्येवं भवत्यहं प्रज्ञापारमितायां युज्यते वा वियुज्यते* वा मां बुद्धाभगवन्तोव्याकरिष्यन्त्यहमासन्नीभूतोव्याकरणस्य । अहं बुद्धक्षेत्रं परिशोधयिष्याम्यहं सत्वान् परिपाचयिष्याम्यहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्य धर्मचक्रं प्रवर्त्तयिष्यामि । तत्कस्य हेतोस्तथाहि । स धर्मधातुं व्यतिरेकीकरोति । न स धर्मधातोः किञ्चिदन्यद्धर्मं समनुपश्यति । यः प्रज्ञापारमितायां चरेद्यो वा बुद्धैर्भगवद्भिर्व्याक्रियेत । यो वाऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येत। तत्कस्य हेतोस्तथाहि बोधिसत्वस्य महासत्वस्य प्रज्ञापारमितायां चरतो न सत्वसंज्ञोत्पद्यते । नाऽऽत्मसंज्ञोत्पद्यते । न जीवसंज्ञोत्पद्यते । न जन्तुसंज्ञोत्पद्यते । न पोषसंज्ञोत्पद्यते । न पुरुषसंज्ञोत्पद्यते । न पुद्गलसंज्ञोत्पद्यते । न मनुजसंज्ञोत्पद्यते । न मानवसंज्ञोत्पद्यते । न कारकसंज्ञोत्पद्यते । न वेदकसंज्ञोत्पद्यते । न जानकसंज्ञोत्पद्यते । न पश्यकसंज्ञोत्पद्यते । तत्कस्य हेतोस्तथाह्यत्यन्तं सत्वोनोत्पद्यते न निरुध्यते न हि सत्वस्योत्पादोनिरोधः । यस्य च नोत्पादो न निरोधः स कथं प्रज्ञापारमितायां चरिष्यति । एवच्छरद्धारद्वतीपुत्रबोधिसत्वोमहासत्वः सत्वाऽनुत्पादतया प्रज्ञापारमितायां चरति । सत्वशून्यतया प्रज्ञापारमितायां चरति । सत्वाऽनुपलब्ध्या प्रज्ञापारमितायां चरति । सत्वविविक्ततया प्रज्ञापारमितायां चरति । सत्वप्रकृत्या प्रज्ञापारमितायां चरति। सत्वाऽस्वभावतया प्रज्ञापारमितायां चरति । एष शारदतीपुत्रबोधिसत्वानां महासत्वानां परमो-

* एष एव पाठः पञ्चसु पुस्तकेषु । युज्ये इति युक्तम् ।

योगोयदुत प्रज्ञापारमिता योगः अयं शारद्वतीपुत्रबोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतोयोगोयस्तदन्यान् योगानभिभूय तिष्ठति।

अत्र च शारद्वतीपुत्रयोगे चरन् बोधिसत्त्वोमहासत्त्वोदश-तथागतबलान्यभिनिर्हरति। चत्वारिवैशारद्यानि चतस्रः प्रतिसम्विदोमहामैत्रीं महाकरुणामष्टादशाऽऽवेणिकबुद्धधर्मानभिनिर्हरति। अत्र शारद्वतीपुत्रयोगे चरन् बोधिसत्त्वोमहासत्त्वो न मात्सर्यचित्तमुत्पादयति। न दौःशील्यचित्तं न व्यापादचित्तं न कौसीद्यचित्तं न विक्षेपचित्तं न दौष्प्रज्ञचित्तमुत्पादयति। एवमुक्ते आयुष्मान् शारद्वतीपुत्रोभगवन्तमेतदवोचत्। योभगवन् बोधिसत्त्वोमहासत्त्वोऽनेन प्रज्ञापारमितायोगेन विहरति। स कुतश्च्युत्वेहोपपन्नः। इतो वा च्युतः कुत्रोपपत्स्यते।

भगवानाह। यः शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽनेन प्रज्ञापारमितायोगेन विहरति सोऽन्येभ्यो बुद्धक्षेत्रेभ्यश्च्युत्वेहोपपन्नो-वेदितव्यः। तुषितेभ्योदेवनिकायेभ्यो मनुष्येभ्योवा च्युत्वेहोपपन्नो-वेदितव्यः। तत्र शारद्वतीपुत्रयोऽयं बोधिसत्त्वोमहासत्त्वोऽन्येभ्यो बुद्धक्षेत्रेभ्यश्च्युत्वेहोपपन्नः। एषक्षिप्रमिमं योगं समापद्यते। यदुत-प्रज्ञापारमितायोगं। अस्य जातिव्यतिवृत्तस्यापीमेगम्भीराधर्मा-अभिमुखीभवन्ति। पश्चात् प्रज्ञापारमितायोगं समापद्यते। यत्र यत्र च बुद्धक्षेत्रेषु तथागताअर्हन्तः सम्यक्सम्बुद्धास्तिष्ठन्ति भ्रियन्ते यापयन्ति तत्र तत्रोपपद्यते। तांश्च तथागतानर्हतः सम्यक् सम्बुद्धा-नारागयति। तत्र शारद्वतीपुत्र योऽयं बोधिसत्त्वोमहासत्त्वस्तुषितेभ्यो

देवनिकायेभ्यश्च्युतेहोपपन्नोवेदितव्यः। स खल्वेकजातिप्रतिबद्धा-स्तस्याऽविप्रनष्टा भवति षट् पारमिता। अत्राऽन्तर्गतानि भवन्ति सर्व्वधारणीमुखसमाधिमुखानि। यः पुनः शारद्वतीपुत्र बोधि-सत्त्वोमहासत्त्वोमनुष्येभ्यश्च्युतामनुष्याणामेव सभागताया उपपद्यते। तस्य बोधिसत्त्वस्य महासत्त्वस्याऽवैवर्त्तिकं बोधिसत्त्वं महासत्त्वं स्थापयित्वा धन्यानीन्द्रियाणि भवन्ति। न च* क्षिप्रमिमं प्रज्ञापारमितायोगं समापद्यते। बुद्धक्षेत्रात् च्युतो बुद्धक्षेत्रं संक्रमि-ष्यति यत्र बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति। न च कदा-चिदपि बुद्धैर्भगवद्भिर्व्विरहितोभविष्यति यावदनुत्तरां सम्यक्-सम्बोधिमभिसम्बुद्धः।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वा अनुपायकुशलाः प्रथमं ध्यानं समापद्यन्ते। द्वितीयं ध्यानं समापद्यन्ते। तृतीयं ध्यानं समापद्यन्ते। चतुर्थं ध्यानं समापद्यन्ते। षट् पारमितासु चरन्ति। ते ध्यानप्रतिलम्भेन दीर्घाऽऽयुष्केषु देवेषूपपद्यन्ते। स चेत् पुनर्मानुष्यं प्रतिलभ्य लब्धा बुद्धान् भगवत आरागयन्ति†। तेषां धन्यानीन्द्रियाणि भवन्ति न तीक्ष्णानि।

अस्ति पुनः शारद्वती पुत्र बोधिसत्त्वामहासत्त्वाध्यानानि समापद्यन्ते प्रज्ञापारमितायां चरन्ति ते चाऽनुपायकुशलाः ध्याना-न्युत्सृजन्ति। ते पुनरेव कामधातावुपपद्यन्ते। तेषामपि शारद्वती-पुत्र बोधिसत्त्वानां महासत्त्वानां धन्यानीन्द्रियाणि भवन्ति। न

---

* स च इति युक्तं प्रतिभाति।

† एष पाठः सर्व्व पुस्तकेषु।

सौहृत्यानि। अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रथमं ध्यानं समापद्यन्ते। द्वितीयं ध्यानं समापद्यन्ते। तृतीयं ध्यानं समापद्यन्ते। चतुर्थं ध्यानं समापद्यन्ते। मैत्रीं समापद्यन्ते। करुणां समापद्यन्ते। मुदितां समापद्यन्ते। उपेक्षां समापद्यन्ते। आकाशाऽऽनन्त्याऽऽयतनं समापद्यन्ते। विज्ञानाऽऽनन्त्याऽऽयतनं समापद्यन्ते। आकिञ्चन्याऽऽयतनं समापद्यन्ते। नैव संज्ञानासंज्ञाऽऽयतनं समापद्यन्ते। चत्वारिस्मृत्युपस्थानानि समापद्यन्ते। चत्वारि सम्यक्प्रहाणानि समापद्यन्ते। चतुरऋद्धिपादान् समापद्यन्ते। पञ्चेन्द्रियाणि समापद्यन्ते। पञ्चबलानि समापद्यन्ते। सप्तबोध्यङ्गानि समापद्यन्ते। आर्य्योऽष्टाऽङ्गमार्गं समापद्यन्ते। महाकरुणां समापद्यन्ते। महाकरुणाः सम्प्र उपाय कौशलेन। न ध्यानवशेनोपपद्यन्ते*। न ब्राह्मविहारवशेन। नाऽऽरूप्यसमापत्तिवशेनोपपद्यन्ते। तत्र पुनरुपपद्यन्ते यत्र बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति। ते पुनः प्रज्ञापारमितायोगेनाऽविरहिताइहैव भद्रकल्पेऽनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यन्ते।

अस्ति पुनः शारद्वतीपुत्र बोधिसत्त्वाः महासत्त्वाः प्रथमं ध्यानं समापद्यन्ते। द्वितीयं ध्यानं समापद्यन्ते। तृतीयं ध्यानं समापद्यन्ते। चतुर्थं ध्यानं समापद्यन्ते। मैत्रीं समापद्यन्ते। महाकरुणां समापद्यन्ते। मुदितां समापद्यन्ते। उपेक्षां समापद्यन्ते। आकाशाऽऽनन्त्याऽऽयतनं समापद्यन्ते। विज्ञानाऽऽनन्त्यायतनं समापद्यन्ते।

---

* वशग्रन्थस्थानस्थान्तः सम्भाव्यते।

आकिञ्चन्यायतनं समापद्यन्ते । नैवसंज्ञानासंज्ञायतनं समापद्यन्ते । ते चोपायकौशलेन ध्यानसमाधिसमापत्तिवशेनोपपद्यन्ते । ते पुनरेवेह कामधातावुपपद्यन्ते । क्षत्रियमहाशालकुलेषूपपद्यन्ते । ब्राह्मणमहाशालकुलेषूपपद्यन्ते । गृहपतिमहाशालकुलेषूपपद्यन्ते सत्त्वपरिपाकाय न पुनर्भवाभिलाषात् ।

सन्ति शारद्वतीपुत्र बोधिसत्त्वाः महासत्त्वाः प्रथमं ध्यानं समापद्यन्ते । द्वितीयं ध्यानं समापद्यन्ते । तृतीयं ध्यानं समापद्यन्ते । चतुर्थं ध्यानं समापद्यन्ते । मैत्रीं समापद्यन्ते । करुणां समापद्यन्ते । मुदितां समापद्यन्ते । उपेक्षां समापद्यन्ते । आकाशानन्त्यायतनं समापद्यन्ते । विज्ञानानन्त्यायतनं समापद्यन्ते । आकिञ्चन्यायतनं समापद्यन्ते । नैवसंज्ञानासंज्ञायतनं समापद्यन्ते । उपायकौशलवशेन च ध्यानसमाधिसमापत्तिवशेनोपपद्यन्ते । ते चातुर्महाराजकायिकानां देवानां सभागतायां उपपद्यन्ते । त्रायस्त्रिंशानां देवानां सभागतायां उपपद्यन्ते । यामानां देवानां सभागतायां उपपद्यन्ते । तुषितानां देवानां सभागतायां उपपद्यन्ते । निर्माणरतीनां देवानां सभागतायां उपपद्यन्ते । परनिर्मितवशवर्तिनां देवानां सभागतायां उपपद्यन्ते । तत्र स्थिता सत्त्वान् परिपाचयन्ति बुद्धक्षेत्रञ्च परिशोधयन्ति । बुद्धांश्च भगवतश्चारागयन्ति । सन्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रज्ञापारमितायां चरन्तः उपायकौशलेन प्रथमं ध्यानं समापद्यन्ते । द्वितीयं ध्यानं समापद्यन्ते । तृतीयं ध्यानं समापद्यन्ते । चतुर्थं ध्यानं समापद्यन्ते । मैत्रीं समापद्यन्ते । करुणां समापद्यन्ते ।

मुदितां समापद्यन्ते। उपेक्षां समापद्यन्ते। आकाशाऽऽनन्त्याऽऽयतनं समापद्यन्ते। विज्ञानाऽऽनन्त्याऽऽयतनं समापद्यन्ते। आकिञ्चन्याऽऽयतनं समापद्यन्ते। नैव संज्ञानासंज्ञाऽऽयतनं समापद्यन्ते। तद्-तश्च्युत्वा ब्रह्मलोक उपपद्यन्ते तत्र ब्रह्माणो भवन्ति। महाब्रह्माणः। अभिभुवोदशशतवर्षवर्त्तिनस्तेषां सत्त्वानामध्यावरा प्रवरावरिष्ठास्ते तत्र स्थित्वा बुद्धक्षेत्रेण बुद्धक्षेत्रं संक्रामन्ति। यत्र तथागताऽर्हन्तः सम्यक्सम्बुद्धाश्चनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यधर्म्मचक्रं प्रवर्त्तयन्ति। ते तां स्तथागतानर्हतः सम्यक् सम्बुद्धानध्येषन्ते धर्म्मचक्रप्रवर्त्तनाय।

अस्ति शारद्वतीपुत्रबोधिसत्त्वामहासत्त्वाः एकजातिप्रतिबद्धाः। प्रज्ञापारमितायां चरन्त उपायकौशलेन प्रथमं ध्यानं समापद्यन्ते। द्वितीयं ध्यानं समापद्यन्ते। तृतीयं ध्यानं समापद्यन्ते। चतुर्थं ध्यानं समापद्यन्ते। मैत्रीं समापद्यन्ते। करुणां समापद्यन्ते। मुदितां समापद्यन्ते। उपेक्षां समापद्यन्ते। आकाशाऽनन्त्याऽयतन समापत्तिं समापद्यन्ते। विज्ञानाऽनन्त्याऽयतन समापत्ति समापद्यन्ते। आकिञ्चन्याऽऽयतन समापत्तिं समापद्यन्ते। नैवसंज्ञानासंज्ञायतन समापत्तिं समापद्यन्ते। चत्वारिस्मृत्युपस्थानानि भावयन्ति। चत्वा-रिसम्यक्प्रहाणानिभावयन्ति। पञ्चेन्द्रियाणि भावयन्ति। सप्तबो-ध्यङ्गानि भावयन्ति। आर्य्याऽष्टाङ्गमार्गं भावयन्ति। शून्यताऽऽनि-मित्ताऽप्रणिहितान् समाधीन् समापद्यन्ते। न च तेषां वशेनोप-पद्यन्त। ते सम्मुखीभूतान् बुद्धान् भगवतश्चाराग्य* तत्र ब्रह्मचर्य्यं चरित्वा तुषितानां देवानां सभागतायां उपपद्यन्ते। ते तत्र

* आराग्य इति युक्तम्।

यावदायुः स्थित्वा अहीनेन्द्रियाः स्मृताः सम्प्रजानन्तोऽनेकैर्देवकोटी-नियुतशतसहस्रैः परिवृताः पुरस्कृताः तुषितोपपत्तिं दर्शयित्वाऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यधर्म्मचक्रं प्रवर्त्तयन्ति नाना बुद्धक्षेत्रेषु।

अस्ति शारद्वतीपुत्रबोधिसत्त्वामहासत्त्वाः षण्णामभिज्ञानां लाभिनस्ते कामधातावुपपद्यन्ते। नाऽऽरूप्यधातावुपपद्यन्ते। ते बुद्धक्षेत्रेण बुद्धक्षेत्रं संक्रामन्ति। तथागतानर्हतः सम्यक्सम्बुद्धान् सत्कुर्व्वन्तो गुरुकुर्व्वन्तोमानयन्तः पूजयन्तः।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः षण्णामभिज्ञानां लाभिनस्तेताभिरभिज्ञाभिर्व्विक्रीडन्तो बुद्धक्षेत्रेण बुद्धक्षेत्रं संक्रामन्ति। यत्र बुद्धक्षेत्रे न श्रावकयानस्य न प्रत्येकबुद्धयानस्य शब्दोऽपि प्रज्ञायतेऽन्यत्र बुद्धयानात्।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः षण्णामभिज्ञानां लाभिनस्तेताभिरभिज्ञाभिर्व्विक्रीडमाना बुद्धक्षेत्रेण बुद्धक्षेत्रं संक्रामन्ति। यत्र बुद्धक्षेत्रेष्वपरिनिर्म्मितमायुष्प्रमाणं सत्त्वानां।

अस्ति शारद्वतीपुत्रबोधिसत्त्वामहासत्त्वाः षण्णामभिज्ञानां लाभिनस्ते लोकधातुं संक्रामन्ति। यत्र न बुद्धशब्दोन धर्म्मशब्दोन संघशब्दस्ते तत्र गत्वा बुद्धस्य वर्णं भाषन्ते धर्म्मस्य संघस्य वर्णं भाषन्ते ते च सत्त्वास्तेन बुद्धशब्देन संघशब्देन चित्तानि प्रसाद्य यत्र बुद्धाभगवन्तस्तत्रोपपद्यन्ते।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रथमचित्तोत्पादमुपादाय चतुर्णां ध्यानानां चतुर्णामप्रमाणानां चतसृणामारूप्यसमापत्तीनां षण्णामभिज्ञानां लाभिनश्चतुर्णां स्मृत्युपस्थानानां चतुर्णां

सम्यक्प्रहाणानां चतुर्णामृद्धिपादानां पञ्चानामिन्द्रियाणां पञ्चानां बलानां सप्तानां बोध्यङ्गानां आर्य्याऽष्टाऽङ्गस्य मार्गस्य दशानां तथागतबलानां चतुर्णां वैशारद्यानां चतसृणां प्रतिसम्विदां महामैत्र्याः महाकरुणायाः अष्टादशाऽऽवेणिकबुद्धधर्म्माणां नाभिनस्ते न कदाचित्कामधातावुपपद्यन्ते । न रूपधातावुपपद्यन्ते । नाऽऽरूप्यधातावुपपद्यन्ते । तत्र च सत्त्वानामर्थं कुर्व्वन्ति ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः षट्पारमितासु चरन्तः प्रथमचित्तोत्पादेनैव बोधिसत्त्वन्याममवक्रामन्त्यवैवर्त्तिकभूमिं वाऽनुप्राप्नुवन्ति ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रथमचित्तोत्पादेनैवाऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यन्ते । अभिसम्बुध्य सधर्म्मचक्रं प्रवर्त्याऽप्रमेयाणामसंख्येयानां सत्त्वानामर्थं कृत्वाऽनुपधिशेषेनिर्व्वाणधातौ परिनिर्व्वान्ति । तेषां परिनिर्वृतानां कल्पं वा कल्पाऽवशेषं वा सद्धर्म्मस्तिष्ठति ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रथमचित्तोत्पादेनैव प्रज्ञापारमितायोगं समापद्यन्ते । तेऽनेकैर्बोधिसत्त्वकोटीनियुतशतसहस्रैः सार्द्धं बुद्धक्षेत्रेण बुद्धक्षेत्रं संक्रामन्ति । बुद्धानां भगवतां दर्शनायसत्त्वपरिपाचनाय बुद्धक्षेत्रपरिशोधनाय। अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रज्ञापारमितायां चरन्तश्चतुर्णां ध्यानानां लाभिनश्चतुर्णामप्रमाणानां चतसृणामारूप्यसमापत्तीनां लाभिनस्तेतानि* ध्यानाऽप्रमाणारूप्यसमापत्तीरनेकविधं विक्रीडन्ति ।

* ना इति पुस्तकम् ।

यदुत प्रथमं ध्यानं समापद्यन्ते ततः प्रथमध्यानाद्व्युत्थाय निरोधसमापत्तिं समापद्यन्ते। निरोधसमापत्तेर्व्युत्थाय द्वितीयं ध्यानं समापद्यन्ते। द्वितीयात् ध्यानाद्व्युत्थाय निरोधसमापत्तिं समापद्यन्ते। निरोधसमापत्तेर्व्युत्थाय तृतीयं ध्यानं समापद्यन्ते। तृतीयात् ध्यानाद्व्युत्थाय निरोधसमापत्तिं समापद्यन्ते। निरोधसमापत्तेर्व्युत्थाय चतुर्थं ध्यानं समापद्यन्ते। चतुर्थात् ध्यानाद्व्युत्थाय निरोधसमापत्तिं समापद्यन्ते। निरोधसमापत्तेर्व्युत्थायाऽऽकाशाऽऽनन्त्याऽऽयतनं समापद्यन्ते। आकाशाऽऽनन्त्याऽऽयतनाद्व्युत्थाय निरोधसमापत्तिं समापद्यन्ते। निरोधसमापत्तेर्व्युत्थाय विज्ञानाऽऽनन्त्याऽऽयतनं समापद्यन्ते। विज्ञानाऽऽनन्त्याऽऽयतनाद्व्युत्थाय निरोधसमापत्तिं समापद्यन्ते। निरोधसमापत्तेर्व्युत्थायाऽऽकिञ्चन्याऽऽयतनं समापद्यन्ते। आकिञ्चन्याऽऽयतनाद्व्युत्थाय निरोधसमापत्तिं समापद्यन्ते। निरोधसमापत्तेर्व्युत्थाय नैव संज्ञानासंज्ञाऽऽयतनं समापद्यन्ते। नैव संज्ञानासंज्ञाऽऽयतनाद्व्युत्थाय निरोधसमापत्तिं समापद्यन्ते। एवं खलु शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रज्ञापारमितायाञ्चरन्तउपायकौशलेन समन्वागताइमानि ध्यानानि अप्रमाणानि च समाधिसमापत्तीश्च विष्कन्द्य समापद्यन्ते।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाश्चतुर्णां स्मृत्युपस्थानानां लाभिनश्चतुर्णां सम्यक्प्रहाणानां लाभिनश्चतुर्णामृद्धिपादानां लाभिनः पञ्चानामिन्द्रियाणां लाभिनः पञ्चानां बलानां लाभिनः सप्तानां बोध्यङ्गानां लाभिनः आर्य्याऽष्टाऽङ्गमार्गस्य लाभिनः चतुर्णामार्य्यसत्यानां लाभिनः ध्यानानां लाभिनः चतुर्णामप्रमाणानां

लाभिनश्चतसृणामारूप्य समापत्तीनां लाभिनः अष्टानां विमोक्षाणां लाभिनः नवानामनुपूर्व्वविहारसमापत्तीनां लाभिनः शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखानां लाभिनः अभिज्ञानां लाभिनः समाधीनां लाभिनः धारणीमुखानां लाभिनः दशानां तथागतबलानां लाभिनः चतुर्णां वैशारद्यानां लाभिनः चतसृणां प्रतिसम्विदां लाभिनः अष्टादशानामावेणिकबुद्धधर्म्माणां लाभिनः त्रयाणां विमोक्षमुखानां लाभिनः न च स्रोत-आपत्तिफलमनुप्राप्नुवन्ति। न सकृदागामिफलमनुप्राप्नुवन्ति। नाऽनागामिफलमनुप्राप्नुवन्ति। नाऽर्हत्त्वमनुप्राप्नुवन्ति। न प्रत्येकबोधिमनुप्राप्नुवन्ति। प्रज्ञापारमितायां चरन्त उपाय कौशलेन परिग्टहीताः आर्य्याऽष्टाऽङ्गमार्गं सत्त्वेभ्य उपदर्शयन्ति येन ते सत्त्वाः स्रोतं आपत्तिफलमनुप्राप्नुवन्ति। सकृदागामिफलमनुप्रप्नुवन्ति। अनागामिफलमनुप्राप्नुवन्ति। अर्हत्त्वमनुप्राप्नुवन्ति। प्रत्येकबोधिमनुप्राप्नुवन्ति। यच्छारद्वतीपुत्र श्रावकप्रत्येकबुद्धानां फलप्राप्तिज्ञानं सा बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिः। इमे शारद्वतीपुत्र बोधिसत्त्वमहासत्त्वा अवैवर्त्तिकावेदितव्या। येऽनया प्रज्ञापारमितयैवं विहरन्ति।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वा ये षट्पारमिता सुस्थिता तुषितभवनं शोधयन्ति। ते खलु पुनः शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः भद्रकल्पिकावेदितव्याः।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रज्ञापारमितायां चरन्त श्चतुर्णां ध्यानानां लाभिन श्चतुर्णामप्रमाणानां लाभिन श्चतसृणामारूप्यसमापत्तीनां लाभिनः सप्तत्रिंशतां बोधिपक्षाणां धर्म्माणां

स्वामिनः पञ्चाभिज्ञानां स्वामिनो दशतथागतबलानां स्वामिन श्चतुर्णां वैशारद्यानां स्वामिन श्चतसृणां प्रतिसम्विदां स्वामिनः अष्टादशाऽऽवेणिक बुद्धधर्म्माणां स्वामिनः *तेऽचाऽनुबोधायचरन्ति चतुर्णां सत्यानां न च सत्यानि प्रतिविध्यन्ति। ते खलु पुनः शार-द्वतीपुत्र बोधिसत्त्वामहासत्त्वा एकजातिप्रतिबद्धावेदितव्याः।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वा षट्सु पारमितासु चरन्तो लोकधातोर्लोकधातुं संक्रामन्ति। तत्र सत्त्वान् बोधौ समा-दापयन्ति। बुद्धक्षेत्रञ्च परिशोधयन्ति। ते खलु पुनः शारद्वती-पुत्रबोधिसत्त्वामहात्त्वाः अप्रमेयै रसंख्येयैः कल्पैरनुत्तरां सम्यक् सम्बोधिमभिसम्बोत्स्यन्ते।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः षट्सुपारमितासु स्थितानित्यमुद्युक्ताः सत्त्वानां कृते। ते न कदाचिदनर्थोपसंहितां वाचमाभाषन्ते। नाऽप्यनर्थोपसंहितं कायवाङ्मनस्कर्म्मकुर्व्वन्ति।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः षट्सुपारमितासु-स्थिता स तत्रो द्युक्ताः सत्त्वानां कृते बुद्धक्षेत्रेण बुद्धक्षेत्रं संक्रामन्ति। सत्त्वानां चैव पापपथां च्छिन्दन्तः।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः षट्सुपारमितासु स्थिला दानपारमितायां पुरस्कृत्य सर्व्वसत्त्वानां सर्व्वसुखोपधान-मुपसंहरन्ति। अन्नमन्नाऽर्थिकेभ्यः पानं पानाऽर्थिकेभ्यः यानं याना-ऽर्थिकेभ्यः पुष्पं पुष्पाऽर्थिकेभ्यः गन्धं गन्धाऽर्थिकेभ्यः माल्यं माल्या-ऽर्थिकेभ्यः विलेपनं विलेपनाऽर्थिकेभ्यः शय्यासनं शय्यासनाऽर्थिभ्यः

---

* तेच इति च पुस्तके पाठः.

वस्त्रं वस्त्रार्थिकेभ्यः आभरणमाभरणार्थिकेभ्यः आजीविकं आजीविकार्थिकेभ्यः उपाश्रयमुपाश्रयार्थिकेभ्यः कल्पिकजीवितपरिष्कारानुपसंहरन्ति ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः ये षट् पारमितासुस्थित्वा शीलपारमितां पुरस्कृत्यसत्त्वान् कायवाङ्मनः संवरे प्रतिष्ठापयन्ति । अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वा ये षट्सुपारमितासु स्थित्वा क्षान्तिपारमितां पुरस्कृत्याक्रोधव्यापादे सत्त्वान् प्रतिष्ठापयन्ति ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः ये षट्सुपारमितासु स्थित्वा वीर्य्यपारमितां पुरस्कृत्य सर्व्वकुशलधर्माऽभियोगे सत्त्वान् प्रतिष्ठापयन्ति ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः ये षट्सु पारमितासु स्थित्वाध्यानपारमितां पुरस्कृत्य शमथैकाग्रतायां कामविवेके च सत्त्वान् प्रतिष्ठापयन्ति ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः ये षट्सुपारमितासु स्थित्वा प्रज्ञापारमितां पुरस्कृत्य यादृश एव तथागतविग्रहस्तादृशमात्मभावमभिनिर्म्माय नैरयिकाणां सत्त्वानां तिर्य्यग्योनिगतानां सत्त्वानां यामलौकिकानां सत्त्वानां सर्व्वदुर्गतिसमतिक्रमायधर्म्मं देशयन्ति ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः ये षट्सुपारमितासु स्थित्वा यादृशोबुद्धविग्रहस्तादृशमात्मभावमभिनिर्म्माय पूर्व्वस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राण्युपसंक्रम्य सत्त्वेभ्योधर्म्मं देशयन्ति ।

तथागतान् पर्य्युपासन्ते धर्म्मञ्च शृण्वन्ति। बोधिसत्त्वसंघञ्च बुद्धक्षेत्र-गुणव्यूहांश्च पश्यन्ति। ते तत्र बुद्धक्षेत्रेषु निर्म्मितानि गृहीत्वा उदारतराणि च विशिष्टतराणि च बुद्धक्षेत्राणि निष्पादयन्त्येकजातिप्रतिबद्धाश्च बोधिसत्त्वामहासत्त्वास्तत्र बुद्धक्षेत्रेषु निष्पद्यन्ते।

दक्षिणस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राण्युपसंक्रम्य सत्त्वेभ्योधर्म्मं देशयन्ति। तथागतान् पर्य्युपासन्ते धर्म्मञ्च शृण्वन्ति। बोधिसत्त्वसङ्घञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यन्ति। ते तत्र बुद्धक्षेत्रेषु निर्म्मितानि गृहीत्वा उदारतराणि च विशिष्टतराणि च बुद्धक्षेत्राणि निष्पादयन्त्येकजातिप्रतिलब्धा*श्च बोधिसत्त्वामहासत्त्वास्तत्र बुद्धक्षेत्रेषु निष्पद्यन्ते। पश्चिमायांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राण्युपसंक्रम्य सत्त्वेभ्योधर्म्मं देशयन्ति। तथागतान् पर्य्युपासन्ते। धर्म्मञ्च शृण्वन्ति बोधिसत्त्वसङ्घञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यन्ति। ते तत्र बुद्धक्षेत्रेषु निर्म्मितानि गृहीत्वा उदारतराणि च विशिष्टतराणि च बुद्धक्षेत्राणि निष्पादयन्त्येकजाति प्रतिबद्धाश्च बोधिसत्त्वामहासत्त्वाः तत्र बुद्धक्षेत्रेषु निष्पद्यन्ते। उत्तरस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राण्युपसंक्रम्य सत्त्वेभ्योधर्म्मं देशयन्ति। तथागतान् पर्य्युपासन्ते। धर्म्मञ्च शृण्वन्ति बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यन्ति। ते तत्र बुद्धक्षेत्रेषु निर्म्मितानि गृहीत्वा उदारतराणि च विशिष्टतराणि च बुद्धक्षेत्राणि निष्पादयन्त्येकजातिप्रतिलब्धाश्च बोधिसत्त्वामहासत्त्वाः तत्र बुद्धक्षेत्रेषु निष्पद्यन्ते। उत्तरपूर्व्वस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राण्युपसंक्रम्य सत्त्वेभ्योधर्म्मं देशयन्ति। तथागतान्

* प्रतिबद्धा इति ख, ग, घ, पुस्तकेषु पाठः एवं परत्र।

पर्य्युपासन्ते । धर्म्मञ्च शृण्वन्ति बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यन्ति । ते तत्र बुद्धक्षेत्रेषु निर्म्मितानि गृहीला उदारतराणि च विशिष्टतराणि च बुद्धक्षेत्राणि निष्पादयन्ति। एकजातिप्रतिलब्धाश्च बोधिसत्त्वामहासत्त्वास्तत्र बुद्धक्षेत्रेषु निष्पद्यन्ते। पूर्व्वदक्षिणस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राण्युपसंक्रम्य सत्त्वेभ्योधर्म्मं देशयन्ति। तथागतान् पर्य्युपासन्ते। धर्म्मञ्च शृण्वन्ति। बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यन्ति। ते तत्र बुद्धक्षेत्रेषु निर्म्मितानि गृहीला उदारतराणि च विशिष्टतराणि च बुद्धक्षेत्राणि निष्पादयन्ति। एकजातिप्रतिलब्धाश्च बोधिसत्त्वामहासत्त्वाः तत्र बुद्धक्षेत्रेषु निष्पद्यन्ते। दक्षिणपश्चिमायांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राण्युपसंक्रम्य सत्त्वेभ्योधर्म्मं देशयन्ति। तथागतान् पर्य्युपासन्ते धर्म्मं शृण्वन्ति बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यन्ति। ते तत्र बुद्धक्षेत्रेषु निर्म्मितानि गृहीला उदारतराणि च विशिष्टतराणि च बुद्धक्षेत्राणि निष्पादयन्ति। एकजातिप्रतिलब्धाश्च बोधिसत्त्वामहासत्त्वास्तत्र बुद्धक्षेत्रेषु निष्पद्यन्ते। पश्चिमोत्तरस्यांदिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राण्युपसंक्रम्य सत्त्वेभ्योधर्म्मं देशयन्ति। तथागतान् पर्य्युपासन्ते। धर्म्मञ्च शृण्वन्ति। बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहां पश्यन्ति। ते तत्र बुद्धक्षेत्रेषु निर्म्मितानि गृहीला उदारतराणि च विशिष्टतराणि च बुद्धक्षेत्राणि निष्पादयन्ति। एकजाति प्रतिलब्धाश्च बोधिसत्त्वामहासत्त्वाः तत्र बुद्धक्षेत्रेषु निष्पद्यन्ते। अधस्ताद्दिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राण्युपसंक्रम्य सत्त्वेभ्योधर्म्मं देशयन्ति। तथागतान् पर्य्युपासन्ते। धर्म्मञ्च शृण्वन्ति। बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च

पश्यन्ति। ते तत्र बुद्धक्षेत्रेषु निर्म्मितानि गृहीत्वा उदारतराणि च विशिष्टतराणि च बुद्धक्षेत्राणि निष्पादयन्ति। एकजाति प्रतिलब्धास्च बोधिसत्त्वामहासत्त्वाः तत्र बुद्धक्षेत्रेषु निष्पद्यन्ते। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमानि बुद्धक्षेत्राण्युपसंक्रम्य सत्त्वेभ्योधर्म्मं देशयन्ति। तथागतान् पर्य्युपासन्ते। धर्म्मञ्च शृण्वन्ति। बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यन्ति। ते तत्र बुद्धक्षेत्रेषु निर्म्मि*तानि गृहीत्वा उदारतराणि च विशिष्टतराणि च बुद्धक्षेत्राणि निष्पादयन्त्येकजाति प्रतिलब्धास्च बोधिसत्त्वामहासत्त्वास्तत्र बुद्धक्षेत्रेषु निष्पद्यन्ते।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः षट्सु पारमितासु चरन्तोद्वात्रिंशतामहापुरुषलक्षणैः समन्वागताभूत्वा उत्तमैरपरिशुद्धेन्द्रियैः समन्वागता भवन्ति। तैः सैः परिशुद्धैरात्मभावैर्व्वहुजनस्य प्रीतिप्रसादं जनयन्ति। ते च वहुजनस्य प्रियाश्च भवन्ति†। मनापास्च ते सत्त्वास्तेनैव चित्तप्रसादकुशलमूलेनाऽपूर्व्वेण त्रिभिर्यानैः परिनिर्व्वान्ति। एवं खलु शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता कायपरिशुद्धौ शिक्षितव्यं। वाक्यपरिशुद्धौ शिक्षितव्यं। मनः परिशुद्धौ शिक्षितव्यं।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः षट्सु पारमितासु

---

* क्वचित् निर्म्मितानीति क्वचित् निमित्तानीति क च पुस्तके पाठः।

† मनापाइति पाठः सर्व्वेषु पुस्तकेषु। शब्दोऽयं कस्मिंश्चिदर्थविशेषे पारिभाषिकः।

चरन्तः उत्तप्तानीन्द्रियाणि प्रतिलभन्ते तैरुत्तप्तैरिन्द्रियैरात्मानमुत्कर्षयन्ति न परान् पंसयन्ति* ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रथमचित्तोत्पादमुपादायदानपारमितायां शीलपारमितायाञ्च स्थित्वा न कदाचिद्दारिद्र्यं गच्छन्ति । न दुर्गतिविनिपातं प्रपतन्ति । यावन्नाऽवैवर्त्तिकभूमिमनुप्राप्नुवन्ति ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रथमचित्तोत्पादमुपादाय दशकुशलान् कर्मपथान् न जातूत्सृजन्ति । यावन्नाऽवैवर्त्तिकभूमिमनुप्राप्नुवन्ति ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः दानपारमितायां शीलपारमितायाञ्च स्थित्वा राजानोभवन्ति चक्रवर्त्तिनः । ते दशकुशलेषु कर्मपथेषु सत्त्वान् प्रतिष्ठापयन्ति । दानेन च प्रियवद्यतया सत्त्वान् संगृह्णन्ति ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः दानपारमितायां शीलपारमितायाञ्च स्थित्वाऽनेकानि चक्रवर्त्तिराज्यानि परिगृह्णन्त्यनेकानि चक्रवर्त्तिराज्यशतसहस्राणि कारयन्ति । तत्र च स्थित्वाऽनेकानि बुद्धकोटीशतसहस्राण्यारागयन्ति । तांश्च बुद्धान् भगवतः सत्कुर्व्वन्ति गुरू कुर्व्वन्ति मानयन्ति पूजयन्ति सर्व्वोपकरणैः सर्व्वपूजाभिश्च ।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः षट्सु पारमितासु स्थित्वा सत्वानां मिथ्यादृष्टिगतस्थानां धर्म्माऽवभासं कुर्व्वन्ति । आत्मना

* पसयन्ति, बाधन्ते इत्यर्थं सम्भाव्यते ।

च तेन धर्म्माऽवभासेन न कदाचिदिरहिता भवन्ति। यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते। अयं शारद्वतीपुत्र बोधिसत्त्वानां महासत्त्वानामुदयोबुद्धधर्म्मेषु। तस्मात्तर्हि शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता साऽवद्यानां कायवाङ्मनस्कर्म्मणामवकाशोन दातव्यः। एवमुक्ते आयुष्माञ्छारद्वतीपुत्रोभगवन्तमेतद्वोचत्। कतमं भगवन् बोधिसत्त्वस्य महासत्त्वस्य साऽवद्यं* कायकर्म्म साऽवद्यं वाक्कर्म्म साऽवद्यं मनः कर्म्म। भगवानाह। यदा शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्यैवं भवति। अयं कायो येन कायारम्भं कुर्य्यां। इयं वाग्यया वागारम्भं कुर्य्यां। इदं मनो येन मन आरम्भं कुर्य्यां। अयं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य साऽवद्यकायवाङ्मनकर्म्मारम्भः। न हि शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् कायमुपलभते। न वाचमुपलभते। न चित्तमुपलभते। येन कायेन यया वाचा येन मनसा मात्सर्य्यचित्तमुत्पादयेत् दौःशील्यचित्तं व्यापादचित्तं कौशीद्यचित्तं विक्षेपचित्तं दौष्प्रज्ञचित्तमुत्पादयेत् नैवं शारद्वतीपुत्र वेदितव्यम्। यद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् कायदौष्ठुल्यमुत्पादयेत् वाग्दौष्ठुल्यमुत्पादयेत् मनोदौष्ठुल्यमुत्पादयेत् नेदं स्थानं विद्यते। तत्कस्य हेतोस्तथाहि शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वाः षट्सु पारमितासु चरन् कायदौष्ठुल्यं शोधयति वाग्दौष्ठुल्यं

---

* साऽवद्यं निन्दनीयं। नञ्पूर्व्वस्य वदेर्यप्रत्ययान्तोऽवद्यनिपातः गर्हणीयार्थे।

† साऽरऽवद्यं वाक्कर्म्म साऽरऽवद्यं मनः कर्म्म ख पुस्तके।

शोधयति मनोदौष्ठुल्यं शोधयति। इदं बोधिसत्त्वस्य महासत्त्वस्या-ऽनवद्यं कायकर्म्म अनवद्यं वाक्कर्म्म अनवद्यं मनस्कर्म्म। आह कथं पुनर्भगवन् बोधिसत्त्वोमहासत्त्वः कायदौष्ठुल्यं शोधयति वाग्दौष्ठुल्यं शोधयति मनोदौष्ठुल्यं शोधयति। भगवानाह यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो न कायमुपलभते न वाचमुपलभते न चित्त-मुपलभते। एवं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः कायदौष्ठुल्यं शोधयति वाग्दौष्ठुल्यं शोधयति मनोदौष्ठुल्यं शोधयति।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रथमचित्तोत्पाद-मुपादाय दशकुशलान् कर्म्मपथान् समादाय वर्त्तते। न श्रावकचित्तं वा प्रत्येकबुद्धचित्तं वोत्पादयति। सततसमितञ्चाऽस्य सर्व्वसत्त्वेषु महाकरुणाचित्तं प्रत्युपस्थितं भवति। एवं बोधिसत्त्वस्य महासत्त्वस्य कायदौष्ठुल्यं वाग्दौष्ठुल्यं मनोदौष्ठुल्यं परिशुद्धमिति वदामि।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रज्ञापारमितायां चरन्तो बोधिसत्त्वमार्गं परिशोधयमानाः दानपारमितायां चरन्ति। शीलपारमितायां चरन्ति। क्षान्तिपारमितायां चरन्ति। वीर्य्यपारमितायां चरन्ति। ध्यानपारमितायां चरन्ति। आह कतमोभगवन् बोधिसत्त्वस्य महासत्त्वस्य बोधिमार्गः। भगवानाह। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न कायमुपलभते। न वाचमुपलभते। न चित्तमुपलभते। न दानपारमितामुपलभते। न शीलपारमितामुपलभते। न क्षान्ति-पारमितामुपलभते। न वीर्य्यपारमितामुपलभते। न ध्यानपार-मितामुपलभते। न प्रज्ञापारमितामुपलभते। न श्रावकयानमुप-

लभते। न प्रत्येकयानमुपलभते। न सम्यक् सम्बुद्धयानमुपलभते। अयं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य बोधिमार्गः। यदुत सर्व्वधर्म्माऽनुपलम्भतो* अनायूहानिर्यूहता। अनेन शारद्वतीपुत्र मार्गेण बोधिसत्त्वामहासत्त्वाः षट्सु पारमितासु चरन्तो गच्छन्ति। ते न शक्यां केनचिद्दमर्द्दितुं। आह कथं चरन्तो भगवन् बोधिसत्त्वामहासत्त्वाः अनवमर्द्या भवन्ति। भगवानाह। यदा बोधिसत्त्वामहासत्त्वाः षट्सु पारमितासु चरन्तो न रूपं मन्यन्ते न वेदनां मन्यन्ते न संज्ञां मन्यन्ते न संस्कारान् मन्यन्ते न विज्ञानं मन्यन्ते चक्षूरूपमपि न मन्यन्ते। श्रोत्रशब्दानपि न मन्यन्ते। घ्राणगन्धानपि न मन्यन्ते। जिह्वारसानपि न मन्यन्ते। कायस्पर्शानपि न मन्यन्ते। मनोधर्म्मानपि न मन्यन्ते। पृथिवीधातुं न मन्यन्ते। अब्धातुं न मन्यन्ते। तेजोधातुं न मन्यन्ते। वायुधातुं न मन्यन्ते। आकाशधातुं न मन्यन्ते। विज्ञानधातुं न मन्यन्ते। चक्षुर्धातुं न मन्यन्ते। रूपधातुं न मन्यन्ते। चक्षुर्विज्ञानधातुं न मन्यन्ते। श्रोत्रधातुं न मन्यन्ते। शब्दधातुं न मन्यन्ते। श्रोत्रविज्ञानधातुं न मन्यन्ते। घ्राणधातुं न मन्यन्ते। गन्धधातुं न मन्यन्ते। घ्राणविज्ञानधातुं न मन्यन्ते। जिह्वाधातुं न मन्यन्ते। रसधातुं न मन्यन्ते। जिह्वाविज्ञानधातुं न मन्यन्ते। कायधातुं न मन्यन्ते। स्प्रष्टव्यधातुं न मन्यन्ते। कायविज्ञानधातुं न मन्यन्ते। मनोधातुं न

---

* सर्व्वधर्म्मानुपलभते इति ख, ग, घ पाठः।

† शक्या इति युक्तं प्रतिभाति।

मन्यन्ते । धर्म्मधातुं न मन्यन्ते । मनोविज्ञानधातुं न मन्यन्ते । प्रतीत्यसमुत्पादं* न मन्यन्ते । दानं न मन्यन्ते । शीलं न मन्यन्ते । क्षान्तिं न मन्यन्ते । वीर्य्यं न मन्यन्ते । ध्यानं न मन्यन्ते । प्रज्ञां न मन्यन्ते । अध्यात्मशून्यतां न मन्यन्ते । वहिर्द्धाशून्यतां न मन्यन्ते । अध्यात्मवहिर्द्धाशून्यतां न मन्यन्ते । शून्यताशून्यतां न मन्यन्ते । महाशून्यतां न मन्यन्ते । परमार्थशून्यतां न मन्यन्ते । संस्कृतशून्यतां न मन्यन्ते । असंस्कृतशून्यतां न मन्यन्ते । अत्यन्तशून्यतां न मन्यन्ते । अनवराग्रशून्यतां न मन्यन्ते । अनवकारशून्यतां न मन्यन्ते । प्रकृतिशून्यतां न मन्यन्ते । सर्व्वधर्म्मशून्यतां न मन्यन्ते । स्वलक्षणशून्यतां न मन्यन्ते । अनुपलम्भशून्यतां न मन्यन्ते ।

---

* हेतूपनिबन्धनस्य च संग्राहकसूत्रम् । "उत्पादाद्वा तथागतानामनुत्पादाद्वास्थितैवैषां धर्म्माणां धर्म्मताधर्म्मस्थितिताधर्म्मनियामकता च प्रतीत्य समुत्पादाऽनुलोमतेति ।" तथागतानां बुद्धानां मते धर्म्माणां कार्य्यकारणरूपाणां या धर्म्मता कार्य्यकारणभावरूपा एषोत्पादादनुत्पादाद्वास्थिता । यस्मिन् सति यदुत्पद्यते तत्तस्य कारणस्य कार्य्यमिति धर्म्मतेत्यस्य विवरणम् । धर्म्मस्य कार्य्यस्य कार्य्यस्य कारणानतिक्रमेण स्थितिः । धर्म्मस्य कारणस्य कार्य्यं प्रतिनियामकता । न त्वयं कार्य्यकारणभावश्चेतनमन्तरेण न सम्भवतीत्यत उक्तं कारणे सति तत्प्रतीत्य प्राप्यसमुत्पादेऽनुलोमता अनुसारिता या सैव धर्म्मता उत्पादादनुत्पादाद्वा धर्म्माणां स्थिता । न वाऽत्र कश्चिच्चेतनोऽधिष्ठातोपलभ्यते इति सूत्रार्थः । यथा प्रतीत्य समुत्पादस्य हेतूपनिबन्धः । वीजादङ्कुरोऽङ्कुरात्काण्डं काण्डान्नालो नालाद्गर्भस्ततः पुष्पं ततः फलमिति :— सर्व्वदर्शनसंग्रहः ।

अभावशून्यतां न मन्यन्ते। स्वभावशून्यतां न मन्यन्ते। अभावस्वभावशून्यतां न मन्यन्ते। चत्वारि स्मृत्युपस्थानानि न मन्यन्ते। चत्वारि सम्यक् प्रहाणानि न मन्यन्ते। चतुरऋद्धिपादान् न मन्यन्ते। पञ्चेन्द्रियाणि न मन्यन्ते। सप्तबोध्यङ्गानि न मन्यन्ते। आर्य्याऽष्टाऽङ्गमार्गं न मन्यन्ते। चत्वार्य्यार्य्यसत्यानि न मन्यन्ते। चत्वारिध्यानानि न मन्यन्ते। चत्वार्य्यप्रमाणानि न मन्यन्त। चतस्रश्चारूप्यसमापत्तीर्न मन्यन्ते। अष्टौविमोक्षान्न मन्यन्ते। नवाऽनुपूर्व्वविहारसमापत्तीर्न मन्यन्ते। शून्यतां न मन्यन्ते। आनिमित्तं न मन्यन्ते। अप्रणिहितं न मन्यन्ते। अभिज्ञां न मन्यन्ते। धारणीमुखानि न मन्यन्ते। दश तथागतबलानि न मन्यन्ते। चत्वारि वैशारद्यानि न मन्यन्ते। चतस्रः प्रतिसम्विदोन मन्यन्ते। महामैत्रीं न मन्यन्ते। महाकरुणां न मन्यन्ते। अष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् न मन्यन्ते। स्रोतआपत्तिफलं न मन्यन्ते। सकृदागामिफलं न मन्यन्ते। अनागामिफलं न मन्यन्ते। अर्हत्त्वं न मन्यन्ते। प्रत्येकबोधिं न मन्यन्ते। मार्गाऽऽकारज्ञतां न मन्यन्ते। सर्व्वाऽऽकारज्ञतां न मन्यन्ते। अनुत्तरां सम्यक्सम्बोधिं न मन्यन्ते। संसारं न मन्यन्ते। निर्व्वाणं न मन्यन्ते। एवं खलु शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः षड्भिः पारमिताभिर्व्विवर्द्धन्ते। न च केनचिद्दवमर्द्यन्ते।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः षट्सु पारमितासु स्थित्वा सर्व्वज्ञज्ञानं परिपूरयन्ति। येन ज्ञानेन समन्वागता न जालपायेषूपपद्यन्ते। न मनुष्यदारिद्र्यमनुभवन्ति। न तथारूप-

मात्मभावं परिगृह्णन्ति येनात्मभावेन निन्दनीया भवन्ति सदेवमानुषाऽसुरस्य लोकस्य। अथायुष्मान्शारद्वतीपुत्रोभगवन्तमेतद्वोचत्। कतमं भगवन् बोधिसत्त्वस्य महासत्त्वस्य सर्व्वज्ञज्ञानं येन ज्ञानेन समन्वागताबोधिसत्त्वामहासत्त्वा न जात्वपायेषूपपद्यन्ते। न मनुष्यदारिद्र्यमनुभवन्ति। न तथारूपमात्मभावं परिगृह्णन्ति येनात्मभावेन निन्दनीयो भवति सदेवमानुषासुरस्य लोकस्य।

भगवानाह। येन शारद्वतीपुत्र ज्ञानेन समन्वागतो बोधिसत्त्वोमहासत्त्वः पूर्व्वस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु गङ्गानदीवालुकोपमांस्तथागतानर्हतः सम्यक् सम्बुद्धान् पश्यति। धर्म्मञ्च शृणोति बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यति। येन ज्ञानेन समन्वागतो बोधिसत्त्वोमहासत्त्वो दक्षिणस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु गङ्गानदीवालुकोपमांस्तथागतानर्हतः सम्यक् सम्बुद्धान् पश्यति। धर्म्मञ्च शृणोति बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यति। येन ज्ञानेन समन्वागतो बोधिसत्त्वोमहासत्त्वः पश्चिमायांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु गङ्गानदीवालुकोपमांस्तथागतानर्हतः सम्यक् सम्बुद्धान् पश्यति। धर्म्मञ्च शृणोति। बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यति। येन ज्ञानेन समन्वागतो बोधिसत्त्वोमहासत्त्व उत्तरस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु गङ्गानदीवालुकोपमांस्तथागतानर्हतः सम्यक् सम्बुद्धान् पश्यति। धर्म्मञ्च शृणोति। बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यति। येन ज्ञानेन समन्वागतो बोधिसत्त्वोमहासत्त्व उत्तरपूर्व्वस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु

गङ्गानदीवालुकोपमांस्तथागतानर्हतः सम्यक् सम्बुद्धान् पश्यति । धर्मञ्च शृणोति । बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यति । येन ज्ञानेन समन्वागतो बोधिसत्त्वोमहासत्त्वो दक्षिणपूर्व्वस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु गङ्गानदीवालुकोपमांस्तथागतानर्हतः सम्यक् सम्बुद्धान् पश्यति । धर्मञ्च शृणोति । बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यति । येन ज्ञानेन समन्वागतो बोधिसत्त्वोमहासत्त्वो दक्षिणपश्चिमायांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु गङ्गानदीवालुकोपमांस्तथागतानर्हतः सम्यक् सम्बुद्धान् पश्यति । धर्मञ्च शृणोति । बोधिसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यति । येन ज्ञानेन समन्वागतो बोधिसत्त्वोमहासत्त्वः पश्चिमोत्तरस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु गङ्गानदीवालुकोपमांस्तथागतानर्हतः सम्यक् सम्बुद्धान् पश्यति । धर्मञ्च शृणोति । बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यति । येन ज्ञानेन समन्वागतो बोधिसत्त्वोमहासत्त्वोऽधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु गङ्गानदीवालुकोपमांस्तथागतानर्हतः सम्यक् सम्बुद्धान् पश्यति । धर्मञ्च शृणोति । बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यति । येन ज्ञानेन समन्वागतो बोधिसत्त्वोमहासत्त्व उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु गङ्गानदीवालुकोपमांस्तथागतानर्हतः सम्यक् सम्बुद्धान् पश्यति । धर्मञ्च शृणोति । बोधिसत्त्वसंघञ्च बुद्धक्षेत्रगुणव्यूहांश्च पश्यति । येन ज्ञानेन समन्वागतो बोधिसत्त्वोमहासत्त्वो न बुद्धसंज्ञामुत्पादयति । न संघसंज्ञामुत्पादयति । न श्रावकसंज्ञामुत्पादयति । न प्रत्येकबुद्धसंज्ञामुत्पादयति । न

बोधिसत्त्वसंज्ञामुत्पादयति। न बुद्धसंज्ञामुत्पादयति। (?) नात्म-संज्ञामुत्पादयति। न परसंज्ञामुत्पादयति। न बुद्धक्षेत्रसंज्ञामुत्पादयति। येन ज्ञानेन समन्वागतो बोधिसत्त्वोमहासत्त्वोदानपारमितायां चरति न दानपारमितामुपलभते। शीलपारमितायां चरति न शीलपारमितामुपलभते। क्षान्तिपारमितायां चरति न क्षान्तिपारमितामुपलभते। वीर्य्यपारमितायां चरति न वीर्य्य-पारमितामुपलभते। ध्यानपारमितायां चरति न ध्यानपारमितामुपलभते। प्रज्ञापारमितायां चरति न प्रज्ञापारमितामुपलभते। अध्यात्मशून्यतां भावयति नाऽध्यात्मशून्यतामुपलभते। वहिर्द्धाशून्यतां भावयति न वहिर्द्धाशून्यतामुपलभते। अध्यात्मवहिर्द्धाशून्यतां भावयति नाऽध्यात्मवहिर्द्धाशून्यतामुपलभते। शून्यताशून्यतां भावयति न शून्यताशून्यतामुपलभते। महाशून्यतां भावयति न महाशून्यतामुपलभते। परमार्थशून्यतां भावयति न परमार्थशून्यतामुपलभते। संस्कृतशून्यतां भावयति न संस्कृतशून्यतामुपलभते। असंस्कृतशून्यतां भावयति नाऽसंस्कृतशून्यतामुपलभते। अत्यन्तशून्यतां भावयति नाऽत्यन्तशून्यतामुपलभते। अनवराग्रशून्यतां भावयति नाऽनवराग्रशून्यतामुपलभते। अनवकारशून्यतां भावयति नाऽनवकारशून्यतामुपलभते। प्रकृतिशून्यतां भावयति न प्रकृतिशून्यतामुपलभते। सर्व्वधर्मशून्यतां भावयति न सर्व्वधर्मशून्यतामुपलभते। स्वलक्षणशून्यतां भावयति न स्वलक्षणशून्यतामुपलभते। अनुपलम्भशून्यतां भावयति नाऽनुपलम्भशून्यतामुपलभते। अभावशून्यतां भावयति नाऽभावशून्यतामुपलभते।

स्वभावशून्यतां भावयति न स्वभावशून्यतामुपलभते । अभावस्वभावशून्यतां भावयति नाऽभावस्वभावशून्यतामुपलभते । चत्वारि स्मृत्युपस्थानानि भावयति न स्मृत्युपस्थानान्युपलभते । चत्वारि सम्यक्प्रहाणानि भावयति न च *सम्यक्प्रहाणान्युपलभते । चतुरऋद्धिपादान् भावयति नर्द्धिपादानुपलभते । पञ्चेन्द्रियाणि भावयति न चेन्द्रियाण्युपलभते । पञ्चबलानि भावयति न च बलान्युपलभते । सप्त बोध्यङ्गानि भावयति न च बोध्यङ्गान्युपलभते । आर्य्याऽष्टाऽङ्गमार्गं भावयति नाऽऽर्य्याऽष्टाऽङ्गमार्गमुपलभते । आर्य्यसत्यानि भावयति नचार्य्यसत्यान्युपलभते । ध्यानानि भावयति न च ध्यानान्युपलभते । अप्रमाणानि भावयति नचाऽप्रमाणान्युपलभते । आरूप्यसमापत्तीर्भावयति नचारूप्यसमापत्तीरुपलभते । अष्टौ विमोक्षान् भावयति नचाऽष्टौ विमोक्षानुपलभते । नवाऽनुपूर्व्वविहारसमापत्तीर्भावयति न च नवाऽनुपूर्व्वविहारसमापत्तीरुपलभते । शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखानि भावयति न च शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखान्युपलभते । अभिज्ञां भावयति नचाऽभिज्ञामुपलभते । समाधीन् भावयति न च समाधीनुपलभते । धारणीमुखानि भावयति न च धारणीमुखान्युपलभते । दश तथागतबलानि भावयति न च तथागतबलान्युपलभते । चत्वारि वैशारद्यानि भावयति न च वैशारद्यान्युपलभते । चतस्रः प्रतिसम्बिदोभावयति न च प्रतिसम्बिदउपलभते । महामैत्रीं भावयति न च महामैत्रीमुपलभते । महाकरुणां भावयति न च

* क्वचिन्न इति क्वचिन्न च इति पाठोदृश्यते ।

महाकरुणामुपलभते। अष्टादशाऽऽवेणिकान् बुद्धधर्मान् भावयति नचाऽष्टादशाऽऽवेणिकान् बुद्धधर्मानुपलभते। स्रोतआपत्तिफलं भावयति न च स्रोतआपत्तिफलमुपलभते। सकृदागामिफलं भावयति न च सकृदागामिफलमुपलभते। अनागामिफलं भावयति नचाऽनागामिफलमुपलभते। अर्हत्वं भावयति नचाऽर्हत्वमुपलभते। प्रत्येकबोधिं भावयति न च प्रत्येकबोधिमुपलभते। मार्गाऽऽकारज्ञतां भावयति न च मार्गाऽऽकारज्ञतामुपलभते। सर्व्वाऽऽकारज्ञतां भावयति न च सर्व्वाऽऽकारज्ञतामुपलभते। इदं बोधिसत्त्वस्य महासत्त्वस्य ज्ञानं। येन ज्ञानेन समन्वागतो बोधिसत्त्वो-महासत्त्वः सर्व्वबुद्धधर्मांश्च परिपूरयति सर्व्वबुद्धधर्मांश्च न समनुपश्यति।

अस्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रज्ञापारमितायां चरन्तः पञ्च चक्षूंषि प्रतिलभन्ते। परिशोधयन्ति। कतमानि च पञ्चचक्षूंषि यदुतमांस चक्षुर्दिव्यं चक्षुः प्रज्ञाचक्षुर्धर्मचक्षुर्बुद्धचक्षुः।

आह कतमा भगवन् बोधिसत्त्वस्य महासत्त्वस्य मांसचक्षुष्परिशुद्धिः। भगवानाह। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो योजनशतं मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वो-महासत्त्वो दियोजनशतं मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वस्त्रीणि योजनशतानि मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोयश्चत्वारि योजनशतानि मांसचक्षुषा पश्यति। अस्ति शारद्वीपुत्र बोधिसत्त्वोमहासत्त्वो यः पञ्च योजनशतानि मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र

बोधिसत्त्वोमहासत्त्वो यः षड्योजनशतानि मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो यः सप्त योजनशतानि मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो योऽष्टौ योजनशतानि मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो यो नवयोजनशतानि मांसचक्षुषापश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो यो दश योजनशतानि मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो यो योजनसहस्रं मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो यो जम्बुद्वीपं मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो यो द्वौ द्वीपौ मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो यः साहस्रं लोकधातुं मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो यो द्विसाहस्रं लोकधातुं मांसचक्षुषा पश्यति। अस्ति शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोयस्त्रिसाहस्रं महासहस्रं लोकधातुं मांसचक्षुषा पश्यति। इयं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य मांसचक्षुःपरिशुद्धिः।

आह। कतमा भगवन् बोधिसत्त्वस्य महासत्त्वस्य दिव्यचक्षुःपरिशुद्धिः। भगवानाह। यच्छारद्वतीपुत्र चातुर्महाराजकायिकानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यत्त्रायस्त्रिंशानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यद् यामानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यत्तुषितानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यन्निर्माणरतीनां

देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यत्परनिर्मितवशवर्त्तिनां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यद्ब्रह्मकायिकानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यद्ब्रह्मपुरोहितानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यद्ब्रह्मपार्षद्यानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यन्महाब्रह्मणां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यदाभानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यत्परीत्ताभानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यदप्रमाणाभानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यदाभास्वराणां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यच्छुभानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यत्परीत्तशुभानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यदप्रमाणशुभानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यच्छुभकृत्स्नानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यद्बृहाणां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यत्परीत्त बृहाणां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यदप्रमाण बृहाणां देवानां दिव्य चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यत् बृहत्फलानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यदबृहाणां देवानां दिव्य चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यदतपानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यत् सुदृशानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यत् सुदर्शनानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति। यदकनिष्ठानां देवानां दिव्यं चक्षुस्तद्बोधिसत्त्वः प्रजानाति।

यत् पुनः शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षु-स्तच्चातुर्महाराजकायिका देवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तत्त्रायस्त्रिंशाद्देवा न जानन्ति। यद्बोधि-सत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तद्यामादेवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तत्तुषितादेवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तन्निर्माणरतयो देवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तत्परनिर्मित-वशवर्त्तिनो देवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तद्ब्रह्मकायिकादेवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तद्ब्रह्मपुरोहितादेवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्य चक्षुस्तद्ब्रह्मपार्षद्यादेवा न प्रजानन्ति। यद्बोधि-सत्त्वस्य महासत्त्वस्य दिव्य चक्षुस्तन्महाब्रह्माणोदेवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्य चक्षुस्तदाभादेवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तत्परीत्ताभादेवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तदप्रमाणाभा-देवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तदा-भास्वरादेवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तच्छुभादेवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तत्परीत्तशुभादेवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तदप्रमाणशुभादेवा न प्रजानन्ति। यद्बोधिसत्त्वस्य महा-सत्त्वस्य दिव्य चक्षुस्तत् शुभकृत्स्नादेवा न प्रजानन्ति। यद्बोधि-सत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तद्वृहा देवा न प्रजानन्ति।

यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तत्परीत्तशुभादेवा न प्रजानन्ति । यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तदप्रमाणशुभादेवा न प्रजानन्ति । यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तद्बृहत्फलादेवा न प्रजानन्ति । यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्य चक्षुस्तदबृहादेवा न प्रजानन्ति । यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तदतपादेवा न प्रजानन्ति । यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तत्सुदृशादेवा न प्रजानन्ति । यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तत् सुदर्शनादेवा न प्रजानन्ति । यद्बोधिसत्त्वस्य महासत्त्वस्य दिव्यं चक्षुस्तदकनिष्ठादेवा न प्रजानन्ति ।

येन दिव्येन चक्षुषा समन्वागतो बोधिसत्त्वोमहासत्त्वः पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानां च्युतोपपादं प्रजानाति। येन दिव्येन चक्षुषा समन्वागतो बोधिसत्त्वो महासत्त्वो दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानां च्युतोपपादं प्रजानाति । येन दिव्येन चक्षुषा समन्वागतो बोधिसत्त्वोमहासत्त्वः पश्चिमायां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानां च्युतोपपादं प्रजानाति। येन दिव्येन चक्षुषा समन्वागतो बोधिसत्त्वोमहासत्त्व उत्तरस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानां च्युतोपपादं प्रजानाति। येन दिव्येन चक्षुषा समन्वागतो बोधिसत्त्वोमहासत्त्व उत्तरपूर्व्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानां च्युतोपपादं प्रजानाति । येन दिव्येन चक्षुषा समन्वागतो बोधिसत्त्वो महासत्त्वः पूर्व्वदक्षिणस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानां च्युतोपपादं

प्रजानाति । येन दिव्येन चक्षुषा समन्वागतो बोधिसत्त्वोमहासत्त्वो दक्षिणपश्चिमायां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानां च्युतोपपादं प्रजानाति । येन दिव्येन चक्षुषा समन्वागतो बोधिसत्त्वोमहासत्त्वः पश्चिमोत्तरस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानां च्युतोपपादं प्रजानाति। येन दिव्येन चक्षुषा समन्वागतो बोधिसत्त्वोमहासत्त्वोऽधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानां च्युतोपपादं प्रजानाति। येन दिव्येन चक्षुषा समन्वागतो बोधिसत्त्वोमहासत्त्व उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानां च्युतोपपादं प्रजानाति। इयं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य दिव्यचक्षुःपरिशुद्धिः ।

आह । कतमा भगवन् बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञाचक्षुःपरिशुद्धिः । भगवानाह । येन शारद्वतीपुत्र चक्षुषा समन्वागतो बोधिसत्त्वोमहासत्त्वः संस्कृतोऽसंस्कृतो वा कुशलो वा ऽकुशलो वा सावद्यो वा ऽनवद्यो वा संक्लेशो वा निःक्लेशो वा लौकिको वा लोकोत्तरो वा सास्रवो वा ऽनास्रवो वा तद्धर्मं न प्रजानाति । येन प्रज्ञाचक्षुषा न कश्चिद्धर्मोऽदृष्टो ऽश्रुतो ऽविज्ञातो भवेत् । इयं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञाचक्षुःपरिशुद्धिः ।

आह । कतमा बोधिसत्त्वस्य महासत्त्वस्य धर्मचक्षुःपरिशुद्धिः । भगवानाह । इह शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो धर्मचक्षुषा प्रजानात्ययं पुद्गलः श्रद्धानुसारी अयं पुद्गलो धर्मानुसारी अयं पुद्गलः शून्यताविहारी। अस्य पुद्गलस्य शून्यताविमोक्षमुखेन पञ्चेन्द्रियाण्युत्पत्स्यन्ते । पञ्चभिरिन्द्रियैः आनन्तर्यसमाधिं प्रत्युत्या-

नन्तर्य्येण समाधिना विमुक्तिज्ञानदर्शनमुत्पादयिष्यति। विमुक्तिज्ञानदर्शनेन त्रीणि संयोजनानि प्रहास्यन्ति* सत्कायदृष्टिं विचिकित्सां शीलव्रतपरामर्शम्। अयमुच्यते पुद्गलः श्रोतआपन्नः। स भावनामार्गं प्रतिलभ्य कामरागव्यापादतनुलं करोत्ययं पुद्गलः सकृदागामी। स तेनैव मार्गेणाऽधिमात्रभावितेन कामरागव्यापादप्रहाणमागमिष्यत्ययं पुद्गलोऽनागामी। स तेनैव मार्गेणाधिमात्रभावितेन रूपरागमारूप्यरागमविद्यां मानौद्धत्यञ्च प्रहास्यत्ययं पुद्गलोऽर्हन्। अयमानिमित्तविहारी। अस्य पुद्गलस्य नानिमित्तेन विमोक्षमुखेन पञ्चेन्द्रियाण्युत्पत्स्यन्ते। पञ्चभिरिन्द्रियैरानन्तर्य्यसमाधिं प्रप्स्यत्यानन्तर्य्येण समाधिना विमुक्तिज्ञानदर्शनमुत्पादयिष्यति। विमुक्तिज्ञानदर्शनेन त्रीणि संयोजनानि प्रहास्यति। सत्कायदृष्टिं विचिकित्सां शीलव्रतपरामर्शमयमुच्यते पुद्गलः श्रोत आपन्नः। स भावनामार्गं प्रतिलभ्य कामरागव्यापादतनुलं करिष्यत्ययं पुद्गलः सकृदागामी। स तेनैव मार्गेणाधिमात्रभावितेन कामरागव्यापादप्रहाणमागमिष्यत्ययं पुद्गलोऽनागामी। स तेनैव मार्गेणाऽधिमात्रभावितेन रूपरागमारूप्यरागमविद्यां मानौद्धत्यञ्च प्रहास्यत्ययं पुद्गलोऽर्हन्। अयमप्रणिहितविहारी अस्य पुद्गलस्यान् प्रणितेन विमोक्षमुखेन पञ्चेन्द्रियाण्युत्पत्स्यन्ते। पञ्चभिरिन्द्रियैरानन्तर्य्यसमाधिं प्रप्स्यन्ति। आनन्तर्य्येण समाधिना विमुक्तिज्ञानदर्शनमुत्पादयिष्यति। विमुक्तिज्ञानदर्शनेन त्रीणि

---

* प्रहास्यति,-इति पाठ समीचीन प्रतिभाति।

संयोजनानि प्रहास्यति । सत्कायदृष्टिं विचिकित्सां शीलव्रतपरामर्शमयमुच्यते पुद्गलः स्रोतआपन्नः । स भावनामार्गं प्रतिलभ्यकाम रागव्यापादतनुलं करिष्यत्ययं पुद्गलः सकृदागामी । स तेनैव मार्गेणाधिमात्रभावितेन कामरागव्यापादप्रहाणमागमिष्यत्ययं पुद्गलोऽनागामी । स तेनैव मार्गेणाधिमात्रभावितेन रूपरागमारूप्य रागमविद्यां मानौद्धत्यञ्च प्रहास्यत्ययं पुद्गलोऽर्हन् । इयं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य धर्मचक्षुःपरिशुद्धिः ।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो जानाति । यत्किञ्चित् समुदयधर्म्म सर्व्वं तं निरोधधर्म्मेति विदित्वा श्रद्धादीनि पञ्चेन्द्रियाणि प्राप्नोतीयं शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य धर्म्मचक्षुःपरिशुद्धिः ।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो धर्म्मचक्षुषा जानात्ययं प्रथमचित्तोत्पादिको बोधिसत्त्वोमहासत्त्वो दानपारमितायां चरति । शीलपारमितायां चरति । क्षान्तिपारमितायां चरति । वीर्य्यपारमितायां चरति । ध्यानपारमितायां चरति । प्रज्ञापारमितायां चरति । ततः श्रद्धेन्द्रियेण वीर्य्येन्द्रियेण समन्वागत उपायकौशलेन सञ्चिन्त्याऽऽत्मभाव परिग्रहीष्यति । कुशलमूलोपस्तम्भेन चायं बोधिसत्त्वोमहासत्त्वः क्षत्रियमहाशालकुलेषूपपत्स्यन्ते । ब्राह्मण महाशालकुलेषूपपत्स्यन्ते । गृहपतिमहाशालकुलेषूपपत्स्यन्ते । चातुर्म्महाराजकायिकेषु देवेषूपपत्स्यन्ते । त्रायस्त्रिंशेषु देवेषूपपत्स्यन्ते । यामेषु देवेषूपपत्स्यन्ते । तुषितेषु देवेषूपपत्स्यन्ते । निर्म्माणरतिषु देवेषूपपत्स्यन्ते । परनिर्म्मितवशवर्त्तिषु देवेषूपपत्स्यते । स तत्र

स्थित्वा सत्त्वान् परिपाचयिष्यति सर्व्वसुखोपधानेन च तान् प्रत्युपस्थास्यति। बुद्धक्षेत्रञ्च परिशोधयिष्यति। तथागतांश्चार्हतः सम्यक् सम्बुद्धानारागयिष्यति सत्करिष्यति। गुरूकरिष्यति। मानयिष्यति। पूजयिष्यति। न च श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा पतिष्यति। अयं बोधिसत्त्वोमहासत्त्वो न निवर्त्तते यावदनुत्तरां सम्यक् सम्बोधिमभिसम्भोत्स्यते। इदमपि शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य परिशुद्धं धर्मचक्षुः।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो जानात्ययं बोधिसत्त्वोमहासत्त्वो व्याकृतोनुत्तरायां सम्यक् सम्बोधौ। अयं न व्याकृतः। अय नियतः। अयमनियतः। इमे व्याकरिष्यन्ति। इमे न व्याकरिष्यन्ति। इमे अवैवर्त्तिकाः इन्द्रियलब्धाः। इमे नाऽवैवर्त्तिकानेन्द्रियप्रतिलब्धाः। अस्याऽभिज्ञा, परिपूर्णाः। अस्य न परिपूर्णाः। अयं बोधिसत्त्वोमहासत्त्वोऽभिज्ञाभिः परिपूर्णाभिः पूर्व्वस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा तथागतानर्हतः सम्यक् सम्बुद्धानारागयति। पर्य्युपास्ते। सत्करोति। गुरूकरोति। मानयति। पूजयति। दक्षिणस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा तथागतानर्हतः सम्यक् सम्बुद्धानारागयति। पर्य्युपास्ते। सत्करोति। गुरूकरोति। मानयति। पूजयति। पश्चिमायां दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा तथागतानर्हतः सम्यक् सम्बुद्धानारागयति। पर्य्युपास्ते। सत्करोति। गुरूकरोति। मानयति। पूजयति। उत्तरस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा तथागतानर्हत सम्यक् सम्बुद्धानारागयति। पर्य्युपास्ते।

सत्करोति। गुरुकरोति। मानयति। पूजयति। उत्तरपूर्व्वस्यां दिशिगङ्गानदीवालुकोपमान् लोकधातून् गत्वा तथागतानर्हतः सम्यक् सम्बुद्धानारागयति। पर्य्युपास्ते। सत्करोति। गुरुकरोति। मानयति। पूजयति। पूर्व्वदक्षिणस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा तथागतानर्हतः सम्यक् सम्बुद्धानारागयति। पर्य्युपास्ते। सत् करोति। गुरुकरोति। मानयति। पूजयति। दक्षिणपश्चिमायां दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा तथागतानर्हतः सम्यक् सम्बुद्धानारागयति। पर्य्युपास्ते। सत्करोति। गुरुकरोति। मानयति। पूजयति। पश्चिमोत्तरस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा तथागतानर्हतः सम्यक् सम्बुद्धानारागयति। पर्य्युपास्ते। सत्करोति। गुरुकरोति। मानयति। पूजयति। अधस्ताद्दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा तथागतानर्हतः सम्यक् सम्बुद्धानारागयति। पर्य्युपास्ते। सत्करोति। मानयति। पूजयति। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा तथागतानर्हतः सम्यक् सम्बुद्धानारागयति। पर्य्युपास्ते। सत्करोति। मानयति। पूजयति। अयमभिज्ञाः प्रतिलप्स्यन्ते अयं न प्रतिलप्स्यते। अयं चाभिज्ञं प्रतिलब्धोऽयं न चाभिज्ञं प्रतिलब्धः। अयमिन्द्रियप्रतिलब्धोऽयं नेन्द्रियप्रतिलब्धः। अस्य बोधिसत्त्वस्य महासत्त्वस्य परिशुद्धं बुद्धक्षेत्रं भविष्यति। अस्य बोधिसत्त्वस्य महासत्त्वस्य बुद्धक्षेत्रं न परिशुद्धं भविष्यति। अयं बोधिसत्त्वोमहासत्त्वो महाप्रणिधानोऽयं न महाप्रणिधानः। अनेन सत्त्वाः परिपाचिताः अनेन सत्त्वा न परि-

पाचिताः। अस्य बोधिसत्त्वस्य महासत्त्वस्य दशसु दिक्षु गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तोवर्णं भाषन्ते। अस्य न वर्णं भाषन्ते। इमे बोधिसत्त्वामहासत्त्वाः बुद्धानां भगवतामासत्त्वस्थायिनो भविष्यन्ति। इमे नासत्त्वस्थायिनः। अस्य बोधिसत्त्वस्य महासत्त्वस्य बोधिप्राप्तस्यायुरपरिमितं भविष्यति। अस्य परिमितं। अस्य प्रभाघोषोभिक्षुसंघश्चापरिमितोभविष्यति। अस्य परिमितः। अस्य बोधिसत्त्वस्याऽनुत्तरां सम्यक् सम्बुद्धस्य बोधिसत्त्वसंघो भविष्यति। अस्य न भविष्यति। अयं दुष्करं चरिष्यत्ययं न चरिष्यति। अयं चरमभविकोऽयं न चरमभविकः। अयं बोधिमण्डे निषत्स्यति नाऽयं निषत्स्यति। एषां बोधिसत्त्वानां महासत्त्वानां मारा भविष्यन्ति। नैषां भविष्यन्ति। एवं खलु शारदतीपुत्र बोधिसत्त्वानां महासत्त्वानां परिशुद्धं धर्मचक्षुः।

आह कतमं पुनर्भगवन् बोधिसत्त्वस्य महासत्त्वस्य परिशुद्धं बुद्धचक्षुः। भगवानाह। यच्छारदतीपुत्र बोधिसत्त्वोमहासत्त्वो बोधिचित्ताऽनुत्तरं वज्रोपमं समाधिं समापद्य सर्व्वाकारज्ञतामनुप्राप्नोति। दशभिस्तथागतबलैः समन्वागतो भवति। चतुर्भिर्वैशारद्यैः समन्वागतो भवति। अष्टादशभिरावेणिकैर्बुद्धधर्म्मैः समन्वागतो भवति। महामैत्र्या समन्वागतो भवति। महाकरुणया समन्वागतो भवति। महामुदितया समन्वागतो भवति। महोपेक्षया समन्वागतो भवति। अनावरणेन च बुद्धविमोक्षेण समन्वागतो भवति। तदस्य चक्षुर्येन चक्षुषा बोधिसत्त्वेन महासत्त्वेन सर्व्वाकार नास्ति किञ्चिददृष्टमश्रुतममतमविज्ञातं। इदं शारदतीपुत्र बोधि-

3412

सत्त्वस्य महासत्त्वस्याऽनुत्तरां सम्यक् सम्बोधिमभिसम्बुद्धस्य परिशुद्धं बुद्धचक्षुः ।

एवं शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन पञ्च चक्षूंषि परिशोधयितुकामेन प्रतिलब्धुकामेन च षट्सु पारमितासु योगः करणीयः । तत्कस्य हेतोः । तथाहि । शारद्वतीपुत्र षट्सु पारमितासु सर्व्वकुशलधर्म्मा अन्तर्गताः सर्व्वश्रावकधर्म्माश्च । सर्व्वप्रत्येकबुद्धधर्म्माश्च । ये खलु ते शारद्वतीपुत्र सम्यग्वदन्तोवदेयुः सर्व्वकुशलधर्म्मसंग्रह इति प्रज्ञापारमितान्ते सम्यग्वदन्तो वदेयुः । तत्कस्य हेतोः । जनयित्री शारद्वतीपुत्र प्रज्ञापारमितैषां पञ्चानां चक्षुषां । एषु च पञ्चसु चक्षुषु बोधिसत्त्वामहसत्त्वाः शिक्षित्वाऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यन्ते । अस्यां शारद्वतीपुत्र प्रज्ञापारमितायां चरन् बोधिसत्त्वोमहासत्त्वोऽभिज्ञापारमितां प्रतिलभते । सोऽनेकविधमृद्धिविधिं प्रत्यनुभवति । इमामेव पृथिवीं कम्पयत्येकोऽपि भूत्वा बहुधा भवति । बहुधाऽपि भूत्वा एको भवति । आविर्भवति तिरोभावमपि प्रत्यनुभवति । तिरः कुड्यं तिरः प्राकारं तिरः पर्व्वतमप्यसज्जं कायेन गच्छति । तद्यथाऽपि नामाकाशे पर्य्यङ्केन क्रामति । तद्यथाऽपि नाम *शकुनिः पृथिव्यामप्युन्मज्जति न निमज्जनं करोति । तद्यथाऽपि नामोदकेऽनुदकेऽप्यभियानेन गच्छति । तद्यथाऽपि नाम पृथिव्यां धूमायते प्रज्वलत्यपि । तद्यथाऽपि नाम महानग्निस्कन्धः । इमावपि सूर्य्याचन्द्रमसावेवं महर्द्धिकावेवं महानुभावावेवं महेशाख्यौ पाणिना

* पक्षीशकुनिरिति ख, ग, घ पाठ ।

परामार्ष्टि ब्रह्मलोकं कायेन वशं वर्त्तयति तयाचर्द्धा न मन्यते। तथा हि सम्र्द्धिं* नोपलभते यया मन्येत स्वभावशून्यतामुपादाय स्वभावाऽनुत्पादतामुपादाय। स चेतनामपि नोत्पादयति। ऋद्धा वा ऋद्धाभिनिर्हारेण वाऽन्यत्र सर्व्वज्ञतामनसिकारात्। एवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् ऋद्धिविधिसाक्षात्क्रियाऽभिज्ञाज्ञानमभिनिर्हरति। स दिव्येन श्रोत्रधातुना विशुद्धेनातिक्रान्तमानुष्यकेनोभयाञ्छब्दान् शृणोति यदुत दिव्यान् वा मानुष्यकान् वा। न च तेन दिव्येन श्रोत्रधातुना मन्यते अहं शब्दान् शृणोमीति। तथा हि स श्रोत्रं शब्दांश्च नोपलभते स्वभावशून्यतामुपादाय स्वभावाऽनुत्पादतामुपादाय। स चेतनामपि नोत्पादयति दिव्यश्रोत्रधातावन्यत्र सर्व्वज्ञतामनसिकारात्। एवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् दिव्यश्रोत्रधातुसाक्षात्क्रियाऽभिज्ञाज्ञानमभिनिर्हरति। स परसत्त्वानां परपुद्गलानां चेतसैव चित्तं यथाभूतं प्रजानाति। स सरागचित्तं स रागचित्तमिति यथाभूतं प्रजानाति। स विगतरागं चित्तं विगतरागं चित्तमिति यथाभूतं प्रजानाति। सदोषचित्तं सदोषचित्तमिति यथाभूतं प्रजानाति। विगतदोषं चित्तं विगतदोषं चित्तमिति यथाभूतं प्रजानाति। समोहं चित्तं समोहं चित्तमिति यथाभूतं प्रजानाति। विगतमोहं चित्तं विगतमोहं चित्तमिति यथाभूतं प्रजानाति। सतृष्णाचित्तं सतृष्णाचित्तमिति यथाभूतं प्रजानाति।

* स ऋद्धिमिति युक्तः पाठः।

विगततृष्णं चित्तं विगततृष्णं चित्तमिति यथाभूतं प्रजानाति। सोपादानं चित्तं सोपादानं चित्तमिति यथाभूतं प्रजानाति। अनुपादानं चित्तमनुपादानं चित्तमिति यथाभूतं प्रजानाति। विक्षिप्तचित्तं विक्षिप्तचित्तमिति यथाभूतं प्रजानाति। परीत्तं चित्तं परीत्तं चित्तमिति यथाभूतं प्रजानाति। विपुलं चित्तं विपुलं चित्तमिति यथाभूतं प्रजानाति। महद्गतं चित्तं महद्गतं चित्तमिति यथाभूतं प्रजानाति। अप्रमाणं चित्तमप्रमाणं चित्तमिति यथाभूतं प्रजानाति। समाहितं चित्तं समाहितं चित्तमिति यथाभूतं प्रजानाति। असमाहितं चित्तमसमाहितं चित्तमिति यथाभूतं प्रजानाति। विविक्तं चित्तं विविक्तं चित्तमिति यथाभूतं प्रजानाति। अविविक्तं चित्तमविविक्तं चित्तमिति यथाभूतं प्रजानाति। साऽऽस्रवं चित्तं साऽऽस्रवं चित्तमिति यथाभूतं प्रजानाति। अनास्रवं चित्तमनास्रवं चित्तमिति यथाभूतं प्रजानाति। साऽङ्गणं चित्तं साऽङ्गणं चित्तमिति यथाभूतं प्रजानाति। अनङ्गणं चित्तमनङ्गणं चित्तमिति यथाभूतं प्रजानाति। सोत्तरं चित्तं सोत्तरं चित्तमिति यथाभूतं प्रजानाति। अनुत्तरं चित्तमनुत्तरं चित्तमिति यथाभूतं प्रजानाति। तेन च परचित्तज्ञानेन न मन्यते। तथाहि तच्चित्तमचित्तमचिन्त्यतामुपादाय। सोऽहं प्रजानामीति न मन्यते। तथाहि स तच्चित्तं नोपलभते येन मन्येत स्वभावशून्यतामुपादाय। स्वभावविविक्ततामुपादाय। स्वभावाऽनुत्पादतामुपादाय। स चित्तज्ञानचेतनामपि नोत्पादयति। न चित्तज्ञानाऽभिनिर्हारचेतनामन्यत्र सर्वज्ञतामनसिकारात्। एवं

खलु शारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वसत्त्वचित्तचरितसाक्षात्क्रियाऽभिज्ञाज्ञानमभिनिर्हरति। सोऽनेकविधपूर्व्वनिवासाऽनुस्मृतिसाक्षात्क्रियाऽभिज्ञाज्ञानमभिनिर्हरति। एकमपि चित्तमनुस्मरति यावच्चित्तशतमप्यनुस्मरति। एकमपि दिवसमनुस्मरति यावद्दिवसशतमप्यनुस्मरति। एकमपि मासमनुस्मरति यावन्मासशतमप्यनुस्मरति। एकमपि वर्षमनुस्मरति यावद्वर्षशतमप्यनुस्मरति। एकमपि कल्पमनुस्मरति यावत् कल्पशतमप्यनुस्मरति। यावदनेकान्यपि कल्पशतान्यनुस्मरति। अनेकान्यपि कल्पसहस्रान्यनुस्मरति। अनेकान्यपि कल्पशतसहस्रान्यनुस्मरति। अनेकान्यपि कल्पकोटीनियुतशतसहस्रान्यनुस्मरति।

अत्राहमेवंनामैवंगोत्र एवंजातिरेवमाहार एवंचिरस्थितिक एवमायुःपर्य्यन्तः सोऽहं ततश्च्युतः सत्रोपपन्नः। यावत्ततश्च्युत इहोपपन्न इति। साकारं सोद्देशं सनिर्द्देशमात्मनः परेषाञ्चानेकविधं पूर्व्वनिवासमनुस्मरति। तेन च पूर्व्वनिवासाऽनुस्मृतिसाक्षात्क्रियाऽभिज्ञाज्ञानेन न मन्यते। तथाहि तज्ज्ञानमज्ञानमचिन्त्यतामुपादाय। सोऽहं प्रजानामीति न मन्यते। तथाहि स तदेव ज्ञानं नोपलभते येन मन्येत। स्वभावशून्यतामुपादाय स्वभावविविक्ततामुपादाय। स्वभावाऽनुत्पादतामुपादाय स चेतनामपि नोत्पादयति। अनुस्मृतिज्ञानेनान्यत्र सर्व्वज्ञतामनसिकारात्। एवं खलु शारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् पूर्व्वनिवासाऽनुस्मृतिसाक्षात्क्रियाऽभिज्ञाज्ञानमभिनिर्हरति। स दिव्येन चक्षुषा विशुद्धेनाऽतिक्रान्तमानुषेण सत्त्वान् पश्यति। च्यव-

मानानुपपद्यमानान् सुवर्णान् दुर्व्वर्णान् हीनान् प्रणीतान् सुगतान् दुर्गतान् यथाकर्म्मोपगतान् सत्त्वान् विजानाति। अमी भवन्तः सत्त्वाः कायदुश्चरितेन समन्वागताः वाग्दुश्चरितेन समन्वागताः मनोदुश्चरितेन समन्वागताः। आर्य्याणामपवादकाः मिथ्यादृष्टयस्तद्धेतोस्तत्प्रत्ययं कायस्य भेदादपायदुर्गतिविनिपातं नरकेषूपपद्यन्ते। अमी पुनर्भवन्तः कायसुचरितेन समन्वागताः वाक्सुचरितेन समन्वागताः मनःसुचरितेन समन्वागताः आर्य्याणामनपवादकाः सम्यग्दृष्टयस्तद्धेतोस्तत्प्रत्ययं कायस्य भेदात् सुगतौ स्वर्गलोके देवेषूपपद्यन्ते इति समन्ताद्दशसु दिक्षु सर्व्वलोकधातुषु धर्म्मधातुपरमे लोके आकाशधातुपर्य्यवसाने षड्गति*कानां च्युतोपपादं यथाभूतं प्रजानाति। तेन च न मन्यते। तथाहि तच्चक्षुरचक्षुरचिन्त्यतामुपादाय। सोऽहं पश्यामीति न मन्यते। तथाहि स तदेव चक्षुर्नोपलभते येन मन्येत। स्वभावशून्यतामुपादाय स्वभावविविक्ततामुपादाय स्वभावाऽनुत्पादतामुपादाय। स दिव्यचक्षुश्चेतनामपि नोत्पादयति। न दिव्यचक्षुरभिनिर्हारचेतनामन्यत्र सर्व्वाकारज्ञता मनसिकारात्। एवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायाञ्चरन् दिव्यचक्षुःसाक्षात्क्रियाऽभिज्ञाज्ञानमभिनिर्हरति। न च श्रावकभूमिं वा प्रत्येकबुद्धभूमिं वाऽनुप्राप्नोति। न किञ्चिद्धर्म्मं पश्यति योऽनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यते। स तयाऽभिज्ञया वज्रोपमं समाधिमधिगम्य सर्व्ववासनाऽनुसन्धि क्लेशप्रहाणं कुरुते। न च तयाऽऽश्रवक्षयज्ञानसाक्षात्क्रियाऽभिज्ञया मन्यते।

* षड्गति गतानामिति। ख, ग, घ पाठ।

तथाहि तज्ज्ञानमज्ञानमचिन्त्यमभूत्। अहं प्रजानामीति न मन्यते।
तथाहि स तामेवाऽऽस्रवक्षयज्ञानसाक्षात्क्रियाऽभिज्ञां नोपलभते।
यया मन्येत। स्वभावशून्यतामुपादाय। स्वभावविविक्ततामुपादाय।
स्वभावाऽनुत्पादतामुपादाय। स आस्रवक्षयज्ञानचेतनामपि नोत्पा-
दयति। नाऽऽस्रवक्षयसाक्षात्क्रियाऽभिज्ञाज्ञानाऽभिनिर्हारचेतनाम-
न्यत्र सर्व्वाऽऽकारज्ञतामनसिकारात्। एवं खलु शारद्वतीपुत्र बो-
धिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् स आस्रवक्षयसाक्षात्क्रि-
याऽभिज्ञाज्ञानमभिनिर्हरति। एवञ्च पुनः शारद्वतीपुत्र बोधि-
सत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् षडभिज्ञाः परिपूरयति।
वर्द्धतेऽनुत्तरया सम्यक्सम्बोध्या। सन्ति शारद्वतीपुत्र बोधिसत्त्वा-
महासत्त्वाः प्रज्ञापारमितायां चरन्तो दानपारमितायां स्थित्वा
सर्व्वाऽऽकारज्ञतायाः पन्थानं शोधयन्ति। अत्यन्तशून्यतया अनव-
गृहीतचित्ततामुपादाय। सन्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः
ये प्रज्ञापारमितायां चरन्तः शीलपारमितायां स्थित्वा सर्व्वाकार-
ज्ञतायाः पन्थानं शोधयन्ति। अत्यन्तशून्यतया आपत्त्यनध्यापत्ति-
तामुपादाय। सन्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः ये प्रज्ञा-
पारमितायां चरन्तः क्षान्तिपारमितायां स्थित्वा सर्व्वाकारज्ञतायाः
पन्थानं शोधयन्त्यत्यन्तशून्यतया अक्षोभणतामुपादाय। सन्ति शार-
द्वतीपुत्र बोधिसत्त्वामहासत्त्वाः ये प्रज्ञापारमितायां चरन्तः वीर्य्य-
पारमितायां स्थित्वा सर्व्वाकारज्ञतायाः पन्थानं शोधयन्त्यत्यन्तशून्य-
तया कायिकचैतसिकवीर्य्याऽस्रंसनतामुपादाय। सन्ति शारद्वती-
पुत्र बोधिसत्त्वामहासत्त्वाः ये प्रज्ञापारमितायां चरन्तो ध्यानपार-

मितायां स्थित्वा सर्व्वाकारज्ञतायाः पन्थानं शोधयन्त्यत्यन्तशून्यतया अविच्छिन्नचित्ततामुपादाय। सन्ति शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः ये प्रज्ञापारमितायां चरन्तः प्रज्ञापारमितायां स्थित्वा सर्व्वाकारज्ञतायाः पन्थानं शोधयन्त्यत्यन्तशून्यतया दौःप्रज्ञचित्ताऽनुपलब्धितामुपादाय। एवं शारद्वतीपुत्र बोधिसत्त्वामहासत्त्वाः प्रज्ञापारमितायां चरन्तः षट्सु पारमितासु स्थित्वा सर्व्वाकारज्ञतायाः पन्थानं शोधयन्त्यत्यन्तशून्यतया अनागमनागमनतामुपादाय। अपरिग्रहतामुपादाय। दानं परिग्रहतामुपादाय प्रज्ञप्यते। शीलमहाचिततामुपादाय प्रज्ञप्यते। चान्तिं* चोभणतामुपादाय प्रज्ञप्यते। वीर्य्यं कुसीदतामुपादाय प्रज्ञप्यते। समाधिरसमाहितमुपादाय प्रज्ञप्यते। प्रज्ञां दुःप्रज्ञतामुपादाय प्रज्ञप्यते। स तीर्ण इति न मन्यते। अतीर्ण इति न मन्यते। स दाता इति न मन्यते। अदाता इति न मन्यते। शीलवानिति न मन्यते। दुःशील इति न मन्यते। चान्तिं सम्पन्न इति न मन्यते। क्रोधन इति न मन्यते।, आरब्धवीर्य्य इति न मन्यते। कुसीद इति न मन्यते। समाहित इति न मन्यते। असमाहित इति न मन्यते। प्राज्ञ इति न मन्यते। दुःप्रज्ञ इति न मन्यते। आक्रुष्ट इति न मन्यते। वन्दित इति न मन्यते। सत्कृत इति न मन्यते। असत्कृत इति न मन्यते। तत्कस्य हेतोः। न हि शारद्वतीपुत्र अनुत्पाद आक्रुष्टोवेति मन्यते वन्दितोवेति मन्यते। सत्कृतो वेति

---

* चान्तिरिति युक्तः पाठः।

मन्यते । असत्त्वतोवेति मन्यते । तत् कस्य हेतोः । तथाहि प्रज्ञापारमिता सर्व्वमन्यतां* समुच्छिनत्ति । इह शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो ये गुणाभवन्ति । तेन श्रावकप्रत्येकबुद्धानां संविद्यन्ते । स इमान् गुणान् परिपूरयन् सत्त्वांश्च परिपाचयन्ति । बुद्धक्षेत्रञ्च परिशोधयन्ति । सर्व्वाकारज्ञताञ्चाऽनुप्राप्नोति ।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वसत्त्वानामन्तिके समचित्ततामुत्पादयति । सर्व्वसत्त्वानामन्तिके समचित्ततामुत्पाद्य सर्व्वधर्म्मसमतां प्रतिलभते । स सर्व्वधर्म्मसमतां प्रतिलभ्य सर्व्वसत्त्वान् सर्व्वधर्म्मसमतायां प्रतिष्ठापयति । स दृष्ट एव धर्म्मे बुद्धानां भगवतां प्रियो भवति । मनापश्च । सर्व्व बोधिसत्त्वानाञ्च सर्व्वश्रावकाणाञ्च प्रत्येकबुद्धानाञ्च प्रियो भवति । मनापश्च । स यत्र यत्रोपपद्यमान उपपद्यते तत्र तत्र न जातु चक्षुषा अमनापाणि रूपाणि पश्यति । न श्रोत्रेणाऽमनापान् शब्दान् शृणोति । न घ्राणेनाऽमनापान् गन्धान् जिघ्रति । न जिह्वयाऽमनापानमानास्वादयति । न कायेनाऽमनापान् स्पर्शान् स्पृशति । न मनसाऽमनापान् धर्म्मान् विजानाति । एवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न परिहीयतेऽनुत्तरायाः सम्यक्सम्बोधेः ।

अस्मिन् खलु पुनः प्रज्ञापारमितानिर्द्देशे निर्दिश्यमाने त्रीणि भिक्षुशतानि यथाप्राप्तैश्चीवरैर्भगवन्तमभिच्छादयन्ति स्म । अनु-

* सर्व्वमन्यतानास्समुच्छिनत्तीति । ख, ग, घ पाठ ।

त्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयन्ति स्म । अथ खलु भगवांस्तस्यां वेलायां स्मितं प्रादुरकार्षीत् । अथाऽऽयुष्मानानन्द उत्थायाऽऽसनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणजानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाऽञ्जलिं प्रणम्य भगवन्तमेतदवोचत् । को भगवन् हेतुः कः प्रत्ययः स्मितस्याऽऽविष्करणे । नाऽहेतुकं नाऽप्रत्ययं तथागता अर्हन्तः सम्यक्सम्बुद्धाः स्मितमाविष्कुर्वन्ति । एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत् । एतान्यानन्द चीणि भिक्षुशतानि एकषष्टे कल्पे महाकेतुनामानस्तथागता अर्हन्तः सम्यक्सम्बुद्धाः लोके उत्पत्स्यन्ते । तारकोपमे कल्पे तएत इतश्च्युताः समाना अक्षोभ्यस्य तथागतस्याऽर्हतः सम्यक्सम्बुद्धस्य बुद्धक्षेत्रे उपपत्स्यन्ते । षष्ट्या च देवपुत्र सहस्रैः कामावचरैरनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादितानि । तानि च मैत्रेयं तथागतमर्हन्तं सम्यक्सम्बुद्धमारागयिष्यन्ति । तत्रैव च ब्रह्मचर्यं चरिष्यन्ति । स च मैत्रेयस्तथागतस्तान् व्याकरिष्यत्यनुत्तरायां सम्यक्सम्बोधाविति । अथ बुद्धाऽनुभावेन तस्मिन् समये तावतस्ताः पर्षद इति निषण्णा एव पूर्व्वस्यां दिशि बुद्धसहस्रं पश्यन्ति स्म । दक्षिणस्यां दिशि बुद्धसहस्र पश्यन्ति स्म । पश्चिमायां दिशि बुद्धसहस्रं पश्यन्ति स्म । उत्तरस्यान्दिशि बुद्धसहस्रं पश्यन्ति स्म । उत्तरपूर्व्वस्यान्दिशि बुद्धसहस्रं पश्यन्ति स्म । पूर्व्वदक्षिणस्यान्दिशि बुद्धसहस्रं पश्यन्ति स्म । दक्षिणपश्चिमायान्दिशि बुद्धसहस्रं पश्यन्ति स्म । पश्चिमोत्तरस्यान्दिशि बुद्धसहस्रं पश्यन्ति स्म । अधस्ताद्दिशि बुद्धसहस्रं पश्यन्ति स्म । उपरिष्टाद्दिशि बुद्धसहस्रं पश्यन्ति स्म । न च तान् बुद्धक्षेत्र

गुणव्यूहानिह सहायां लोकधातौ पश्यन्ति स्म। यान् बुद्धक्षेत्रगुणव्यूहांस्तेषां बुद्धानां भगवतां तेषु लोकधातुषु पश्यन्ति स्म। अथ ततः पर्षदो दशप्राणिसहस्राणि प्रणिधानमकार्षुः। वयं कर्म तथा करिष्यामो येन कर्मणा कृतेनाऽत्र बुद्धक्षेत्रेषूपपत्स्याम इति। अथ भगवांस्तेषां कुलपुत्राणां आशयं विदित्वा स्मितं प्रादुरकार्षीत्।

अथायुष्मानानन्द उत्थायाऽऽसनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणजानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाऽञ्जलिं प्रणम्य भगवन्तमेतदवोचत्। को भगवन् हेतुः कः प्रत्ययः स्मितस्याऽऽविष्करणे। नाहेतु नाऽप्रत्ययं बुद्धाभगवन्तः स्मितमाविष्कुर्वन्ति। भगवानाह। पश्यसि त्वमानन्देमानि दश प्राणिसहस्राणि। आह। पश्यामि भगवन्। भगवानाह। एतान्यानन्द दश प्राणिसहस्राणि इतश्च्युत्वा तत्र बुद्धक्षेत्रेषूत्पत्स्यन्ते। न च जातु विरहिता भविष्यन्ति तथागतैरर्हद्भिः सम्यक्संबुद्धैस्ततः पश्चाद्व्यूहराजनामानस्तथागता अर्हन्तः सम्यक्संबुद्धा लोके भविष्यन्ति। अथायुष्मान् शारद्वतीपुत्र आयुष्मांश्च महामौद्गल्यायन आयुष्मांश्च सुभूतिरायुष्मांश्च पूर्णोमैत्रायणीपुत्र आयुष्मांश्च महाकाश्यप एते चान्ये च संबहुला अभिज्ञानाऽभिज्ञाताभिक्षवो बोधिसत्त्वाश्च महासत्त्वाभिक्षुभिक्षुण्युपासकोपासिकाश्च भगवन्तमेतदवोचन्। महापारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता। उदारपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता। अग्रपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता। विशिष्टपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां

यदुत प्रज्ञापारमिता । वरपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । प्रवरपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । प्रणीतपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । अनुत्तरपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । निरुत्तरपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । असमपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । असमसमपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । असदृशपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । अनुपमपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । आकाशपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । स्वलक्षणशून्यतापारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । सर्व्वधर्मशून्यतापारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । अभावस्वभावशून्यतापारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । सर्व्वगुणपरिपूरिपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । सर्व्वगुणसमन्वागतपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता । अनवमृद्यपारमितेयं भगवन् बोधिसत्त्वानां महासत्त्वानां यदुत प्रज्ञापारमिता ।

अत्र हि भगवन् प्रज्ञापारमितायां चरद्भिर्ब्बोधिसत्त्वैर्महासत्त्वै-

रसमसमन्दानं दत्तं दीयते दास्यते। तेनाऽसमसमदानपारमिता परिपूरिता परिपूर्य्यते परिपूरयिष्यते*। तेनाऽसमसम आत्मभावः प्रतिलब्धः प्रतिलभ्यते प्रतिलप्स्यते। तेनाऽसमसमस्य धर्मस्य लाभिनोजाताभवन्ति भविष्यन्ति यदुताऽनुत्तरायाः सम्यक्सम्बोधेः।

अत्र भगवन् प्रज्ञापारमितायां चरद्भिर्बोधिसत्त्वैर्महासत्त्वैरसमसमं शीलं रचितं रचन्ति रचियिष्यन्ति†। तेनाऽसमसमशीलपारमिता परिपूरिता परिपूर्य्यते परिपूरयिष्यते। तेनाऽसमसमआत्मभावः प्रतिलब्धः प्रतिलभ्यते प्रतिलप्स्यते। तेनाऽसमसमस्य धर्मस्य लाभिनोजाताभवन्ति भविष्यन्ति यदुताऽनुत्तरायाः सम्यक्सम्बोधेः।

अत्र भगवन् प्रज्ञापारमितायां चरद्भिर्बोधिसत्त्वैर्महासत्त्वैरसमसमक्षान्तिर्भाविता भाव्यते भाविष्यते। तेनाऽसमसमाक्षान्तिपारमिता परिपूरिता परिपूर्य्यते परिपूरिष्यते। तेनाऽसमसमआत्मलाभः प्रतिलब्धः प्रतिलभ्यते प्रतिलप्स्यते। तेनाऽसमसमस्य धर्मस्य लाभिनोजाताभवन्ति भविष्यन्ति यदुताऽनुत्तरायाः सम्यक्सम्बोधेः। अत्र भगवन् प्रज्ञापारमितायां चरद्भिर्बोधिसत्त्वैर्महासत्त्वैरसमसमं वीर्य्यमारब्धं आरभ्यते आरप्स्यते। तेनाऽसमसमा वीर्य्यपारमिता परिपूरिता परिपूर्य्यते परिपूरिष्यते। तेनाऽसमसमआत्मभावः प्रतिलब्धः प्रतिलभ्यते प्रतिलप्स्यते। तेनाऽसमसमस्य धर्मस्य लाभिनोजाताभवन्ति भविष्यन्ति। यदुताऽनुत्तरायाः सम्यक्सम्बोधेः। अत्र भगवन् प्रज्ञापारमितायां चरद्भिर्बोधिसत्त्वैर्महासत्त्वैरसमसमा-

* परिपूरिष्यते इति ख, ग, घ पाठः एवं परत्र।

† रक्ष्यते रक्षिष्यते इति युक्तं प्रतिभाति।

निधानानि उत्पादितानि उत्पाद्यन्ते उत्पादयिष्यन्ते। तेनाऽसमसमाधानपारमितापरिपूरिता परिपूर्यते परिपूरयिष्यते। तेनाऽसमसमश्चात्मभावः प्रतिलब्धः प्रतिलभ्यते प्रतिलप्स्यते। तेनाऽसमसमस्य धर्मस्य लाभिनोजाताभवन्ति भविष्यन्ति यदुताऽनुत्तरायाः सम्यक्सम्बोधेः। अत्र भगवन् प्रज्ञापारमितायां चरद्भिर्बोधिसत्त्वैर्महासत्त्वैरसमसमा प्रज्ञाभाविता भाव्यते भाविष्यते। तेनाऽसमसमा प्रज्ञापारमिता परिपूरिता परिपूर्यते परिपूरिष्यते। तेनाऽसमसमश्चात्मभावः प्रतिलब्धः प्रतिलभ्यते प्रतिलप्स्यते। तेनाऽसमसमस्य धर्मस्य लाभिनोजाताभवन्ति भविष्यन्ति यदुताऽनुत्तरायाः सम्यक्सम्बोधेः।

अत्रैव भगवन् प्रज्ञापारमितायां चरन् असमसमस्य रूपस्य लाभी जातः असमसमायावेदनाया लाभी जातः असमसमायाः संज्ञायालाभीजातः असमसमानां संस्काराणां लाभीजातः। असमसमस्य विज्ञानस्य लाभीजातः। असमसमां बोधिमभिसम्बुध्याऽसमसमं धर्मचक्रं प्रवर्त्तितवान्।

अतीता अपि बुद्धाभगवन्तोऽत्रैव प्रज्ञापारमितायां चरन्तोऽसमसमस्य रूपस्य लाभिनोजाताः। असमसमाया वेदनाया लाभिनोजाताः। असमसमायाः संज्ञायालाभिनोजाताः असमसमानां संस्काराणां लाभिनोजाताः। असमसमस्य विज्ञानस्य लाभिनोजाताः। असमसमां बोधिमभिसम्बुध्याऽसमसमं धर्मचक्रं प्रवर्त्तितवन्तः।

अनागताअपि बुद्धाभगवन्तोऽत्रैव प्रज्ञापारमितायां चरन्तोऽसमसमस्य रूपस्य लाभिनोजाताः भविष्यन्ति। असमसमायावेदनायालाभिनोभविष्यन्ति। असमसमायाः संज्ञायालाभिनोभवि-

ष्यन्ति । असमसमानां संस्काराणां लाभिनोभविष्यन्ति । असमसमस्य विज्ञानस्य लाभिनोभविष्यन्ति। असमसमां बोधिमभिसम्बुध्याऽसमसमं धर्म्मचक्रं प्रवर्त्तयिष्यन्ति ।

प्रत्युत्पन्ना अपि बुद्धाभगवन्तोऽत्रैव प्रज्ञापारमितायां चरन्तोऽसमसमस्य रूपस्य लाभिनोभवन्ति । असमसमायावेदनायालाभिनोभवन्ति । असमसमायाः संज्ञायालाभिनोभवन्ति । असमसमानां संस्काराणां लाभिनोभवन्ति । असमसमस्य विज्ञानस्य लाभिनोभवन्ति । असमसमा बोधिमभिसम्बुध्याऽसमसमं धर्म्मचक्रं प्रवर्त्तयिष्यन्ति ।

तस्मात्तर्हि भगवन् बोधिसत्त्वैर्महासत्त्वैः सर्व्वधर्म्माणां पारं गन्तुकामैः प्रज्ञापारमितायां योग. करणीय । नमस्करणीयास्ते भगवन् बोधिसत्त्वामहासत्त्वा' सदेवमानुषाऽसुरेण लोकेन येऽत्र प्रज्ञापारमितायां चरन्ति ।

एवमुक्ते भगवांस्तान् सवकुलान् महाश्रावकान् तांश्च बोधिसत्त्वान् महासत्त्वानेतदवोचत् । एवमेतत् कुलपुत्राएवमेतत् यथा-तथा, यथा वदथ, नमस्करणीयास्ते बोधिसत्त्वामहासत्त्वाः सदेव-मानुषाऽसुरेण लोकेन येऽत्र प्रज्ञापारमितायां चरन्ति । तत्कस्य हेतोः बोधिसत्त्वं हि कुलपुत्रामहासत्वमागम्य मनुष्यलोकस्य लोके प्रादुर्भावोभवति । देवलोकस्य लोके प्रादुर्भावोभवति । क्षत्रियमहाशाल*कुलानां लोके प्रादुर्भावोभवति। ब्राह्मणमहाशालकुलानां लोके प्रादुर्भावोभवति । गृहपतिमहाशालकुलानां लोके प्रादु-

* महाशालो महागृहस्थ इति मण्डूकोपनिषट्टीकायां ।

भावोभवति। राज्ञां चक्रवर्त्तिनां लोके प्रादुर्भावोभवति। चातुर्महाराजकायिकानां देवानां लोके प्रादुर्भावोभवति। त्रायस्त्रिंशानां देवानां लोके प्रादुर्भावोभवति। यामानां देवानां लोके प्रादुर्भावोभवति। तुषितानां देवानां लोके प्रादुर्भावोभवति। निर्म्माणरतीनां देवानां लोके प्रादुर्भावोभवति। परनिर्म्मितवशवर्त्तिनां देवानां लोके प्रादुर्भावोभवति। ब्राह्मकायिकानां देवानां लोके प्रादुर्भावोभवति। ब्रह्मपुरोहितानां देवानां लोके प्रादुर्भावोभवति। ब्रह्मपार्षद्यानां देवानां लोके प्रादुर्भावोभवति। महाब्रह्मणां देवानां लोके प्रादुर्भावोभवति। आभानां देवानां लोके प्रादुर्भावोभवति। परीत्ताभानां देवानां लोके प्रादुर्भावोभवति। अप्रमाणाभानां देवानां लोके प्रादुर्भावोभवति। आभास्वराणां देवानां लोके प्रादुर्भावोभवति। शुभानां देवानां लोके प्रादुर्भावोभवति। परीत्तशुभानां देवानां लोके प्रादुर्भावोभवति। अप्रमाणशुभानां देवानां लोके प्रादुर्भावोभवति। शुभकृत्स्नानां देवानां लोके प्रादुर्भावोभवति। बृहाणां देवानां लोके प्रादुर्भावोभवति। परीत्तबृहाणां देवानां लोके प्रादुर्भावोभवति। अप्रमाणबृहाणां देवानां लोके प्रादुर्भावोभवति। बृहत्फलानां देवानां लोके प्रादुर्भावोभवति। अबृहाणां देवानां लोके प्रादुर्भावोभवति। अतपानां देवानां लोके प्रादुर्भावोभवति। सुदृशानां देवानां लोके प्रादुर्भावोभवति। सुदर्शनानां देवानां लोके प्रादुर्भावोभवति। अकनिष्ठानां देवानां लोके प्रादुर्भावोभवति। स्रोतआपन्नानां लोके प्रादुर्भावोभवति। सकृदागामिनां लोके प्रादुर्भावोभवति।

अनागामिनां लोके प्रादुर्भावोभवति। अर्हतां लोके प्रादुर्भावोभवति। प्रत्येकबुद्धानां लोके प्रादुर्भावोभवति। बोधिसत्त्वानां महासत्त्वानां लोके प्रादुर्भावोभवति। तथागतानामर्हतां सम्यक्सम्बुद्धानां लोके प्रादुर्भावोभवति। बोधिसत्त्वं हि कुलपुत्रा महासत्त्वमागम्य अन्नस्य पानस्य यानस्य वस्त्राणां शय्याऽऽसनोपाश्रयप्राजीविकस्य मणिमुक्तावैडूर्यशङ्खशिलाप्रवालरजतजातरूपस्य लोके प्रादुर्भावोभवति। यावन्ति कुलपुत्राः सत्त्वानां सुखोपधानानि दिव्यानि च मानुषाणि च विसंयोगसुखञ्च सर्व्वन्तत् कुलपुत्रा-बोधिसत्त्व महासत्त्वमागम्य। तत्कस्य हेतोर्बोधिसत्त्वोहि कुलपुत्रा-बोधिसत्त्वचारिकां चरन् षट्सु पारमितासुशिक्षित्वा आत्मना च दानं ददाति परांश्च दाने नियोजयति। आत्मना च शीलं रक्षति परांश्च शीलेनियोजयति। आत्मनाचक्षान्तिं भावयति। परांश्च क्षान्त्यां नियोजयति। आत्मना च वीर्य्यमारभते परांश्च वीर्य्येनियोजयति। आत्मना ध्यानान्युत्पादयति परांश्च ध्यानेनियोजयति। आत्मना च प्रज्ञां भावयति परांश्च प्रज्ञाभावनायां नियोजयति। बोधिसत्त्वं महासत्त्वमागम्य सत्त्वाः षट्सु पारमितासु चरन्ति। ते षट्सु पारमितासु चरन्त. सत्त्वाः लौकिकलोकोत्तराः सम्पत्तीरनुप्राप्नुवन्ति। तस्मात्तर्हि कुलपुत्राः बोधिसत्त्वोमहासत्त्वः सर्व्वसत्त्वानां हितसुखाय प्रतिपन्नोभवति।

अथ भगवांस्तस्यां वेलायां जिह्वेन्द्रियं मुखान्निर्णमय्य इमं त्रिसाहस्रमहासाहस्रं लोकधातुं स्फुरतिस्म।

अथ खलु ततोजिह्वेन्द्रियात् अनेकवर्णानानावर्णाअर्च्चिषोनि-

स्फुरन्तिस्म । निश्चार्य्य पूर्व्वस्यांदिशि गङ्गानदीवालुकोपमान् लोकधातून् महताऽवभासेन स्फुरन्तिस्म । दक्षिणस्यांदिशि गङ्गानदीवालुकोपमान् लोकधातून् महताऽवभासेन स्फुरन्तिस्म । पश्चिमायांदिशि गङ्गानदीवालुकोपमान् लोकधातून् महताऽवभासेन स्फुरन्तिस्म । उत्तरस्यांदिशि गङ्गानदीवालुकोपमान् लोकधातून् महताऽवभासेन स्फुरन्तिस्म । उत्तरपूर्व्वस्यांदिशि गङ्गानदीवालुकोपमान् लोकधातून् महताऽवभासेन स्फुरन्तिस्म । पूर्व्वदक्षिणस्यांदिशि गङ्गानदीवालुकोपमान् लोकधातून् महताऽवभासेन स्फुरन्तिस्म । दक्षिणपश्चिमायांदिशि गङ्गानदीवालुकोपमान् लोकधातून् महताऽवभासेन स्फुरन्तिस्म । पश्चिमोत्तरस्यांदिशि गङ्गानदीवालुकोपमान् लोकधातून् महताऽवभासेन स्फुरन्तिस्म । अधस्ताद्दिशि गङ्गानदीवालुकोपमान् लोकधातून् महताऽवभासेन स्फुरन्तिस्म । उपरिष्टाद्दिशि गङ्गानदीवालुकोपमान् लोकधातून् महताऽवभासेन स्फुरन्तिस्म ।

अथ खलु पूर्व्वस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अप्रमेयाप्रसङ्ख्येयाबोधिसत्त्वामहासत्त्वास्त प्रभाव्यूहं दृष्ट्वा स्वकस्वकेषु बुद्धक्षेत्रेषु बुद्धान् भगवतः परिपृच्छन्तिस्म । कस्याऽयं भगवन्ननुभावोयेनेमेलोकधातवः एवं महताऽवभासेन स्फुटाः । ते बुद्धाभगवन्तोऽवोचन् । एष कुलपुत्राः पश्चिमेदिग्भागे सहानाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक् सम्बुद्धस्तेनेमं जिह्वेन्द्रियं निर्णमय्य गङ्गानदीवालुकोपमालोकधातवोऽवभासेन स्फुटाः यदुत बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितादेशनतार्थं । दक्षि-

णस्यांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अप्रमेयाअसंख्येया बोधिसत्त्वामहासत्त्वास्तं प्रभाव्यूहं दृष्ट्वा स्वकस्वकेषु बुद्धक्षेत्रेषु बुद्धान् भगवतः परिपृच्छन्तिस्म। कस्यायं भगवन्ननुभावो येनेमे लोकधातवएवं महताऽवभासेन स्फुटाः। ते बुद्धाभगवन्तोऽवोचन्। एष कुलपुत्रा उत्तरे दिग्भागे महानाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनेमे जिह्वेन्द्रिय निर्णमय्य गङ्गानदीवालुकोपमालोकधातवोऽवभासेनस्फुटाः। यदुत बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितादेशनतायै। पश्चिमायांदिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अप्रमेयाअसंख्येया बोधिसत्त्वामहासत्त्वास्तं प्रभाव्यूहं दृष्ट्वा स्वकस्वकेषु बुद्धक्षेत्रेषु बुद्धान् भगवतः परिपृच्छन्तिस्म। कस्यायं भगवन्ननुभावोयेनेने लोकधातव एवं महता ऽवभासेन स्फुटाः। ते बुद्ध भगवन्तोऽवोचन। एष कुलपुत्रा पूर्वस्मिन्दिग्भागे महानामलोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन्सम्यक्सम्बुद्धस्तेनेमं जिह्वेन्द्रियं निर्णमय्य गङ्गानदीवालुकोपमा लोकधातवोऽवभासेन स्फुटाः। यदुत बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितादेशनतायै। उत्तरस्मिन्दिग्भागे गङ्गानदीवालुकोपमेषु लोकधातुषु अप्रमेयाअसंख्येयाबोधिसत्त्वामहासत्त्वास्तं प्रभाव्यूहं दृष्ट्वा स्वकस्वकेषु बुद्धक्षेत्रेषु बुद्धान् भगवतः परिपृच्छन्तिस्म। कस्याऽयं भगवन्ननुभावोयेनेमे लोकधातव एवं महताऽवभासेन स्फुटाः। ते बुद्धाभगवन्तोऽवोचन्। एष कुलपुत्रादक्षिणेदिग्भागे महानाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनेमं जिह्वेन्द्रियं निर्णमय्य गङ्गानदीवालुकोपमालोकधातवोऽवभासेन

स्फुटाः । यदुतबोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितादेशनतायै । उत्तरपूर्वस्मिन्दिग्भागे गङ्गानदीवालुकोपमेषु लोकधातुषु अप्रमेया-असंख्येया बोधिसत्त्वामहासत्त्वास्तं प्रभाव्यूहं दृष्ट्वा स्वकस्वकेषु बुद्ध-क्षेत्रेषु बुद्धान् भगवतः परिपृच्छन्तिस्म । कस्यायं भगवन्ननुभावो येनेमे लोकधातवएवं महताऽवभासेन स्फुटाः । ते बुद्धाभगवन्तोऽवो-चन् । एष कुलपुत्रादक्षिणपश्चिमेदिग्भागे महानाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनेमं जिह्वेन्द्रियं निर्ण-मय्य गङ्गानदीवालुकोपमालोकधातवोऽवभासेन स्फुटाः । यदुत बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितादेशनतायै । पूर्वदक्षिण-स्मिन्दिग्भागे गङ्गानदीवालुकोपमेषु लोकधातुषु अप्रमेयाअसंख्येया-बोधिसत्त्वामहासत्त्वास्तं प्रभाव्यूहं दृष्ट्वा स्वकस्वकेषु बुद्धक्षेत्रेषु बुद्धान् भगवतः परिपृच्छन्तिस्म । कस्यायं भगवन्ननुभावो येनेमे लोकधा-तवएवं महताऽवभासेन स्फुटाः । ते बुद्धाभगवन्तोऽवोचन् । एष कुलपुत्राः पश्चिमोत्तरेदिग्भागे महानाम लोकधातुस्तत्र शाक्यमु-निर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनेमं जिह्वेन्द्रियं निर्णमय्य, गङ्गानदीवालुकोपमालोकधातवोऽवभासेन स्फुटाः । यदुत बोधि-सत्त्वानां महासत्त्वानां प्रज्ञापारमितादेशनतायै । दक्षिणपश्चिमे दिग्भागे गङ्गानदीवालुकोपमेषु लोकधातुषु अप्रमेयाअसंख्येया-बोधिसत्त्वामहासत्त्वास्तं प्रभाव्यूहं दृष्ट्वा स्वकस्वकेषु बुद्धक्षेत्रेषु बुद्धान् भगवतः परिपृच्छन्तिस्म । कस्यायं भगवन्ननुभावो येनेमे लोक-धातवएवं महताऽवभासेन स्फुटाः । ते बुद्धाभगवन्तोऽवोचन् । एष कुलपुत्राउत्तरपूर्वदिग्भागे महानाम लोकधातुस्तत्र शाक्य-

मुनिर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनेमं जिह्वेन्द्रियं निर्णमय्य गङ्गानदीवालुकोपमालोकधातवोऽवभासेन स्फुटाः। यदुत बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितादेशनतायै। पश्चिमोत्तरे दिग्भागे गङ्गानदीवालुकोपमेषु लोकधातुषु अप्रमेयासंख्येयाबोधिसत्त्वामहासत्त्वास्तं प्रभाव्यूहं दृष्ट्वा स्वकस्वकेषु बुद्धक्षेत्रेषु बुद्धान् भगवतः परिपृच्छन्तिस्म। कस्यायं भगवन्ननुभावोयेनेमे लोकधातवएवं महताऽवभासेन स्फुटाः। ते बुद्धाभगवन्तोऽवोचन्। एष कुलपुत्राः पूर्वदक्षिणेदिग्भागे सहानाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनेमं जिह्वेन्द्रियं निर्णमय्य गङ्गानदीवालुकोपमालोकधातवोऽवभासेन स्फुटाः। यदुत बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितादेशनतायै। अधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अप्रमेयासंख्येयाबोधिसत्त्वामहासत्त्वास्तं प्रभाव्यूहं दृष्ट्वा स्वकस्वकेषु बुद्धक्षेत्रेषु बुद्धान् भगवतः परिपृच्छन्तिस्म। कस्यायं भगवन्ननुभावो येनेमे लोकधातव एवं महताऽवभासेन स्फुटाः। ते बुद्धाभगवन्तोऽवोचन्। एष कुलपुत्राउपरिष्टाद्दिग्भागे सहानाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनेमं जिह्वेन्द्रियं निर्णमय्य गङ्गानदीवालुकोपमालोकधातवोऽवभासेन स्फुटाः। यदुत बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितादेशनतायै। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अप्रमेयासंख्येयाबोधिसत्त्वामहासत्त्वास्तं प्रभाव्यूहं दृष्ट्वा स्वकस्वकेषु बुद्धक्षेत्रेषु बुद्धान् भगवतः परिपृच्छन्तिस्म। कस्यायं भगवन्ननुभावोयेनेमे लोकधातवएवं महताऽवभासेन स्फुटाः। ते

बुद्धा भगवन्तोऽवोचन्। एष कुलपुत्रा अधस्ताद्दिग्भागे सहानाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनेमं जिह्वेन्द्रियं निर्णमय्य गङ्गानदीवालुकोपमा लोकधातवोऽवभासेन स्फुटाः। यदुत बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितादेशनतायै।

अथ खलु ते बोधिसत्त्वा महासत्त्वास्तान् बुद्धान् भगवत एवमाहुः। तत्र वयं भगवन् गमिष्यामस्तस्य भगवतः शाक्यमुनेस्तथागतस्यार्हतः सम्यक्सम्बुद्धस्य दर्शनाय वन्दनाय पर्य्युपासनाय। तेषाञ्च दशदिक्सन्निपतितानां बोधिसत्त्वानां महासत्त्वानां दर्शनाय। तस्याश्च प्रज्ञापारमितायाः श्रवणाय। ते बुद्धा भगवन्त एवमाहुः। यस्येदानीं कुलपुत्राः कालं मन्यध्वे। अथ ते बोधिसत्त्वा महासत्त्वा दशभ्यो दिग्भ्यस्तेषां तथागताना मर्हतां सम्यक्सम्बुद्धानां पादाञ्छिरोभिर्वन्दित्वा सप्राञ्जलः प्रदक्षिणीकृत्याऽनेकैः* प्रकारान् छत्रध्वजपताकाः पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवराणि सुवर्णरूप्यपुष्पाणि च गृहीत्वा महत्याद्दूर्य्यताड़ाऽवचरसंगीत्या येन भगवाञ्छाक्यमुनिस्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनोपसंक्रामन्तिस्म। अथ चातुर्म्महाराजदेवास्त्रायस्त्रिंशायामास्तुषितानिर्म्माणरतयः परनिर्म्मितवशवर्त्तिनो- ब्रह्मकायिका ब्रह्मपुरोहिता ब्रह्मपार्षद्या महाब्रह्माणः आभाः परीत्ताभाः अप्रमाणाभा आभास्वराः शुभाः परीत्तशुभाः अप्रमाणशुभाः शुभकृत्स्नाः वृहाः परीत्तवृहाः अप्रमाणवृहाः वृहत्फलाः। शुद्धा-

---

* ग्रनेकैः प्रकारानिति सर्व्वत्र पुस्तकेषु पाठः। अनेकप्रकारा इति युक्तं।

वासा अवृहा अतपाः सुदृशाः सुदर्शनाः अकनिष्ठादेवा दिव्यानि पुष्पमाल्यविलेपनधूपचूर्णानि दिव्यान्युत्पलपद्मपुण्डरीकानि दिव्यानि मान्दारमहामान्दारकेशरतमालपत्राणि गृहीत्वा येन भगवाञ्छाक्यमुनिस्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तेनोपसंक्रामन्तिस्म। अथ ते बोधिसत्त्वामहासत्त्वास्ते च देवास्ताभिः पुष्पमाल्य गन्धविलेपन चूर्ण-चीवरच्छत्रध्वजपताकाभिर्भगवन्तं शाक्यमुनितथागतमर्हन्तं सम्यक्-सम्बुद्धमवकिरन्तिस्माऽभ्यवकिरन्तिस्म। अभिप्राकिरन्तिस्म। अथ तानि पुष्पादीन्युपरिवैहायसमभ्युद्गम्याऽस्मिंस्त्रिसाहस्रे महासाहस्रे लोकधातौ पुष्पकूटाकारः संस्थितोऽभूत्। चतरस्रश्चतुःस्थूणसमो-भागशः सुविभक्तोरमणीयोमनोरमः। अथ ततः पर्षदः प्राणिकोटी नियुतशतसहस्राण्युत्थायासनेभ्योयेन भगवांस्तेनाऽञ्जलिं प्रणम्य भग-वन्तमेतदवोचत्। वयमपि भगवन्ननागतेऽध्वन्येवं रूपाणां धर्म्माणां लाभिनोभवेमः। यथा रूपाणां तथागतोऽर्हन् सम्यक्सम्बुद्धः। एव-मेव श्रावकसंघं परिहारः से। एवञ्च पर्षद्धिर्म्मं देशयामः। यथा-तथागतएतर्हिंधर्म्मं देशयति। अथ भगवांस्तेषामध्याशयं विदित्वा सर्व्वधर्म्माणाञ्चानुत्पादायाऽनिरोधायाऽनभिसंस्कारायाऽप्रादुर्भावाय। क्षान्तिं विदित्वास्मितं प्रादुरकार्षीत्। अथायुष्मानानन्दउत्थाया-सनादेकांशंमुत्तरासङ्गं कृत्वादक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाऽञ्जलिं प्रणम्य भगवन्तमेतदवोचत्। कोभगवन् हेतुः कः प्रत्ययः स्मितस्याविष्करणे नाऽहेतुकं नाऽप्रत्ययं बुद्धा भगवन्तः स्मितमाविष्कुर्व्वन्ति। भगवानाह। इत आनन्दपर्षदः प्राणिकोटी नियुतशतसहस्रैरनुत्पत्तिकेषु धर्म्मेषु क्षान्तिः प्रतिलब्धा। एतेषा-

ऽनागतेऽध्वन्यष्टषष्ट्याकल्पकोटीभिर्ब्बोधिध्वजापुष्पनामानस्तथागतार्हन्तः सम्यक्सम्बुद्धालोके भविष्यन्ति पुष्पाकरेकल्पे ।

इति शतसाहस्रिकाः प्रज्ञापारमितायाः
प्रथमः परिवर्त्तः ॥०॥



# अथ द्वितीयपरिवर्त्तः ।

अथ भगवानायुष्मन्तं सुभूतिमामन्त्रयते। प्रतिभातु ते सुभूते बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितामारभ्य धार्म्मीं कथां कर्त्तुं कथं बोधिसत्त्वामहासत्त्वाः प्रज्ञापारमितायां निर्यायुरिति । अथ तेषां बोधिसत्त्वानां महासत्त्वानां तेषाञ्च महाश्रावकाणां तेषाञ्च देवपुत्राणामेतदभूत् किं पुनरायुष्मान् सुभूतिस्वात्केन प्रज्ञाप्रतिभानबलाधानबलाढेन बोधिसत्त्वेभ्योमहासत्त्वेभ्यः प्रज्ञापारमितामुपदेक्ष्यति । अथ वा बुद्धानुभावेनेति । अथायुष्मां सुभूतिर्बुद्धानुभावेन तेषां बोधिसत्त्वानां महासत्त्वानां तेषाञ्च महाश्रावकाणां तेषाञ्च देवपुत्राणां चेतसैव चेतः परितर्कमाज्ञायायुष्मन्तं शारद्वतीपुत्रमामन्त्रयतेस्म । यत्किञ्चिदायुष्मञ्छारद्वतीपुत्र भगवतः श्रावकाभाषन्तेऽभिलपन्त्युदीरयन्ति । सर्व्वः स तथागतस्य पुरुषकारः । यश्च तथागतेन धर्म्मोदेशितः सर्व्वः स धर्म्मतया अविरुद्धः । तत्ते कुलपुत्रास्तत्र धर्म्मदेशनायां शिक्षमाणास्तां धर्म्मतां साक्षात् कुर्व्वन्ति । तथागतएवैष शारद्वतीपुत्रोपाययोगेन बोधिसत्त्वेभ्योमहासत्त्वेभ्यः प्रज्ञापारमितामुपदेक्ष्यत्यविषयोऽत्रायुष्मञ्छारद्वतीपुत्र सर्व्वश्रावकप्रत्येकबुद्धानां बोधिसत्त्वेभ्यो महासत्त्वेभ्यः प्रज्ञापारमितामुपदेष्टुं । अथायुष्मान् सुभूतिर्भगवन्तमेतद्वोचत् । बोधि-

सत्त्वामहासत्त्वादति भगवन्नुच्यते। कतमस्यैतद्धर्मस्याऽधिवचनं यदुत बोधिसत्त्वइति प्रज्ञापारमितेति वा। नाऽहं भगवंस्तं धर्मं स मनुपश्यामि। यदुत बोधिसत्त्व इति प्रज्ञापारमितेति वा। सोऽहं भगवंस्तञ्च बोधिसत्त्वं ताञ्च प्रज्ञापारमितां तच्च बोधिसत्त्वनामाऽसमनुपश्यन् कतमं बोधिसत्त्वं कतमस्यां प्रज्ञापारमितायामववदिष्यान्यनुशासिष्यामि। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्। *नाममात्रमिदं सुभूते यदुत प्रज्ञापारमिता च बोधिसत्त्वश्च बोधिसत्त्वनाम च। तच्च नामनाऽध्यात्मं न बहिर्द्धानोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते सत्त्वः सत्त्वइति नाम तच्च प्रज्ञप्तिमात्रं। यच्च प्रज्ञप्तिधर्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नामनाऽध्यात्मं न बहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते जीवोजीवइति नाम तच्च नाम प्रज्ञप्तिमात्रं यच्च प्रज्ञप्तिधर्मं तस्य नोत्पादोन निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नामनाऽध्यात्मं न बहिर्द्धाणोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूतेजन्तुर्जन्तुरिति नाम तच्च प्रज्ञप्तिमात्रं तच्चप्रज्ञप्तिधर्मं तस्य नोत्पादोन निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाऽध्यात्मं नबहिर्द्धानोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते पोषः पोष इति नाम तच्च नाम प्रज्ञप्तिमात्रं यच्च प्रज्ञप्तिधर्मं तस्य नोत्पादोननिरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नामनाऽध्यात्मं नबहिर्द्धानोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते पुरुषः पुरुष इति नाम तच्च नाम प्रज्ञप्ति

* वाचारम्भण विकारो नामधेय। इति छान्दोग्योपनिषत्।

मात्रं यच्च प्रज्ञप्तिधर्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाध्यात्मं न बहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथापि नाम सुभूते पुद्गलः पुद्गलइति नाम तच्च नाम प्रज्ञप्तिमात्रं यच्च प्रज्ञप्तिधर्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाध्यात्मं न बहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथापि नाम सुभूते मनुजो मनुजइति नाम तच्च नाम प्रज्ञप्तिमात्रं यच्च प्रज्ञप्तिधर्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाध्यात्मं न बहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथापि नाम सुभूते मानवो मानवइति नाम तच्च नाम प्रज्ञप्तिमात्रं यच्च प्रज्ञप्तिधर्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाध्यात्मं न बहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथापि नाम सुभूते कारकः कारकइति नाम। तच्च नाम प्रज्ञप्तिमात्रं यच्च प्रज्ञप्तिधर्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाध्यात्मं न बहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथापि नाम सुभूते कारयिता कारयितेति नाम तच्च नाम प्रज्ञप्तिमात्रं यच्च प्रज्ञप्तिधर्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाध्यात्मं न बहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथापि नाम सुभूते उत्थापकः उत्थापकइति नाम तच्च नाम प्रज्ञप्तिमात्रं यच्च प्रज्ञप्तिधर्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाध्यात्मं न बहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथापि नाम सुभूते समु-

त्थापकः समुत्थापकइति नाम तच्च नाम प्रज्ञप्तिमात्रं यच्च प्रज्ञप्तिधर्म्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते वेदको वेदक इति नाम। तच्च नाम प्रज्ञप्तिमात्रं यच्च प्रज्ञप्तिधर्म्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते वेदयितृको वेदयितृकइति नाम। तच्च नाम प्रज्ञप्तिमात्रं यच्च प्रज्ञप्तिधर्म्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते जानकोजानकइति नाम। तच्च नाम प्रज्ञप्तिमात्रं। यच्च प्रज्ञप्तिधर्म्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते पश्यकः पश्यक इति नाम। तच्च नाम प्रज्ञप्तिमात्रं। यच्च प्रज्ञप्तिधर्म्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। एवमेव सुभूते या च प्रज्ञापारमिता यश्च बोधिसत्त्वो यच्च बोधिसत्त्वनाम सर्व्वमेतत् प्रज्ञप्तिमात्र। यच्च प्रज्ञप्तिधर्म्मं तस्य नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते योऽयमाध्यात्मिकश्चात्मभावोरूपमिति नाम यावदेव धर्म्मप्रज्ञप्तिमात्रं तस्यास्य धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केत-

मात्रेण व्यवह्रियते । तच्च नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । तद्यथाऽपि नाम सुभूते येयमाध्यात्मिकीवेदनेति नाम यावदेवधर्म्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । तद्यथाऽपि नाम सुभूते येयमाध्यात्मिकीसंज्ञेतिनामयावदेवधर्म्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । तद्यथाऽपि नाम सुभूते यद्दमे आध्यात्मिकाः संस्कारादृति नाम यावदेवधर्म्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । तद्यथाऽपि नाम सुभूते यदिदमाध्यात्मिकं विज्ञानमिति नाम यावदेवधर्म्म प्रज्ञप्तिमात्रमेतत्तस्याश्च धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । तच्च नाम नाऽध्यात्मंन वहिर्द्धा नोभयमन्तरेणोपलभ्यते । एव मेव सुभूते प्रज्ञापारमिता च बोधिसत्त्वस्य बोधिसत्त्व नाम च सर्व्वमेतत् धर्म्मप्रज्ञप्तिमात्रं तस्याश्च धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । तच्च नामनाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । चक्षुरिति सुभूते यावदेव धर्म्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । यदुत चक्षुरिति । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । श्रोत्रमिति सुभूते यावदेव धर्म्म

प्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत श्रोत्रमिति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। घ्राणमिति सुभूते यावदेव प्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत घ्राणमिति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। जिह्वेति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत जिह्वेति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। कायइति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत काय इति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। मनइति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत मनइति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। रूपमिति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत रूपमिति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। शब्दइति सुभूते यावदेव धर्म प्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत शब्द इति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। गन्धइति सुभूते यावदेव धर्मप्रज्ञप्तिमात्र-

मेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमा-त्रेण व्यवह्रियते। यदुत गन्धइति। तच्च नाम नाध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। रसइति सुभूते यावदेव धर्म-प्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञास-ङ्केतमात्रेण व्यवह्रियते। यदुत रसइति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। स्पर्शइति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत स्पर्शइति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। धर्मइति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधो-ऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत धर्मइति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। चक्षुर्धातुरिति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत चक्षुर्धातुरि-रि। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। रूपधातुरिति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्ते-र्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत रूपधातुरिति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणो-पलभ्यते। चक्षुर्विज्ञानधातुरिति सुभूते यावदेव धर्मप्रज्ञप्तिमात्र-मेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत चक्षुर्विज्ञानधातुरिति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। श्रोत्रधातुरिति सुभूते याव-

देव धर्म्मप्रज्ञप्तिमात्रमेतत्तस्याय धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधो-ऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । यदुत श्रोत्रधातुरिति । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । शब्दधातु-रिति सुभूते यावदेव धर्म्मप्रज्ञप्तिमात्रमेतत्तस्याय धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । यदुत शब्द-धातुरिति । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपल-भ्यते । श्रोत्रविज्ञानधातुरिति सुभूते यावदेव धर्म्मप्रज्ञप्तिमात्रमे-तत्तस्याय धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । यदुत श्रोत्रविज्ञानधातुरिति । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । घ्राणधातुरिति सुभूते याव-देव धर्म्मप्रज्ञप्तिमात्रमेतत्तस्याय धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । यदुत घ्राणधातुरिति । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । गन्धधातुरिति सुभूते यावदेव धर्म्मप्रज्ञप्तिमात्रमेतत्तस्याय धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । यदुत गन्धधातुरि-ति । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । घ्राणविज्ञानधातुरिति सुभूते यावदेव धर्म्मप्रज्ञप्तिमात्रमेतत्तस्याय धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । यदुत घ्राणविज्ञानधातुरिति । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । जिह्वाधातुरिति सुभूते यावदेव धर्म्म-प्रज्ञप्तिमात्रमेतत्तस्याय धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधेऽन्यत्र संज्ञा-सङ्केतमात्रेण व्यवह्रियत । यदुत जिह्वाधातुरिति । तच्च नाम

नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । रसधातुरिति प्रज्ञप्तिमात्रमेतत्तथाऽस्य धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत रसधातुरिति । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । जिह्वा विज्ञानधातुरिति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तथाऽस्य धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । यदुत जिह्वाविज्ञानधातुरिति । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। कायधातुरिति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तथाऽस्य धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। यदुत कायधातुरिति । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । स्प्रष्टव्यधातुरिति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तथाऽस्य धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । यदुत स्प्रष्टव्यधातुरिति । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । कायविज्ञानधातुरिति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तथाऽस्य धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । यदुत कायविज्ञानधातुरिति । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । मनोधातुरिति सुभूते यावदेव धर्मप्रज्ञप्तिमात्रमेतत्तथाऽस्य धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । यदुत मनोधातुरिति। तच्च नामनाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । धर्मधातुरिति सुभूते यावदेवधर्मप्रज्ञप्तिमात्रमेतत् तथाऽस्य धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञा

सङ्केतमात्रेण व्यवह्रियते। यदुतधर्म्मधातुरिति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। मनोविज्ञानधातुरिति सुभूते यावदेव धर्म्मप्रज्ञप्तिमात्रमेतत्तस्याश्चधर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्रसंज्ञासङ्केतमात्रेण व्यवह्रियते। यदुतमनोविज्ञान धातुरिति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। एव मेव सुभूते यदिदमुच्यते प्रज्ञापारमितेति बोधिसत्त्व इति बोधिसत्त्वनामेति। यावदेव धर्म्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्रसंज्ञासङ्केतमात्रेण व्यवह्रियते। प्रज्ञापारमितेति बोधिसत्त्व इति बोधिसत्त्वनामेति। तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते पोषमाध्यात्मिक आत्मभावइति नाम मात्रेण व्यवह्रियते। शीर्षाऽस्यौनीति नाम व्यवह्रियते। ग्रीवाऽस्यौनीति नाम व्यवह्रियते। स्कन्धाऽस्यौनीति नाम व्यवह्रियते। पृष्ठाऽस्यौनीति व्यवह्रियते। पार्श्वकाऽस्यौनीति व्यवह्रियते। कक्ष्यस्यौनीति नाम व्यवह्रियते। उर्व्वस्यौनीति नाम व्यवह्रियते। जङ्घाऽस्यौनीति नाम व्यवह्रियते। पादाऽस्यौनीति नाम व्यवह्रियते। धर्म्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्रसंज्ञा सङ्केतमात्रेण व्यवह्रियते। *शीर्षाऽस्यौनीति नाम* ग्रीवाऽस्यौनीति नाम*

---

* ग, घ, पुस्तके नाम शब्दात् परं सर्व्वत्र "व्यवक्रियते" इति क्रियापदं लिखितं दृश्यते। यत्र केषाञ्चित् पदाना पुनरुक्तिरुपलभ्यते। किमयं लेखकदोष। ग्रन्थकर्त्तुर्व्वा रचनाचातुर्य्य प्रयोजनविशेषोवाऽस्तीति तत्वतोनविद्मः।

वाक्रस्थीनीति नाम पृष्ठास्थीनीति नाम पार्श्वास्थीनीति नाम कट्यस्थीनीति नाम उर्वस्थीनीति नाम जङ्घास्थीनीति नाम। तच्च नाम नाध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। एवमेव सुभूते यदिदमुच्यते प्रज्ञापारमितेति बोधिसत्त्व इति बोधिसत्त्वनामेति यावदेवधर्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्रसंज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते यानीमानि वाह्यानि तृणकाष्ठशाखापत्रपलाशानि सर्व्वाण्येतानि नानानामधेयैर्व्यवह्रियन्ते तानि च एषाञ्च नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तानि च नामानि नाध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते।

एव मेव सुभूते यदिदमुच्यते प्रज्ञापारमितेति बोधिसत्त्व इति। बोधिसत्त्वनामेति। यावदेवधर्मप्रज्ञप्तिमात्रमेतत्तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते अतीतानां बुद्धानां भगवतां यावदेव नाम मात्रं तिष्ठति। तच्च नाम नाध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। तद्यथाऽपि नाम सुभूते स्वप्नः प्रतिश्रुत्का प्रतिभासोमायामरीचि उदकचन्द्रस्तथागतनिर्म्मितः सर्व्वएते धर्माः प्रज्ञप्तिमात्रं यस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्रसंज्ञासङ्केतमात्रेण व्यवह्रियते। तच्च नाम नाध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते। एवमेव सुभूते यदिदमुच्यते प्रज्ञापारमितेति बोधिसत्त्वइति बोधिसत्त्वनामेति। सर्व्व एते

धर्म्माः प्रज्ञप्तिमात्रमेतत्तस्माच्च धर्म्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र संज्ञासङ्केतमात्रेण व्यवह्रियते । तच्च नाम नाऽध्यात्मं न वहिर्द्धा नोभयमन्तरेणोपलभ्यते । एवं खलु सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता नामसङ्केत प्रज्ञप्त्यावाधर्म्मप्रज्ञप्त्या च शिक्षितव्यं ।

एवं खलु सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न रूपं नाम नित्यमिति समनुपश्यति । न रूपं नामाऽनित्यमिति समनुपश्यति । न रूपं नाम सुखमिति समनुपश्यति । न रूपं नाम दुःखमिति समनुपश्यति । न रूपं नामात्मेति समनुपश्यति । न रूपं नामाऽनात्मेति समनुपश्यति । न रूपं नाम शान्तमिति समनुपश्यति । न रूपं नामऽशान्तमिति समनुपश्यति । न रूपं नाम शून्यमिति समनुपश्यति । न रूपं नामाऽशून्यमिति समनुपश्यति । न रूपं नाम निमित्तमिति समनुपश्यति । न रूपं नामऽनिमित्तमिति समनुपश्यति । न रूपं नाम प्रणिहितमिति समनुपश्यति । न रूपं नामाऽप्रणिहितमिति समनुपश्यति । न रूपं नाम संस्कृतमिति समनुपश्यति । न रूपं नामाऽसंस्कृतमिति समनुपश्यति । न रूपं नाम संक्लेशमिति समनुपश्यति । न रूपं नामाऽसंक्लेशमिति समनुपश्यति । न रूपं नाम व्यवदानमिति समनुपश्यति । न रूपं नामोत्पादइति समनुपश्यति । न रूपं नाम निरोध इति समनुपश्यति । न रूपं नाम विविक्तमिति समनुपश्यति । न रूपं नामाऽविविक्तमिति समनुपश्यति । न रूपं नाम कुशलमिति समनुपश्यति । न रूपं नामाऽकुशलमिति

समनुपश्यति। न रूपं नाम सावद्यमिति समनुपश्यति। न रूपं नाम निरवद्यमिति समनुपश्यति। न रूपं नाम साश्रवमिति समनुपश्यति। न रूपं नामाऽनाश्रवमिति समनुपश्यति। न रूपं नाम संक्लेशमिति समनुपश्यति। न रूपं नाम निःक्लेशमिति समनुपश्यति। न रूपं नाम लौकिकमिति समनुपश्यति। न रूपं नाम लोकोत्तरमिति समनुपश्यति। न रूपं नाम संसार इति समनुपश्यति। न रूपं नाम निर्व्वाणमिति समनुपश्यति।

न वेदनां नाम नित्येति समनुपश्यति। न वेदनां नामाऽनित्येति समनुपश्यति। न वेदनां नाम सुखेति समनुपश्यति। न वेदनां नाम दुःखेति समनुपश्यति। न वेदनां नामात्मेति समनुपश्यति। न वेदनां नामानात्मेति समनुपश्यति। न वेदनां नाम शान्तेति समनुपश्यति। न वेदनां नामाऽशान्तेति समनुपश्यति। न वेदनां नाम शून्येति समनुपश्यति। न वेदनां नामाऽशून्येति समनुपश्यति। न वेदनां नाम निमित्तेति समनुपश्यति। न वेदनां नामाऽनिमित्तेति समनुपश्यति। न वेदनां नाम प्रणिहित*मिति समनुपश्यति। न वेदनां नामाऽप्रणिहितमिति समनुपश्यति। न वेदनां नाम संस्कृतमिति समनुपश्यति। न वेदनां नामाऽसंस्कृतमिति समनुपश्यति। न वेदनां नाम संक्लेशमिति समनुपश्यति। न वेदनां नाम व्यवदानमिति समनुपश्यति। न वेदनां नामोत्पाद इति समनुपश्यति।

---

* वेदनादि स्त्रीलिङ्गशब्दविशेषणस्य क्वचित् स्त्रीलिङ्गत्वं क्वचित् क्लीबलिङ्गत्वं दृश्यते, यथास्य पुस्तकेषु।

न वेदनां नाम निरोध इति समनुपश्यति। न वेदनां नाम विविक्तेति समनुपश्यति। न वेदनां नामाऽविविक्तेति समनुपश्यति। न वेदनां नाम कुशलेति समनुपश्यति। न वेदनां नामाऽकुशलेति समनुपश्यति। न वेदनां नाम सावद्येति समनुपश्यति। न वेदनां नामाऽनवद्येति समनुपश्यति। न वेदनां नामसास्रवेति समनुपश्यति। न वेदनां नामाऽनास्रवेति समनुपश्यति। न वेदनां नाम संक्लेशेति समनुपश्यति। न वेदनां नाम निःक्लेशेति समनुपश्यति। न वेदनां नाम लौकिकेति समनुपश्यति। न वेदनां नाम लोकोत्तरेति समनुपश्यति। न वेदनां नाम संसार इति समनुपश्यति। न वेदनां नाम निर्व्वाण* इति समनुपश्यति।

न संज्ञां नामनित्येति समनुपश्यति। न संज्ञां नामाऽनित्येति समनुपश्यति। न संज्ञां नाम सुखमिति समनुपश्यति। न संज्ञां नाम दुःखमिति समनुपश्यति। न संज्ञां नामात्मेति समनुपश्यति। न संज्ञां नामाऽनात्मेति समनुपश्यति। न संज्ञां नाम शान्तमिति समनुपश्यति। न संज्ञां नामाऽशान्तमिति समनुपश्यति। न संज्ञां नाम शून्येति समनुपश्यति। न संज्ञां नामाऽशून्येति समनुपश्यति। न संज्ञां नाम निमित्तमिति समनुपश्यति। न संज्ञां नामाऽनिमित्तमिति समनुपश्यति। न संज्ञां नाम प्रणिहितमिति समनुपश्यति। न संज्ञां नामाऽप्रणिहितमिति समनुपश्यति। न संज्ञां नामसंस्कृतमिति समनुपश्यति। न संज्ञां नामाऽसंस्कृतमिति समनुपश्यति। न संज्ञां नामोत्पाद इति समनुपश्यति। न संज्ञां नाम निरोध

* निर्व्वाणमिति युक्तं प्रतिभाति।

इति समनुपश्यति । न संज्ञां नाम संक्लेश इति समनुपश्यति । न संज्ञां नाम व्यवदानमिति समनुपश्यति । न संज्ञां नाम विविक्तमिति समनुपश्यति । न संज्ञां नामाऽविविक्तमिति समनुपश्यति । न संज्ञां नाम कुशलेति समनुपश्यति । न संज्ञां नामाऽकुशलेति समनुपश्यति । न संज्ञां नाम सावद्येति समनुपश्यति । न संज्ञां नामाऽनवद्येति समनुपश्यति । न संज्ञां नाम साश्रवेति समनुपश्यति । न संज्ञां नामाऽनाश्रवेति समनुपश्यति । न संज्ञां नाम संक्लेशइति समनुपश्यति । न संज्ञां नाम निःक्लेशेति समनुपश्यति । न संज्ञां नाम लौकिकमिति समनुपश्यति । न संज्ञां नाम लोकोत्तरेति समनुपश्यति । न संज्ञां नाम संसारइति समनुपश्यति । न संज्ञां नाम निर्व्वाणमिति समनुपश्यति ।

न संस्कारानाम नित्याइति समनुपश्यति । न संस्कारानामाऽनित्याइति समनुपश्यति । न संस्कारानाम सुखाइति समनुपश्यति । न संस्कारानाम दुःखाइति समनुपश्यति । न संस्कारानामाऽऽत्मान इति समनुपश्यति । नसंस्कारा नामाऽनात्मान इति समनुपश्यति । न संस्कारानाम शान्ताइति समनुपश्यति । न संस्कारानामाऽशान्ताइति समनुपश्यति । न संस्कारानाम शून्याइति समनुश्यति । न संस्कारानामाऽशून्या इति समनुपश्यति । न संस्कारानाम निमित्ताइनि समनुपश्यति । न संस्कारानामाऽनिमित्ताइति समनुपश्यति । न संस्कारानाम प्रणिहिताइति समनुपश्यति । न संस्कारानामाऽप्रणिहिताइति समनुपश्यति । न संस्कारा नाम संस्कृता इति समनुपश्यति । न संस्कारानामाऽसंस्कृताइति समनु-

पश्यति। न संस्कारानाभोत्पादादिति समनुपश्यति। न संस्कारानाम निरोधादिति समनुपश्यति। न संस्कारानाम संक्लेशादिति समनुपश्यति। न संस्कारानाम व्यवदानादिति समनुपश्यति। न संस्कारानाम विविक्ता इति समनुपश्यति। न संस्कारानामाऽविविक्तादिति समनुपश्यति। न संस्कारानाम कुशलादिति समनुपश्यति। न संस्कारानामाऽकुशला इति समनुपश्यति। न संस्कारानाम सावद्यादिति समनुपश्यति। न संस्कारानाम निरवद्यादिति समनुपश्यति। न संस्कारानाम साश्रवादिति समनुपश्यति। न संस्कारा नामाऽनाश्रवा इति समनुपश्यति। न संस्कारानाम संक्लेशा इति समनुपश्यति। न संस्कारानाम निःक्लेशादिति समनुपश्यति। न संस्कारानाम लौकिकादिति समनुपश्यति। न संस्कारानाम लोकोत्तरा इति समनुपश्यति। न संस्कारानाम संसारादिति समनुपश्यति। न संस्कारानाम निर्व्वाणमिति समनुपश्यति।

न विज्ञानं नाम नित्यमिति समनुपश्यति। न विज्ञानं नामाऽनित्यमिति समनुपश्यति। न विज्ञानं नाम सुखमिति समनुपश्यति। न विज्ञानं नाम दुःखमिति समनुपश्यति। न विज्ञानं नामाऽऽत्मेति समनुपश्यति। न विज्ञानं नामाऽनात्मेति समनुपश्यति। न विज्ञानं नाम शान्तमिति समनुपश्यति। न विज्ञानं नामाऽशान्तमिति समनुपश्यति। न विज्ञानं नाम शून्यमिति समनुपश्यति। न विज्ञानं नामाऽशून्यमिति समनुपश्यति। न विज्ञानं नाम निमित्तमिति समनुपश्यति। न विज्ञानं नामाऽनिमित्तमिति समनुपश्यति। न विज्ञानं नाम प्रणिहितमिति समनुपश्यति। न

विज्ञानं नामाऽप्रणिहितमिति समनुपश्यति । न विज्ञानं नाम संस्कृतमिति समनुपश्यति । न विज्ञानं नामाऽसंस्कृतमिति समनुपश्यति । न विज्ञानं नामोत्पादइति समनुपश्यति । न विज्ञानं नाम निरोधइति समनुपश्यति । न विज्ञानं नाम संक्लेशइति समनुपश्यति । न विज्ञानं नाम व्यवदानमिति समनुपश्यति । न विज्ञानं नाम विविक्तमिति समनुपश्यति । न विज्ञानं नामाऽविविक्तमिति समनुपश्यति । न विज्ञानं नाम कुशलमिति समनुपश्यति । न विज्ञानं नामाऽकुशलमिति समनुपश्यति । न विज्ञानं नाम साऽवद्यमिति समनुपश्यति । न विज्ञानं नाम निरवद्यमिति समनुपश्यति । न विज्ञानं नाम साऽऽस्रवमिति समनुपश्यति । न विज्ञानं नामाऽनास्रवमिति समनुपश्यति । न विज्ञानं नाम संक्लेशइति समनुपश्यति । न विज्ञान नाम निः क्लेशइति समनुपश्यति । न विज्ञानं नाम लौकिकमिति समनुपश्यति । न विज्ञानं नाम लोकोत्तरमिति समनुपश्यति । न विज्ञानं नाम संसारइति समनुपश्यति । न विज्ञानं नाम निर्व्वाणमिति समनुपश्यति ।

न चक्षुर्नामनित्यमिति समनुपश्यति । न चक्षुर्नामाऽनित्यमिति समनुपश्यति । न चक्षुर्नाम सुखमिति समनुपश्यति । न चक्षुर्नाम दुःखमिति समनुपश्यति । न चक्षुर्नामाऽऽत्मेति समनुपश्यति । न चक्षुर्नामाऽनात्मेति समनुपश्यति । न चक्षुर्नाम शान्तमिति समनुपश्यति । न चक्षुर्नामाऽशान्तमिति समनुपश्यति । न चक्षुर्नाम शून्यमिति समनुपश्यति । न चक्षुर्नामाऽशून्यमिति समनुपश्यति ।

न चक्षुर्नामनिमित्तमिति समनुपश्यति । न चक्षुर्नामाऽनिमित्तमिति समनुपश्यति । न चक्षुर्नाम प्रणिहितमिति समनुपश्यति । न चक्षुर्नामाऽप्रणिहितमिति समनुपश्यति । न चक्षुर्नाम संस्कृतमिति समनुपश्यति । न चक्षुर्नामाऽसंस्कृतमिति समनुपश्यति । न चक्षुर्नामोत्पाद इति समनुपश्यति । न चक्षुर्नाम निरोध इति समनुपश्यति । न चक्षुर्नाम संक्लेशमिति समनुपश्यति । न चक्षुर्नाम व्यवदानमिति समनुपश्यति । न चक्षुर्नाम विविक्तमिति समनुपश्यति । न चक्षुर्नामाऽविविक्तमिति समनुपश्यति । न चक्षुर्नाम कुशलमिति समनुपश्यति । न चक्षुर्नामाऽकुशलमिति समनुपश्यति । न चक्षुर्नाम साऽवद्यमिति समनुपश्यति । न चक्षुर्नाम निरवद्यमिति समनुपश्यति । न चक्षुर्नाम साऽऽस्रवमिति समनुपश्यति । न चक्षुर्नामाऽनास्रवमिति समनुपश्यति । न चक्षुर्नाम संक्लेशमिति समनुपश्यति । न चक्षुर्नाम निःक्लेशमिति समनुपश्यति । न चक्षुर्नाम लौकिकमिति समनुपश्यति । न चक्षुर्नाम लोकोत्तरमिति समनुपश्यति । न चक्षुर्नाम संसारइति समनुपश्यति । न चक्षुर्नाम निर्व्वाणमिति समनुपश्यति ।

न रूपं नाम नित्यमिति समनुपश्यति । न रूपं नामाऽनित्यमिति समनुपश्यति । न रूपं नाम सुखमिति समनुपश्यति । न रूपं नाम दुःखमिति समनुपश्यति । न रूपं नामाऽऽत्मेति समनुपश्यति । न रूपं नामाऽनात्मेति समनुपश्यति । न रूपं नाम शान्तमिति समनुपश्यति । न रूपं नामाऽशान्तमिति समनुपश्यति । न रूपं नाम शून्यमिति समनुपश्यति । न रूपं नामाऽशून्यमिति समनुपश्यति । न रूपं नाम निमित्तमिति समनुपश्यति । न रूपं

नामाऽनिमित्तमिति समनुपश्यति । न रूपं नाम प्रणिहितमिति समनुपश्यति । न रूपं नामाऽप्रणिहितमिति समनुपश्यति । न रूपं नाम संस्कृतमिति समनुपश्यति । न रूपं नामाऽसंस्कृतमिति समनुपश्यति । न रूपं नामोत्पादइति समनुपश्यति । न रूपं नाम निरोधइति समनुपश्यति । न रूपं नाम संक्लेशमिति समनुपश्यति । न रूपं नाम व्यवदानमिति समनुपश्यति । न रूपं नाम विविक्तमिति समनुपश्यति । न रूपं नामाऽविविक्तमिति समनुपश्यति । न रूपं नाम कुशलमिति समनुपश्यति । न रूपं नामाऽकुशलमिति समनुपश्यति । न रूपं नाम सावद्यमिति समनुपश्यति । न रूपं नामाऽनवद्यमिति समनुपश्यति । न रूपं नाम साऽऽस्रवमिति समनुपश्यति । न रूपं नामाऽनास्रवमिति समनुपश्यति । न रूपं नाम संक्लेशइति समनुपश्यति । न रूपं नाम निःक्लेशइति समनुपश्यति । न रूपं नाम लौकिकमिति समनुपश्यति । न रूपं नाम लोकोत्तरमिति समनुपश्यति । न रूपं नाम संसारइति समनुपश्यति । न रूपं नाम निर्व्वाणमिति समनुपश्यति ।

न चक्षुर्व्विज्ञानं नाम नित्यमिति समनुपश्यति । न चक्षुर्व्विज्ञानं नामाऽनित्यमिति समनुपश्यति । न चक्षुर्व्विज्ञानं नाम सुखमिति समनुपश्यति । न चक्षुर्व्विज्ञानं नाम दुःखमिति समनुपश्यति । न चक्षुर्व्विज्ञानं नामाऽऽत्मेति समनुपश्यति । न चक्षुर्व्विज्ञानं नामाऽनात्मेति समनुपश्यति । न चक्षुर्व्विज्ञानं नाम शान्तमिति समनुपश्यति । न चक्षुर्व्विज्ञानं नामाऽशान्तमिति समनुपश्यति । न चक्षुर्व्विज्ञानं नाम शून्यमिति समनुपश्यति । न चक्षुर्व्विज्ञानं नामा-

रिति। नाऽऽयुधातुर्बोधिसत्त्वइति। नाऽऽकाशधातुर्बोधिसत्त्वइति। नाऽन्यत्राऽऽकाशधातोर्बोधिसत्त्वइति। नाऽऽकाशधातौ बोधिसत्त्वइति। नबोधिसत्त्वे आकाशधातुरिति। नाऽनाऽऽकाशधातुर्बोधिसत्त्वइति।

न विज्ञानधातुर्बोधिसत्त्वइति। नाऽन्यत्र विज्ञानधातोर्बोधिसत्त्वइति। न विज्ञानधातौ बोधिसत्त्वइति। न बोधिसत्त्वे विज्ञानधातुरिति। नाऽविज्ञानधातुर्बोधिसत्त्वइति। नाऽविद्याबोधिसत्त्वइति। नाऽन्यत्राऽविद्याया बोधिसत्त्वइति। नाऽविद्यायां बोधिसत्त्वइति। न बोधिसत्त्वेऽविद्येति। नाऽनविद्योबोधिसत्त्वइति। न संस्कारा बोधिसत्त्वइति। नाऽन्यत्र संस्कारेभ्यो बोधिसत्त्वइति। न संस्कारेषु बोधिसत्त्वइति। न बोधिसत्त्वेसंस्काराइति। नाऽसंस्कारोबोधिसत्त्वइति। न विज्ञानं बोधिसत्त्वइति। नाऽन्यत्रविज्ञानाद्बोधिसत्त्वइति। न विज्ञाने बोधिसत्त्वइति। न बोधिसत्त्वेविज्ञानमिति। नाऽविज्ञानो बोधिसत्त्वइति। न नामरूपं बोधिसत्त्वइति। नाऽन्यत्र नामरूपाद्बोधिसत्त्वइति। न नामरूपे बोधिसत्त्वइति। न बोधिसत्त्वे नामरूपमिति। नाऽनामरूपोबोधिसत्त्वइति। न षडायतनं बोधिसत्त्वइति। नाऽन्यत्र षडायतनाद्बोधिसत्त्वइति। न षडायतनेबोधिसत्त्वइति। न बोधिसत्त्वे षडायतनमिति। नाऽषडायतनो बोधिसत्त्वइति। न स्पर्शोबोधिसत्त्वइति। नाऽन्यत्र स्पर्शाद्बोधिसत्त्वइति। न स्पर्शे बोधिसत्त्वइति। न बोधिसत्त्वे स्पर्शइति। नाऽस्पर्शोबोधिसत्त्वइति। न वेदनाबोधिसत्त्वइति। नाऽन्यत्र वेदनाया बोधिसत्त्वइति। न वेदनायां बोधिसत्त्वइति। न बोधिसत्त्वेवेदनेति। नाऽवेदनोबोधिसत्त्वइति। न तृष्णाबोधिसत्त्वइति। नाऽन्यत्र तृष्णाया बोधिसत्त्वइति।

न तृष्णायां बोधिसत्त्वइति। न बोधिसत्त्वे तृष्णेति। नाऽतृष्णोबोधिसत्त्वइति। नोपादानं बोधिसत्त्वइति। नाऽन्यत्रोपादानाद्बोधिसत्त्वइति। नोपादाने बोधिसत्त्वइति। न बोधिसत्त्वे उपादानमिति। नाऽनुपादानो बोधिसत्त्वइति। न भवोबोधिसत्त्वइति। नाऽन्यत्र-भवाद्बोधिसत्त्वइति। न भवे बोधिसत्त्वइति। न बोधिसत्त्वे भव-इति। नाऽभवोबोधिसत्त्वइति। न जातिर्बोधिसत्त्वइति। नाऽन्यत्र जातेर्बोधिसत्त्वइति। न जातौ बोधिसत्त्वइति। न बोधिसत्त्वे-जातिरिति। नाऽजातिर्बोधिसत्त्वइति। न जरामरणं बोधिसत्त्व-इति। नाऽन्यत्र जरामरणाद्बोधिसत्त्वइति। न जरामरणे बोधि-सत्त्वइति। न बोधिसत्त्वे जरामरणमिति। नाऽजरामरणोबोधि-सत्त्वइति। न रूपतथता बोधिसत्त्वइति। नाऽन्यत्र रूपतथताया-बोधिसत्त्वइति। न रूपतथतायां बोधिसत्त्वइति। न बोधि-सत्त्वेरूपतथतेति। नाऽरूपतथतोबोधिसत्त्वइति। न वेदनातथता बोधिसत्त्वइति। नाऽन्यत्र वेदनातथताया बोधिसत्त्वइति। न वेदनातथतायां बोधिसत्त्वइति। न बोधिसत्त्वे वेदनातथतेति। नाऽवेदनातथतोबोधिसत्त्वइति। न संज्ञातथता बोधिसत्त्वइति। नाऽन्यत्र संज्ञातथतायाः बोधिसत्त्वइति। न संज्ञातथतायां बोधि-सत्त्वइति। न बोधिसत्त्वे संज्ञातथतेति। नाऽसंज्ञातथतोबोधि-सत्त्वइति। न संस्कारतथता बोधिसत्त्वइति। नाऽन्यत्र संस्कार-तथतायाबोधिसत्त्वइति। न संस्कारतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे संस्कारतथतेति। नाऽसंस्कारतथतोबोधिसत्त्वइति। न विज्ञानतथताबोधिसत्त्वइति। नाऽन्यत्र विज्ञानतथतायाबोधि-

सत्त्वइति। न विज्ञानतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे विज्ञानतथतेति। नाऽविज्ञानतथतोबोधिसत्त्वइति।

न चक्षुस्तथता बोधिसत्त्वइति। नाऽन्यत्र चक्षुस्तथतायाबोधिसत्त्वइति। न चक्षुस्तथतायां बोधिसत्त्वइति। न बोधिसत्त्वे चक्षुस्तथतेति। नाऽचक्षुस्तथतोबोधिसत्त्वइति। न श्रोत्रतथता बोधिसत्त्वइति। नाऽन्यत्र श्रोत्रतथतायाबोधिसत्त्वइति। न श्रोत्रतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे श्रोत्रतथतेति। नाऽश्रोत्रतथतो बोधिसत्त्वइति। न घ्राणतथता बोधिसत्त्वइति। नाऽन्यत्रघ्राणतथताया बोधिसत्त्वइति। न घ्राणतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे घ्राणतथतेति। नाऽघ्राणतथतोबोधिसत्त्वइति। न जिह्वातथता बोधिसत्त्वइति। नाऽन्यत्र जिह्वातथताया बोधिसत्त्वइति। न जिह्वातथतायां बोधिसत्त्वइति। न बोधिसत्त्वे जिह्वातथतेति। नाऽजिह्वातथतोबोधिसत्त्वइति। न कायतथता बोधिसत्त्वइति। नाऽन्यत्र कायतथताया बोधिसत्त्वइति। न कायतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे कायतथतेति। नाऽकायतथतोबोधिसत्त्वइति। न मनस्तथता बोधिसत्त्वइति। नाऽन्यत्र मनस्तथताया बोधिसत्त्वइति। नमनस्तथतायां बोधिसत्त्वइति। न बोधिसत्त्वे मनस्तथतेति। नाऽमनस्तथतोबोधिसत्त्वइति।

न रूपतथता बोधिसत्त्वइति। नाऽन्यत्र रूपतथताया बोधिसत्त्वइति। न रूपतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे रूपतथतेति। नाऽरूपतथतोबोधिसत्त्वइति। न शब्दतथता बोधिसत्त्वइति। नाऽन्यत्र शब्दतथतायाबोधिसत्त्वइति। न शब्दतथ-

तायां बोधिसत्त्वइति। न बोधिसत्त्वे शब्दतथतेति। नाऽशब्दतथतो-बोधिसत्त्वइति। न गन्धतथता बोधिसत्त्वइति। नाऽन्यत्र गन्धतथ-तायाबोधिसत्त्वइति। न गन्धतथतायां बोधिसत्त्वइति। न बोधि-सत्त्वे गन्धतथतेति। नाऽगन्धतथतोबोधिसत्त्वइति। न रसतथता बोधिसत्त्वइति। नाऽन्यत्र रसतथतायाबोधिसत्त्वइति। न रसतथ-तायां बोधिसत्त्वइति। न बोधिसत्त्वे रसतथतेति। नाऽरसतथतो-बोधिसत्त्वइति। न स्पर्शतथता बोधिसत्त्वइति। नाऽन्यत्र स्पर्शतथ-ताया बोधिसत्त्वइति। न स्पर्शतथतायां बोधिसत्त्वइति। न बोधि-सत्त्वे स्पर्शतथतेति। नाऽस्पर्शतथतोबोधिसत्त्वइति। न धर्मतथता बोधिसत्त्वइति। नाऽन्यत्र धर्मतथताया बोधिसत्त्वइति। न धर्म-तथतायां बोधिसत्त्वइति। न बोधिसत्त्वे धर्मतथतेति। नाऽधर्म तथतोबोधिसत्त्वइति।

न चक्षुर्धातुतथता बोधिसत्त्वइति। नाऽन्यत्र चक्षुर्धातुतथताया-बोधिसत्त्वइति। न चक्षुर्धातुतथतायां बोधिसत्त्वइति। न बोधि-सत्त्वे चक्षुर्धातुतथतेति। नाऽचक्षुर्धातुतथतोबोधिसत्त्वइति। न रूपधातुतथता बोधिसत्त्वइति। नाऽन्यत्र रूपधातुतथतायाबोधि-सत्त्वइति। न रूपधातुतथताया बोधिसत्त्वइति। न बोधिसत्त्वे रूप-धातुतथतेति। नाऽरूपधातुतथतोबोधिसत्त्वइति।

न चक्षुर्विज्ञानधातुतथता बोधिसत्त्वइति। नाऽन्यत्र चक्षु-र्विज्ञानधातुतथतायाबोधिसत्त्वइति। न चक्षुर्विज्ञानधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे चक्षुर्विज्ञानधातुतथतेति। नाऽचक्षु-र्विज्ञानधातुतथतोबोधिसत्त्वइति। न श्रोत्रधातुतथता बोधिसत्त्व-

इति। नाऽन्यत्र श्रोत्रधातुतथतायाबोधिसत्त्वइति। न श्रोत्रधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे श्रोत्रधातुतथतेति। नाऽश्रोत्रधातुतथतो बोधिसत्त्वइति। न शब्दधातुतथता बोधिसत्त्वइति। नाऽन्यत्र शब्दधातुतथतायाबोधिसत्त्वइति। न शब्दधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे शब्दधातुतथतेति। नाऽशब्दधातुतथतोबोधिसत्त्वइति। न श्रोत्रविज्ञानधातुतथता बोधिसत्त्वइति। नाऽन्यत्र श्रोत्रविज्ञानधातुतथतायाबोधिसत्त्वइति। न श्रोत्रविज्ञानधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे श्रोत्रविज्ञानधातुतथतेति। नाऽश्रोत्रविज्ञानधातुतथतो बोधिसत्त्वइति। न घ्राणधातुतथता बोधिसत्त्वइति। नाऽन्यत्रघ्राणधातुतथताया बोधिसत्त्वइति। न घ्राणधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे घ्राणधातुतथतेति। नाऽघ्राणधातुतथतोबोधिसत्त्वइति। न गन्धधातुतथता बोधिसत्त्वइति। नाऽन्यत्रगन्धधातुतथतायाबोधिसत्त्वइति। न गन्धधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे गन्धधातुतथतेति। नाऽगन्धधातुतथतोबोधिसत्त्वइति।

न घ्राणविज्ञानधातुतथता बोधिसत्त्वइति। नाऽन्यत्र घ्राणविज्ञानधातुतथतायाबोधिसत्त्वइति। न घ्राणविज्ञानधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे घ्राणविज्ञानधातुतथतेति। नाऽघ्राणविज्ञानधातुतथतोबोधिसत्त्वइति।

न जिह्वाधातुतथता बोधिसत्त्वइति। नाऽन्यत्रजिह्वाधातुतथतायाबोधिसत्त्वइति। न जिह्वाधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे जिह्वाधातुतथतेति। नाऽजिह्वाधातुतथतोबोधिसत्त्वइति।

न रसधातुतथता बोधिसत्त्वइति। नाऽन्यत्र रसधातुतथताया-बोधिसत्त्वइति। न रसधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे रसधातुतथतेति। नाऽरसधातुतथतोबोधिसत्त्वइति।

न जिह्वाविज्ञानधातुतथता बोधिसत्त्वइति। नाऽन्यत्र जिह्वाविज्ञानधातुतथताया बोधिसत्त्वइति। न जिह्वाविज्ञानधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे जिह्वाविज्ञानधातुतथतेति। नाऽजिह्वाविज्ञानधातुतथतोबोधिसत्त्वइति।

न कायधातुतथता बोधिसत्त्वइति। नाऽन्यत्रकायधातुतथताया-बोधिसत्त्वइति। न कायधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे कायधातुतथेति। नाऽकायधातुतथतोबोधिसत्त्वइति।

न स्प्रष्टव्यधातुतथता बोधिसत्त्वइति। नाऽन्यत्र स्प्रष्टव्यधातुतथताया बोधिसत्त्वइति। न स्प्रष्टव्यधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे स्प्रष्टव्यधातुतथतेति। नाऽस्प्रष्टव्यधातुतथतोबोधिसत्त्वइति।

न कायविज्ञानधातुतथता बोधिसत्त्वइति। नाऽन्यत्र कायविज्ञानधातुतथतायाबोधिसत्त्वइति। न कायविज्ञानधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे कायविज्ञानधातुतथतेति। नाऽकायविज्ञानधातुतथतोबोधिसत्त्वइति।

न मनोधातुतथता बोधिसत्त्वइति। नाऽन्यत्र मनोधातुतथताया-बोधिसत्त्वइति। न मनोधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे मनोधातुतथतेति। नाऽमनोधातुतथतोबोधिसत्त्वइति।

न धर्मधातुतथता बोधिसत्त्वइति। नाऽन्यत्र धर्मधातुतथताया-

बोधिसत्त्वइति। न धर्म्मधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे धर्म्मधातुतथतेति। नाऽधर्म्मधातुतथतोबोधिसत्त्वइति।

न मनोविज्ञानधातुतथता बोधिसत्त्वइति। नाऽन्यत्र मनोविज्ञानधातुतथतायाबोधिसत्त्वइति। न मनोविज्ञानधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे मनोविज्ञानधातुतथतेति। नाऽमनोविज्ञानधातुतथतोबोधिसत्त्वइति।

न पृथिवीधातुतथता बोधिसत्त्वइति। नाऽन्यत्र पृथिवीधातुतथतायाबोधिसत्त्वइति। न पृथिवीधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे पृथिवीधातुतथतेति। नाऽपृथिवीधातुतथतोबोधिसत्त्वइति।

नाऽब्धातुतथता बोधिसत्त्वइति। नाऽन्यत्राऽब्धातुतथतायाबोधिसत्त्वइति। नाऽब्धातुतथताया बोधिसत्त्वइति। न बोधिसत्त्वेऽब्धातुतथतेति। नाऽनब्धातुतथतोबोधिसत्त्वइति।

न तेजोधातुतथता बोधिसत्त्वइति। नाऽन्यत्र तेजोधातुतथताया बोधिसत्त्वइति। न तेजोधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे तेजोधातुतथतेति। नाऽतेजोधातुतथतोबोधिसत्त्वइति।

न वायुधातुतथता बोधिसत्त्वइति। नाऽन्यत्र वायुधातुतथताया-बोधिसत्त्वइति। न वायुधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे वायुधातुतथतेति। नाऽवायुधातुतथतोबोधिसत्त्वइति।

नाऽऽकाशधातुतथता बोधिसत्त्वइति। नाऽन्यत्राऽऽकाशधातुतथतायाबोधिसत्त्वइति। नाऽऽकाशधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे आकाशधातुतथतेति। नाऽनाऽऽकाशधातुतथतोबोधिसत्त्वइति।

न विज्ञानधातुतथता बोधिसत्त्वइति। नाऽन्यत्र विज्ञानधातुतथतायाबोधिसत्त्वइति। न विज्ञानधातुतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे विज्ञानधातुतथेति। नाऽविज्ञानधातुतथतोबोधिसत्त्वइति।

नाऽविद्यातथता बोधिसत्त्वइति। नान्यत्राऽविद्यातथतायाबोधिसत्त्वइति। नाऽविद्यातथातायां बोधिसत्त्वइति। न बोधिसत्त्वेऽविद्यातथतेति। नाऽविद्यातथतोबोधिसत्त्वइति

न सस्कारतथता बोधिसत्त्वइति। नाऽन्यत्र सस्कारतथताया-बोधिसत्त्वइति। न सस्कारतथताया बोधिसत्त्वइति। न बोधिसत्त्वे सस्कारतथतेति। नाऽसस्कारतथतोबोधिसत्त्वइति।

न विज्ञानतथता बोधिसत्त्वइति। नाऽन्यत्र विज्ञानतथताया-बोधिसत्त्वइति। न विज्ञानतथताया बोधिसत्त्वइति। न बोधिसत्त्वे विज्ञानतथतेति। नाऽविज्ञानतथतोबोधिसत्त्वइति।

न नामरूपतथता बोधिसत्त्वइति। नाऽन्यत्र नामरूपतथताया-बोधिसत्त्वइति। न नामरूपतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे नामरूपतथतेति। नाऽनामरूतथतो बोधिसत्त्वइति।

न षड़ायतनतथता बोधिसत्त्वइति। नाऽन्यत्र षड़ायतनतथतायाबोधिसत्त्वइति। न षड़ायतनतथातायां बोधिसत्त्वइति। न बोधिसत्त्वे षड़ायतनतथतेति। नाऽषड़ायतनतथतो बोधिसत्त्वइति।

न स्पर्शतथता बोधिसत्त्वइति। नाऽन्यत्र स्पर्शतथतायाबोधिसत्त्वइति। न स्पर्शतथतायां बोधिसत्त्वइति। न बोधिसत्त्वे स्पर्शतथतेति। नाऽस्पर्शतथतोबोधिसत्त्वइति।

न वेदनातथता बोधिसत्त्वइति । नाऽन्यत्र वेदनातथताया-बोधिसत्त्वइति । न वेदनातथतायां बोधिसत्त्वइति । न बोधिसत्त्वे वेदनातथतेति । नाऽवेदनातथतोबोधिसत्त्वइति ।

न तृष्णातथता बोधिसत्त्वइति । नाऽन्यत्र तृष्णातथतायाबोधि-सत्त्वइति । न तृष्णातथतायां बोधिसत्त्वइति । न बोधिसत्त्वे तृष्णा-तथतेति । नाऽतृष्णातथतो बोधिसत्त्वइति ।

नोपादानतथता बोधिसत्त्वइति । नाऽन्यत्रोपादानतथताया-बोधिसत्त्वइति । नोपादानतथतायां बोधिसत्त्वइति । न बोधिसत्त्वे उपादानतथतेति । नाऽनुपादानतथतोबोधिसत्त्वइति ।

न भवतथता बोधिसत्त्वइति । नाऽन्यत्र भवतथतायाबोधिसत्त्व-इति । न भवतथतायां बोधिसत्त्वइति । न बोधिसत्त्वे भवतथतेति । नाऽभवतथतोबोधिसत्त्वइति ।

न जातितथता बोधिसत्त्वइति । नाऽन्यत्र जातितथतायाबोधि-सत्त्वइति । न जातितथतायां बोधिसत्त्वइति । न बोधिसत्त्वे जाति-तथतेति । नाऽजातितथतोबोधिसत्त्वइति ।

न जरामरणतथता बोधिसत्त्वइति । नाऽन्यत्र जरामरणतथ-तायाबोधिसत्त्वइति । न जरामरणतथतायां बोधिसत्त्वइति । न बोधिसत्त्वे जरामरणतथतेति । नाऽजरामरणतथतोबोधिसत्त्वइति ।

सुभूतिराह । *अत्यन्ततया भगवन् बोधिसत्त्वोन संविद्यते

---

* सुभूतिर्ब्बोधिसत्त्वस्याऽसत्पदार्थत्वादेव न रूपादिस्वरूपत्व तदन्यत्वादिकं न वस्तु स्वभावकृतमित्युत्तरवाक्येन दर्शयति अत्यन्ततयेत्यादिना । अत्यन्ततया बोधिसत्त्वस्य विद्यमानत्वाभाव उपलब्धेरभावाच्च देशतः कालतश्च सत्ता-

सत्त्वोभविष्यति। कुतोमनसि बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे मनोभविष्यति। कुतोऽमनस्कोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वोन संविद्यते नोपलभ्यते। तत् कुतोरूपाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र रूपाद्बोधिसत्त्वोभविष्यति। कुतोरूपे बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे रूपं भविष्यति। कुतोऽरूपोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वोन संविद्यते नोपलभ्यते। तत् कुतः शब्दाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र शब्दाद्बोधिसत्त्वोभविष्यति। कुतः शब्दे बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे शब्दोभविष्यति। कुतोऽशब्दोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वोन संविद्यते नोपलभ्यते। तत् कुतोगन्धाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र गन्धाद्बोधिसत्त्वोभविष्यति। कुतोगन्धे बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे गन्धोभविष्यति। कुतोऽगन्धोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वोन संविद्यते नोपलभ्यते। तत् कुतोरसाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र रसाद्बोधिसत्त्वोभविष्यति। कुतोरसे बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे रसोभविष्यति। कुतोऽरसोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वोन संविद्यते नोपलभ्यते। तत् कुतः स्पर्शाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र स्पर्शाद्बोधिसत्त्वोभविष्यति। कुतः स्पर्शे बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे स्पर्शोभविष्यति। कुतोऽस्पर्शोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वोन संविद्यते नोपलभ्यते। तत् कुतोधर्म्मा॑ऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच धर्म्माद्बोधिसत्त्वोभविष्यति। कुतोधर्म्मे बोधिसत्त्वोभविष्यति। कुतो बोधिसत्त्वे धर्म्मोभविष्यति। कुतोऽधर्म्मोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वोन संविद्यते नोपलभ्यते। तत् कुतश्चक्षुर्धात्वधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच चक्षुर्धातोर्ब्बोधिसत्त्वोभविष्यति। कुतश्चक्षुर्धातौ बोधिसत्त्वोभविष्यति। कुतो-बोधिसत्त्वे चक्षुधातुर्भविष्यति। कुतोऽचक्षुर्धातुर्ब्बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोरूपधात्वधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच रूपधातोर्ब्बोधिसत्त्वोभविष्यति। कुतोरूपधातौ बोधिसत्त्वोभविष्यति। कुतो बोधिसत्त्वे रूपधातुर्भविष्यति। कुतोऽरूपधातुर्ब्बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतश्चक्षुर्व्विज्ञानधात्वधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच चक्षुर्व्विज्ञानधातोर्ब्बोधिसत्त्वोभविष्यति। कुतश्चक्षुर्व्विज्ञानधातौ बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे चक्षुर्व्विज्ञानधातुर्भविष्यति। कुतोऽचक्षुर्व्विज्ञानधातुर्ब्बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः श्रोत्रधात्वधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच श्रोत्र-धातोर्ब्बोधिसत्त्वोभविष्यति। कुतः श्रोत्रधातौ बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे श्रोत्रधातुर्भविष्यति। कुतोऽश्रोत्रधातुर्ब्बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत्

नोपलभ्यते। तत् कुतोरूपाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र रूपाद्बोधिसत्त्वोभविष्यति। कुतोरूपे बोधिसत्त्वोभविष्यति। कुतो बोधिसत्त्वे रूपं भविष्यति। कुतोऽरूपोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वोन संविद्यते नोपलभ्यते। तत् कुतोवेदनाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र वेदनाया बोधिसत्त्वो भविष्यति। कुतो वेदनायां बोधिसत्त्वोभविष्यति। कुतो बोधिसत्त्वे वेदना भविष्यति। कुतोऽवेदनोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वोन संविद्यते नोपलभ्यते। तत् कुतः संज्ञाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र संज्ञाया बोधिसत्त्वोभविष्यति। कुतः संज्ञायां बोधिसत्त्वोभविष्यति। कुतो बोधिसत्त्वे संज्ञा भविष्यति। कुतोऽसंज्ञोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वोन संविद्यते नोपलभ्यते। तत् कुतः संस्काराऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र संस्कारेभ्यो बोधिसत्त्वोभविष्यति। कुतः संस्कारेषु बोधिसत्त्वोभविष्यति। कुतो बोधिसत्त्वे संस्कारा भविष्यन्ति। कुतोऽसंस्कारोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोविज्ञानाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र विज्ञानाद्बोधिसत्त्वोभविष्यति। कुतोविज्ञाने बोधिसत्त्वोभविष्यति। कुतो बोधिसत्त्वे विज्ञानं भविष्यति। कुतोऽविज्ञानोबोधिसत्त्वोभविष्यति।

---

ऽभाव उपलब्ध्यभावत्व न हि कस्मिंश्चिद्देशे कस्मिंश्चित्काले वा बोधिसत्त्वस्य विद्यमानता उपलब्धिर्वा परमार्थतः सम्भवति धर्मीकत्वात् तथाच माऽर्थवर्थं सम्पश्यन्नेव वदामीति शुभूतेराशय रूपाऽधिवचन रूपस्य वाचकं बोधिसत्त्व बोधिसत्त्वपदमिति तदर्थ। एवं परत्र।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतश्चक्षुरधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच चक्षुषोबोधिसत्त्वोभविष्यति। कुतश्चक्षुषि बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे चक्षुर्भविष्यति। कुतोऽचक्षुष्कोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः श्रोत्राऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र श्रोत्राद्बोधिसत्त्वोभविष्यति। कुतः श्रोत्रे बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे श्रोत्रं भविष्यति। कुतोऽश्रोत्रोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोघ्राणाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच घ्राणाद्बोधिसत्त्वोभविष्यति। कुतोघ्राणे बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे घ्राणं भविष्यति। कुतोऽघ्राणोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोजिह्वाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच जिह्वायाबोधिसत्त्वोभविष्यति। कुतोजिह्वायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे जिह्वा भविष्यति। कुतोऽजिह्वोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः कायाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र कायाद्बोधिसत्त्वोभविष्यति। कुतः काये बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे कायोभविष्यति। कुतोऽकायोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोमनोऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच मनसोबोधि-

कुतः शब्दधात्वधिवचनं बोधिसत्त्वो भविष्यति। कुतोऽन्यत्र शब्दधातोर्बोधिसत्त्वो भविष्यति। कुतः शब्दधातौ बोधिसत्त्वो भविष्यति। कुतो बोधिसत्त्वे शब्दधातुर्भविष्यति। कुतोऽशब्दधातुर्बोधिसत्त्वो भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः श्रोत्रविज्ञानधात्वधिवचनं बोधिसत्त्वो भविष्यति। कुतोऽन्यत्र श्रोत्रविज्ञानधातोर्बोधिसत्त्वो भविष्यति। कुतः श्रोत्रविज्ञानधातौ बोधिसत्त्वो भविष्यति। कुतो बोधिसत्त्वे श्रोत्रविज्ञानधातुर्भविष्यति। कुतोऽश्रोत्रविज्ञानधातुर्बोधिसत्त्वो भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतो घ्राणधात्वधिवचनं बोधिसत्त्वो भविष्यति। कुतोऽन्यत्र घ्राणधातोर्बोधिसत्त्वो भविष्यति। कुतो घ्राणधातौ बोधिसत्त्वो भविष्यति। कुतो बोधिसत्त्वे घ्राणधातुर्भविष्यति। कुतोऽघ्राणधातुर्बोधिसत्त्वो भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतो गन्धधात्वधिवचनं बोधिसत्त्वो भविष्यति। कुतोऽन्यत्र गन्धधातोर्बोधिसत्त्वो भविष्यति। कुतो गन्धधातौ बोधिसत्त्वो भविष्यति। कुतो बोधिसत्त्वे गन्धधातुर्भविष्यति। कुतोऽगन्धधातुर्बोधिसत्त्वो भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतो घ्राणविज्ञानधात्वधिवचनं बोधिसत्त्वो भविष्यति। कुतोऽन्यत्र घ्राणविज्ञानधातोर्बोधिसत्त्वो भविष्यति। कुतो घ्राणविज्ञानधातौ बोधिसत्त्वो भविष्यति। कुतो बोधिसत्त्वे घ्राणविज्ञानधातुर्भविष्यति। कुतोऽघ्राणविज्ञानधातुर्बोधिसत्त्वो भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतोजिह्वाधात्वधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यच जिह्वाधातोर्बोधिसत्त्वोभविष्यति । कुतोजिह्वाधातौ बोधिसत्त्वोभविष्यति । कुतोबोधिसत्त्वे जिह्वाधातुर्भविष्यति । कुतोऽजिह्वाधातुर्बोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतोरसधात्वधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यच रसधातोर्बोधिसत्त्वोभविष्यति । कुतोरसधातौ बोधिसत्त्वोभविष्यति । कुतोबोधिसत्त्वे रसधातुर्भविष्यति । कुतोऽरसधातुर्बोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतोजिह्वाविज्ञानधात्वधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यच जिह्वाविज्ञानधातोर्बोधिसत्त्वोभविष्यति । कुतोजिह्वाविज्ञानधातौ बोधिसत्त्वोभविष्यति । कुतोबोधिसत्त्वे जिह्वाविज्ञानधातुर्भविष्यति । कुतोऽजिह्वाविज्ञानधातुर्बोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतः कायधात्वधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यच कायधातोर्बोधिसत्त्वोभविष्यति । कुतः कायधातौ बोधिसत्त्वोभविष्यति । कुतोबोधिसत्त्वे कायधातुर्भविष्यति । कुतोऽकायधातुर्बोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतः स्प्रष्टव्यधात्वधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यच स्प्रष्टव्यधातोर्बोधिसत्त्वोभविष्यति । कुतः स्प्रष्टव्यधातौ बोधिसत्त्वोभविष्यति ।

कुतोबोधिसत्त्वे स्प्रष्टव्यधातुर्भविष्यति । कुतोऽस्प्रष्टव्यधातुर्बोधिसत्त्वो-भविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतः कायविज्ञानधात्वधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्य कायविज्ञानधातोर्बोधिसत्त्वोभविष्यति । कुतः कायविज्ञानधातौ बोधिसत्त्वोभविष्यति । कुतो बोधिसत्त्वे कायविज्ञानधातुर्भविष्यति । कुतोऽकायविज्ञानधातुर्भविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते, कुतोमनोधात्वधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र मनोधातो-र्बोधिसत्त्वोभविष्यति । कुतोमनोधातौ बोधिसत्त्वोभविष्यति । कुतोबो-धिसत्त्वे मनोधातुर्भविष्यति । कुतोऽमनोधातुर्बोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतोधर्मधात्वधिवचनं बोधिसत्त्वो भविष्यति । कुतोऽन्यत्र धर्मधातो-र्बोधिसत्त्वोभविष्यति । कुतोधर्मधातौ बोधिसत्त्वोभविष्यति । कुतो-बोधिसत्त्वे धर्मधातुर्भविष्यति । कुतोऽधर्मधातुर्बोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतोमनोविज्ञानधात्वधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र मनोविज्ञानधातोर्बोधिसत्त्वोभविष्यति । कुतोमनोविज्ञानधातौ बोधिसत्त्वोभविष्यति । कुतोबोधिसत्त्वे मनोविज्ञानधातुर्भविष्यति । कुतोऽमनोविज्ञानधातुर्बोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतः पृथिवीधात्वधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र पृथिवी-

धातोर्ब्बोधिसत्त्वोभविष्यति। कुतः पृथिवीधातौ बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे पृथिवीधातुर्भविष्यति। कुतोऽपृथिवीधातुर्भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोऽब्धातुधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्राऽब्धातोर्ब्बोधिसत्त्वोभविष्यति। कुतोऽब्धातौ बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वेऽब्धातुर्भविष्यति। कुतोऽनब्धातुर्ब्बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतस्तेजोधातुधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र तेजोधातोर्ब्बोधिसत्त्वोभविष्यति। कुतस्तेजोधातौ बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे तेजोधातुर्भविष्यति। कुतोऽतेजोधातुर्ब्बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतो वायुधातुधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र वायुधातोर्बोधिसत्त्वोभविष्यति। कुतोवायुधातौ बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे वायुधातुर्भविष्यति। कुतोऽवायुधातुर्बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतश्चाकाशधातुधिवचनं बोधिसत्त्वोभविष्यति। तत् कुतोऽन्यत्राकाशधातोर्बोधिसत्त्वोभविष्यति। कुतश्चाकाशधातौ बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे आकाशधातुर्भविष्यति। कुतोऽनाकाशधातुर्बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत्

कुतो विज्ञानधात्वधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र विज्ञान धातोर्बोधिसत्त्वोभविष्यति । कुतो विज्ञान धातौ बोधिसत्त्वो-भविष्यति । कुतोबोधिसत्त्वे विज्ञानधातुर्भविष्यति । कुतोऽविज्ञान-धातुर्बोधिसत्त्वोभविष्यति ।।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतोऽविद्याऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्राऽविद्याया-बोधिसत्त्वोभविष्यति । कुतोऽविद्यायां बोधिसत्त्वोभविष्यति । कुतो बोधिसत्त्वेऽविद्याभविष्यति । कुतोऽनविद्योबोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतः संस्काराऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र संस्कारेभ्यो-बोधिसत्त्वोभविष्यति । कुतः संस्कारेषु बोधिसत्त्वोभविष्यति । कुतो बोधिसत्त्वे संस्कारो भविष्यति । कुतोऽसंस्कारोबोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतोविज्ञानाऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र विज्ञाना-द्बोधिसत्त्वोभविष्यति । कुतोविज्ञाने बोधिसत्त्वोभविष्यति । कुतो-बोधिसत्त्वे विज्ञानं भविष्यति । कुतोऽविज्ञानोबोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतोनामरूपाऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र नामरूपा-द्बोधिसत्त्वोभविष्यति । कुतोनामरूपे बोधिसत्त्वोभविष्यति । कुतो-बोधिसत्त्वे नामरूपं भविष्यति । कुतोऽनामरूपोबोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतः षडायतनाऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र षडाय-

तनाद्वोधिसत्त्वोभविष्यति। कुतः षडायतना बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे षडायतनं भविष्यति। कुतोऽषडायतनोबोधिसत्त्वो-भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः स्पर्शोऽधिवचन बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र स्पर्शाद्बोधि-सत्त्वोभविष्यति। कुतःस्पर्शे बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे स्पर्शोभविष्यति। कुतोऽस्पर्शोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते तत् कुतोवेदनाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्रवेदनाया-बोधिसत्त्वोभविष्यति। कुतो वेदनायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे वेदना भविष्यति। कुतोऽवेदनोबोधिसत्त्वोभवि ष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतस्तृष्णाऽधिवचन बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र तृष्णायाबोधि-सत्त्वोभविष्यति। कुतस्तृष्णायां बोधिसत्त्वोभविष्यति। कुतोबोधि-सत्त्वे तृष्णा भविष्यति। कुतोऽतृष्णोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतउपादानाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्रोपादाना-द्वोधिसत्त्वोभविष्यति। कुतउपादाने बोधिसत्त्वोभविष्यति। कुतो-बोधिसत्त्वे उपादानं भविष्यति। कुतोऽनुपादानोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते तत् कुतोभवाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र भवाद्बोधिसत्त्वो-

भविष्यति। कुतोभवे बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे भवो-भविष्यति। कुतोऽभवो बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोजात्यधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच जातेर्बोधि-सत्त्वोभविष्यति। कुतोजातौ बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे जातिर्भविष्यति। कुतोऽजातिर्बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते। नोपलभ्यते तत् कुतोजरामरणाऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच जरा-मरणाद्बोधिसत्त्वोभविष्यति। कुतोजरामरणे बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे जरामरणं भविष्यति। कुतोऽजरामरणो बोधिसत्त्वो-भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते। नोपलभ्यते, तत् कुतोरूपतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच रूपतथ-ताया बोधिसत्त्वोभविष्यति। कुतोरूपतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वेरूपतथता भविष्यति। कुतोऽरूपतथतोबोधिसत्त्वो-भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोवेदनातथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच वेदना-तथताया बोधिसत्त्वोभविष्यति। कुतो वेदनातथतायां बोधि-सत्त्वोभविष्यति। कुतोबोधिसत्त्वे वेदनातथताभविष्यति। कुतोऽवे-दनातथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत्

कुतः संज्ञातथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच संज्ञातथतायाबोधिसत्त्वोभविष्यति। कुतः संज्ञातथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे संज्ञातथता भविष्यति। कुतोऽसंज्ञातथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः संस्काराऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच संस्कारःतथतायाबोधिसत्त्वो भविष्यति। कुतः संस्कारतथतायां बोधिसत्त्वोभविष्यति। कुतः बोधिसत्त्वे संस्कारतथता भविष्यति। कुतोऽसंस्कारतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोविज्ञानतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच विज्ञानतथतायाबोधिसत्त्वोभविष्यति। कुतोविज्ञानतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे विज्ञानतथता भविष्यति। कुतोऽविज्ञानतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतश्चक्षुस्तथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच चक्षुस्तथतायाबोधिसत्त्वोभविष्यति। कुतश्चक्षुस्तथतायां बोधिसत्त्वोभविष्यति। कुतो बोधिसत्त्वेचक्षुस्तथता भविष्यति। कुतोऽचक्षुस्तथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः श्रोत्रतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यच श्रोत्रतथतायाबोधिसत्त्वोभविष्यति। कुतः श्रोत्रतथतायां बोधिसत्त्वो-

भविष्यति। कुतोबोधिसत्त्वे श्रोत्रतथता भविष्यति। कुतोऽश्रोत्र-तथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोघ्राणतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र घ्राण तथतायाबोधिसत्त्वोभविष्यति। कुतोघ्राणतथतायां बोधिसत्त्वो-भविष्यति। कुतोबोधिसत्त्वे घ्राणतथता भविष्यति। कुतोऽघ्राण-तथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोजिह्वातथताऽधिवचनं बोधिसत्त्वो भविष्यति। कुतोऽन्यत्र जिह्वातथतायाबोधिसत्त्वोभविष्यति। कुतोजिह्वातथतायां बोधि-सत्त्वोभविष्यति। कुतोबोधिसत्त्वे जिह्वातथता भविष्यति। कुतो-ऽजिह्वातथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः कायतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र काय-तथतायाबोधिसत्त्वोभविष्यति। कुतः कायतथताया बोधिसत्त्वो-भविष्यति। कुतोबोधिसत्त्वे कायतथताभविष्यति। कोतोऽकायतथता बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलते। तत् कुतोमनस्तथताऽधिवचन बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र मनस्तथ-तायाबोधिसत्त्वोभविष्यति। कुतोमनस्तथतायां बोधिसत्त्वोभवि-ष्यति। कुतोबोधिसत्त्वेमनस्तथता भविष्यति। कुतोऽमनस्तथतो बोधि-सत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोरूपतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्ररूपतथतायाबोधिसत्त्वोभविष्यति। कुतोरूपतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे रूपतथता भविष्यति। कुतोऽरूपतथतोबोधिसत्त्वो-भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः शब्दतथताऽधिवचनं बोधिसत्त्वो भविष्यति। कुतोऽन्यत्र शब्दतथतायाबोधिसत्त्वोभविष्यति। कुतः शब्दतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे शब्दतथता भविष्यति। कुतोऽशब्दतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोगन्धतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र गन्धतथतायाबोधिसत्त्वोभविष्यति। कुतोगन्धतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे गन्धतथता भविष्यति। कुतोऽगन्धतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोरसतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्ररसतथतायाबोधिसत्त्वोभविष्यति। कुतोरसतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे रसतथताभविष्यति। कुतोऽरसतथतो बोधिसत्त्वो-भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः स्पर्शतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र

स्पर्शतथतायाबोधिसत्त्वोभविष्यति। कुतः स्पर्शतथतायां बोधिसत्त्वो-भविष्यति। कुतोबोधिसत्त्वे स्पर्शतथता भविष्यति। कुतोऽस्पर्श-तथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोधर्म्मतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र धर्म्मतथ-तायाबोधिसत्त्वोभविष्यति। कुतोधर्म्मतथतायां बोधिसत्त्वोभविष्यति। कुतो बोधिसत्त्वे धर्म्मतथता भविष्यति। कुतोऽधर्म्मतथतोबोधि-सत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतश्चक्षुर्धातुतथताऽधिवचनं बोधिसत्त्वो भविष्यति। कुतोऽन्यत्र चक्षु-र्धातुतथतायाबोधिसत्त्वोभविष्यति। कुतोऽन्यत्र चक्षुर्धातुतथताया-बोधिसत्त्वोभविष्यति। कुतश्चक्षुर्धातुतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे चक्षुर्धातुतथता भविष्यति। कुतोऽचक्षुर्धातुतथतो-बोधिसत्त्वो भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोरूपधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र रूप-धातुतथतायाबोधिसत्त्वोभविष्यति। कुतोरूपधातुतथतायां बोधि-सत्त्वोभविष्यति। कुतोबोधिसत्त्वे रूपधातुतथताभविष्यति। कुतो-ऽरूपधातुतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतश्चक्षुर्विज्ञानधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र चक्षुर्विज्ञानधातुतथतायाबोधिसत्त्वोभविष्यति। कुतश्चक्षुर्विज्ञानधातु-

तथतायां बोधिसत्त्वोभविष्यति । कुतोबोधिसत्त्वे चक्षुर्विज्ञानधातु-तथता भविष्यति । कुतोऽचक्षुर्विज्ञानधातुतथतो बोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतः श्रोत्रधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र श्रोत्रधातु तथतायाबोधिसत्त्वोभविष्यति । कुतः श्रोत्रधातुतथतायां बोधिसत्त्वोभविष्यति । कुतोबोधिसत्त्वे श्रोत्रधातुतथता भविष्यति । कुतोऽश्रोत्रधातुतथतो बोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतः शब्दधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र शब्दधातुतथतायाबोधिसत्त्वो भविष्यति । कुतः शब्दधातुतथतायां बोधिसत्त्वोभविष्यति । कुतोबोधिसत्त्वे शब्दधातुतथता भविष्यति । कुतोऽशब्दधातुतथतोबोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो [illegible] संविद्यते नोपलभ्यते । तत् कुतः श्रोत्रविज्ञानधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र श्रोत्रविज्ञानधातुतथतायाबोधिसत्त्वोभविष्यति । कुतः श्रोत्रविज्ञानधातुतथतायां बोधिसत्त्वोभविष्यति । कुतोबोधिसत्त्वे श्रोत्र-विज्ञानधातुतथता भविष्यति । कुतोऽश्रोत्रविज्ञानधातुतथतोबोधि-सत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतोघ्राणधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्रघ्राण-धातुतथतायाबोधिसत्त्वोभविष्यति । कुतोघ्राणधातुतथतायां बोधि-

सत्त्वोभविष्यति । कुतोबोधिसत्त्वे घ्राणधातुतथता भविष्यति । कुतोऽघ्राणधातुतथतोबोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतोगन्धधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्रगन्धधातुतथतायाबोधिसत्त्वोभविष्यति । कुतोगन्धधातुतथतायां बोधिसत्त्वोभविष्यति । कुतोबोधिसत्त्वे गन्धधातुतथता भविष्यति । कुतोऽगन्धधातुतथतोबोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतो घ्राणविज्ञानधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र घ्राणविज्ञानधातुतथतायाबोधिसत्त्वोभविष्यति । कुतोघ्राणविज्ञानधातुतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे घ्राणविज्ञानधातुतथता भविष्यति । कुतोऽघ्राणविज्ञानधातुतथतोबोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतोजिह्वाधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र जिह्वाधातुतथताया बोधिसत्त्वो भविष्यति । कुतोजिह्वाधातुतथतायां बोधिसत्त्वोभविष्यति । कुतो बोधिसत्त्वे जिह्वाधातुतथता भविष्यति । कुतोऽजिह्वाधातुतथतोबोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते । तत् कुतोरसधातु तथताऽधिवचनं बोधिसत्त्वोभविष्यति । कुतोऽन्यत्र रसधातुतथतायाबोधिसत्त्वोभविष्यति । कुतोरसधातुतथतायां बोधिसत्त्वो भविष्यति । कुतोबोधिसत्त्वे रसधातुतथता भविष्यति । कुतोऽरसधातुतथतोबोधिसत्त्वोभविष्यति ।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोऽजिह्वाविज्ञानधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र जिह्वाविज्ञानधातुतथतायाबोधिसत्त्वोभविष्यति। कुतोऽजिह्वाविज्ञानधातुतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे जिह्वाविज्ञानधातुतथता भविष्यति। कुतोऽजिह्वाविज्ञानधातुतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः कायधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र कायधातुतथतायाबोधिसत्त्वोभविष्यति। कुतः कायधातुतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे कायधातुतथता भविष्यति। कुतोऽकायधातुतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः स्प्रष्टव्यधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र स्प्रष्टव्यधातुतथताया बोधिसत्त्वोभविष्यति। कुतः स्प्रष्टव्यधातुतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे स्प्रष्टव्य धातुतथता भविष्यति। कुतोऽस्प्रष्टव्यधातुतथतो बोधिसत्त्वो भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः कायविज्ञानधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र कायविज्ञानधातुतथताया बोधिसत्त्वोभविष्यति। कुतः कायविज्ञानधातुतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे कायविज्ञानधातुतथता भविष्यति। कुतोऽकायविज्ञानधातुतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतो मनोधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र मनोधातुतथतायाबोधिसत्त्वोभविष्यति। कुतोमनोधातुतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे मनोधातुतथता भविष्यति। कुतोऽमनोधातुतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोधर्मधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र धर्मधातुतथतायाबोधिसत्त्वोभविष्यति। कुतोधर्मधातुतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे धर्मधातुतथता भविष्यति। कुतोऽधर्मधातुतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोमनोविज्ञानधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र मनोविज्ञानधातुतथतायाबोधिसत्त्वोभविष्यति। कुतोमनोविज्ञानधातुतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे मनोविज्ञानधातुतथताभविष्यति। कुतोऽमनोविज्ञानधातुतथतोबोधिसत्त्वो भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः पृथिवीधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र पृथिवीधातुतथताया बोधिसत्त्वोभविष्यति। कुतः पृथिवीधातुतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे पृथिवीधातुतथताभविष्यति। कुतोऽपृथिवीधातुतथतो बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत्

कुतोऽब्धातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्राब्धातु-तथतायाबोधिसत्त्वोभविष्यति। कुतोऽब्धातुतथतायां बोधिसत्त्वो भविष्यति। कुतोबोधिसत्त्वेऽब्धातुतथताभविष्यति। कुतोऽनब्धातु-तथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतस्तेजोधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र तेजोधातुतथताया बोधिसत्त्वोभविष्यति। कुतस्तेजोधातुतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे तेजोधातुतथताभविष्यति। कुतोऽतेजोधातुतथतो बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोवायुधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र-वायुधातुतथतायाबोधिसत्त्वोभविष्यति। कुतो वायुधातुतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे वायुधातुतथताभविष्यति। कुतोऽवायुधातुतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुत आकाशधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतो-ऽन्यत्राकाशधातुतथतायाबोधिसत्त्वोभविष्यति। कुत आकाशधातु-तथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे आकाशधातुतथता भविष्यति। कुतोऽनाकाशधातुतथतो बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोविज्ञानधातुतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र-विज्ञानधातुतथतायाबोधिसत्त्वोभविष्यति। कुतोविज्ञानधातुतथ-

तायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे विज्ञानधातुतथता भविष्यति। कुतोऽविज्ञानधातुतथतो बोधिसत्त्वो भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोऽविद्या* तथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्राविद्यातथतायाबोधिसत्त्वोभविष्यति। कुतोऽविद्यातथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वेऽविद्यातथता भविष्यति। कुतोऽनविद्यातथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः संस्कार† तथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र संस्कारतथताया बोधिसत्त्वोभविष्यति। कुतः संस्कारतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे संस्कारतथताभविष्यति। कुतोऽसंस्कारतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोविज्ञान‡ तथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र विज्ञानतथतायाबोधिसत्त्वोभविष्यति। कुतोविज्ञानतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे विज्ञानतथताभविष्यति। कुतोऽविज्ञानतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत्

---

* क्षणिकेषु स्थिरत्वबुद्धिरविद्या।

† रागद्वेषमोहाः संस्कारा भवन्ति।

‡ गर्भस्थस्याद्य विज्ञानमुत्पद्यते"। तदेवात्रविज्ञान शब्दार्थत्वेनाभिप्रेतम्।

कुतोनामरूप*तथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र-नामरूपतथतायां बोधिसत्त्वोभविष्यति। कुतोनामरूपतथतायां बोधिसत्त्वोभविष्यति। कुतो बोधिसत्त्वे नामरूपतथताभविष्यति। कुतोऽनामरूपतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः† षड़ायतनतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्रषड़ायातनतथतायाबोधिसत्त्वोभविष्यति। कुतः षड़ायतनतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे षड़ायतनतथताभविष्यति। कुतोऽषड़ायतनतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतः‡ स्पर्शतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र स्पर्शतथतायाबोधिसत्त्वोभविष्यति। कुतः स्पर्शतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे स्पर्शतथता भविष्यति। कुतोऽस्पर्शतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोवेदनातथता§ऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र-

---

* पृथिव्यादिचतुष्टयं नामाश्रयत्वान्नाम भवति। ततोरूपं सितासितात्मकं शुक्रशोणितं निष्पद्यते। गर्भस्थकलल बुद्बुदावस्थानामरूपशब्दार्थं इति निष्कर्षं इति वेदान्तभाष्य टीकारत्नप्रभा।

† विज्ञानं पृथिव्यादिचतुष्टयं रूपञ्चेति षडायतनानि यस्येन्द्रियजातस्य तत् षड़ायतनम्।

‡ नामरूपेन्द्रियाणां मिथः संयोगः स्पर्शः॥

§ सुखादिका वेदना।

वेदनातथतायाबोधिसत्त्वोभविष्यति। कुतोवेदनातथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे वेदनातथता भविष्यति। कुतोऽवेदनातथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतस्तृष्णा* तथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्र तृष्णातथतायाबोधिसत्त्वोभविष्यति। कुतस्तृष्णातथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे तृष्णातथता भविष्यति। कुतोऽतृष्णातथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतो उपादानतथताऽधिवचनं बोधिसत्त्वोभविष्यति। कुतोऽन्यत्रोपादानतथतायाबोधिसत्त्वोभविष्यति। कुतउपादान तथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे उपादानतथता भविष्यति। कुतोऽनुपादानतथतोबोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतोभवतथताऽधिवचनं बोधिसत्त्वोभविष्यति‡। कुतोऽन्यत्र भवतथतायाबोधिसत्त्वो भविष्यति। कुतोभवतथतायां बोधिसत्त्वोभविष्यति। कुतोबोधिसत्त्वे भवतथताभविष्यति। कुतो ऽभवतथतोबोधिसत्त्वोभविष्यति।

---

* "तया पुनर्व्विषय तृष्णा"। विषय भोगेच्छा इति यावत्।

† "तया प्रवृत्तिरुपादानम्"। विषयभोगेच्छाजनिता प्रवृत्तिरुपादानमित्यर्थः।

‡ "तेन भवत्यस्माज्जन्मेति भवोधर्म्मादिः"। प्रवृत्तिजन्योधर्म्माधर्म्मौ भवशब्दार्थः।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। तत् कुतो जातितथताऽधिवचनं बोधिसत्त्वोभविष्यति*। कुतोऽन्यत्र-जातितथताया बोधिसत्त्वोभविष्यति। कुतोजातितथतायां बोधि-सत्त्वोभविष्यति। कुतोबोधिसत्त्वे जातितथता भविष्यति। कुतो-ऽजातितथतो बोधिसत्त्वो भविष्यति।

अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते तत् कुतो जरामरणतथताऽधिवचनं बोधिसत्त्वो भविष्यति। कुतोऽन्यत्रा जरा-मरणतथताया बोधिसत्त्वोभविष्यति। कुतोजरामरणतथतायां बोधिसत्त्वोभविष्यति। कुतो बोधिसत्त्वे जरामरणतथताभविष्यति। कुतोऽजरामरणतथतोबोधिसत्त्वोभविष्यति।†

भगवानाह। साधु साधु सुभूते एवं खलुसुभूते बोधिसत्त्वेन महासत्त्वेन सत्त्वाऽनुपलब्धितायां प्रज्ञापारमिताऽनुपलब्धितायां शिक्षितव्यम्। यत्पुनः सुभूतिरेवमाह। कतमस्यैतद्धर्मस्याऽधिवचनं यदुतबोधिसत्त्वइति। तत् किं मन्यसे सुभूते रूपस्यैतदधिवचनं‡ बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते वेदनायाएतदधिवचनं बोधिसत्त्वइति। आह

---

* जाति र्देहजन्म पञ्चस्कन्धसमुदाय इति यावत्।

† "जातानां स्कन्धानां परिपाको जरास्कन्धः। नाशोमरणमिति रत्नप्रभा।

‡ अधिवचनं वाचकं। बोधिसत्त्व इति पदं। रूपादि पदार्थानां तदीयनित्यताऽनित्यत्वादिधर्म्माणाञ्च वाचकत्वं बोधिसत्त्वशब्दस्यनास्तीति सुभूति र्नैवप्रकाशयितुं भगवान् पृच्छति तत् किं मन्यसे इत्यादिनारूपादीनां तद्धर्म्माणाञ्चासत्यतया तद्वाचकत्वं बोधिसत्त्व शब्दस्यनास्ती"ति भाव।

नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञाया-एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्काराणामेतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञान-स्यैतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते रूपनित्यताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते रूपा-ऽनित्यताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते वेदनानित्यतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते वेदनाऽनित्यताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञानित्य-ताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञाऽनित्यतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्कारनित्यतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्कारा-ऽनित्यताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञाननित्यतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते विज्ञानाऽनित्यतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्।

भगवानाह तत् किं मन्यसे सुभूते रूपसुखतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते रूपदुःखतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते वेदनासुखतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते वेदनादुःखताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीद भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञासुखतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञादुःखताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्कारसुखतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्कारदुःखताया एतदधिवचन बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञानसुखताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञान दुःखताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्।

भगवानाह तत् किं मन्यसे सुभूते रूपाऽऽत्मतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते रूपाऽनात्मतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते वेदनाऽऽत्मतायाएतदधिवचनं बोधसत्त्वइति। आह नोहीद भगवन्। भगवानाह तत्

किं मन्यसे सुभूते वेदनाऽनात्मताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञाऽऽत्मतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञाऽनात्मतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्काराऽऽत्मतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्काराऽनात्मतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञानाऽऽत्मतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञानाऽनात्मताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्।

भगवानाह तत् किं मन्यसे सुभूते रूपशान्ततायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते रूपाऽशान्ततायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीद भगवन्। भगवानाह तत् किं मन्यसे सुभूते वेदनाशान्ततायाएतदधिवचनं बोधिसत्त्वइति। आह नोहिदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते वेदनाऽशान्ततायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञाशान्तताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीद भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञाऽशान्तताया एतदधिवचन बोधिसत्त्वइति। आह नोहीदं भगवन्।

भगवानाह। तत् किं मन्यसे सुभूते संस्कारशान्तताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्काराऽशान्तताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञानशान्तताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञानाऽशान्तताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्।

भगवानाह तत् किं मन्यसे सुभूते रूपशून्यतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते रूपाऽशून्यतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते वेदनाशून्यताया एतदधिवचन बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते वेदनाऽशून्यतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते सञ्ज्ञाशून्यताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीद भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञाऽशून्यतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्कार शून्यतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्काराऽशून्यताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञानशून्यतायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्।

भगवानाह तत् किं मन्यसे सुभूते विज्ञानाऽशून्यताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्।

भगवानाह तत् किं मन्यसे सुभूते रूपनिमित्तताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते रूपाऽनिमित्तताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते। वेदनानिमित्तताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते वेदनाऽनिमित्तताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञाऽनिमित्तताया एतदधिवचन बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्कारनिमित्तताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्काराऽनिमित्तताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञाननिमित्तताया एतदधिवचनं बोधिसत्त्वइति आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञानाऽनिमित्तताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्।

भगवानाह तत् किं मन्यसे सुभूते रूपप्रणिहितताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते रूपाऽप्रणिहितताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते

वेदनाप्रणिहितताया एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते वेदनाऽप्रणिहितताया-एतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञाप्रणिहिततायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संज्ञाऽप्रणिहिततायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्कारप्रणिहिततायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते संस्काराऽप्रणिहिततायाएतद-धिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञानप्रणिहिततायाएतदधिवचनं बोधिसत्त्व-इति। आह नोहीदं भगवन्। भगवानाह तत् किं मन्यसे सुभूते विज्ञानाऽप्रणिहिततायाएतदधिवचनं बोधिसत्त्वइति। आह नोहीदं भगवन्।

(१)अत्यन्ततया भगवन् रूपं न संविद्यते नोपलभ्यते। कुतो

---

(१) पूर्व्वं बोधिसत्त्वशब्दस्य रूपाद्यधिवचनत्वं निराकृत। सम्प्रति तत्र हेतुं प्रदर्शयति अत्यन्ततयेत्यादिना। यतोरूपादीनामत्यन्ततया विद्यमानत्वाभावः उपलब्धेरभावश्च कुतस्तेषामलीकानां प्रणिधानादिकल्पनां वाचकं बोधिसत्त्वेति नाम भवेदिति सुभूतेरभिप्रायः। न संविद्यते इत्यनेनैवार्थसिद्धौ नोपलभ्यते इत्यभिधानं व्यर्थमिति न वाच्यं उपलब्धेरभावेन विद्यमानत्वाभावः साधितः। अभाव प्रत्यक्षे उपलब्धेरभावस्य हेतुत्वमुक्तं भाषापरिच्छेदे। "विशेषणतया तद्वदभावानां ग्रहोभवेत्। यदिस्या दुप-

अत्यन्ततया भगवन् विज्ञानसुखं न संविद्यते नोपलभ्यते। कुतो-विज्ञानसुखाऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् विज्ञानदुःखं न संविद्यते नोपलभ्यते। कुतोविज्ञानदुःखाऽधिवचनं बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् रूपा*त्मा न संविद्यते नोपलभ्यते। कुतो रूपात्माऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् नैरात्म्यं न संविद्यते नोपलभ्यते। कुतो रूपनैरात्म्याऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् वेदनाऽऽत्मा न संविद्यते नोपलभ्यते। कुतो वेदनात्माऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् नैरात्म्यं न संविद्यते नोपलभ्यते। कुतोवेदनानैरात्म्याऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् संज्ञात्मा न संविद्यते नोपलभ्यते। कुतः संज्ञात्माऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् संज्ञानैरात्म्यं न संविद्यते नोपलभ्यते। कुतः संज्ञानैरात्म्याऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् संस्कारात्मा न संविद्यते नोपलभ्यते। कुतः संस्कारात्माऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् संस्कारनैरात्म्यं न संविद्यते नोपलभ्यते। कुतः संस्कारनैरात्म्याऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् विज्ञानात्मा न संविद्यते नोपलभ्यते। कुतो-

---

* पूर्व्वं रूपात्मता रूपानात्मता इत्यादिरूपेण निर्द्देशो दृश्यते इह तु केवलमात्मेति नैरात्म्येति पाठ सर्व्वत्र दृश्यते। पूर्व्ववदेव निर्द्देशो चापि युक्तः।

विज्ञानात्माऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् विज्ञाननैरात्म्यं न संविद्यते नोपलभ्यते। कुतो विज्ञाननैरात्म्याऽधिवचनं बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् शान्तं न विद्यते नोपलभ्यते। कुतो रूपशान्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् अशान्तं न संविद्यते नोपलभ्यते। कुतो रूपाऽशान्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् शान्तं न संविद्यते नोपलभ्यते। कुतोवेदनाशान्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् अशान्तं न संविद्यते नोपलभ्यते। कुतोऽवेदनाऽशान्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् शान्तं न संविद्यते नोपलभ्यते। कुतः सञ्ज्ञाशान्ताऽधिवचनं बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् अशान्तं न संविद्यते नोपलभ्यते। कुतः संज्ञाऽशान्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् शान्तं न संविद्यते नोपलभ्यते। कुतः संस्कारशान्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् अशान्तं न संविद्यते नोपलभ्यते। कुतः संस्काराऽशान्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् शान्तं न संविद्यते नोपलभ्यते। कुतोविज्ञानशान्ताऽधिवचनं बोधिसत्त्वो भविष्यति। अत्यन्ततया भगवन् अशान्तं न संविद्यते नोपलभ्यते। कुतो विज्ञानाशान्ताऽधिवचनं बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् शून्यं न संविद्यते नोपलभ्यते। कुतो रूपशून्याऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् अशून्यं

रूपाऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् वेदना न संविद्यते नोपलभ्यते। कुतोवेदनाऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् संज्ञा न संविद्यते नोपलभ्यते। कुतः संज्ञाऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। कुतः संस्काराधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् बोधिसत्त्वो न संविद्यते नोपलभ्यते। कुतो विज्ञानाऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् रूपनित्यता न संविद्यते नोपलभ्यते। कुतोरूपनित्यताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् रूपाऽनित्यता न संविद्यते नोपलभ्यते। कुतोरूपाऽनित्यताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् वेदनानित्यतान संविद्यते नोपलभ्यते। कुतो वेदनानित्यताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् वेदनाऽनित्यता न संविद्यते नोपलभ्यते। कुतो वेदनाऽनित्यताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् संज्ञानित्यता न संविद्यते नोपलभ्यते। कुतः संज्ञानित्यताऽधिवचनं बोधिसत्त्वोभविष्यति।

---

लभ्येत एवं यत्र प्रयुज्यते" इति। अनुपलब्धे स्वतन्त्र प्रमाणत्वं मीमांसकैः स्वीकृतम्।

पूर्वं रूपनित्यता रूपसुखता इत्यादि धर्म्मपरनिर्द्देशेन निराकृतम् इदानिमनित्यताऽनित्यताविवरणे धर्म्मपर एव निर्द्देशो दृश्यते। सुखदुःखादौ तु सदैवम् दृश्यते पूर्व्वानुसारेण सुखतादुःखता इत्यादि निर्द्देशोयुक्तः प्रतिभाति।

अत्यन्ततया भगवन् संज्ञाऽनित्यता न संविद्यतेनोपलभ्यते। कुतः संज्ञाऽनित्यताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् संस्कारनित्यता न संविद्यते नोपलभ्यते। कुतः संस्कारनित्यताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् संस्काराऽनित्यता न संविद्यते नोपलभ्यते। कुतः संस्काराऽनित्यताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् विज्ञाननित्यता न संविद्यते नोपलभ्यते। कुतोविज्ञाननित्यताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् विज्ञानाऽनित्यता न संविद्यते नोपलभ्यते। कुतो विज्ञानाऽनित्यताऽधिवचनं बोधिसत्त्वोभविष्यति।

"अत्यन्ततया भगवन् रूपसुखं" न संविद्यते नोपलभ्यते। कुतः रूपसुखाऽधिवचन बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् रूप दुःखं न संविद्यते नोपलभ्यते। कुतोरूपदुःखाऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् वेदनासुखं न संविद्यते नोपलभ्यते। कुतोवेदनासुखाऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् वेदनादुःखं न संविद्यते नोपलभ्यते। कुतो वेदनादुःखाऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् संज्ञासुखं न संविद्यते नोपलभ्यते। कुतः संज्ञासुखाऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्तया भगवन् संज्ञादुखं न संविद्यते नोपलभ्यते। कुतः संज्ञादुःखाऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् संस्कारसुखं न संविद्यते नोपलभ्यते। कुतः संस्कारसुखाऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् संस्कारदुःखं न संविद्यते नोपलभ्यते। कुतः संस्कारदुःखाऽधिवचनं बोधिसत्त्वोभविष्यति।

न संविद्यते नोपलभ्यते। कुतोवेदनाशून्याऽधिवचनं बोधिसत्त्वो-भविष्यति। अत्यन्ततया भगवन् अशून्यं न संविद्यते नोपलभ्यते। कुतोवेदनाऽशून्याऽधिवचनं बोधिसत्त्वो भविष्यति। अत्यन्ततया भगवन् शून्यं न संविद्यते नोपलभ्यते। कुतः संज्ञाशून्याऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् अशून्यं न संविद्यते नोपलभ्यते। कुतो संज्ञाऽशून्याधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् शून्यं न संविद्यते नोपलभ्यते। कुतः संस्कार-शून्याऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् अशून्यं न संविद्यते नोपलभ्यते। कुतः संस्काराऽशून्याऽधिवचनं बोधिसत्त्वो-भविष्यति। अत्यन्ततया भगवन् शून्यं न संविद्यते नोपलभ्यते। कुतोविज्ञानशून्याऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् अशून्यं न संविद्यते नोपलभ्यते। कुतोविज्ञानाशून्याऽधिवचनं बोधिसत्त्वोभविष्यति।

अत्यन्ततया निमित्तं न संविद्यते नोपलभ्यते। कुतोरूप-निमित्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन्-निमित्तं न संविद्यते नोपलभ्यते। कुतोरूपाऽनिमित्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् निमित्तं न संविद्यते नोपलभ्यते। कुतोवेदनानिमित्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् निमित्तं न संविद्यते नोपलभ्यते। कुतोवेदना ऽनिमित्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् निमित्तं न संविद्यते नोपलभ्यते। कुतः संज्ञानिमित्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् निमित्तं न संविद्यते

न संविद्यते नोपलभ्यते। कुतोरूपाऽशून्याऽधिवचनं बोधिसत्त्वो-भविष्यति। कुतः संज्ञाऽनिमित्ताधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् निमित्तं न संविद्यते नोपलभ्यते। कुतः संस्कार-निमित्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् निमित्तं न संविद्यते नोपलभ्यते। कुतः संस्काराऽनिमित्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् निमित्तं न संविद्यते नोपलभ्यते। कुतोविज्ञाननिमित्ताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् निमित्तं न संविद्यते नोपलभ्यते। कुतोविज्ञाना-ऽनिमित्ताऽधिवचनं बोधिसत्त्वोभविष्यति।

अत्यन्ततया भगवन् प्रणिहितं न संविद्यते नोपलभ्यते। कुतो-रूपप्रणिहिताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् प्रणिहितं न संविद्यते नोपलभ्यते। कुतोरूपाऽप्रणिहिताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् प्रणिहितं न संविद्यते नोपलभ्यते। कुतोवेदनाप्रणिहिताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् प्रणिहितं न संविद्यते नोपलभ्यते। कुतोवेदना-ऽप्रणिहिताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् प्रणिहितं न संविद्यते नोपलभ्यते। कुतः संज्ञाप्रणिहिताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् प्रणिहितं न संविद्यते नोपलभ्यते। कुतः संज्ञाऽप्रणिहिताधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् प्रणिहितं न संविद्यते नोपलभ्यते। कुतः संस्कारप्रणिहिताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् प्रणिहितं न संविद्यते नोपलभ्यते। कुतः संस्काराप्रणिहिताऽधि-

वचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् प्रणिहितं न संविद्यते नोपलभ्यते। कुतोविज्ञानप्रणिहिताऽधिवचनं बोधिसत्त्वोभविष्यति। अत्यन्ततया भगवन् प्रणिहितं न संविद्यते नोपलभ्यते। कुतोविज्ञान प्रणिहिताधिवचनं बोधिसत्त्वोभविष्यति ।

भगवानाह। साधु साधु सुभूते एवं खलु सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतारूपाऽधिवचनमनुपलभमानेन वेदनाऽधिवचनमनुपलभमानेन संज्ञाऽधिवचनमनुपलभमानेन संस्काराऽधिवचनमनुपलभमानेन विज्ञानाऽधिवचनमनुपलभमानेन। रूपनित्याऽधिवचनमनुपलभमानेन रूपाऽऽनित्याऽधिवचनमनुपलभमानेन वेदनानित्याऽधिवचन मनुपलभमानेन वेदनाऽनित्याऽधिवचनमनुपलभमानेन संज्ञानित्याऽधिवचनमनुपलभमानेन संज्ञाऽनित्याऽधिवचनमनुपलभमानेन संस्कारनित्याऽधिवचनमनुपलभमानेन संस्काराऽनित्याऽअधिवचनमनुपलभमानेन विज्ञाननित्याऽधिवचनमनुपलभमानेन विज्ञानाऽनित्याऽधिवचनमनुपलभमानेन। रूपसुखाऽधिवचनाऽनुपलभमानेन रूपदुःखाऽधिवचनमनुपलभमानेन वेदनासुखाऽधिवचनमनुपलभमानेन वेदनादुःखाऽधिवचनमनुपलभमानेन। संज्ञासुखाऽधिवचनमनुपलभमानेन संज्ञादुःखाऽधिवचनमनुपलभमानेन संस्कारसुखाऽधिवचनमनुपलभमानेन संस्कारदुःखाऽधिवचनमनुपलभमानेन विज्ञानसुखाऽधिवचनमनुपलभमानेन विज्ञानदुःखाऽधिवचनमनुपलभमानानेन। रूपात्माऽधिवचनमनुपलभमानेन रूपानात्माऽधिवचनमनुपलभमानेन वेदनात्माऽधिवचनमनुपलभमानेन वेदनानात्माऽधिवचनमनुपलभमानेन संज्ञात्माऽधि-

वचनमनुपलभ्भमानेन सञ्ज्ञानात्माऽधिवचनमनुपलभ्भमानेन सस्कारात्माऽधिवचनमनुपलभ्भमानेन सस्कारानात्माऽधिवचनमनुपलभ्भमानेन विज्ञानात्माऽधिवचनमनुपलभ्भमानेन विज्ञानानात्माऽधिवचनमनुपलभ्भमानेन रूपशान्ताऽधिवचनमनुपलभ्भमानेन रूपाशान्ताऽधिवचनमनुपलभ्भमानेन वेदनाशान्ताऽधिवचनमनुपलभ्भमानेन वेदनाऽशान्ताऽधिवचनमनुपलभ्भमानेन सञ्ज्ञाशान्ताऽधिवचनमनुपलभ्भमानेन सञ्ज्ञाऽशान्ताऽधिवचनमनुपलभ्भमानेन सस्कारशान्ताऽधिवचनमनुपलभ्भमानेन सस्काराऽशान्ताऽधिवचनमनुपलभ्भमानेन विज्ञानशान्ताऽधिवचनमनुपलभ्भमानेन विज्ञानाऽशान्ताऽधिवचनमनुपलभ्भमानेन रूपशून्याऽधिवचनमनुपलभ्भमानेन रूपाशून्याधिवचनमनुपलभ्भमानेन वेदनाशून्याऽधिवचनमनुपलभ्भमानेनवेदनाऽशून्याऽधिवचनमनुपलभ्भमानेन सञ्ज्ञाशून्याऽधिवचनमनुपलभ्भमानेन सञ्ज्ञाऽशून्याऽधिवचनमनुपलभ्भमानेन सस्कारशून्याऽधिवचनमनुपलभ्भमानेन सस्काराऽशून्याधिवचनमनुपलभ्भमानेन विज्ञानशून्याऽधिवचनमनुपलभ्भमानेन विज्ञानाऽशून्याऽधिवचनमनुपलभ्भमानेन। रूपनिमित्ताऽधिवचनमनुपलभ्भमानेन रूपाऽनिमित्ताऽधिवचनमनुपलभ्भमानेन वेदनानिमित्ताऽधिवचनमनुपलभ्भमानेन वेदनाऽनिमित्ताऽधिवचनमनुपलभ्भमानेन। सञ्ज्ञानिमित्ताऽधिवचनमनुपलभ्भमानेन सञ्ज्ञाऽनिमित्ताऽधिवचनमनुपलभ्भमानेन सस्कारानिमित्ताऽधिवचनमनुपलभ्भमानेन सस्काराऽनिमित्ताऽधिवचनमनुपलभ्भमानेन विज्ञाननिमित्ताऽधिवचनमनुपलभ्भमानेन विज्ञाननिमित्ताऽधिवचनमनुपलभ्भमानेन रूपप्रणिहिताऽधिवचनमनुपलभ्भमानेन

रूपाऽप्रणिहिताऽधिवचनमनुपलभमानेन वेदनाप्रणिहिताऽधिवचनमनुपलभमानेन वेदनाऽप्रणिहिताऽधिवचनमनुपलभमानेन संज्ञाप्रणिहिताऽधिवचनमनुपलभमानेन संज्ञाऽप्रणिहिताऽधिवचनमनुपलभमानेन संस्कारप्रणिहिताऽधिवचनमनुपलभमानेन संस्काराऽप्रणिहिताऽधिवचनमनुपलभमानेन विज्ञानप्रणिहिताऽधिवचनमनुपलभमानेन विज्ञानाऽप्रणिहिताऽधिवचनमनुपलभमानेन प्रज्ञापारमितायां शिक्षितव्यम् ।

यत् पुनः सुभूते वदसि नाहं धर्मं समनुपश्यामि यदुत बोधिसत्त्व इति । न सुभूते धर्मो धर्मधातुं समनुपश्यति । न संज्ञा धातुर्धर्मधातुं समनुपश्यति । न धर्मधातुः संज्ञाधातुं समनुपश्यति । न संस्कारधातुर्धर्मधातुं समनुपश्यति । न धर्मधातुः संस्कारधातुं समनुपश्यति । न विज्ञानधातुर्धर्मधातुं समनुपश्यति । न धर्मधातुर्विज्ञानधातुं समनुपश्यति । न चक्षुर्धातुर्धर्मधातुं समनुपश्यति । न धर्मधातुश्चक्षुधातुं समनुपश्यति । न श्रोत्रधातुर्धर्मधातुं समनुपश्यति । न धर्मधातुः श्रोत्रधातुं समनुपश्यति । न घ्राणधातुर्धर्मधातुं समनुपश्यति । न धर्मधातुर्घ्राणधातुं समनुपश्यति । न जिह्वा धातुर्धर्मधातु समनुपश्यति । न धर्मधातु जिह्वाधातुं समनुपश्यति । न कायधातुर्धर्मधातुं समनुपश्यति । न धर्मधातुः कायधातुं समनुपश्यति । न मनोधातुर्धर्मधातुं समनुपश्यति । न धर्मधातुर्मनोधातुं समनुपश्यति ।

न सुभूते संस्कृतधातुरसंस्कृतधातुं समनुपश्यति । नाऽसंस्कृतधातुः संस्कृतधातुं समनुपश्यति । न च संस्कृतधातुव्यतिरेकेणा-

संस्कृतं शक्यं प्रज्ञपयितुं। नाऽसंस्कृतव्यतिरेकेन संस्कृतधातुः शक्यः प्रज्ञपयितुं। एवं खलु सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न कञ्चिद्धर्मं समनुपश्यति। असमनुपश्यन् नोत्त्रस्यति। न सन्त्रस्यति न सन्त्रासमापद्यते। न चास्य कस्मिंश्चिद्धर्मेचित्तमवलीयते। न विप्रतिसारीभवति मानसं। तत् कस्य हेतोस्तथाहि सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् न रूपं समनुपश्यति। वेदनां न समनुपश्यति। संज्ञां न समनुपश्यति। संस्काराञ्च समनुपश्यति। विज्ञानं न समनुपश्यति। चक्षुर्न समनुपश्यति। श्रोत्रं न समनुपश्यति। घ्राणं न समनुपश्यति। जिह्वां न समनुपश्यति। कायं न समनुपश्यति। मनो न समनुपश्यति। रूपं न समनुपश्यति। शब्दं न समनुपश्यति। गन्धं न समनुपश्यति। रसं न समनुपश्यति। स्पर्शं न समनुपश्यति। धर्मं न समनुपश्यति। पृथिवीधातुं न समनुपश्यति। अब्धातु न समनुपश्यति। तेजोधातुं न समनुपश्यति। वायुधातुं न समनुपश्यति। आकाशधातुं न समनुपश्यति। विज्ञानधातुं न समनुपश्यति। अविद्यां न समनुपश्यति। संस्काराञ्च समनुपश्यति। विज्ञानं न समनुपश्यति। नामरूपं न समनुपश्यति। षडायतनं न समनुपश्यति। स्पर्शं न समनुपश्यति। वेदनां न समनुपश्यति। तृष्णां न समनुपश्यति। उपादानं न समनुश्यति। भवं न समनुपश्यति। जातिं न समनुपश्यति। जरामरणं न समनुपश्यति। रागं न समनुपश्यति। द्वेषं न समनुपश्यति। मोहं न समनुपश्यति। आत्मानं न समनुपश्यति। सत्त्वं न समनुपश्यति। जीवं न समनुपश्यति। जन्तुं न समनु-

पश्यति। पोषं न समनुपश्यति। पुरुषं न समनुपश्यति। मनुजं न समनुपश्यति। मानवं न समनुपश्यति। कारकं न समनुपश्यति। कारापकं न समनुपश्यति। वेदकं न समनुपश्यति। वेदयितृकं न समनुपश्यति। जानकं न समनुपश्यति। पश्यकं न समनुपश्यति। कामधातुं न समनुपश्यति। रूपधातुं न समनुपश्यति। आरूप्यधातुं न समनुपश्यति। श्रावकचित्तं न समनुपश्यति। प्रत्येकबुद्धचित्तं न समनुपश्यति। बोधिचित्तं न समनुपश्यति। श्रावकधर्मांश्च समनुपश्यति। प्रत्येकबुद्धं न समनुपश्यति। प्रत्येकबुद्धधर्मांश्च समनुपश्यति। बोधिसत्त्वं न समनुपश्यति। बोधिसत्त्वधर्मांश्च समनुपश्यति। बुद्धं न समनुपश्यति। बुद्धधर्मांश्च समनुपश्यति। बोधिं न समनुपश्यति। यावत् सर्व्वधर्मान् लौकिकलोकोत्तरान् न समनुपश्यति। स सर्व्वधर्मांश्च समनुपश्यति। न सन्त्रस्यति। न सन्त्रा-समापद्यते।

आह केन कारणेन भगवन् बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः सर्व्वधर्म्मेषु चित्तं नाऽवलीयते। न संलीयते। भगवानाह। तथाहि सुभूते बोधिसत्त्वोमहासत्त्वश्चित्तचैतसिकान् धर्मान् नोपलभते न समनुपश्यति। अनेन कारणेन सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः सर्व्वेषु धर्म्मेषु चित्तं नाऽवलीयते। न संलीयते। आह। कथं भगवन् बोधिसत्त्वस्य महासत्त्वस्य मनोन सन्त्रासमापद्यते*। भगवानाह। तथाहि सुभूते

---

* चैतसिकाश्चित्तसम्बन्धिनः आद्यं उत्काररागद्वेषादय तान् धर्म्मान् नोपलभते यतः कारणाद्बोधिसत्त्वस्य चित्तं। कुत्रापि नावलीयते न

बोधिसत्त्वोमहासत्त्वोमनश्च मनोधातुञ्च नोपलभते। न समनुपश्यति। एवं खलु सुभूते बोधिसत्त्वस्य महासत्त्वस्य मनोन सन्नामसमापद्यते। एवं हि सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरितव्यं। स चेत् पुनः सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरं स्तां प्रज्ञापारमितां नोपलभतेतञ्च बोधिसत्त्वं नोपलभते। तच्च बोधिसत्त्वनाम नोपलभते। एवमेव बोधिसत्त्वस्याऽववादः। एषैवाऽनुशासनी।

शतसाहस्रयाः प्रज्ञापारमितायां द्वितीयः परिवर्त्तः॥

---

तदाकारां वृत्तिं भजते। इत्यर्थः। तथा च मायानिष्ठस्वरूपग्रहा सन्नामपदार्थस्याहङ्काराभावेनाऽसम्भव मश्रुदावीनस्य दुःखसम्भाव माया कश्चित् नस्यसि किन्तु मम स्वकीयस्य वा। तत्र ममेत्यहङ्कार एव हेतुः। उदासीने चाहङ्काराभावात् न चासोदयः। एवमत्राऽपि बोधिसत्त्वस्य रूपादिस्कन्धे चाहमित्यभिमानाभावाच्चक्षुरादौ च ममेत्यभिमानाभावात् तेषामनिष्टसम्भावना बोधिसत्त्वस्य न चासञ्जनयतीति भगवतोऽभिप्रायः। एतदभिप्रायकमेवोदाहृतत्त्वयुक्तं वचनं यथा। "प्राप्ते यते यथा देहः सुखदुःखे न विन्दति। तथा चेत् प्राप्तयुक्तोऽपि सकैवल्याश्रमेवसेदि"ति। तच्च संस्कारोऽन्य संस्कारप्रतिबन्धी। १। ५१। "तस्यापि निरोधे सर्व्वनिरोधान्निर्वीज समाधिरि"ति। १। ५२। पातञ्जलदर्शनसमाधिपादसूत्राभ्यामीदृश एवार्थः प्रकटितः।

# अथ तृतीयपरिवर्त्तः।



अथायुष्मान् सुभूतिर्भगवन्त मेतदवोचत्। रूपं भगवन् परिज्ञा* तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्। वेदनां भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्। संज्ञां भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्। संस्कारान् भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्। विज्ञानं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्। चक्षुर्भगवन् परिज्ञातुकामेन बोधि-

---

* अत्रायमभिप्रायः। सर्वो हि अविद्यावशेन रूपादीनां पारमार्थिकसत्त्वं प्रतिसन्धाय तत्राऽभिनिविशते सति च सुदृढे ऽभिनिवेशेन युगसहस्रेणापि तेषामनुपशमः शक्यः सम्भावयितुं। ततश्च पूर्वपरिवर्त्तकृतोपदेशो विफल एव भवति। अतस्तदुपपादनाय रूपादीनां स्वरूपपरिज्ञानमत्रोपदिशति। वस्तुतत्त्व पर्य्यालोचनेकृते रूपादीनामसत्त्वमेवपरिज्ञायेत। तथा च सति न कश्चित् तत्राऽभिनिविशेत। न ह्युदकचन्द्रमाहर्त्तुं कश्चित् प्रेक्षावान् प्रवर्त्तते। तद्वदविद्याप्रतिभासमाना अपि रूपादयो न तत्त्वज्ञाना मनांस्यभिभवितु मर्हन्ति। अतस्तृतीयपरिवर्त्तस्यादौ रूपादीनां परिज्ञानमेवोपदिशति रूपं भगवन परिज्ञातुकामेनेत्यादिना।

सत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् । श्रोत्रं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् । घ्राणं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् । जिह्वां भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् । कायं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् । मनोभगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् । रूपं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् । शब्दं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् । गन्धं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् । रसं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् । स्पर्शं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् । धर्मान् भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् ।

चक्षुर्विज्ञानं* भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम्। श्रोत्रविज्ञानं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यम् । घ्राण विज्ञानं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञा-

---

* अविद्यादय पूर्वं व्याख्याता· अविद्यामारभ्य दौर्मनस्य पर्य्यन्तं क्रमिक-कार्य्यप्रवाह· ।

पारमितायां शिक्षितव्यं। जिह्वाविज्ञानं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। कायविज्ञानं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। मनोविज्ञानं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं।

चक्षुः संस्पर्शं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। श्रोत्रसंस्पर्शं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। घ्राणसंस्पर्शं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। जिह्वासंस्पर्शं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। कायसंस्पर्शं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। मनःसंस्पर्शं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्।

चक्षुःसंस्पर्शजां वेदनां भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। श्रोत्रसंस्पर्शजां वेदनां भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। घ्राणसंस्पर्शजां वेदनां भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। जिह्वासंस्पर्शजां वेदनां भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। कायसंस्पर्शजां वेदनां भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। मनः संस्पर्शजां

वेदनां भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। *अविद्यां भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। संस्कारान् भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। विज्ञानं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। नामरूपं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। षडायतनं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। स्पर्शं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। वेदनां भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। तृष्णां भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। उपादानं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। भवं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। जातिं भगवन् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। †जरामरणशोकपरिदेव दुःखदौर्मनस्योपायासान् भगवन् परिज्ञातुकामेनबोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं।

---

* विज्ञानपदं चक्षुरादीन्द्रियजप्रत्यक्षज्ञानपरम्।

† जातानां स्कन्धानां परिपाको जराखाख्यः। नाशोमरणं, म्रियमानस्य पुत्रादेःस्नेहादन्तर्दाहः शोकः, तेन हा पुत्रेत्यादि प्रलापः परिदेवना' अनिष्टानुभवोदुःखं तेन दुर्मनस्ता मानसीव्यथा इति रत्नप्रभा।

परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। महाशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। परमार्थशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। संस्कृतशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। असंस्कृतशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अत्यन्तशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अनवराग्रशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अनवकारशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। प्रकृतिशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सर्वधर्मशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। स्वलक्षणशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अनुपलम्भशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अभावशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। स्वभावशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अभावस्वभावशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चत्वारि स्मृत्युपस्थानानि परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां

शिक्षितव्यं। चत्वारिसम्यक् प्रहाणानि परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चतुरऋद्धिपादान् परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पञ्चेन्द्रियाणि परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पञ्च बलानि परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सप्तबोध्यङ्गानि परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। आर्य्याऽष्टाङ्ग मार्गं परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चत्वार्य्यार्य्यसत्यानि परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अष्टौविमोक्षान् परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। दशतथागत बलानि परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चत्वारिवैशारद्यानि परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चतस्रः प्रतिसम्विदः परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। महामैत्रीं परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्। महाकरुणां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अष्टादशाऽऽवेणिकान् बुद्धधर्म्मान् परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। बोध्यङ्गवतिं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्।

रागं प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। द्वेषं प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। मोहं प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सत्कायदृष्टिं प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। विचिकित्सां प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। शीलव्रतपरामर्शं प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। कामरागव्यापादं प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। कामरागं प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अरूपरागं प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। संयोजनानि प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अनुशयान् प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पर्य्युत्थानानि प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चतुर आहारान् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चतुरोयोगान् परिज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चतुरश्चोघान् प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चतुरोग्रन्थान् प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चत्वार्य्युपादानानि प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चतुरोविपर्य्यासान् प्रहातुकामेन बोधिसत्त्वेन

महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। दशाकुशलान् कर्म्मपथान् प्रहातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं।

दशकुशलान् कर्म्मपथान् परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चत्वारिध्यानानि परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चत्वार्य्यप्रमाणानि परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चतस्रः आरूप्यसमापत्तीः परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पञ्चाऽभिज्ञाः परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। दानपारमिता परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। शीलपारमितां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। क्षान्तिपारमितां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। वीर्य्यपारमितां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ध्यानपारमितां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। प्रज्ञापारमितां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अध्यात्मशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। बहिर्द्धाशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अध्यात्मबहिर्द्धाशून्यतां परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। शून्यताशून्यतां

यत्र प्रथमध्याननिरोधः समापद्यते। निरो*धाद्व्युत्थाय द्वितीयं ध्यानं समापद्यते । द्वितीयात् ध्यानाद्व्युत्थायनिरोधः समापद्यते। निरोधाद्व्युत्थाय तृतीयं ध्यानं समापद्यते। तृतीयात् ध्यानाद्व्युत्थाय निरोधः समापद्यते। निरोधाद्व्युत्थाय चतुर्थं ध्यानं समापद्यते। चतुर्थात् ध्यानाद्व्युत्थाय निरोधः समापद्यते। निरोधाद्व्युत्थाय मैत्रीं समाधिं समापद्यते। मैत्र्याः समाधेर्व्युत्थाय निरोधः समापद्यते। निरोधाद्व्युत्थाय करुणासमाधिं समापद्यते। करुणासमाधेर्व्युत्थाय निरोधः समापद्यते। निरोधाद्व्युत्थाय मुदितासमाधिं समापद्यते। मुदितासमाधेर्व्युत्थाय निरोधः समापद्यते। निरोधाद्व्युत्थायोपेक्षासमाधिं समापद्यते। उपेक्षासमाधेर्व्युत्थाय निरोधः समापद्यते। निरोधाद्व्युत्थायाऽऽकाशाऽऽनन्त्याऽऽयतनं समापद्यते। आकाशा-

---

* निरुध्यते प्रज्ञाऽनेनेतिनिरोधः परं वैराग्यमिति पातञ्जलभाष्य वाचस्पतिमिश्रकृतटीका।

† समाधिप्रज्ञाप्रभवः संस्कारोव्युत्थानसंस्कारप्रोघं बाधते। व्युत्थान संस्काराऽभिभवात् तत् प्रभवाः प्रत्यया न भवन्तीति पातञ्जलदर्शनीय व्यासभाष्यम् तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी। पातञ्जलदर्शनसमाधिपाद ५१ सूत्रम्।

‡ मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्याऽपुण्यविषयाणां भावनातश्चित्त प्रसादनं। पातञ्जलदर्शन समाधिपाद (३३) सूत्रम्। तत्र सर्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेत्। दुःखितेषु करुणां। पुण्यात्मकेषु—मुदितां। अपुण्यशीलेषू पेक्षाम्। एवमस्य भावयतः शुक्लोधर्म्म उपजायते। ततश्चित्तं प्रसीदति। प्रसन्नमेकाग्रं स्थितिपदं लभते। पातञ्जलदर्शनसमाधिपाद (३३) सूत्रभाष्यम्।

ऽऽनन्त्याऽयतनाद्व्युत्थाय निरोधः समापद्यते। निरोधाद्व्युत्थाय आकिञ्चन्याऽऽयतनं समापद्यते। आकिञ्चन्यायतनाद्व्युत्थाय निरोधः समापद्यते। निरोधाद्व्युत्थाय विज्ञानानन्त्याऽऽयतनं समापद्यते। विज्ञानाऽऽनन्त्याऽयनाद्व्युत्थाय निरोधः समापद्यते। निरोधाद्व्युत्थाय नैव संज्ञानाऽसंज्ञाऽऽयतनं समापद्यते। नैवसंज्ञानासंज्ञाऽऽयतनाद्व्युत्थाय निरोधः समापद्यते। निरोधाद्व्युत्थाय सिंहविजृम्भितं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सिंहविक्रीड़ितं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सर्व्वधारणीमुखसमाधिमुखानि प्रतिलब्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। शूरङ्गमं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। रत्नमुद्रां समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चन्द्रप्रभं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चन्द्रध्वजकेतुं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सर्व्वधर्म्मसुद्रागतं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। अवलोकितमुद्रां समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। धर्म्मधातुनियतं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। नियतध्वजकेतुं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। वज्रोपमं समाधिं समापत्तुकामेन बोधिसत्त्वेन

महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सर्व्वधर्म्मप्रवेशमुखं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं । समाधिराज समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं । राजमुद्रां समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं । वलव्यूहं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं । समुद्गतं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं । सर्व्वधर्म्मनिरुक्तिं नियतप्रवेशं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं । सर्व्वधर्म्मज्ञानाऽधिवासनप्रवेशं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। दशदिग्-व्यवलोकितं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञा-पारमितायां शिक्षितव्यं । सर्व्वधारणीमुखमुद्रां समाधिं समापत्तु-कामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सर्व्वधर्म्माऽसम्प्रमोषं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सर्व्वधर्म्मसमवसरणाकारमुद्रां समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं । आकाशस्थानस्थितं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। त्रिमण्डलपरिशुद्धं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं । अच्युताऽभिज्ञां समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं । पात्रगतं समाधिं समा-

पत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। ध्वजाग्रकेयूरं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। सर्व्वक्लेशनिर्द्दहनं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। चतुर्मारबलनिराकरणं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। आकाशाऽसङ्गविमुक्तिनिरुपलेपं समाधिं समापत्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। इति ह्येतान्यन्यानि च समाधिमुखानि प्रतिलब्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं।

पुनरपरं भगवन् सर्व्वसत्त्वानामभिप्रायान् परिपूरयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन कुशलमूलानिपरिपूरयितुकामेन यैः कुशलमूलैः परिपूर्णो नाऽपायेषु पतति। नहीनकुलेषूपपद्यते। न श्रावकभूमौ न प्रत्येकबुद्धभूमौ तिष्ठति। न च बोधिसत्त्वो महासत्त्वो मूधामं* पततीति। प्रज्ञापारमितायां शिक्षितव्यं।

अथायुष्माञ्छारद्वतीपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्। कथमायुष्मन् सुभूते बोधिसत्त्वो महासत्त्वो मूर्धामं पतति। एवमुक्ते आयुष्मान् सुभूतिरायुष्मन्तं शारद्वतीपुत्रमेतदवोचत्। यदायुष्मन्

---

* मूर्धाम इति पुस्तकमध्यके पाठ' मुधाशब्दो यथार्थे व्यामोधर्मतृष्णा ततश्च यथधर्म्माभिलाष इति तदर्थ। मुधाशब्दोत्कृष्टादिः प्रतिभाति।

शारद्वतीपुत्र बोधिसत्त्वो महासत्त्वोऽनुपाय कौशलेन षट्सु पारमितासु चरति । अनुपायकौशलेन शून्यतानिमित्ताऽप्रणिहितान् समाधीनागम्य नैव श्रावकभूमौ पतति । न प्रत्येकबुद्धभूमौ पतति । नैव बोधिसत्त्वन्याममवक्रामेति । अयमुच्यते बोधिसत्त्वस्य महासत्त्वस्यामः । आह । केन कारणेनायुष्मन् सुभूते अयं बोधिसत्त्वस्य महासत्त्वस्यामः । सुभूतिराह । आमइत्यायुष्मञ्छारद्वतीपुत्र उच्यते बोधिसत्त्वस्य महासत्त्वस्यामः । धर्मतृष्णाः । आह । कतमा आयुष्मन् सुभूते धर्मतृष्णाः । सुभूतिराह । इहायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् रूपं शून्यमित्यभिनिविशतेऽधितिष्ठति संजानाति । वेदनाशून्येत्यभिनिविशतेऽधितिष्ठति संजानाति । संज्ञाशून्येत्यभिनिविशतेऽधितिष्ठति संजानाति । संस्काराः शून्याइत्यभिनिविशतेऽधितिष्ठति संजानाति । विज्ञानं शून्यमित्यभिनिविशतेऽधितिष्ठति संजानाति । इयमुच्यते आयुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्याऽनुलोमिकीधर्मतृष्णा आमः ।

पुनरपरं शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् रूपमनित्यमित्यभिनिविशतेऽधितिष्ठति । संजानाति । वेदनामनित्येत्यभिनिविशतेऽधितिष्ठति संजानाति । संज्ञामनित्येत्यभिनिविशतेधितिष्ठति संजानाति । संस्कारानित्या इत्यभिनिविशतेऽधितिष्ठति संजानाति । विज्ञानमनित्यमित्यभिनिविशतेऽधितिष्ठति संजानाति । इयमुच्यते आयुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्याऽऽनुलोमिकीधर्मतृष्णा आमः ॥

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् रूपं दुःखमित्यभिनिविशतेऽधितिष्ठति संजानाति। वेदनां दुःखेत्यभिनिविशतेऽधितिष्ठति संजानाति। संज्ञां दुःखेत्यभिनिविशतेऽधितिष्ठति संजानाति। संस्कारान् दुःखा इत्यभिनिविशतेऽधितिष्ठति संजानाति। विज्ञानं दुःखमित्यभिनिविशतेऽधितिष्ठति संजानाति। इयमुच्यते आयुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्याऽनुलोमिकी धर्मतृष्णा आमः।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् रूपमनात्मेत्यभिनिविशतेऽधितिष्ठति संजानाति। वेदनामनात्मेत्यभिनिविशतेऽधितिष्ठति संजानाति। संज्ञामनात्मेत्यभिनिविशतेऽधितिष्ठति संजानाति। संस्काराननात्मान इत्यभिनिविशतेऽधितिष्ठति संजानाति। विज्ञानमनात्मेत्यभिनिविशतेऽधितिष्ठति संजानाति। इयमुच्यते आयुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्याऽऽनुलोमिकी धर्मतृष्णा आमः।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् रूपमानिमित्तमित्यभिनिविशतेऽधितिष्ठति संजानाति। वेदनामानिमित्तेत्यभिनिविशतेऽधितिष्ठति संजानाति। संज्ञामानिमित्तेत्यभिनिविशतेऽधितिष्ठति संजानाति। संस्कारानानिमित्तमित्यभिनिविशतेऽधितिष्ठति संजानाति। विज्ञानमानिमित्तमित्यभिनिविशतेऽधितिष्ठति संजानाति। इयमुच्यते आयुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्याऽनुलोमिकी धर्मतृष्णा आमः।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमि-

तायां चरन् रूपमप्रणिहितमित्यभिनिविशतेऽधितिष्ठति संजानाति। वेदनामप्रणिहितेत्यभिनिविशतेऽधितिष्ठति संजानाति। संज्ञामप्रणिहितेत्यभिनिविशतेऽधितिष्ठति संजानाति। संस्कारानप्रणिहितमित्यभिनिविशतेऽधितिष्ठति संजानाति। विज्ञानमप्रणिहितमित्यभिनिविशतेऽधितिष्ठति संजानाति। इयमुच्यते आयुष्मन् शारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्याऽऽनुलोमिकीधर्मतृष्णा आमः।

इदं रूपं प्रहातव्यमनेनरूपं प्रहातव्यं। इयं वेदनाप्रहातव्या अनेन वेदनाप्रहातव्या। इयं संज्ञाप्रहातव्या अनेन संज्ञाप्रहातव्या। इमे संस्काराः प्रहातव्याः। अनेन संस्काराः प्रहातव्याः। इदं विज्ञानं प्रहातव्यम्। अनेन विज्ञानं प्रहातव्यमिति। इदं दुःखं परिज्ञेयं। अनेन दुःखं परिज्ञेय मिति। अयं समुदयः प्रहातव्यः। अनेन समुदयः प्रहातव्यः इति। अयं निरोधः साक्षात् कर्त्तव्यः। अनेन निरोधः साक्षात् कर्त्तव्यः। अयं मार्गोभावयितव्यः। अनेन मार्गोभावयितव्यः इति। अयं संक्लेशः। इदं व्यवदानमिति। इमे धर्माः सेवितव्याः। इमे धर्मा न सेवितव्याः। इह बोधिसत्त्वेन महासत्त्वेन चरितव्यमिह न चरितव्यमिति। अयं बोधिसत्त्वस्य महासत्त्वस्य मार्गोऽयं न मार्ग इति। इयं बोधिसत्त्वस्य महासत्त्वस्य शिक्षेयं न शिक्षेति। इयं बोधिसत्त्वस्य महासत्त्वस्य दानपारमितेयं न दानपारमिता। इयं बोधिसत्त्वस्य महासत्त्वस्य शीलपारमितेयं न शीलपारमितेति। इयं बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिपारमितेयं न क्षान्तिपारमिता। इयं बोधिसत्त्वस्य महासत्त्वस्य वीर्य्यपारमितेयं न व र्य्यपारमिता। इयं बोधिसत्त्वस्य महासत्त्वस्य ध्यानपार-

मितेयं न ध्यानपारमिता। इयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितेयं न प्रज्ञापारमिता। इदं बोधिसत्त्वस्य महासत्त्वस्योपाय कौशलमिदमनुपायकौशलमिति। अयं बोधिसत्त्वस्य महासत्त्वस्य न्यामः।

सचेदायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्निमान् धर्म्मानेवमभिनिविशतेऽधितिष्ठति संजानाति। अयं बोधिसत्त्वस्य महासत्त्वस्याऽऽनुलोमिकीधर्म्मतृष्णा आमः। आह। कतम आयुष्मन् सुभूते बोधिसत्त्वस्य महासत्त्वस्य न्यामः। सुभूतिराह। इहायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्नाध्यात्मशून्यतायामध्यात्मवहिर्द्धाशून्यतां समनुपश्यति। न वहिर्द्धाशून्यतायां अध्यात्मशून्यतां समनुपश्यति। न वहिर्द्धाशून्यतायामध्यात्मवहिर्द्धाशून्यतां समनुपश्यति। नाऽध्यात्मशून्यतायां वहिर्द्धाशून्यतां समनुपश्यति। नाऽध्यात्मवहिर्द्धाशून्यतायां शून्यताशून्यतां समनुपश्यति। न शून्यताशून्यतायामध्यात्मवहिर्द्धाशून्यतां समनुपश्यति। न शून्यताशून्यतायां महाशून्यतां समनुपश्यति। न महाशून्यतायां परमार्थशून्यतां समनुपश्यति। न परमार्थशून्यतायां महाशून्यतां समनुपश्यति। न परमार्थशून्यतायां संस्कृतशून्यतां समनुपश्यति। न संस्कृतशून्यतायां परमार्थशून्यतां समनुपश्यति। न संस्कृतशून्यतायामसंस्कृतशून्यतां समनुपश्यति। नाऽसंस्कृतशून्यतायां संस्कृतशून्यतां समनुपश्यति। नाऽसंस्कृतशून्यतायामनवराग्रशून्यतां समनुपश्यति। नाऽनवराग्रशून्यतायामसंस्कृतशून्यतां समनुपश्यति। नाऽनवराग्रशून्यतायामनवकारशून्यतां समनुपश्यति। नाऽनवकारशून्यतायामनवराग्रशून्यतां समनुपश्य-

ति। नाऽनवकारशून्यतायामत्यन्तशून्यतां समनुपश्यति। नाऽत्यन्तशून्यतायां प्रकृतिशून्यतां समनुपश्यति। न प्रकृतिशून्यतायामत्यन्तशून्यतां समनुपश्यति। न प्रकृतिशून्यतायां सर्व्वधर्मशून्यतां समनुपश्यति। न सर्व्वधर्मशून्यतायां प्रकृतिशून्यतां समनुपश्यति। न सर्व्वधर्मशून्यतायां स्वलक्षणशून्यतां समनुपश्यति। न स्वलक्षणशून्यतायां सर्व्वधर्मशून्यतां समनुपश्यति। न स्वलक्षणशून्यतायामनुपलम्भशून्यतां समनुपश्यति। नाऽनुपलम्भशून्यतायां स्वलक्षणशून्यतां समनुपश्यति। नाऽनुपलम्भशून्यतायामभावशून्यतां समनुपश्यति। नाऽभावशून्यतायामनुपलम्भशून्यतां समनुपश्यति। नाऽभावशून्यतायां स्वभावशून्यतां समनुपश्यति। न स्वभावशून्यतायामभावशून्यतां समनुपश्यति। न स्वभावशून्यतायामभावस्वभावशून्यतां समनुपश्यति। नाऽभावस्वभावशून्यतायां सर्व्वधर्मशून्यतां समनुपश्यति।

एवं खल्वायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् बोधिसत्त्वन्याममवक्रामति। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतैवं शिक्षितव्यम्। यथा शिक्षमाणेनरूपं ज्ञातव्यं तेन च न मन्तव्यं*। वेदनाज्ञातव्या-

* अत्राऽयं भावः। लौकिकानामिव प्रज्ञापारमितायां चरता बोधिसत्त्वानामपि ज्ञानजनकेन्द्रियादिसामग्रीसत्वात् रूपादिज्ञानमवश्यम्भावि। सति च रूपादीनां ज्ञाने तत्र रागद्वेषादयोऽप्यवश्यम्भाविनः। अतस्तेषु ज्ञातेष्वपि रूपादिषु अभिमानं न कर्त्तव्यमित्युपदिशति रूपं ज्ञातव्यमित्यादिना। तथाच परकीयधनपुत्रादौ दृष्टेऽपि यथा तत्राऽभिमानाऽभावान्नरागादयोजायन्ते एवं स्वभोग्येष्वपि रूपादि-

तथा च वेदनया न मन्तव्यं। संज्ञा ज्ञातव्या तथा च संज्ञया न मन्तव्यं। संस्कारा ज्ञातव्याः तैश्च संस्कारैर्न मन्तव्यं। विज्ञानं ज्ञातव्यं तेन च विज्ञानेन न मन्तव्यं। चक्षुर्ज्ञातव्यं तेन च चक्षुषा न मन्तव्यं। श्रोत्रं ज्ञातव्यं तेन च श्रोत्रेण न मन्तव्यं। घ्राणं ज्ञातव्यं तेन च घ्राणेन न मन्तव्यं। जिह्वा ज्ञातव्या तया च जिह्वया न ज्ञातव्यं। कायं ज्ञातव्यं तेन च कायेन न मन्तव्यं। मनो ज्ञातव्यं तेन च मनसा न मन्तव्यं। रूपं ज्ञातव्यं तेन च रूपेण न मन्तव्यं। शब्दो ज्ञातव्यस्तेन च शब्देन न मन्तव्यं। गन्धो ज्ञातव्यस्तेन च गन्धेन न मन्तव्यं। रसो ज्ञातव्यस्तेन च रसेन न मन्तव्यं। स्पर्शो ज्ञातव्यस्तेन च स्पर्शेन न मन्तव्यं। धर्मा ज्ञातव्यास्तैश्च धर्मैर्न मन्तव्यं। चक्षुर्विज्ञानं ज्ञातव्यं तेन च चक्षुर्विज्ञानेन न मन्तव्यं। श्रोत्रविज्ञानं ज्ञातव्यं तेन च श्रोत्रविज्ञानेन न मन्तव्यं। घ्राणविज्ञानं ज्ञातव्यं तेन च घ्राणविज्ञानेन न मन्तव्यं। जिह्वाविज्ञानं ज्ञातव्यं तेन च जिह्वाविज्ञानेन न मन्तव्यं। कायविज्ञानं ज्ञातव्यं तेन च कायविज्ञानेन न मन्तव्यं। मनोविज्ञानं ज्ञातव्यं तेन च मनोविज्ञानेन न मन्तव्यम्।

चक्षुःसंस्पर्शो ज्ञातव्यस्तेन च चक्षुःसंस्पर्शेन न मन्तव्यं। श्रोत्रसंस्पर्शो ज्ञातव्यस्तेन च श्रोत्रसंस्पर्शेन न मन्तव्यं। घ्राणसंस्पर्शो ज्ञातव्यस्तेन च घ्राणसंस्पर्शेन न मन्तव्यं। जिह्वासंस्पर्शो ज्ञातव्यस्तेन च जि-

---

स्वभिमानाभावान्नरागादयः सम्भवन्ति। अतएव रघुवंशकाव्ये "असक्तः सुखमन्वभूत्" इत्युक्तं भगवद्गीतायामपि कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहमित्युक्तम्।

ह्वासंस्पर्शेन न मन्तव्यं । कायसंस्पर्शोज्ञातव्यस्तेन च कायसंस्पर्शेन न मन्तव्यं । मनः संस्पर्शोज्ञातव्यस्तेन च मनः संस्पर्शेन न मन्तव्यं ।

चक्षुः संस्पर्शप्रत्यया वेदना ज्ञातव्या । तया च चक्षुः संस्पर्शप्रत्यय वेदनया न मन्तव्यं । श्रोत्रसंस्पर्शप्रत्ययवेदना ज्ञातव्या तया च श्रोत्रसंस्पर्शप्रत्ययवेदनया न मन्तव्यं । घ्राणसंस्पर्शप्रत्ययवेदना-ज्ञातव्या तया च घ्राणसंस्पर्शप्रत्ययवेदनया न मन्तव्यं । जिह्वासं-स्पर्शप्रत्ययवेदना ज्ञातव्या । तया च जिह्वासंस्पर्शप्रत्ययवेदनया न मन्तव्यं । कायसंस्पर्शप्रत्ययवेदना ज्ञातव्या तया च कायसंस्पर्शप्रत्यय वेदनया न मन्तव्यं । मनः संस्पर्शप्रत्ययवेदनाज्ञातव्या । तया च मनःसंस्पर्शप्रत्ययवेदनया न मन्तव्यम् ।

पृथिवीधातुर्ज्ञातव्यस्तेन च पृथिवीधातुना न मन्तव्यं । अब्धा-तुर्ज्ञातव्यस्तेन चाऽब्धातुना न मन्तव्यं । तेजोधातुर्ज्ञातव्यस्तेन च तेजोधातुना न मन्तव्यं । वायुधातुर्ज्ञातव्यस्तेन च वायुधातुना न मन्तव्यं । आकाशधातुर्ज्ञातव्यस्तेन चाकाशधातुना न मन्तव्यं । विज्ञानधातुर्ज्ञातव्यस्तेन च विज्ञानधातुना न मन्तव्यं । अविद्या-ज्ञातव्या तया चाऽविद्यया न मन्तव्यं। संस्काराज्ञातव्यास्तैश्च संस्कारै-र्न मन्तव्यं। विज्ञानं ज्ञातव्यं तेन च विज्ञानेन न मन्तव्यं । नाम-रूपं ज्ञातव्यं तेन च नामरूपेण न मन्तव्यं । षडायतनं ज्ञातव्यं तेन च षडायतनेन न मन्तव्यं । स्पर्शोज्ञातव्यस्तेन च स्पर्शेन न मन्तव्यं । वेदनाज्ञातव्या तया च वेदनया न मन्तव्यं । तृष्णा ज्ञातव्यातया च तृष्णया न मन्तव्यं । उपादानं ज्ञातव्यं तेन चोपा-दानेन न मन्तव्यं । भवोज्ञातव्यस्तेन च भवेन न मन्तव्यं । जाति-

ज्ञातव्या तया च ज्ञात्वा न मन्तव्यं। जरामरणं ज्ञातव्यं तेन च जरामरणेन न मन्तव्यं।

दानपारमिता ज्ञातव्या तया च दानपारमितया न मन्तव्यं। शीलपारमिता ज्ञातव्या तया च शीलपारमितया न मन्तव्यं। क्षान्तिपारमिता ज्ञातव्या तया च क्षान्तिपारमितया न मन्तव्यं। वीर्यपारमिता ज्ञातव्या तया च वीर्यपारमितया न मन्तव्यं। ध्यानपारमिता ज्ञातव्या तया च ध्यानपारमितया न मन्तव्यं। प्रज्ञापारमिता ज्ञातव्या तया च प्रज्ञापारमितया न मन्तव्यं।

अध्यात्मशून्यता ज्ञातव्या तया चाऽध्यात्मशून्यतया न मन्तव्यं। वहिर्धाशून्यता ज्ञातव्या तया च वहिर्धाशून्यतया न मन्तव्यं। अध्यात्मवहिर्द्धाशून्यता ज्ञातव्या तया चाऽध्यात्मवहिर्द्धाशून्यतया न मन्तव्यं। शून्यताशून्यता ज्ञातव्या तया च शून्यताशून्यतया न मन्तव्यं। महाशून्यता ज्ञातव्या तया च महाशून्यतया न मन्तव्यं। परमार्थशून्यता ज्ञातव्या तया च परमार्थशून्यतया न मन्तव्यं। संस्कृतशून्यता ज्ञातव्या तया च संस्कृतशून्यतया न मन्तव्यं। असंस्कृतशून्यता ज्ञातव्या तया चाऽसंस्कृतशून्यतया न मन्तव्यं। अत्यन्तशून्यता ज्ञातव्या तया च अत्यन्तशून्यतया न मन्तव्यं। अनवराग्रशून्यता ज्ञातव्या तया चाऽनवराग्रशून्यतया न मन्तव्यं। अनवकारशून्यता ज्ञातव्या तया चाऽनवकारशून्यतया न मन्तव्यं। अनुपलम्भशून्यता ज्ञातव्या तया चाऽनुपलम्भशून्यतया न मन्तव्यं। अभावशून्यता ज्ञातव्या तया चाऽभावशून्यतया न मन्तव्यं। स्वभावशून्यता ज्ञातव्या तया च स्वभावशून्यतया न

मन्तव्यं। स्वलक्षणशून्यता ज्ञातव्या तया च स्वलक्षणशून्यतया न मन्तव्यं। अभावस्वभावशून्यता ज्ञातव्या तया चाऽभावस्वभावशून्यतया न मन्तव्यं।

ध्यानानि ज्ञातव्यानि तैश्च ध्यानैर्न मन्तव्यं। अप्रमाणानि ज्ञातव्यानि तैश्चाऽप्रमाणैर्न मन्तव्यं। आरूप्यसमापत्तयो ज्ञातव्यास्ताभिश्चाऽऽरूप्यसमापत्तिभिर्न मन्तव्यं। अभिज्ञाः ज्ञातव्यास्ताभिश्चाऽभिज्ञाभिर्न मन्तव्यं। पञ्चचक्षूंषि ज्ञातव्यानि तैश्च पञ्चचक्षुर्भिर्न मन्तव्यं। स्मृत्युपस्थानानि ज्ञातव्यानि तैश्च स्मृत्युपस्थानैर्न मन्तव्य। सम्यक् प्रहाणानि ज्ञातव्यानि तैश्च सम्यक्प्रहाणैर्न मन्तव्यं। ऋद्धिपादा ज्ञातव्यास्तैश्चर्द्धिपादैर्न मन्तव्यं। इन्द्रियाणि ज्ञातव्यानि तैश्चेन्द्रियैर्न मन्तव्यं। बलानि ज्ञातव्यानि तैश्च बलैर्न मन्तव्यं। बोध्यङ्गानि ज्ञातव्यानि तैश्च बोध्यङ्गैर्न मन्तव्यं। आर्योऽष्टाऽङ्गमार्गो ज्ञातव्यस्तेन चार्योऽष्टाऽङ्गमार्गेण न मन्तव्यं। आर्यसत्यानि ज्ञातव्यानि तैश्चार्यसत्यैर्न मन्तव्यं। अष्टौ विमोक्षा ज्ञातव्यास्तैश्चाऽष्टविमोक्षैर्न मन्तव्यं। नवाऽनुपूर्व्वविहारसमापत्तयो ज्ञातव्यास्ताभिश्च नवभिरनुपूर्व्वविहारसमापत्तिभिर्न मन्तव्यं। शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखानि ज्ञातव्यानि तैश्च शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखैर्न मन्तव्यं। समाधयो ज्ञातव्यास्तैश्च समाधिभिर्न मन्तव्यं। धारणीमुखानि ज्ञातव्यानि तैश्च धारणीमुखैर्न मन्तव्यं। दशतथागतबलानि ज्ञातव्यानि तैश्च दशतथागतबलैर्न मन्तव्यं। चत्वारि वैशारद्यानि ज्ञातव्यानि तैश्च वैशारद्यैर्न मन्तव्यं। चतस्रः प्रतिसम्विदो ज्ञातव्याः ताभिश्च प्रतिसम्विद्भिर्न मन्तव्यं। महामैत्री ज्ञातव्या तया च महामैत्र्या न मन्तव्यं। महाकरुणा ज्ञातव्या तया च महाकरुणया न

मन्तव्य । अष्टादशाऽऽवेणिकबुद्धधर्माज्ञातव्यास्तैश्चाऽष्टादशाऽऽवेणिकबुद्धधर्मैर्न मन्तव्य ।

एवं खलु आयुष्मञ्छारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरतातेनाऽपि बोधिचित्तेन न मन्तव्य । असमसमचित्तेन न मन्तव्य । उदारचित्तेन न मन्तव्य । तत्कस्य हेतोस्तथाहि तच्चित्तमचित्तं प्रकृतिश्चित्तस्य प्रभास्वरता । आह । कायुष्मन् सुभूते चित्तस्य प्रकृतिप्रभास्वरता । सुभूतिराह । यदायुष्मञ्छारद्वतीपुत्र चित्तं न रागेण संयुक्तं नविसंयुक्तं न संयोजनैः संयुक्तं नविसंयुक्तं । न दृष्टिकृतैः संयुक्तं नविसंयुक्तं । न श्रावकचित्तेन संयुक्तं न विसंयुक्तं । न प्रत्येकबुद्धचित्तेन संयुक्तं न विसंयुक्तं । इदमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य चित्तस्य प्रकृतिप्रभास्वरता । आह । किं पुनरायुष्मन् सुभूते अस्ति तच्चित्तं यच्चित्तमचित्तं । सुभूतिराह । किं पुनरायुष्मन् शारद्वतीपुत्र या अचित्तता तत्राऽस्तितायां अस्तिता वा नाऽस्तितावा न संविद्यते नोपलभ्यते । आह नोहीद आयुष्मन् सुभूते । सुभूतिराह । स चेदायुष्मञ्छारद्वतीपुत्र तत्राऽस्तितायां अस्तिता वानाऽस्तिता वानसंविद्यते नोपलभ्यते । अपि नु युक्तस्ते एषपर्य्यनुयोगोयदायुष्मञ्छारद्वतीपुत्र एवमाहाऽस्ति तच्चित्तमचित्तमिति । आह । का पुनरायुष्मन् सुभूते अचित्तता । सुभूतिराह । अविकारा अविकल्पा आयुष्मञ्छारद्वतीपुत्राऽचित्ततायां सर्व्वधर्म्माणां तथता । इयमुच्यते अचिन्त्या अचित्तता । आह । किं पुनरायुष्मन् सुभूते यथैवचित्तमविकारमविकल्पं तथैवरूपमप्यविकारमविकल्पं तथैव वेदनाऽप्यविकारा अवि-

कल्पा। तथैव संज्ञाप्यविकारा अविकल्पा। तथैवसंस्कारा अप्यविकारा अविकल्पाः। तथैवविज्ञानमप्यविकारमविकल्पम्।

यथैवचित्तमविकारमविकल्पं तथैव चक्षुरप्यविकारमविकल्पं। तथैव श्रोत्रमप्यविकारमविकल्पं। तथैव घ्राणमप्यविकारमप्यविकल्पं। तथैव जिह्वाऽप्यविकारा अविकल्पा। तथैव कायोऽप्यविकारोऽविकल्पः। तथैव मनोऽप्यविकारमविकल्पं। तथैव चित्तमविकारमविकल्पं। तथैव रूपमप्यविकारमविकल्पं। तथैव शब्दोऽप्यविकारोऽविकल्पः। तथैव गन्धोऽप्यविकारोऽविकल्पः। तथैव रसोऽप्यविकारोऽविकल्पः। तथैव स्पर्शोऽप्यविकारोऽविकल्पः। तथैव धर्मा अप्यविकारा अविकल्पाः। तथैव चित्तमप्यविकारमविकल्पं। तथैव चक्षुर्धातुरप्यविकारोऽविकल्पः। तथैव रूपधातुरप्यविकारोऽविकल्पः। तथैव चक्षुर्विज्ञानधातुरप्यविकारोऽविकल्पः। तथैवश्रोत्रधातुरप्यविकारोऽविकल्पः। तथैव शब्दधातुरप्यविकारोऽविकल्पः। तथैव श्रोत्रविज्ञानधातुरप्यविकारोऽविकल्पः। तथैव घ्राणधातुरप्यविकारोऽविकल्पः। तथैव गन्धधातुरप्यविकारोऽविकल्पः। तथैव घ्राणविज्ञानधातुरप्यविकारोऽविकल्पः। तथैव जिह्वाधातुरप्यविकारोऽविकल्पः। तथैव रसधातुरप्यविकारोऽविकल्पः। तथैव जिह्वाविज्ञानधातुरप्यविकारोऽविकल्पः। तथैव कायधातुरप्यविकारोऽविकल्पः। तथैव स्प्रष्टव्यधातुरप्यविकारोऽविकल्पः। तथैव कायविज्ञानधातुरप्यविकारोऽविकल्पः। तथैव मनोधातुरप्यविकारोऽविकल्पः। तथैव धर्मधातुरप्यविकारोऽविकल्पः। तथैवमनोविज्ञानधातुरप्यविकारोऽविकल्पः।

यथैव चित्तमविकारमविकल्पं। तथैवाऽविद्याऽप्यविकाराऽविकल्पा। तथैव संस्कारा अप्यविकारा अविकल्पाः। तथैव विज्ञानमप्यविकारमविकल्पं। तथैव नामरूपमप्यविकारमविकल्पं। तथैव षडायतनमप्यविकारमविकल्पं। तथैव स्पर्शोऽप्यविकारोऽविकल्पः। तथैव वेदनाऽप्यविकारा अविकल्पाः। तथैव तृष्णाप्यविकारा अविकल्पाः। तथैवोपादानमप्यविकारमविकल्पं। तथैव भवोऽप्यविकारोऽविकल्पः। तथैव जातिरप्यविकारा अविकल्पा। तथैव जरामरणमप्यविकारमविकल्पं।

यथैव चित्तमविकारमविकल्पं। तथैव दानपारमिताऽप्यविकाराऽविकल्पा। तथैव शीलपारमिताऽप्यविकाराऽविकल्पा। तथैव क्षान्तिपारमिताऽप्यविकाराऽविकल्पा। तथैव वीर्यपारमिताऽप्यविकाराऽविकल्पा। तथैव ध्यानपारमिताऽप्यविकाराऽविकल्पा। तथैव प्रज्ञापारमिताऽप्यविकाराऽविकल्पा।

यथैव चित्तमविकारमविकल्पं। तथैवाऽध्यात्मशून्यताऽप्यविकाराऽविकल्पा। तथैव बहिर्द्धाशून्यताऽप्यविकाराऽविकल्पा। तथैवाऽध्यात्मबहिर्द्धाशून्यताऽप्यविकाराऽविकल्पा। तथैव शून्याशून्यताऽप्यविकाराऽविकल्पा। तथैव महाशून्यताऽप्यविकाराऽविकल्पा। तथैव परमार्थशून्यताऽप्यविकाराऽविकल्पा। तथैव संस्कृतशून्यताऽप्यविकाराऽविकल्पा। तथैवाऽत्यन्तशून्यताऽप्यविकाराऽविकल्पा। तथैवाऽनवराग्रशून्यताऽप्यविकाराऽविकल्पा। तथैवाऽनवकारशून्यताऽप्यविकाराऽविकल्पा। तथैव प्रकृतिशून्यताऽप्यविकाराऽविकल्पा। तथैव सर्व्वधर्मशून्यताऽप्यविकाराऽविकल्पा। तथैव स्वलक्षणशून्यताऽप्यविकाराऽवि-

कल्पा। तथैवाऽनुपलम्भशून्यताऽप्यविकाराऽविकल्पा। तथैवाऽभाव-शून्यताप्यविकाराऽविकल्पा। तथैव स्वभावशून्यताऽप्यविकाराऽवि-कल्पा। तथैवाऽभा स्वभावशून्यताऽप्यविकाराऽविकल्पा।

यथैव चित्तमविकारमविकल्पं। तथैव स्मृत्युपस्थानान्यविकाराण्य-विकल्पानि। तथैव सम्यक् प्रहाणान्यविकाराण्यविकल्पानि। तथैव च्छर्द्धिपादा अप्यविकारा अविकल्पाः। तथैवेन्द्रियाण्यविकाराण्यवि-कल्पानि। तथैव ध्यानान्यविकाराण्यविकल्पानि। तथैव बोध्यङ्गान्य-विकाराण्यविकल्पानि। तथैवार्य्योऽष्टाऽङ्गमार्गोऽप्यविकारोऽविकल्पः। तथैवार्य्यसत्यान्यविकाराण्यविकल्पानि। तथैव ध्यानान्यविकारान्यवि-कल्पानि। तथैवाऽप्रमाणान्यविकाराण्यविकल्पानि। तथैवारूप्यसमा-पत्तयोऽप्यविकाराः अविकल्पाः। तथैवाष्टौ विमोक्षा अप्यविकाराः अविकल्पाः। तथैव नवाऽनुपूर्व्वविहारसमापत्तयोऽप्यविकारा अवि-कल्पाः। तथैव शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखान्यविकाराण्य-विकल्पानि। तथैवाऽभिज्ञाऽप्यविकाराः अविकल्पा। तथैव समा-धयोऽप्यविकाराः अविकल्पाः। तथैव धारणीमुखान्यविकाराण्य-विकल्पानि। तथैव दशतथागतबलान्यविकाराण्यविकल्पानि। तथैव वैशारद्यान्यविकाराण्यविकल्पानि। तथैव चतस्रः प्रतिसम्विदोऽप्य-विकारा अविकल्पाः। तथैव महामैत्र्यप्यविकाराऽविकल्पा। तथैव महाकरुणाऽप्यविकाराऽविकल्पा। तथैवाऽष्टादशावेनिकबुद्धधर्म्मा अप्यविकारा अविकल्पाः।

यथैव चित्तमचित्तमविकारमविकल्पं। तथैव स्रोत आपत्तिफल-मप्यविकारमविकल्पं। तथैव सकृदागामिफलमप्यविकारमविकल्पं।

तथैवऽनागामिफलमप्यविकारमविकल्पं। तथैवाऽर्हत्त्वमप्यविकारम-विकल्पं। तथैव प्रत्येकबोधिरप्यविकाराविकल्पा। तथैव मार्गाकार-ज्ञताऽप्यविकाराऽविकल्पा। तथैव सर्व्वाकारज्ञताऽप्यविकाराऽवि कल्पा।

सुभूतिराह। एवमेतदायुष्मञ्छारद्वतीपुत्र यथैवचित्तमचित्त-मविकारमविकल्पं। तथैव चक्षुरप्यविकारमविकल्पं। तथैव श्रोत्र-मप्यविकारमविकल्पं। तथैव घ्राणमप्यविकारमविकल्पं। तथैव जिह्वाऽप्यविकाराऽविकल्पा। तथैव कायोऽप्यविकारोऽविकल्पः। तथैव मनोऽप्यविकारमविकल्पं।

यथैव चित्तमचित्तमविकारमविकल्पं। तथैव रूपमप्यविकार-मविकल्पं। तथैव शब्दोऽप्यविकारोऽविकल्पः। तथैव गन्धोऽप्यवि-कारोऽविकल्पः। तथैव रसोऽप्यविकारोऽविकल्पः। तथैव स्पर्शोऽप्य-विकारोऽविकल्पः। तथैव धर्म्मा अप्यविकारा अविकल्पाः।

*यथैव चित्तमचित्तमविकारमविकल्पं। तथैव चक्षुर्धातुरप्यवि-

---

* पूर्व्वं चित्तस्य प्रकृति प्रभास्वरताऽभिहिता सा च प्रकाशस्वभावेन प्रभास्वरता स्वप्रकाशरूपता। तथाच तस्य प्रकृति प्रभास्वरतया तस्य ज्ञानस्वरूपप्रकाशने नान्यस्यचित्तस्यापेक्षाऽस्तीति चित्तमचित्तं चित्तान्तर शून्य चित्तस्य चित्तान्तरापेक्षायां मनवस्था प्रसङ्गात् एवं बौद्धमते चित्तस्य क्षणिकतया न विकार विकल्पयो सम्भव। विका-रोहि स्थिरस्य दुग्धादेर्दध्यादिरूपोदृष्ट एवं स्थिरस्य स्वर्णादे कुण्डल-वलयादिविविधकल्पनारूपो विकल्पो दृश्यते। बौद्धमते [illegible] सर्व्वपदा-र्थानां क्षणिकतया न कुत्रापि पदार्थे विकारविकल्पयो सम्भावनेति मनसिकृत्य सुभूतिः शारद्वतीपुत्रेण प्रश्नमुखेनाभिहितं सर्व्वमनूद्या-

कारोऽविकल्पः । तथैवरूपधातुरप्यविकारोऽविकल्पः । तथैवचक्षुर्विज्ञानधातुरप्यविकारोऽविकल्पः । तथैव श्रोत्रधातुरप्यविकारोऽविकल्पः । तथैव शब्दधातुरप्यविकारोऽविकल्पः । तथैव श्रोत्रविज्ञानधातुरप्यविकारोऽविकल्पः । तथैवघ्राणधातुरप्यविकारोऽविकल्पः । तथैवगन्धधातुरप्यविकारोऽविकल्पः । तथैवघ्राणविज्ञानधातुरप्यविकारोऽविकल्पः । तथैवजिह्वाधातुरप्यविकारोऽविकल्पः । तथैवरसधातुरप्यविकारोऽविकल्पः । तथैवजिह्वाविज्ञानधातुरप्यविकारोऽविकल्पः । तथैवकायधातुरप्यविकारोऽविकल्पः । तथैवस्प्रष्टव्यधातुरप्यविकारोऽविकल्पः । तथैवकायविज्ञानधातुरप्यविकारोऽविकल्प. । तथैवमनोधातुरप्यविकारोऽविकल्पः । तथैव धर्मधातुरप्यविकारोऽविकल्पः । तथैवमनोविज्ञानधातुरप्यविकारोऽविकल्प' ।

यथैवचित्तमचित्तमविकारमविकल्पं । तथैवाऽविद्याऽप्यविकाराऽविकल्पा । तथैव संस्कारा अप्यविकारा अविकल्पाः । तथैव विज्ञानमप्यविकारमविकल्प । तथैव नामरूपमप्यविकारमविकल्प । तथैव षडायतनमप्यविकारमविकल्पं । तथैव स्पर्शोऽप्यविकारोऽविकल्प । तथैव वेदनाऽप्यविकाराऽविकल्पा । तथैव तृष्णाऽप्यविकाराऽविकल्पा । तथैवोपादानमप्यविकारमविकल्पं । तथैव भवोऽप्यविकारोऽविकल्पः । तथैव जातिरप्यविकाराऽविकल्पा । तथैव जरामरणमप्यविकारमविकल्प । तथैव दानपारमिताऽप्यविकाराऽविकल्पा । तथैव शीलपारमिताऽप्यविकाराऽविकल्पा । तथैव क्षान्तिपारमिता-

---

ऽङ्गीकरोति यथैवेत्यादिना । चित्तदृष्टान्तेन चक्षुरादौ तदुपपादयति तथैवेत्यादिना । एतन्मते चित्तमक्षोर्भेदात् न दृष्टान्ताऽनुपपत्ति ।

ऽप्यविकाराऽविकल्पा । तथैव वीर्य्यपारमिताऽप्यविकाराऽविकल्पा । तथैव ध्यानपारमिताऽप्यविकाराऽविकल्पा । तथैव प्रज्ञापारमिताऽप्यविकाराऽविकल्पा ।

यथैव चित्तमचित्तमविकारमविकल्पं । तथैवाऽध्यात्मशून्यताऽप्यविकाराऽविकल्पा । तथैव बहिर्द्धाशून्यताऽप्यविकाराऽविकल्पा । तथैवाऽध्यात्मबहिर्द्धाशून्यताऽप्यविकाराऽविकल्पा । तथैव शून्यताशून्यताऽप्यविकाराऽविकल्पा । तथैव महाशून्यताऽप्यविकाराऽविकल्पा । तथैव परमार्थशून्यताऽप्यविकाराऽविकल्पा । तथैव संस्कृतशून्यताऽप्यविकाराऽविकल्पा । तथैवाऽसंस्कृतशून्यताऽप्यविकाराऽविकल्पा । तथैवाऽत्यन्तशून्यशून्यताऽप्यविकाराऽविकल्पा । तथैवाऽनवराऽग्रशून्यताऽप्यविकाराऽविकल्पा । तथैवाऽनवकारशून्यताऽप्यविकाराऽविकल्पा । तथैव प्रकृतिशून्यताऽप्यविकाराऽविकल्पा । तथैव सर्व्वधर्म्मशून्यताऽप्यविकाराऽविकल्पा । तथैव स्वलक्षणशून्यताऽप्यविकाराऽविकल्पा । तथैवाऽनुपलम्भशून्यताऽप्यविकाराऽविकल्पा । तथैवाऽभावशून्यताऽप्यविकाराऽविकल्पा । तथैव स्वभावशून्यताऽप्यविकाराऽविकल्पा । तथैवाऽभावस्वभावशून्यताऽप्यविकाराऽविकल्पा ।

यथैव चित्तमचित्तमविकारमविकल्पं । तथैव स्मृत्युपस्थानान्यप्यविकाराण्यविकल्पानि । तथैव सम्यक् प्रहाणान्यप्यविकाराण्यविकल्पानि । तथैवर्द्धिपादा अप्यविकारा अविकल्पाः । तथैवेन्द्रियाण्यप्यविकाराण्यविकल्पानि । तथैव बोध्यङ्गान्यप्यविकाराण्यविकल्पानि । तथैवार्य्याऽष्टाऽङ्गमार्गोऽप्यविकारोऽविकल्पः । तथैवार्य्यसत्यान्यविकाराण्यविकल्पानि । तथैव ध्यानान्यप्यविकाराण्यविकल्पानि । तथैवा-

ऽप्रमाणान्यप्यविकाराण्यविकल्पानि । तथैवारूप्यसमापत्तयोऽप्यविकारा अविकल्पाः। तथैवाऽष्टौ विमोक्षा अप्यविकारा अविकल्पाः। तथैवाऽनुपूर्व्वविहारसमापत्तयोऽप्यविकाराः अविकल्पाः। तथैवशून्यतानिमित्ताऽप्रणिहितविमोक्षमुखान्यप्यविकाराण्यविकल्पानि । तथैवाऽभिज्ञा अप्यविकारा अविकल्पाः। तथैव समाधयोऽप्यविकारा अविकल्पा । तथैवधारणीमुखान्यप्यविकाराण्यविकल्पानि । तथैव महामैत्र्यप्यविकारा अविकल्पा । तथैव महाकरुणाऽप्यविकाराऽविकल्पा । तथैव दशतथागतबलान्यप्यविकाराण्यविकल्पानि । तथैव चत्वारि वैशारद्यान्यप्यविकाराण्यविकल्पानि । तथैवचतस्रः प्रतिसंविदोऽप्यविकारा अविकल्पाः । तथैवाऽष्टादशावेणिकबुद्धधर्मा अप्यविकारा अविकल्पाः ।

यथैव चित्तमचित्तमविकारमविकल्पं। तथैव स्रोत आपत्तिफलमप्यविकारमविकल्पं। तथैव सकृदागामिफलमप्यविकारमविकल्पं तथैवाऽनागामिफलमप्यविकारमविकल्पं। तथैवाऽर्हत्त्वमप्यविकारमविकल्पं। तथैव प्रत्येकबोधिरप्यविकाराऽविकल्पा । तथैव मार्गाकारज्ञताऽप्यविकाराऽविकल्पा । तथैव सर्व्वाकारज्ञताऽप्यविकाराऽविकल्पा । तथैव सर्व्वज्ञताऽप्यविकाराऽविकल्पा ।

अथायुष्माञ्छारद्वतीपुत्रः आयुष्मते सुभूतये साधुकारमदात् । साधुसाधु आयुष्मन् सुभूते। यथाऽपि नाम त्वं भगवतः पुत्र औरसो मुखतोजातोधर्म्मजोधर्म्मनिर्म्मितोधर्म्मदायादोनामिषदायादः। प्रत्यक्षचक्षुर्धर्म्मेषु कायसाक्षी। यथाऽपि नदरणविहारिणां श्रावकाणां अग्रतायां भगवतानिर्दिष्टस्याऽयमुपदेशः। एवमायुष्मन् सुभूते

बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं । अतो बोधिसत्त्वो महासत्त्वोऽवैवर्त्तिक उपपरीक्षितव्यः । अविरहितश्च बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां वेदितव्यः । श्रावकभूमावपि शिक्षितुकामेनायुष्मन् सुभूते बोधिसत्त्वेन महासत्त्वेन इयमेव प्रज्ञापारमिता प्रयत्नतः श्रोतव्या ग्रहीतव्या धारयितव्या वाचयितव्या पर्य्यवाप्तव्या योनिशश्च मनसिकर्त्तव्या । प्रत्येकबुद्धभूमावपि शिक्षितुकामेनायुष्मन् सुभूते बोधिसत्त्वेन महासत्त्वेन इयमेव प्रज्ञापारमिता श्रोतव्या ग्रहीतव्याधारयितव्या वाचयितव्या पर्य्यवाप्तव्या योनिशश्च मनसि कर्त्तव्या । बोधिसत्त्वभूमावपि शिक्षितुकामेनायुष्मन् सुभूते बोधिसत्त्वेन महासत्त्वेन इयमेव प्रज्ञापारमिता श्रोतव्या ग्रहीतव्या धारयितव्या वाचयितव्या पर्य्यवाप्तव्या योनिशश्च मनसि कर्त्तव्या । बुद्धभूमावपि शिक्षितुकामेनायुष्मन् सुभूते बोधिसत्त्वेन महासत्त्वेन इयमेव प्रज्ञापारमिता श्रोतव्या ग्रहीतव्या धारयितव्या वाचयितव्या पर्य्यवाप्तव्या योनिशश्च मनसि कर्त्तव्या । तत्कस्य हेतोः । अत्र हि प्रज्ञापारमितायां विस्तरेण त्रीणि यानान्युपदिश्यन्ते यत्र बोधिसत्त्वैः श्रावकैः प्रत्येकबुद्धैश्च सततसमितं शिक्षितव्यं ॥०॥

शतसाहस्र्यां प्रज्ञापारमितायां दशमः परिवर्त्तः ॥१०॥

---

# अथ चतुर्थपरिवर्त्तः ।



अथायुष्मान् सुभूतिर्भगवन्तमेतदवोचत् । योऽहं भगवन् बोधिसत्त्वं प्रज्ञापारमितां न विन्दामि नोपलभते । सोऽहं बोधिसत्त्वं महासत्त्वं प्रज्ञापारमिताञ्चाऽविन्दन्ननुपलभमानः कतमं बोधिसत्त्वं महासत्त्वं कतमस्यां प्रज्ञापारमितायामववदिष्याम्यनुशासिष्यामि । एतदेव मे भगवन् कौकृत्यं स्याद्योऽहं सर्व्वधर्म्माणामायं व्ययञ्चानुपलभमानोनामधेयमात्रेणायव्ययं कुर्य्याम् । यदुत बोधिसत्त्व इति प्रज्ञापारमितेति वा । अपि तु खलु पुनर्भगवंस्तदपि नामधेयं न स्थितं न विष्ठित नाऽधिस्थितं। तत्कस्य हेतो रविद्यमानत्वात्तस्य नाम धेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिस्थितम् ।

* रूपस्याहं भगवन्नयं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं

---

* पूर्व्वं सर्व्वधर्म्माणामाय व्ययञ्चाऽनुपलभमान इत्यादिना सर्व्वधर्म्माणामुत्पादविनाशयो रूपलम्भाभावमभिधाय तदेव प्रपञ्चयति रूपस्याहमित्यादिनारूपस्यरूपस्कन्धस्यायमुत्पाद व्ययं विनाशं नोपलभे न प्रत्यक्षेण प्रमाणेन जानामि । नच प्रत्यक्षेण समनुपश्यामि । दृशिरत्र प्रत्यक्षज्ञानमात्र पर नचाक्षुषज्ञानवचन । कस्यनामधेयमिति । अस्यायमभिप्राय । विद्यमानत्वेनोपलभ्यमानस्य हि वस्तुनोनामधेयकरणं सम्भवति नत्वसतः खपुष्पादि तुल्यत्वादिति । यस्य च नाम-

भगवन् रूपस्यायं व्ययस्याऽनुपलभमानोऽसमनुपश्यं कस्य नाम धेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि नामधेयं न स्थितं नाऽधिस्थितं । तत्कस्य हेतोरविद्यमानत्वात् तस्य नामधेयस्य । एवं तन्नामधेयं न स्थित न विष्ठितं नाऽधिष्ठितं । वेदनाया अहं भगवन्नायं व्ययस्य नोपलभेन समनुपश्यामि । सोऽहं भगवन् वेदनाया आयं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवं स्तदपि नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । (वेदनाया) संज्ञाया अहं भगवन्नायं व्ययस्य नोपलभे न समनुपश्यामि । सोऽहं भगवन् संज्ञाया आयं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवन्स्तदपि संज्ञानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । संस्काराणामहं भगवन्नायं व्ययस्य नोपलभे न समनुपश्यामि । । सोऽहं भगवन् संस्काराणामायं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भवन्

---

धेयस्यकर्त्तव्यता, तदपि नामधेय न स्थित न स्थितिमत् असदिति-यावत् । नविष्ठितं न विशेषेणस्थितं । न परमाणवादिवत्प्रत्यक्षतोऽनभूयमानमपिमानान्तारव्यवस्थितत् । नाऽधिष्ठितं नाकेनाधितत्त्वेन स रूपेणाधिष्ठितं व्यवहृतमित्यर्थ । एव परत्राभियाख्येयम् ।

स्तदपि संस्कारनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। विज्ञानस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् विज्ञानस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि यदुत बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात् तस्य नामधेयस्य। एवं नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठित।

चक्षुषोऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवंश्चक्षुष आयं व्ययञ्चानुपलभमानोऽसमनुपश्यन कस्य नामधेयं करिष्यामि यदुत बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि चक्षुर्नामधेयं न स्थियं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। श्रोत्रस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यति। सोऽहं भगवन् श्रोत्रस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि यदुत बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि श्रोत्र नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। घ्राणस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोहं भगवन् घ्राणस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्घ्राण नामधेयं न स्थितं न विष्ठितं नाऽ-

धिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । जिह्वाया अहं भगवन्नायं व्ययस्य नोपलभे न समनुपश्यामि । सोऽहं भगवन् जिह्वाया आयं व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । कायस्याहं भगवन्नायं व्ययस्य नोपलभे न समनुपश्यामि । सोऽहं भगवन् कायस्यायं व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि [illegible] खलु पुनर्भगवंस्तदपि नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । मनसोऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् मनस आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं'।

रूपस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् रूपस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् । तत्कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि रूपनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न

विष्ठितं नाऽधिष्ठितं। शब्दस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोहं भगवन् शब्दस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। गन्धस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोहं भगवन् गन्धस्यायं व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि गन्धनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। रसस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोहं भगवन् रसस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। स्पर्शस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् स्पर्शस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन्। कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि स्पर्शनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। धर्माणामहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् धर्मा-

णामायं व्ययश्चाऽनुपलभमानोऽसमनुपश्यन्। कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

चक्षुर्विज्ञानस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् चक्षुर्विज्ञानस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन्। कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि चक्षुर्विज्ञान नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। श्रोत्रविज्ञानस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् श्रोत्रविज्ञानस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन्। कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि श्रोत्रविज्ञान नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। घ्राणविज्ञानस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् घ्राणविज्ञानस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन्। कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि घ्राणविज्ञाननामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। जिह्वाविज्ञानस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् जिह्वाविज्ञान-

स्यायं व्ययस्याऽनुपलभमानोऽसमनुपश्यन्। कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि जिह्वाविज्ञान नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। कायविज्ञानस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् कायविज्ञानस्यायं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि कायविज्ञाननामधेयं न स्थितं नविष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं च स्थितं न विष्ठितं नाऽधिष्ठितं। मनोविज्ञानस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् मनोविज्ञानस्यायं व्ययस्याऽनुपलभमानोऽसमनु श्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि मनोविज्ञाननामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

चक्षुः संस्पर्शस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् चक्षुः संस्पर्शस्यायं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि चक्षुः संस्पर्शनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। श्रोत्रसंस्पर्शस्याऽहं भगवन्नायं व्ययञ्च

नोपलभे न समनुपश्यामि। सोऽहं भगवन् श्रोत्रसंस्पर्शस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि श्रोत्रसंस्पर्शनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। घ्राणसंस्पर्शस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् घ्राणसंस्पर्शस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि घ्राणसंस्पर्शनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। जिह्वासंस्पर्शस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् जिह्वासंस्पर्शस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि जिह्वासंस्पर्शनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। कायसंस्पर्शस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् कायसंस्पर्शस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि कायसंस्पर्शनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत् कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। मनः संस्पर्शस्याऽहं भगवन्नायं व्ययञ्च नो-

पलभे न समनुपश्यामि। सोऽहं भगवन् मनः संस्पर्शस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि मनः संस्पर्शनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

चक्षुः संस्पर्शजायावेदनायाऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवंश्चक्षुः संस्पर्शजावेदनाया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि चक्षुः संस्पर्शजा वेदनानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। श्रोत्रसंस्पर्शजावेदनाया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् श्रोत्रसंस्पर्शजावेदनायाआयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि श्रोत्रसंस्पर्शजावेदनानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाधिष्ठितं। घ्राणसंस्पर्शजा वेदनाया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् घ्राणसंस्पर्शजावेदनाया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि घ्राणसंस्पर्शजा वेदनानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य

नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । जिह्वासंस्पर्शजावेदनायाश्चहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् जिह्वासंस्पर्शजावेदनायाश्चायं व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि जिह्वासंस्पर्शजावेदनानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । कायसंस्पर्शजाया वेदनाया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् कायसंस्पर्शजावेदनाया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि कायसंस्पर्शजावेदनानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । मनः संस्पर्शजावेदनायाश्चहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् मनः संस्पर्शजावेदनाया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि मनः संस्पर्शजावेदनानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं ।

पृथिवीधातोरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि ।

सोऽहं भगवन् पृथिवीधातोरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि पृथिवीधातुनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । अब्धातोरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन्नब्धातोरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि अब्धातुनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तेजोधातोरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवंस्तेजोधातोरायं व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि तेजोधातुनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । वायुधातोरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् वायुधातोरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि वायुधातुनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । आकाशधातोरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन्नाकाशधा-

तोरायं व्ययद्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तद्याकाशधातुनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

विज्ञानधातोरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् विज्ञानधातोरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि विज्ञानधातुनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। अविद्याया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्नविद्याया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदप्यविद्यानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। संस्काराणामहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् संस्काराणामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि संस्कारनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

विज्ञानस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि।

सोऽहं भगवन् विज्ञानस्यायं व्ययस्यास्लुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि विज्ञाननामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। नामरूपस्याहं भगवन्नायं व्ययश्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् नामरूपस्यायं व्ययस्याऽलुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि नामरूपनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। षडायतनस्याऽहं भगवन्नायं व्ययश्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् षडायतनस्यायं व्ययस्याऽलुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि षडायतन नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। स्पर्शस्याऽहं भगवन्नायं व्ययश्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् स्पर्शस्यायं व्ययस्याऽलुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि स्पर्शनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। वेदनायाऽहं भगवन्नायं व्ययश्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् वेदनाया आयं व्ययस्या-

ऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि वेदनानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तृष्णायाश्चाहं भगवन्नायं व्ययश्च नोपलभे न समनुपश्यामि। सोऽहं भगवंस्तृष्णायाश्चायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि तृष्णानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

उपादानस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्नुपादानस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि उपादाननामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। जातेरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् जातेरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि जातिनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। जरामरणस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् जराम-

रणस्यायं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि जरामरण नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं ।

अविद्यानिरोधस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन्नविद्यानिरोधस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि अविद्यानिरोध नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । संस्कारनिरोधस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् संस्कारनिरोधस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि संस्कारनिरोधनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । विज्ञाननिरोधस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् विज्ञाननिरोधस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि विज्ञाननिरोधनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न

विष्ठितं नाऽधिष्ठितं। नामरूपनिरोधस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् नामरूपनिरोधस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि नामरूपनिरोधनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। षड़ायतननिरोधस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् षड़ायतन निरोधस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि षड़ायतननिरोधनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। स्पर्शनिरोधस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् स्पर्शनिरोधस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि स्पर्शनिरोधनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। वेदनानिरोधस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् वेदनानिरोधस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि वेदनानिरोधनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नाम-

धेयस्य। एवं तन्नामधेयं न स्थितं न विस्थितं नाऽधिष्ठितं। तृष्णानिरोधस्याहं भगवन्नायं व्ययस्य नोपलभे न समनुपश्यामि। सोऽहं भगवन् तृष्णानिरोधस्यायं व्ययस्यानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि तृष्णानिरोधनामधेयं न स्थितं न विस्थितं नाऽधिष्ठितं। तत् कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विस्थितं नाऽधिष्ठितं। उपादाननिरोधस्याहं भगवन्नायं व्ययस्य नोपलभे न समनुपश्यामि। सोऽहं भगवन्नुपादाननिरोधस्यायं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदप्युपादाननिरोधनामधेयं न स्थितं न विस्थितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विस्थितं नाऽधिष्ठितं। भवनिरोधस्याऽहं भगवन्नायं व्ययस्य नोपलभे न समनुपश्यामि। सोऽहं भगवन् भवनिरोधस्यायं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि भवनिरोधनामधेयं न स्थितं न विस्थितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विस्थितं नाऽधिष्ठितं। जातिनिरोधस्याऽहं भगवन्नायं व्ययस्य नोपलभे न समनुपश्यामि। सोऽहं भगवन् जातिनिरोधस्यायं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि जातिनिरोधनामधेयं न स्थितं न विस्थितं नाऽधिष्ठितं। तत्कस्य

हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । जरामरणनिरोधस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् जरामरणनिरोधस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति । अपि तु खलु पुनर्भगवंस्तदपि जरामरणनिरोधनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठित नाऽधिष्ठितं ।

रागस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन्नायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि रागनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं नविष्ठितं नाऽधिष्ठितं । द्वेषस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् द्वेषस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि द्वेषनामधेय न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । मोहस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् मोहस्यायं व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि मोहनामधेयं न स्थितं न विष्ठितं नाऽधि-

ष्ठितं तत्कस्य हेतोः अविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

दृष्टिगतानामहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् दृष्टिगतानामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि दृष्टिगतनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। आत्मनोऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्नात्मन आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदप्यात्मनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। सत्त्वस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् सत्त्वस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि सत्त्वनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। जीवस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् जीवस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि जीवनामधेयं न स्थितं न विष्ठितं नाधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य

नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । जन्तोरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् जन्तोरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि जन्तु नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । पोषस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् पोषस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि पोष नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । पुरुषस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् पुरुषस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि पुरुष नामधेयं न स्थितं न विष्ठितं नाधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । पुद्गलस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् पुद्गलस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि पुद्गल नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं ।

मनुजस्याऽहं भगवन्नायं व्ययश्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् मनुजस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति । अपि तु खलु पुनर्भगवंस्तदपि मनुज नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं ।

मानवस्याऽहं भगवन्नायं व्ययश्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् मानवस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति । अपि तु खलु पुनर्भगवंस्तदपि मानव नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । कारकस्याऽहं भगवन्नायं व्ययश्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् कारकस्यायं व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति । अपि तु खलु पुनर्भगवंस्तदपि कारक नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । वेदकस्याऽहं भगवन्नायं व्ययश्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् वेदकस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति । अपि तु खलु पुनर्भगवंस्तदपि वेदक नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं ।

ज्ञानकस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् ज्ञानकस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि ज्ञानक नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाधिष्ठितं। पश्यकस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् पश्यकस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि पश्यक नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं ॥

दानपारमिताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् दानपारमिताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि दानपारमिता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। शीलपारमिताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् शीलपारमिताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि शीलपारमिता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं

न विष्ठितं नाऽधिष्ठितं। क्षान्तिपारमिताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् क्षान्तिपारमिताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि क्षान्तिपारमिता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत् कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। वीर्य्यपारमिताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् वीर्य्यपारमिताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि वीर्य्यपारमिता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत् कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । ध्यानपारमिताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् ध्यानपारमिताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि ध्यानपारमिता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत् कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । प्रज्ञापारमिताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् प्रज्ञापारमिताया आय व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनस्तदपि प्रज्ञापारमिता नामधेयं न स्थितं

न विष्ठितं नाऽधिष्ठितं। तत् कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

अध्यात्मशून्यताया अहं भगवन्नायं व्ययम् नोपलभे न समनुपश्यामि। सोऽहं भगवन्नध्यात्मशून्यताया आयं व्ययम् नोपलभे न समनुपश्यामि। सोऽहं भगवन्नध्यात्मशून्यताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदप्यध्यात्मशून्यतानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत् कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। बहिर्द्धाशून्यताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् बहिर्द्धाशून्यताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि बहिर्द्धाशून्यता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत् कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। अध्यात्मबहिर्द्धाशून्यताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्नध्यात्मबहिर्द्धाशून्यताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदप्यध्यात्मबहिर्द्धाशून्यता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत् कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। शून्यताशून्यताया अहं भगवन्नायं व्ययञ्च

नोपलभे न समनुपश्यामि। सोऽहं भगवन् शून्यताशून्यताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि शून्यताशून्यता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। महाशून्यताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् महाशून्यताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि महाशून्यता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। परमार्थशून्यताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् परमार्थशून्यताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपिपरमार्थशून्यताया नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। संस्कृत शून्यताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् संस्कृतशून्यताया आयं व्ययञ्चाऽनुपलभमानोऽस मनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि संस्कृतशून्यता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत् कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं

तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । अत्यन्तशून्यतायां अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन्नत्यन्त शून्यताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति । अपि तु खलु पुनर्भगवंस्तदप्यत्यन्त शून्यता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । अनवराऽग्रशून्यताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन्ननवराऽग्रशून्यताया आयं व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदप्यनवराऽग्रशून्यता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । अनवकारशून्यताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन्ननवकार शून्यताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति । अपि तु खलु पुनर्भगवंस्तदप्यनवकार शून्यता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । प्रकृतिशून्यताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् प्रकृतिशून्यताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति । अपि तु खलु पुनर्भगवंस्तदपि प्रकृतिशून्यता नामधेयं

न स्थित न विष्ठित नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एव तन्नामधेय न स्थित न विष्ठित नाऽधिष्ठित। सर्व्वधर्म्मशून्यताया अह भगवन्नाय व्ययञ्च नोपलभे न समनुपश्यामि। सोऽह भगवन् सर्व्वधर्म्मशून्यताया आय व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेय करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवस्तदपि सर्व्वधर्म्मशून्यता नामधेय न स्थित न विष्ठित नाऽधिष्ठित। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एव तन्नामधेय न स्थित न विष्ठित नाऽधिष्ठित। स्वलक्षणशून्यताया अह भगवन्नाय व्ययञ्च नोपलभे न समनुपश्यामि। सोऽह भगवन् स्वलक्षणशून्यताया आय व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवस्तदपि स्वलक्षणशून्यता नामधेय न स्थित न विष्ठित नाऽधिष्ठित। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एव तन्नामधेय न स्थित न विष्ठित नाऽधिष्ठित।

अनुपलम्भशून्यताया अह भगवन्नाय व्ययञ्च नोपलभे न समनुपश्यामि। सोऽह भगवन्ननुपलम्भशून्यताया आय व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेय करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवस्तदप्यनुपलम्भशून्यता नामधेय न स्थित न विष्ठित नाऽधिष्ठित। तत् कस्य हेतोरविद्यमानत्वात्तस्य। एव तन्नामधेय न स्थित न विष्ठित नाऽधिष्ठित। अभावशून्यताया अह भगवन्नाय व्ययञ्च नोपलभे न समनुपश्यामि। सोऽह भगवन्नभावशून्यताया आय व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नाम-

धेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदप्य-भावशून्यता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। स्वभावशून्यताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् स्वभावशून्यताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि स्वभावशून्यता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। अभावस्वभावशून्यताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनु-पश्यामि। सोऽहं भगवन्नभावस्वभावशून्यताया आयं व्ययञ्चाऽनुपलभ-मानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदप्यभावस्वभावशून्यता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

स्मृत्युपस्थानानामहं भगवन्नायं व्ययञ्च नोपलभे न समनु-पश्यामि। सोऽहं भगवन् स्मृत्युपस्थानानामायं व्ययञ्चाऽनुपलभ-मानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि स्मृत्युपस्थान नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। सम्यक् प्रहाणानामहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् सम्यक्

प्रहाणानामायं व्ययञ्चाऽनुपलभमानो ऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति । अपि तु खलु पुनर्भगवंस्तदपि सम्यक् प्रहाणनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्यनामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं ।

ऋद्धिपादानामहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन्नृद्धिपादानामायं व्ययञ्चाऽनुपलभमानो-ऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भवंस्तदृद्धिपादनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। इन्द्रियाणामहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन्निन्द्रियाणामायं व्ययञ्चा-ऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व-इति । अपि तु खलु पुनर्भगवंस्तदपीन्द्रिय नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । बलानामहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् बलानामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति । अपि तु खलु पुनर्भगवंस्तदपि बल-नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्य-मानत्वात्तस्य नामधेयस्य। बोध्यङ्गानामहं भगवन्नायं व्ययञ्च नोप-लभे न समनुपश्यामि । सोऽहं भगवन् बोध्यङ्गानामायं व्ययञ्चा-

ऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि बोध्यङ्गनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिस्थितं। आर्य्याष्टाऽङ्गमार्गस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि सोऽहं भगवन्नार्य्याष्टाङ्गमार्गस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदप्यार्य्याष्टाङ्गमार्गनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। [1]शून्यताविमोक्षमुखस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् शून्यताविमोक्षमुखस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि शून्यताविमोक्षमुखनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं[2]। प्रणिहितविमोक्षमुखस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् प्रणिहितविमोक्षमुखस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति।

---

(१) क ख ग घ पुस्तकेषु-शून्य इति स्थाने स्थाने पाठः।

(२) अानिमित्तविमोक्षमुखस्य निर्देशोऽत्रयुक्तः सर्व्वत्र शून्यतानिमित्ताप्रणिहितविमोक्षमुखस्य स्थानान्तरे निर्देशो दृश्यते। अत्र तु न लिखितः। लेखकस्य भ्रमेणापतित इत्यनुमीयते।

अपि तु खलु पुनर्भगवंस्तदपि प्रणिहितविमोक्षमुखनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तं नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। चतुर्णामहं भगवन् ध्यानानामायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् चतुर्णां ध्यानानामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि ध्याननामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत् कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। मैत्र्या अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् मैत्र्या आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि मैत्रीनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। करुणाया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् करुणायाआयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि करुणानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाधिष्ठितं। मुदिताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् मुदिताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु

खलु पुनर्भगवंस्तदपि मुदितानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। उपेक्षायाश्चहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्नुपेक्षायाश्चायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदप्युपेक्षा नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। चतसृणामहं भगवन्नारूप्यसमापत्तीनामायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्नायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदप्यारूप्यसमापत्ति नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। बुद्धाऽनुस्मृतेरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् बुद्धाऽनुस्मृतेरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि बुद्धाऽनुस्मृतिनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। धर्माऽनुस्मृतेरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् धर्माऽनुस्मृतेरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति।

अपि तु खलु पुनर्भगवंस्तदपि धर्माऽनुस्मृति नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। सङ्घाऽनुस्मृतेरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् सङ्घाऽनुस्मृतेरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि सङ्घाऽनुस्मृतिनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

शीलाऽनुस्मृतेरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् शीलाऽनुस्मृतेरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन्। कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि शीलाऽनुस्मृति नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। त्यागाऽनुस्मृतेरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् त्यागाऽनुस्मृतेरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि त्यागाऽनुस्मृति नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। कायगताऽनुस्मृतेरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् कायगताऽनुस्मृतेरायं व्ययञ्चाऽनुपलभमानोऽसमनु-

पश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि कायगताऽनुस्मृतिनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

उद्वेगाऽनुस्मृतेरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्नुद्वेगाऽनुस्मृतेरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदप्युद्वेगाऽनुस्मृतिनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। आलापाऽनुस्मृतेरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्नालापाऽनुस्मृतेरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदप्यालापाऽनुस्मृतिनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाधिष्ठितं। मरणाऽनुस्मृतेरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् मरणाऽनुस्मृतेरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि मरणाऽनुस्मृतिनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। मांसचक्षुषोऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्

मांसचक्षुषश्चायं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि मांसचक्षुर्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। दिव्यचक्षुषोऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् दिव्यचक्षुषश्चायं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि दिव्यचक्षुर्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। प्रज्ञाचक्षुषोऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् प्रज्ञाचक्षुषश्चायं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि प्रज्ञाचक्षुर्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। धर्मचक्षुषोऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् धर्मचक्षुषश्चायं व्ययस्याऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि धर्मचक्षुर्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। बुद्धचक्षुषोऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् बुद्धचक्षुषश्चायं व्ययस्याऽनुपलभ-

मानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि बुद्धचक्षुर्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

षण्णामभिज्ञानामहं भगवन्नाम व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् षण्णामभिज्ञानामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि षडभिज्ञानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। दशानां तथागतबलानामहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् दशानां तथागतबलानामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि दशतथागतबलनामधेय न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। चतुर्णां वैशारद्यानामहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् चतुर्णां वैशारद्यानामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि वैशारद्यनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेय न स्थितं न विष्ठितं नाऽधिष्ठितं। चतसृणां प्रतिसम्विदामहं भगवन्नायं व्ययञ्च नोपलभे

न समनुपश्यामि। सोऽहं भगवन् चतसृणां प्रतिसम्विदामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि प्रतिसम्विन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। महाकरुणाया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् महाकरुणाया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि महाकरुणानामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। अष्टादशाऽवेणिकबुद्धधर्माणामहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्नष्टादशावेणिकबुद्धधर्माणामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदप्यष्टादशावेणिकबुद्धधर्मनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

स्वप्नोपमानामहं भगवन् पञ्चानामुपादानस्कन्धानामायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् स्वप्नोपमानां पञ्चानामुपादानस्कन्धानामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदप्युपादानस्कन्धनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य

हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । मायोपमानामहं भगवन् पञ्चानामुपादानस्कन्धानामायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् मायोपमानां पञ्चानामुपादानस्कन्धानामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तदपि उपादानस्कन्धनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । प्रतिश्रुत्कोपमानानामहं भगवन् पञ्चानामुपादानस्कन्धानामायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् प्रतिश्रुत्कोपमानानां पञ्चानामुपादानस्कन्धानामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति । अपि तु खलु पुनर्भगवंस्तद्युपादानस्कन्धनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । प्रतिभासोपमानाहं भगवन् पञ्चानामुपादानस्कन्धानामायं व्ययञ्च नोपलभे न समनुपश्यामि । सोऽहं भगवन् प्रतिभासोपमानां पञ्चानामुपादानस्कन्धानामायं व्ययञ्चानुपलभमानो न समनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तद्युपादानस्कन्धनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं ।

प्रतिबिम्बोपमानामहं भगवन् पञ्चानामुपादानस्कन्धानामायं

व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् प्रतिबिम्बोपमानां पञ्चानामुपादानस्कन्धानामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदुपादानस्कन्धनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। मरीच्युपमानामहं भगवन् पञ्चानामुपादानस्कन्धानामायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् मरीच्युपमानां पञ्चानामुपादानस्कन्धानामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदुपादानस्कन्धनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। *दकचन्द्रोपमानामहं भगवन् पञ्चानामुपादानस्कन्धानामायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् दकचन्द्रोपमानां पञ्चानामुपादानस्कन्धानामायं व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदुपादानस्कन्ध नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। निर्मितकोपमानामहं पञ्चानामुपादानस्कन्धानामायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्

* उदकचन्द्र इति पाठोयुक्तः प्रतिभाति।

निमित्तकोपमानां पञ्चानामुपादानस्कन्धानामायं व्ययश्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदप्युपादानस्कन्ध नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। विविक्तस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् विविक्तस्यायं व्ययश्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनस्तदपि विविक्तनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं। नाऽधिष्ठितं।

शान्तस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् शान्तस्यायं व्ययश्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेय करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवं स्तदपि शान्तनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। अनुत्पादस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्ननुत्पादस्यायं व्ययश्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदप्यनुत्पाद नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

अनिरोधस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्ननिरोधस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तद्यनिरोध नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। अप्रादुर्भावस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् अप्रादुर्भावस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तद्यप्रादुर्भावनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यनत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। अनभिसंस्कारस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्ननभिसंस्कारस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तद्यनभिसंस्कारनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठित। असंक्लेशस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन्नसंक्लेशस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तद्यसंक्लेशनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। व्यवदानस्याऽहं भगवन्नायं

व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् व्यवदानस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि व्यवदान नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

धर्मधातोरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् धर्मधातोरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि धर्मधातुनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तथागतस्याऽहंभगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् तथागतस्यायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि तथागतनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। भूतकोटेरहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् भूतकोटेरायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि भूतकोटिनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

धर्मस्थितिताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनु-

पश्यामि। सोऽहं भगवन् धर्मस्थितिताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि धर्मस्थिति नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। धर्मनियामताया अहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् धर्मनियामताया आयं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि धर्मनियामता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। कुशलाऽकुशलानामहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् कुशलाऽकुशलानां धर्माणामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि कुशलाऽकुशलनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। लौकिकलोकोत्तराणामहं भगवन् धर्माणामायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् लौकिकलोकोत्तराणां धर्माणामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि लौकिकलोकोत्तरनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न

स्थितं न विष्ठितं नाऽधिष्ठितं। संस्कृताऽसंस्कृतानामहं भगवन् धर्म्माणामायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् संस्कृताऽसंस्कृतानां धर्म्माणामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि संस्कृताऽसंस्कृत नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

साश्रवाणामहं भगवन् धर्म्माणामायं व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् साश्रवाणां धर्म्माणामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदपि साश्रवधर्म्म नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एव तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। अतीताऽनागतप्रत्युत्पन्नानामहं धर्म्माणामायं व्ययञ्चनोपलभे न समनुपश्यामि। सोऽहं भगवन्नतीताऽनागतप्रत्युत्पन्नानां धर्म्माणामायं व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्वइति। अपि तु खलु पुनर्भगवंस्तदप्यतीताऽनागतप्रत्युत्पन्नानां धर्म्माणां नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठित।

अनतीतस्याऽनागतस्यां प्रत्युत्पन्नस्याहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। किं न तदित्युच्यते। असंस्कृतं हि नातीतं नाऽपा-

ऽनागतं न प्रत्युत्पन्नं। असंस्कृतस्याऽहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। कतमच्चाऽसंस्कृतं यस्य नोत्पादो न स्थितिर्न भङ्गः भगवतोऽप्यहं भगवन्नायं व्ययञ्च नोपलभे न समनुपश्यामि। पूर्व्वस्यां दिश्यहं भगवन् गङ्गानदीवालुकोपमेषु लोकधातुषु तथागतानामर्हतां सम्यक्सम्बुद्धानां सश्रावकसंघानां स बोधिसत्त्वानामायञ्च व्ययञ्च नोपलभे न समनुपश्यामि। दक्षिणस्यां दिश्यहं भगवन् गङ्गानदीवालुकोपमेषु लोकधातुषु तथागतानामर्हतां सम्यक्सम्बुद्धानां सश्रावकसंघानां स बोधिसत्त्वानामायञ्च व्ययञ्च नोपलभे न समनुपश्यामि। पश्चिमायांदिश्यहं भगवन् गङ्गानदीवालुकोपमेषु लोकधातुषु तथागतानामर्हतां सम्यक्सम्बुद्धानां सश्रावकसंघानां सबोधिसत्त्वानामायञ्च व्ययञ्च नोपलभे न समनुपश्यामि। उत्तरस्यां दिश्यहं भगवन् गङ्गानदीवालुकोपमेषु लोकधातुषु तथागतानामर्हतां सम्यक्सम्बुद्धानां सश्रावकसंघानां सबोधिसत्त्वानामायञ्च व्ययञ्च नोपलभे न समनुपश्यामि। उत्तरपूर्व्वस्यां दिश्यहं भगवन् गङ्गानदीवालुकोपमेषु लोकधातुषु तथागतानामर्हतां सम्यक्सम्बुद्धानां सश्रावकसंघानां सबोधिसत्त्वानामायञ्च व्ययञ्च नोपलभे न समनुपश्यामि। पूर्व्वदक्षिणस्यां दिश्यहं भगवन् गङ्गानदीवालुकोपमेषु लोकधातुषु तथागतानामर्हतां सम्यक्सम्बुद्धानां सश्रावकसंघानां सबोधिसत्त्वानामायञ्च व्ययञ्च नोपलभे न समनुपश्यामि। दक्षिणपश्चिमायां दिश्यहं भगवन् गङ्गानदीवालुकोपमेषु लोकधातुषु तथागतानामर्हतां सम्यक्सम्बुद्धानां सश्रावकसंघानामायञ्च व्ययञ्च नोपलभे न समनुपश्यामि। पश्चिमोत्तरस्यां दिश्यहं भगवन् गङ्गा-

नदीवालुकोपमेषु लोकधातुषु तथागतानामर्हतां सम्यक्सम्बुद्धानां सश्रावकसंघानां सबोधिसत्त्वानामायञ्च व्ययञ्च नोपलभे न समनुपश्यामि। अधस्ताद्दिश्यहं भगवन् गङ्गानदीवालुकोपमेषु लोकधातुषु तथागतानामर्हतां सम्यक्सम्बुद्धानां सश्रावकसंघानामायञ्च व्ययञ्च नोपलभे न समनुपश्यामि। उपरिष्टाद्दिश्यहं भगवन् गङ्गानदीवालुकोपमेषु लोकधातुषु तथागतानामर्हतां सम्यक्सम्बुद्धानां सश्रावकसंघानां सबोधिसत्त्वानामायञ्च व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवंस्तथागतानामर्हतां सम्यक्सम्बुद्धानां सश्रावकसंघानां सबोधिसत्त्वानामायञ्च व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कतमं बोधिसत्त्वं कतमस्यां प्रज्ञापारमितायामवदिष्याम्यनुशासिष्यामि। कतमाञ्च प्रज्ञापारमितामुपदेक्ष्यामि। अपि तु खलु पुनर्भगवंस्तदपि तथागत नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तदपि संघनामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

सर्व्वधर्मतथताया अहं भगवन्नायञ्च व्ययञ्च नोपलभे न समनुपश्यामि। सोऽहं भगवन् सर्व्वधर्मतथताया आयञ्च व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि सर्व्वधर्मतथता नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य। एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं।

यापि भगवन्नामधर्मसंकेतकी धर्मप्रज्ञप्तिर्यदुत बोधिसत्त्व इति।

सा न केनचिद्वचनीया रूपेण वा वेदनया वा संज्ञया वा संस्कारैर्व्वा विज्ञानेन वा चक्षुषा वा श्रोत्रेण वा घ्राणेन वा जिह्वया वा कायेन वा मनसा वा रूपेण वा शब्देन वा गन्धेन वा रसेन वा स्पर्शेण वा धर्म्मेण वा। चक्षुर्व्विज्ञानेन वा श्रोत्रविज्ञानेन वा घ्राणविज्ञानेन वा जिह्वाविज्ञानेन वा कायविज्ञानेन वा मनोविज्ञानेन वा। चक्षुः संस्पर्शेण वा श्रोत्रसंस्पर्शेण वा घ्राणसंस्पर्शेण वा जिह्वासंस्पर्शेण वा कायसंस्पर्शेण वा मनः संस्पर्शेण वा। चक्षुः संस्पर्शप्रत्यय वेदनया वा श्रोत्रसंस्पर्शप्रत्यय वेदनया वा घ्राणसंस्पर्शप्रत्यय वेदनया वा जिह्वासंस्पर्शप्रत्यय वेदनया वा कायसंस्पर्शप्रत्यय वेदनया वा मनः संस्पर्शप्रत्यय वेदनया वा। पृथिवीधातुना वा अब्धातुना वा तेजोधातुना वा वायुधातुना वा आकाशधातुना वा विज्ञानधातुना वा। अविद्यया वा संस्कारैर्व्वा विज्ञानेन वा नामरूपेण वा षडायतनेन वा स्पर्शेण वा वेदनया वा तृष्णया वा उपादानेन वा भवेन वा जात्या वा जरामरणेन वा। दानपारमितया वा शीलपारमितया वा क्षान्तिपारमितया वा वीर्य्यपारमितया वा ध्यानपारमितया वा प्रज्ञापारमितया वा। अध्यात्मशून्यतया वा बहिर्द्धाशून्यतया वा अध्यात्मबहिर्द्धाशून्यतया वा। शून्यताशून्यतया वा परमार्थशून्यतया वा। असंस्कृतशून्यतया वा अत्यन्तशून्यतया वा अनवकारशून्यतया वा प्रकृतिशून्यतया वा सर्व्वधर्म्मशून्यतया वा स्वलक्षणशून्यतया वा अनुपलम्भशून्यतया वा अभावशून्यतया वा स्वभावशून्यतया वा अभावस्वभावशून्यतया वा। स्मृत्युपस्थानैर्वा सम्यक् प्रहाणैर्वा ऋद्धिपादैर्वा इन्द्रियैर्वा बलैर्वा बोध्यङ्गैर्वा आर्य्या-

ऽष्टाऽङ्गमार्गेण वा आर्यसत्यैर्वा ध्यानैर्वा अप्रमाणैर्वा आरूप्यसमापत्तिभिर्वा शून्यतानिमित्ताऽप्रणिहितविमोक्षैर्वा तथागतबलैर्वा वैशारद्यैर्वा प्रतिसम्बिद्भिर्वा महामैत्र्या वा महाकरुणया वा आवेणिकबुद्धधर्मैर्वा यावदेवधर्मप्रज्ञप्तिः । तथापि नाम भगवन् स्वप्न इति नाम केनचिद्वचनीयं । मायेति वा नाम केनचिद्वचनीयं प्रतिश्रुत्केति नाम प्रतिभास इति नाम केनचिद्वचनीयं । मरीचिकेति नाम केनचिद्वचनीयत । दकचन्द्र इति केनचिद्वचनीयं । तथागत इति केनचिद्वचनीयं । तद्यथापि नाम भगवन् आकाशमिति नाम केनचिद्वचनीयं । पृथिवीति नाम केनचिद्वचनीयं । आप इति नाम केनचिद्वचनीयं । तेज इति नाम केनचिद्वचनीयं । वायुरिति नाम केनचिद्वचनीयं । तथतेति नाम केनचिद्वचनीयं । अवितथतेति नाम केनचिद्वचनीयं ।

अनन्यतथतेति नाम न केनचिद्वचनीयं । धर्मतथतेति नाम न केनचिद्वचनीयं । धर्मधातुरिति न केनचिद्वचनीयं । धर्मस्थितितेति न केनचिद्वचनीयं । भूतकोटिरिति नाम न केनचिद्वचनीयं । दानपारमितेति नाम न केनचिद्वचनीयं । शीलपारमितेति नाम न केनचिद्वचनीयं । क्षान्तिपारमितेति नाम न केनचिद्वचनीयं । वीर्यपारमितेति नाम न केनचिद्वचनीयं । ध्यानपारमितेति नाम न केनचिद्वचनीय । प्रज्ञापारमितेति नाम न केनचिद्वचनीयं ।

शीलमिति नाम न केनचिद्वचनीयं । समाधिरिति नाम न केनचिद्वचनीयं । प्रज्ञेति नाम न केनचिद्वचनीयं । विमुक्तिरिति नाम न केनचिद्वचनीयं । विमुक्तिज्ञानदर्शनमिति नाम न केन-

चिद्वचनीयं । श्रोत आपन्न इति नाम न केनचिद्वचनीयं । श्रोत आपन्नः न केनचिद्वचनीयः। श्रोत आपन्नधर्मा इति नाम न केनचिद्वचनीयः । सकृदागामीति नाम न केनचिद्वचनीयं । सकृदागामिधर्मा इति नाम न केनचिद्वचनीयं। अनागामीति नाम न केनचिद्वचनीयं । अनागामिधर्मा इति नाम न केनचिद्वचनीयं । अर्हन्निति नाम न केनचिद्वचनीयं । अर्हद्धर्मा इति नाम न केनचिद्वचनीयं । प्रत्येकबुद्ध इति नाम न केनचिद्वचनीयं । प्रत्येकबुद्धधर्मा इति न केनचिद्वचनीयं । बोधिसत्त्व इति नाम न केनचिद्वचनीयं । बोधिसत्त्व धर्मा इति नाम न केनचिद्वचनीयं । सम्यक्सम्बुद्ध इति नाम न केनचिद्वचनीयं ।

कुशलेन वा ऽकुशलेन वा सावद्येन वा अनवद्येन वा नित्येन वा अनित्येन वा सुखेन वा दुःखेन वा आत्मना वा अनात्मना वा शान्तेन वा अशान्तेन वा विविक्तेन वा अविविक्तेन वा भावेन वा अभावेन वा । इममप्यहं भगवन्नर्थवशं प्रतीत्यैवं वदाम्येतदेव मे कौकृत्यं स्यात् योऽहं सर्वधर्माणामायञ्च व्ययञ्चाऽनुपलभमानोऽसमनुपश्यन् कस्य नामधेयं कुर्य्यां यदुत बोधिसत्त्व इति प्रज्ञापारमितेति वा । अपि तु खलु पुनर्भगवंस्तदपि नामधेयं नैवस्थितं न विष्ठितं नाऽधिष्ठितं। तत्कस्य हेतोरविद्यमानत्वात्तस्य नामधेयस्य । एवं तन्नामधेयं न स्थितं न विष्ठितं नाऽधिष्ठितं । सचेद्बोधिसत्त्वस्य महासत्त्वस्यैवं प्रज्ञापारमितायां भाष्यमाणायामेभिराकारैरेभिर्लिङ्गैरेभिर्निमित्तैरुपदिश्यमानायां चित्तं नाऽवलीयते न संलीयते । न विप्रतिसारी भवति मानसं नोत्त्रस्यति न संत्रस्यति न सन्त्रासमा-

पद्यते नियतं च बोधिसत्त्वो महासत्त्वोऽवैवर्त्तिको बोधिसत्त्व भूमौ वेदितव्यः स्थित इत्यस्थानयोगेन ।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपे तेन न स्थातव्यं। वेदनायां तेन न स्थातव्यं। संज्ञायां तेन न स्थातव्यं। संस्कारेषु तेन न स्थातव्यं। विज्ञाने तेन न स्थातव्यं। चक्षुषि तेन न स्थातव्यं। श्रोत्रे तेन न स्थातव्यं। घ्राणे तेन न स्थातव्यं। जिह्वायां तेन न स्थातव्यं। काये तेन न स्थातव्यं। मनसि तेन न स्थातव्यं। रूपे तेन न स्थातव्यं। शब्दे तेन न स्थातव्यं। गन्धे तेन न स्थातव्यं। रसे तेन न स्थातव्यं। स्पर्शे तेन न स्थातव्यं। धर्मेषु तेन न स्थातव्यं। चक्षुर्विज्ञाने तेन न स्थातव्यं। श्रोत्रविज्ञाने तेन न स्थातव्यं। घ्राणविज्ञाने तेन न स्थातव्यं। जिह्वाविज्ञाने तेन न स्थातव्यं। कायविज्ञाने तेन न स्थातव्यं। मनोविज्ञाने तेन न स्थातव्यं। चक्षुः संस्पर्शे तेन न स्थातव्यं। श्रोत्र संस्पर्शे तेन न स्थातव्यं। घ्राणसंस्पर्शे तेन न स्थातव्यं। जिह्वासंस्पर्शे तेन न स्थातव्यं। कायसंस्पर्शे तेन न स्थातव्यं। मनःसंस्पर्शे तेन न स्थातव्यं।

चक्षुः संस्पर्शजायां वेदनायां तेन न स्थातव्यं। श्रोत्रसंस्पर्शजायां वेदनायां तेन न स्थातव्यं। घ्राणसंस्पर्शजायां वेदनायां तेन न स्थातव्यं। जिह्वासंस्पर्शजायां वेदनायां तेन न स्थातव्यं। काय-संस्पर्शजायां वेदनायां तेन न स्थातव्यं। मनः संस्पर्शजायां वेदनायां तेन न स्थातव्यं। पृथिवीधातौ तेन न स्थातव्यं। अब्धातौ तेन न स्थातव्यं। तेजोधातौ तेन न स्थातव्यं। वायुधातौ तेन न स्थातव्यं। आकाशधातौ तेन न स्थातव्यं। विज्ञानधातौ तेन न स्थातव्यं।

अविद्यायां तेन न स्थातव्यं । संस्कारेषु तेन न स्थातव्यं । विज्ञाने तेन न स्थातव्यं । नामरूपे तेन न स्थातव्यं । षड़ायतने तेन न स्थातव्य । स्पर्शे तेन न स्थातव्यं । वेदनायां तेन न स्थातव्यं । तृष्णायां तेन न स्थातव्यं । उपादाने तेन न स्थातव्यं । जातौ तेन न स्थातव्यं । जरामरणे तेन न स्थातव्यं ।

तत्कस्य हेतो स्तथाहि भगवन् रूपं रूपेण शून्यं । या च रूपशून्यता न तद्रूपं नचाऽन्यत्ररूपाच्छून्यता । रूपमेव शून्यता शून्यतैवरूपं । वेदना वेदनया शून्या । या च वेदना शून्यता न सा वेदना । न चाऽन्यत्र वेदनायाः शून्यता । वेदनैव शून्यता । शून्यतैव वेदना । संज्ञा संज्ञया शून्यता । या च संज्ञायाः शून्यता न सा संज्ञा । न चाऽन्यत्रसंज्ञायाः शून्यता संज्ञैव शून्यता शून्यतैव संज्ञा । संस्काराः संस्कारैः शून्याः । या च संस्कारशून्यता न ते संस्काराः न चाऽन्यत्र संस्कारेभ्यः शून्यतासंस्कारा एव शून्यता शून्यतैव संस्काराः। विज्ञानं विज्ञानेन शून्यं । या च विज्ञानशून्यता तद्विज्ञानं । न चाऽन्यत्र विज्ञानाच्छून्यता विज्ञानमेव शून्यता शून्यतैव विज्ञानं । अनेन भगवन् पर्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपे तेन न स्थातव्यं । वेदनायां तेन न स्थातव्यं । संज्ञायां तेन न स्थातव्यं । संस्कारेषु तेन न स्थातव्यं । विज्ञाने तेन न स्थातव्यं ।

तथाहि भगवन् चक्षुश्चक्षुषा शून्यं । या च चक्षुः शून्यता न तच्चक्षुः न चाऽन्यत्र चक्षुषः शून्यता । चक्षुरेव शून्यता शून्यतैव चक्षुः । श्रोत्रं श्रोत्रेण शून्यं । या च श्रोत्रशून्यता न तत् श्रोत्रं । न चाऽन्यत्र श्रोत्राच्छून्यता श्रोत्रमेव शून्यता शून्यतैव श्रोत्रं । घ्राणं घ्राणेन शून्यं । या च

घ्राणशून्यता न तद्घ्राणं। न चाऽन्यत्र घ्राणाच्छून्यता। घ्राणमेव शून्यता शून्यतैव घ्राणं। जिह्वा जिह्वया शून्या। या च जिह्वाशून्यता न सा जिह्वा न चाऽन्यत्र जिह्वायाः शून्यता जिह्वैव शून्यता शून्यतैवं जिह्वा। कायः कायेन शून्यः। या च काय शून्यता न स कायः न चाऽन्यत्रकायाच्छून्यता। काय एव शून्यता शून्यतैव कायः। मनो मनसा शून्यं। या च मनः शून्यता न तन्मनः। न चाऽन्यत्र मनसः शून्यता मन एव शून्यता शून्यतैव मनः। रूपं रूपेण शून्यं। या च रूपशून्यता न तद्रूपं। न चाऽन्यत्र रूपाच्छून्यता रूपमेव शून्यता शून्यतैवरूपं। शब्दः शब्देन शून्यः। या च शब्दशून्यता न स शब्दः। न चाऽन्यत्र शब्दाच्छून्यता। शब्द एव शून्यता शून्यतैव शब्दः। गन्धोगन्धेन शून्यः। या च गन्धशून्यता न स गन्धः। न चाऽन्यत्र गन्धाच्छून्यता गन्ध एव शून्यता शून्यतैव गन्धः। रसो रसेन शून्यः। या च रस शून्यता न रसः। न चाऽन्यत्र रसाच्छून्यता। रस एव शून्यता शून्यतैव रसः। स्पर्शः स्पर्शेन शून्यः। या च स्पर्शशून्यता न स स्पर्शः। न चाऽन्यत्र स्पर्शाच्छून्यता स्पर्श एव शून्यता शून्यतैव स्पर्शः। धर्माधर्मैः शून्याः। या च धर्मशून्यता न ते धर्माः। न चाऽन्यत्र धर्मेभ्यः शून्यता धर्मा एव शून्यता शून्यतैव धर्माः।

चक्षुर्विज्ञानं चक्षुर्विज्ञानेन शून्यं। या च चक्षुर्विज्ञानशून्यता न तच्चक्षुर्विज्ञानं। न चाऽन्यत्र चक्षुर्विज्ञानाच्छून्यता। चक्षुर्विज्ञानमेव शून्यता शून्यतैव चक्षुर्विज्ञानं। श्रोत्रविज्ञानं श्रोत्रविज्ञानेन शून्य। या च श्रोत्रविज्ञान शून्यता न तत् श्रोत्रविज्ञानं। न चाऽन्यत्र श्रोत्रविज्ञानाच्छून्यता। श्रोत्रविज्ञानमेव शून्यता शून्यतैव श्रोत्र-

विज्ञानं। घ्राणविज्ञानं घ्राणविज्ञानेन शून्यं। या च घ्राणविज्ञान शून्यता न तद्घ्राणविज्ञानं न चाऽन्यत्र घ्राणविज्ञानाच्छून्यता। घ्राणविज्ञानमेव शून्यता शून्यतैव घ्राणविज्ञानं। जिह्वाविज्ञानं जिह्वाविज्ञानेन शून्यं। या च जिह्वाविज्ञान शून्यता न तज्जिह्वाविज्ञानं। न चाऽन्यत्र जिह्वाविज्ञानाच्छून्यता जिह्वाविज्ञानमेव शून्यता शून्यतैव जिह्वाविज्ञानं। कायविज्ञानं कायविज्ञानेन शून्यं। या च कायविज्ञानशून्यता न तत्कायविज्ञानं। न चाऽन्यत्र कायविज्ञानाच्छून्यता शून्यतैव कायविज्ञानं। मनोविज्ञानं मनोविज्ञानेन शून्यं। या च मनोविज्ञानशून्यता न तन्मनोविज्ञानं। न चाऽन्यत्र मनोविज्ञानाच्छून्यता। मनोविज्ञानमेव शून्यता शून्यतैव मनोविज्ञानं।

चक्षुः संस्पर्शः चक्षुः संस्पर्शेन शून्यः। या च चक्षुःसंस्पर्शशून्यता न स चक्षुः संस्पर्शः। न चाऽन्यत्र चक्षुःसंस्पर्शाच्छून्यता। चक्षुः संस्पर्श एव शून्यता शून्यतैव चक्षुःसंस्पर्शः। श्रोत्रसंस्पर्शः श्रोत्रसंस्पर्शेन शून्यः। या च श्रोत्रसंस्पर्श शून्यता न स श्रोत्रसंस्पर्शः। न चाऽन्यत्र श्रोत्रसंस्पर्शाच्छून्यता। श्रोत्रसंस्पर्श एव शून्यता शून्यतैव श्रोत्रसंस्पर्शः। घ्राणसंस्पर्शो घ्राणसंस्पर्शेन शून्यः। या च घ्राणसंस्पर्श शून्यता न स घ्राणसंस्पर्शः। न चाऽन्यत्र घ्राणसंस्पर्शाच्छून्यता। घ्राणसंस्पर्श एव शून्यता शून्यतैव घ्राणसंस्पर्शः। जिह्वासंस्पर्शो जिह्वासंस्पर्शेन शून्यः। या च जिह्वासंस्पर्शशून्यता न स जिह्वासंस्पर्शः। न चाऽन्यत्र जिह्वासंस्पर्शाच्छून्यता। जिह्वासंस्पर्श एव शून्यता शून्यतैव जिह्वासंस्पर्शः। कायसंस्पर्शः कायसंस्पर्शेन शून्यः। या च कायसंस्पर्शशून्यता

न स कायसंस्पर्शः। न चाऽन्यत्र कायसंस्पर्शाच्छून्यता। कायसंस्पर्श एव शून्यता शून्यतैव कायसंस्पर्शः। मनः संस्पर्शो मनःसंस्पर्शेन शून्यः। या च मनःसंस्पर्श शून्यता न स मनः संस्पर्शः। न चाऽन्यत्र मनः संस्पर्शाच्छून्यता। मनः संस्पर्श एव शून्यता शून्यतैव मनः संस्पर्शः।

चक्षुः संस्पर्शप्रत्ययवेदना चक्षुःसंस्पर्शप्रत्ययवेदनया शून्या। या च चक्षुःसंस्पर्शप्रत्ययवेदना शून्यता न सा चक्षुःसंस्पर्शप्रत्यय वेदना न चाऽन्यत्र चक्षुःसंस्पर्शप्रत्ययवेदनाया शून्यता। चक्षुःसंस्पर्शप्रत्ययवेदनैव शून्यता शून्यतैव चक्षुःसंस्पर्शप्रत्यय वेदना। श्रोत्रसंस्पर्शप्रत्ययवेदना श्रोत्रसंस्पर्शप्रत्यय वेदनया शून्या। न चाऽन्यत्र श्रोत्र संस्पर्शप्रत्यय वेदनायाः शून्यता। श्रोत्रसंस्पर्शप्रत्यय वेदनैव शून्यता शून्यतैव श्रोत्रसंस्पर्शप्रत्ययवेदना। घ्राणसंस्पर्श प्रत्ययवेदना घ्राणसंस्पर्शप्रत्यय-वेदनया शून्य। या च घ्राणसंस्पर्श प्रत्ययवेदना शून्यता न सा घ्राणसंस्पर्शप्रत्यय वेदना न चाऽन्यत्र घ्राणसंस्पर्शप्रत्ययवेदनाया शून्यता। घ्राणसंस्पर्शप्रत्ययवेदनैव शून्यता शून्यतैव घ्राणसंस्पर्शप्रत्ययः वेदना। जिह्वासंस्पर्शप्रत्ययवेदना जिह्वासंस्पर्शप्रत्ययवेदनया शून्या। या च जिह्वासंस्पर्शप्रत्ययवेदना शून्यता न सा जिह्वासंस्पर्शप्रत्यय-वेदना। न चाऽन्यत्र जिह्वासंस्पर्शप्रत्ययवेदनायाः शून्यता। जिह्वा-संस्पर्शप्रत्ययवेदनैव शून्यता। शून्यतैव जिह्वासंस्पर्शप्रत्ययवेदना। कायसंस्पर्शप्रत्ययवेदना कायसंस्पर्शप्रत्ययवेदनया शून्या। या च कायसंस्पर्शप्रत्ययवेदना शून्यता न सा कायसंस्पर्शप्रत्ययवेदना। न चाऽन्यत्र कायसंस्पर्शप्रत्ययवेदनाया शून्यता। कायसंस्पर्शप्रत्ययवेदनैव शून्यता। शून्यतैव कायसंस्पर्शप्रत्ययवेदना। मनः संस्पर्शप्रत्ययवेदना

मनः संस्पर्शप्रत्ययवेदनया शून्या । या च मनःसंस्पर्शप्रत्ययवेदना शून्यता न सा मनःसंस्पर्शप्रत्ययवेदना । न चाऽन्यत्र मनः संस्पर्शप्रत्ययवेदनायाः शून्यता । मनः संस्पर्शप्रत्ययवेदनैव शून्यता । शून्यतैव मनः संस्पर्शप्रत्ययवेदना ।

पृथिवी धातुः पृथिवी धातुना शून्यः । या च पृथिवी धातु शून्यता न स पृथिवी धातुः । न चान्यत्र पृथिवी धातोः शून्यता । पृथिवी धातुरेव शून्यता शून्यतैव पृथिवी धातुः । अब्धातुरब्धातुना शून्यः या चाऽब्धातु शून्यता न सोऽब्धातुः । न चाऽन्यत्राब्धातोः शून्यता । अब्धातुरेव शून्यता शून्यतैवाऽब्धातुः । तेजोधातुस्तेजधातुना शून्यः । या च तेजोधातु शून्यता न स तेजोधातुः । न चाऽन्यत्र तेजोधातोः शून्यता । तेजोधातुरेव शून्यता शून्यतैव तेजोधातुः । वायुधातुर्वायुधातुना शून्यः । या च वायुधातु शून्यता न स वायुधातुः । न चाऽन्यत्र वायुधातोः शून्यता । वायुधातुरेव शून्यता शून्यतैव वायुधातुः । आकाशधातुराकाशधातुना शून्यः । या चाऽकाशधातु शून्यता न स आकाशधातुः । न चाऽन्यत्राकाश- धातोः शून्यता । आकाशधातुरेव शून्यता । शून्यतैवाकाशधातुः । विज्ञानधातुर्विज्ञानधातुना शून्यः । या च विज्ञानधातु शून्यता न स विज्ञानधातुः । न चाऽन्यत्र विज्ञानधातोः शून्यता । विज्ञान- धातुरेव शून्यता शून्यतैव विज्ञानधातुः । अविद्याभगवन्नविद्यया शून्या । या चाऽविद्याशून्यता न साऽविद्या । न चाऽन्यत्राऽविद्यायाः शून्यता । अविद्यैव शून्यता शून्यतैवाऽविद्या । संस्काराः संस्कारैः शून्याः । या च संस्कार शून्यता न ते संस्काराः । न चाऽन्यत्र

संस्कारेभ्यः शून्यता। संस्कारा एव शून्यता। शून्यतैव संस्कारा। विज्ञानं विज्ञानेन शून्यं। या च विज्ञान शून्यता न तद्विज्ञानं। न चाऽन्यत्र विज्ञानाच्छून्यता। विज्ञानमेव शून्यता शून्यतैव विज्ञानं।

नामरूपं नामरूपेण शून्यं। या च नामरूप शून्यता न तन्नामरूपं। न चाऽन्यत्र नामरूपाच्छून्यता। नामरूपमेव शून्यता शून्यतैव नामरूपं। षड़ायतनं षड़ायतनेन शून्यं। या च षड़ायतन शून्यता न तत् षड़ायतनं। न चाऽन्यत्र षड़ायतनाच्छून्यता। षड़ायतनमेव शून्यता शून्यतैव षड़ायतनं। स्पर्शः स्पर्शेन शून्यः। या च स्पर्शशून्यता न स स्पर्शः। न चाऽन्यत्र स्पर्शाच्छून्यता। स्पर्श एव शून्यता शून्यतैव स्पर्शः। वेदना वेदनया शून्या। या च वेदना शून्यता न सा वेदना। न चाऽन्यत्र वेदना शून्यता। वेदनैव शून्यता शून्यतैव वेदना। तृष्णा तृष्णाया शून्या। या च तृष्णा शून्या न सा तृष्णा। न चाऽन्यत्र तृष्णायाः शून्यता। तृष्णैव शून्यता शून्यतैव तृष्णा। उपादानमुपादानेन शून्यं या चोपादान शून्यता न तदुपादानं। न चाऽन्यत्रोपादानाच्छून्यता। उपादानमेव शून्यता शून्यतैवोपादानं। भवोभवे न शून्यः। या च भव शून्यता न स भवः। न चाऽन्यत्र भवाच्छून्यता। भव एव शून्यता शून्यतैव भवः। जातिर्जात्या शून्या। या च जाति शून्यता न सा जातिः। न चाऽन्यत्र जातेः शून्यता। जातिरेव शून्यता शून्यतैव जातिः। जरामरणं जरामरणेन शून्यं। या च जरामरण शून्यता न तत् जरामरणं। न चाऽन्यत्र जरामरणाच्छून्यता। जरामरणमेव शून्यता शून्यतैव जरामरणं।

अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता अविद्यायां न स्थातव्यं। संस्कारेषु न स्थातव्यं। विज्ञाने न स्थातव्यं। नामरूपे न स्थातव्यं। षड़ायतने न स्थातव्यं। स्पर्शे न स्थातव्यं। वेदनायां न स्थातव्यं। तृष्णायां न स्थातव्यं। उपादाने न स्थातव्यं। जरामरणे न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता दानपारमितायां न स्थातव्यं। तत्कस्य हेतोस्तथा हि दानपारमिता दानपारमितया शून्या। या च दानपारमिताशून्यता न सा दानपारमिता। न चाऽन्यत्र दानपारमितायाः शून्यता। दानपारमितैव शून्याता शून्यतैव दानपारमिता। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता शीलपारमितायां न स्थातव्यं। तत्कस्य हेतोस्तथा हि। शीलपारमिता शीलपारमितया शून्या। या च शीलपारमिताशून्यता न सा शीलपारमिता। न चाऽन्यत्र शीलपारमितायाः शून्यता। शीलपारमितैव शून्यता शून्यतैव शीलपारमिता। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता क्षान्तिपारमितायां न स्थातव्यं। तत्कस्य हेतोस्तथा हि। क्षान्तिपारमिता क्षान्तिपारमितया शून्या। या च क्षान्तिपारमिता शून्यता न सा क्षान्तिपारमिता। न चाऽन्यत्र क्षान्तिपारमितायाः शून्यता। क्षान्तिपारमितैव शून्यता शून्यतैव क्षान्तिपारमिता। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वीर्य्यपारमितायां न स्थातव्यं। तत्कस्य हेतोस्तथा हि। वीर्य्यपारमिता वीर्य्यपारमितया शून्या। या च

वीर्य्यपारमिता शून्यता न सा वीर्य्यपारमिता। न चाऽन्यत्र वीर्य्यपारमितायाः शून्यता। वीर्य्यपारमितैव शून्यता शून्यतैव वीर्य्यपारमिता। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता ध्यानपारमितायां न स्थातव्यं। तत्कस्य हेतोस्तथा हि। ध्यानपारमिता ध्यानपारमितया शून्या। या च ध्यानपारमिता शून्यता न सा ध्यानपारमिता। न चाऽन्यत्र ध्यानपारमितायाः शून्यता। ध्यानपारमितैव शून्यता शून्यतैव ध्यानपारमिता। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता प्रज्ञापारमितायां न स्थातव्यं। तत्कस्य हेतोस्तथा हि। प्रज्ञापारमिता प्रज्ञापारमितया शून्या। या च प्रज्ञापारमिताशून्यता न सा प्रज्ञापारमिता। न चाऽन्यत्र प्रज्ञापारमितायाः शून्यता। प्रज्ञापारमितैव शून्यता शून्यतैव प्रज्ञापारमिता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता षट्सुपारमितासु न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता चतुर्षु स्मृत्युपस्थानेषु न स्थातव्यं। तत्कस्य हेतोस्तथा हि। भगवन् स्मृत्युपस्थानानि स्मृत्युपस्थानैः शून्यानि। या च भगवन स्मृत्युपस्थान शून्यता न तानि स्मृत्युपस्थानानि। न चाऽन्यत्र स्मृत्युपस्थानेभ्य. शून्यता। स्मृत्युपस्थानान्येव शून्यता शून्यतैव स्मृत्युपस्थानानि। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारतायां चरता स्मृत्युपस्थानेषु न स्थातव्य। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता सम्यक्प्रहाणेषु न

स्थातव्यं। तत्कस्य हेतोस्तथा हि भगवन् सम्यक्प्रहाणानि सम्यक् प्रहाणैः शून्यानि। या च सम्यक्प्रहाण शून्यता न तानि सम्यक् प्रहाणानि। न चाऽन्यत्र सम्यक्प्रहाणेभ्यः शून्यता सम्यक्प्रहाणान्येव शून्यता शून्यतैव सम्यक्प्रहाणानि। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता सम्यक्प्रहाणेषु न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता ऋद्धिपादेषु न स्थातव्यं। तत्कस्य हेतोस्तथा हि भगवन्नृद्धिपादाः ऋद्धिपादैः शून्याः। या च ऋद्धिपाद शून्यता न ते ऋद्धिपादाः। न चाऽन्यत्र ऋद्धिपादेभ्य शून्यता। ऋद्धिपादा एव शून्यता शून्यतैव ऋद्धिपादाः। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता ऋद्धिपादेषु न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता इन्द्रियेषु न स्थातव्यं। तत्कस्य हेतोस्तथा हि। भगवन्निन्द्रियाणीन्द्रियैः शून्यानि या च भगवन्निन्द्रियशून्यता न तानीन्द्रियाणि। न चाऽन्यत्रेन्द्रियेभ्य. शून्यता इन्द्रियाण्येव शून्यता शून्यतैवेन्द्रियाणि। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता इन्द्रियेषु न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता पञ्चसु बलेषु न स्थातव्यं। तत्कस्य हेतोस्तथा हि भगवन् बलानिबलैः शून्यानि या च भगवन् बल शून्यता न तानि बलानि। न चाऽन्यत्र बलेभ्यः शून्यता। बलान्येव शून्यता शून्यतैव बलानि। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता बलेषु न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता सप्तसु बोध्यङ्गेषु न स्थातव्यं । तत्कस्य हेतोस्तथा हि । भगवन् बोध्यङ्गानि बोध्यङ्गैः शून्यानि । या च भगवन् बोध्यङ्गा शून्यता न तानि बोध्यङ्गानि । न चाऽन्यत्र बोध्यङ्गेभ्यः शून्यता । बोध्यङ्गान्येव शून्यता शून्यतैव बोध्यङ्गानि । अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता सप्तसु बोध्यङ्गेषु न स्थातव्यं । पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता आर्य्याऽष्टाङ्गमार्गे न स्थातव्यं । तत्कस्य हेतोस्तथा हि । भगवन् मार्गोमार्गेण शून्यः । या च भगवन् मार्गे शून्यता न स मार्गः न चाऽन्यत्र मार्गाच्छून्यता मार्गा एव शून्यता शून्यतैव मार्गः। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता मार्गे न स्थातव्यं । पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता चतुर्ष्वार्य्यसत्येषु न स्थातव्यं । तत्कस्य हेतोस्तथा हि । भगवन्नार्य्यसत्यानि आर्य्यसत्यैः शून्यानि या च भगवन्नार्य्यसत्यशून्यता न तान्यऽर्य्यसत्यानि न चाऽन्यत्रार्य्यसत्येभ्यः शून्यता । आर्य्यसत्यान्येव शून्यता शून्यतैवार्य्यसत्यानि । अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता आर्य्यसत्येषु न स्थातव्यं । पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता ध्यानेषु न स्थातव्यं । तत्कस्य हेतोस्तथा हि । भगवन् ध्यानानि ध्यानैः शून्यनि । या च ध्यान शून्यता न तानि ध्यानानि। न चाऽन्यऽत्र ध्यानेभ्यः शून्यता। ध्यानान्येव शून्यता । शून्यतैव ध्यानानि । अनेन भगवन् पर्य्यायेण

बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता ध्यानेषु न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता चतुर्ष्वप्रमाणेषु न स्थातव्यं। तत्कस्य हेतोस्तथा हि। भगवन्नप्रमाणानि प्रमाणैः शून्यानि या च भगवन्नप्रमाणशून्यता न तान्य प्रमाणानि। न चाऽन्यत्राऽप्रमाणेभ्यः शून्यता अप्रमाणान्येव शून्यता शून्यतैवाऽप्रमाणानि। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता अप्रमाणेषु न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता चतुर्ष्वारूप्यसमापत्तिषु न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन्नारूप्यसमापत्तय आरूप्यसमापत्तिभिः शून्याः। या च भगवन्नारूप्यसमापत्तिशून्यता नता आरूप्यसमापत्तयः। न चाऽन्यत्रारूप्यसमापत्तिभ्यः शून्यता आरूप्यसमापत्तयएवशून्यता शून्यतैवारूप्यसमापत्तयः। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता आरूप्यसमापत्तिषु न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता ऽष्टासु विमोक्षेषु न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् विमोक्षा विमोक्षैः शून्याः। या च भगवन् विमोक्षशून्यता न ते विमोक्षाः। न चाऽन्यत्र विमोक्षेभ्यः शून्यता विमोक्षाएवशून्यता शून्यतैवविमोक्षाः। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विमोक्षेषु न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता नवस्वनुपूर्व्वविहारसमापत्तिषु न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन्ननुपूर्व्व-

विहारसमापत्तयो ऽनुपूर्व्वविहारसमापत्तिभिः शून्याः । या च भगवन्ननुपूर्व्वविहारसमापत्तिशून्यता नता अनुपूर्व्वविहारसमापत्तयः । न चाऽन्यत्राऽनुपूर्व्वविहारसमापत्तिभ्यः शून्यता अनुपूर्व्वविहारसमापत्तयएव शून्यता शून्यतैवाऽनुपूर्व्वविहारसमापत्तयः । अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता अनुपूर्व्वविहारसमापत्तिषु न स्थातव्यं । पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता शून्यतानिमित्ताऽप्रणिहितेषु न स्थातव्यं । तत् कस्य हेतोस्तथाहि । भगवन् शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखैः शून्यानि । या च भगवन् शून्यतानिमित्ताप्रणिहितविमोक्षमुखशून्यता न तानि शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि । नचाऽन्यत्रशून्यतानिमित्ताप्रणिहितविमोक्षमुखेभ्यः शून्यता शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखान्येव शून्यता शून्यतैवशून्यतानिमित्ताऽप्रणिहितविमोक्षमुखानि । अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु न स्थातव्यं । पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता तथागतबलेषु न स्थातव्यं । तत् कस्य हेतोस्तथाहि । भगवंस्तथागतबलानि तथागतबलैः शून्यानि । या च भगवंस्तथागतबलशून्यता न तानि तथागतबलानि । न चाऽन्यत्र तथागतबलेभ्यः शून्यता । तथागतबलान्येव शून्यता शून्यतैव तथागतबलानि । अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता तथागतबलेषु न स्थातव्यं । पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन

प्रज्ञापारमितायां चरता चतुर्षु वैशारद्येषु न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् वैशारद्यानि वैशारद्यैः शून्यानि। या च भगवन् वैशारद्यशून्यता न तानि वैशारद्यानि। नचान्यत्र वैशारद्येभ्यः शून्यता। वैशारद्यान्येव शून्यता शून्यतैव वैशारद्यानि। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वैशारद्येषु न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता चतसृषु प्रतिसम्वित्सु न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् प्रतिसम्विदः प्रतिसम्विद्भिः शून्याः। या च प्रतिसम्विच्छून्यता नताः प्रतिसम्विदः। न चान्यत्र प्रतिसम्विद्भ्यः शून्यता प्रतिसम्विदएव शून्यता। शून्यतैव प्रतिसम्विदः। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता प्रतिसम्वित्सु न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता महाकरुणायां न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् महाकरुणा महाकरुणयाशून्या। या च महाकरुणाशून्यता न सा महाकरुणा। न चाऽन्यत्र महाकरुणायाः शून्यता। महाकरुणैव शून्यता, शून्यतैव महाकरुणा। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता महाकरुणायां न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता अष्टादशावेणिकबुद्धधर्म्मे न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् आवेणिकबुद्धधर्म्माः आवेणिकबुद्धधर्म्मैः शून्याः। या च भगवन्नावेणिकबुद्धधर्म्मशून्यता न ते आवेणिका-

बुद्धधर्म्माः। न चान्यत्रावेणिकबुद्धधर्म्मेभ्यः शून्यता। आवेणिकबुद्ध-धर्मा एव शून्यता शून्यतैवावेणिकबुद्धधर्म्माः। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता आवेणिकबुद्धधर्म्मेषु न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरताऽचरेषु न स्थातव्यं। एकोदाहारेषु न स्थातव्यं। पृथग्-व्युदाहारे न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन्नचरान्यचरैः शून्या याचाक्षरशून्यता न तान्यचाराणि। न चाऽन्यत्राचरेभ्यः शून्यता अचराण्येवशून्यता। शून्यतैवाचराणि। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता अचरेषु न स्थातव्य। पुनरपर भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमि-तायां चरता अभिज्ञासु न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन्नभिज्ञा अभिज्ञाभिः शून्या। या चाभिज्ञाशून्यता न ताअभिज्ञाः। न चाऽन्यत्राऽभिज्ञाभ्यः शून्यता अभिज्ञा एव शून्यता शून्यतैवाभिज्ञाः। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता अभिज्ञासु न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता सर्व्वसमाधिमुखेषु न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् सर्व्वसमाधिमुखानि सर्व्वसमाधिमुखैः शून्यानि। याच समाधिमुखशून्यता न तानि समाधिमुखानि। नचाऽन्यत्र समाधिमुखेभ्यः शून्यता। समाधि-मुखान्येव शून्यता शून्यतैव समाधिमुखानि। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता सर्व्वसमाधिमुखेषु

न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता सर्व्वधारणीमुखेषु न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् धारणीमुखानि धारणीमुखैः शून्यान। या च धारणीमुखशून्यता न तानि धारणीमुखानि। न चाऽन्यत्र धारणीमुखेभ्यः शून्यता। धारणीमुखान्येव शून्यता शून्यतैव धारणीमुखानि। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता धारणीमुखेषु न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपमनित्यमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि। भगवन् रूपाऽनित्यता रूपाऽनित्यतया शून्या। या च रूपाऽनित्यताशून्यता न सा रूपाऽनित्यता। न चाऽन्यत्र रूपाऽनित्यायाः शून्यता। रूपाऽनित्यतैव शून्यता। शून्यतैव रूपाऽनित्यता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपाऽनित्यतायां न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनाऽनित्येति न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन्वेदनाऽनित्यता वेदनाऽनित्यतया शून्या। या च वेदनाऽनित्यता न सा वेदनाऽनित्यता। न चाऽन्यत्र वेदनाऽनित्यतायाः शून्यता। वेदनाऽनित्यतैव शून्यता शून्यतैव वेदनाऽनित्यता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनाऽनित्यतायां न स्थातव्यं। *तेन प्रज्ञापारमितायां

* आदर्शपुस्तके पुनरपर मित्यादि पाठो न दृश्यते। अत्राऽपि स पाठः स्थातुमुचितः। एवं परत्रापि।

चरता संज्ञाऽनित्येति न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् संज्ञाऽनित्यता संज्ञाऽनित्यतया शून्या। या च संज्ञाऽनित्यता शून्यता न सा संज्ञाऽनित्यता। न चाऽन्यत्र संज्ञानित्यतायाः शून्यता। संज्ञाऽनित्यतैव शून्यता शून्यतैव संज्ञाऽनित्यता। अनेन भगवन् पर्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञाऽनित्येति न स्थातव्यं। तेन प्रज्ञापारमितायां चरता संस्कारा अनित्याइति न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् संस्काराऽनित्यता संस्काराऽनित्यतया शून्या। या च संस्काराऽनित्यताशून्यता न सा संस्काराऽनित्यता। संस्काराऽनित्यतैव शून्यता शून्यतैवसंस्काराऽनित्यता। अनेन भगवन् पर्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्कार अनित्या इति न स्थातव्यं। तेन प्रज्ञापारमितायां चरता विज्ञानमनित्यमिति न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् विज्ञानाऽनित्यता विज्ञानाऽनित्यतया शून्या। या च भगवन् विज्ञानाऽनित्यता-शून्यता न सा विज्ञानाऽनित्यता। न चाऽन्यत्र विज्ञानाऽनित्यतायाः शून्यता। विज्ञानाऽनित्यतैव शून्यता शून्यतैव विज्ञानाऽनित्यता। अनेन भगवन् पर्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विज्ञानमनित्यमिति न स्थातव्य।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपं दुःखमिति न स्थातव्यं। तत् कस्य हेतोस्तथाहि रूपदुःखता रूपदुःखतया शून्या। या च रूपदुःखताशून्यता न सा रूपदुःखता। न चाऽन्यत्र रूपदुःखतायाः शून्यता। रूपदुःखतैव

शून्यता शून्यतैव रूपदुःखता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपदुःखतायां न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदना दुःखेति न स्थाथ्यं। तत् कस्य हेतोस्तथाहि। भगवन् वेदनादुःखता वेदनादुःखतया शून्या। या च वेदनादुःखताशून्यता न सा वेदनादुःखता। न चाऽन्यच वेदनादुःखतायाः शून्यता। वेदना दुःखतैव शून्यता शून्यतैव वेदनादुःखता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनादुःखतायां न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञा दुःखेति न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् संज्ञादुःखता संज्ञादुःखतया शून्या। या च संज्ञादुःखता शून्यता न सा संज्ञादुःखता। न चाऽन्यच संज्ञा दुःखतायाः शून्यता। संज्ञादुःखतैव शून्यता शून्यतैव संज्ञादुःखता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञादुःखतायां न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्कारा दुःखा इति न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् संस्कारदुःखता संस्कारदुःखतया शून्या। या च संस्कारदुःखताशून्यता न सा संस्कारदुःखता। न चाऽन्यच संस्कारदुःखतायाः शून्यता। संस्कारदुःखतैव शून्यता शून्यतैव संस्कारदुःखता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्कारदुःखतायां न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमि-

तायां चरता विज्ञानं दुःखमिति न स्थातव्यं। तत् कस्य हेतो-स्तथाहि। भगवन् विज्ञानदुःखता विज्ञानदुःखतया शून्या । या च विज्ञानदुःखताशून्यता न सा विज्ञानदुःखता। न चान्यत्र विज्ञान-दुःखतायाः शून्यता। विज्ञानदुःखतैव शून्यता शून्यतैव विज्ञान-दुःखता । अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञा-पारमितायां चरता विज्ञानदुःखतायां न स्थातव्यं ।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपमनात्मेति न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् रूपाऽनात्मता रूपाऽनात्मतया शून्या । या च रूपाऽनात्मताशून्यता न सा रूपाऽनात्मता। न चान्यत्र रूपाऽनात्मतायाः शून्यता। रूपाऽनात्मतैव शून्यता शून्यतैव रूपाऽनात्मता । अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूप-मनात्मेति न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनाऽनात्मेति न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् वेदनाऽनात्मता वेदनाऽनात्मतया शून्या याच वेदनाऽनात्मताशून्यता न सा वेदनाऽनात्मता न चान्यत्र वेदना-ऽनात्मतायाः शून्यता। वेदनाऽनात्मतैव शून्यता शून्यतैव वेदना-ऽनात्मता । अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनाऽनात्मेति न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञाऽना-त्मेति न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् संज्ञाऽनात्मता संज्ञाऽनात्मतया शून्या । या च संज्ञाऽनात्मताशून्यता न सा

संज्ञाऽनात्मता। न चाऽन्यत्र संज्ञाऽनात्मतायाः शून्यता। संज्ञाऽनात्मतैव शून्यता शून्यतैव संज्ञाऽनात्मता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञाऽनात्मेति न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्कारा अनात्मान इति न स्थातव्यं। तत् कस्य हेतोस्तथाहि भगवन् संस्काराऽनात्मता संस्काराऽनात्मतया शून्या। या च संस्काराऽनात्मता शून्यता न सा संस्काराऽनात्मता। न चाऽन्यत्र संस्काराऽनात्मतायाः शून्यता। संस्काराऽनात्मतैव शून्यता शून्यतैव संस्काराऽनात्मता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्कारा अनात्मान इति न स्थातव्यं। पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विज्ञानमनात्मेति न स्थातव्यं। तत् कस्य हेतोस्तथाहि। भगवन् विज्ञानाऽनात्मता विज्ञानाऽनात्मतया शून्या। या च विज्ञानाऽनात्मताशून्यता न सा विज्ञानाऽनात्मता। न चाऽन्यत्र विज्ञानाऽनात्मतायाः शून्यता। विज्ञानाऽनात्मतैव शून्यता। शून्यतैवविज्ञानाऽनात्मता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विज्ञानमनात्मेति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपं शान्तमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् रूपशान्तता रूपशान्ततया शून्या। या च रूपशान्तता शून्यता न सा रूपशान्तता। न चाऽन्यत्र रूपशान्ततायाः शून्यता। रूपशान्ततैव शून्यता। शून्यतैव रूपशान्तता। अनेन भगवन् पर्य्यायेण

बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपं शान्तमिति न स्थातव्यं ।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनाशान्तेति न स्थातव्यं । तत्कस्य हेतोस्तथाहि । भगवन् वेदनाशान्तता वेदनाशान्ततया शून्या । या च वेदनाशान्तता शून्यता न सा वेदनाशान्तता । न चाऽन्यत्र वेदनाशान्ततायाः शून्यता । वेदनाशान्ततैव शून्यता । शून्यतैव वेदनाशान्तता । अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनाशान्तेति न स्थातव्यं ।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञाशान्तेति न स्थातव्यं । तत्कस्य हेतोस्तथाहि भगवन् संज्ञाशान्तता संज्ञाशान्ततया शून्या । या च संज्ञाशान्तता शून्यता न सा संज्ञाशान्तता । न चाऽन्यत्र संज्ञाशान्ततायाः शून्यता । संज्ञाशान्ततैव शून्यता शून्यतैव संज्ञाशान्तता । अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञाशान्तेति न स्थातव्यं ।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्काराःशान्ता इति न स्थातव्यं । तत्कस्य हेतोस्तथाहि भगवन् संस्कारशान्तता संस्कारशान्ततया शून्या । या च संस्कारशान्तता शून्यता न सा संस्कारशान्तता । न चाऽन्यत्र संस्कारशान्ततायाः शून्यता । संस्कारशान्ततैव शून्यता । शून्यतैव संस्कारशान्तता । अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्काराः शान्ता इति न स्थातव्यं ।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता। विज्ञानं शान्तमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् विज्ञानशान्तता विज्ञानशान्ततया शून्या। या च विज्ञान-शान्तता शून्यता न सा विज्ञानशान्तता। न चाऽन्यत्र विज्ञान-शान्ततायाः शून्यता। विज्ञानशान्ततैव शून्यता। शून्यतैव विज्ञान शान्तता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विज्ञानं शान्तमिति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपं शून्यमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् रूपशून्यता रूपशून्यतया शून्या। या च रूपशून्यता न सा रूपशून्यता। न चाऽन्यत्र रूपशून्यतायाः शून्यता। रूपशून्यतैव शून्यता शून्यतैव रूपशून्यता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपं शून्यमिति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनाशून्येति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् वेदनाशून्यता वेदनाशून्यतया शून्या। या च वेदनाशून्यता न सा वेदनाशून्यता। न चाऽन्यत्र वेदनाशून्यतायाः शून्यता। वेदनाशून्यतैव शून्यता शून्यतैव वेदनाशून्यता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनाशून्येति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञाशून्येति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् संज्ञाशून्यता संज्ञाशून्यतया शून्या। या च संज्ञाशून्यता न सा

संज्ञाशून्यता। न चाऽन्यत्र संज्ञाःशून्यतायाः शून्यता। संज्ञाशून्यतैव शून्यता शून्यतैव संज्ञाशून्यता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञाशून्येति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्काराः शून्या इति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् संस्कारशून्यता संस्कारशून्यतया शून्या। या च संस्कारशून्यता न सा संस्कारशून्यता। न चाऽन्यत्र संस्कारशून्यतायाः शून्यता संस्कारशून्यतैव शून्यता। शून्यतैव संस्कारशून्यता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्काराः शून्य इति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विज्ञानशून्यमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् विज्ञानशून्यता विज्ञानशून्यतया शून्या। या च विज्ञानशून्यता शून्यता न सा विज्ञानशून्यता। न चाऽन्यत्र विज्ञानशून्यतायाः शून्यता। विज्ञानशून्यतैव शून्यता शून्यतैव विज्ञानशून्यता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विज्ञानं शून्यमिति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपमानिमित्तमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् रूपानिमित्तता रूपानिमित्ततया शून्या। या च रूपानिमित्तता शून्यता न सा रूपानिमित्तता। न चाऽन्यत्र रूपानिमित्ततायाः शून्यता। रूपानिमित्ततैव शून्यता। शून्यतैव रूपानिमित्तता।

अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपानिमित्तमिति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनानिमित्तमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् वेदनानिमित्तता वेदनानिमित्ततया शून्या। या च वेदनानिमित्तता शून्यता न सा वेदनानिमित्तता। न चाऽन्यत्र वेदनानिमित्ततायाः शून्यता। वेदनानिमित्ततैव शून्यता। शून्यतैव वेदनानिमित्तता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनानिमित्तमिति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञानिमित्तमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् संज्ञानिमित्तता संज्ञानिमित्ततया शून्या। या च संज्ञानिमित्तता शून्यता न सा संज्ञानिमित्तता। न चाऽन्यत्र संज्ञानिमित्ततायाः शून्यता। संज्ञानिमित्ततैव शून्यता शून्यतैव संज्ञानिमित्तता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञानिमित्तमिति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्कारा आनिमित्तमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि संस्कारानिमित्तता संस्कारानिमित्ततया शून्या। या च संस्कारानिमित्तता शून्यता न सा संस्कारानिमित्तता। न चाऽन्यत्र संस्कारानिमित्ततायाः शून्यता। संस्कारानिमित्ततैव शून्यता। शून्यतैव संस्कारानिमित्तता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन

महासत्त्वेन प्रज्ञापारमितायां चरता संस्कारा आनिमित्तमिति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विज्ञान आनिमित्तमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् विज्ञानानिमित्तता विज्ञानानिमित्ततया शून्या। या च विज्ञानानिमित्तता शून्यता न सा विज्ञानानिमित्तता। न चाऽन्यत्र विज्ञानानिमित्ततायाः शून्यता। विज्ञानानिमित्ततैव शून्यता शून्यतैव विज्ञानानिमित्तता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विज्ञानमानिमित्तमिति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपमप्रणिहितमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् रूपाऽप्रणिहितता रूपाऽप्रणिहिततया शून्या। या च रूपाऽप्रणिहितता शून्यता न सा रूपाऽप्रणिहितता। न चाऽन्यत्र रूपाऽप्रणिहितताया: शून्यता। रूपाऽप्रणिहिततैव शून्यता। शून्यतैव रूपाऽप्रणिहितता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपमप्रणिहितमिति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरताऽप्रणिहितेति न स्थावव्यं। तत्कस्य हेतोस्तथाहि भगवन् वेदनाऽप्रणिहितता वेदनाऽप्रणिहिततया शून्या। या च वेदनाऽप्रणिहितताशून्यता न सा वेदनाऽप्रणिहितता। न चाऽन्यत्र वेदनाऽप्रणिहितताया: शून्यता। वेदनाऽप्रणिहिततैव शून्यता। शून्यतैव

वेदनाऽप्रणिहितता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनाऽप्रणिहितेति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञाऽप्रणिहितेति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् संज्ञाऽप्रणिहिता संज्ञाऽप्रणिहिततया शून्या। या च संज्ञाऽप्रणिहितता शून्यता न सा संज्ञाऽप्रणिहितता। न चाऽन्यत्र संज्ञाऽप्रणिहितताया: शून्यता। संज्ञाऽप्रणिततैव शून्यता। शून्यतैव संज्ञाऽप्रणिहितता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञाऽप्रणिहितेति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्काराः अप्रणिहिता इति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् संस्काराऽप्रणिहितता संस्काराऽप्रणिहिततया शून्या। या च संस्काराऽप्रणिहितता शून्यता न सा संस्काराऽप्रणिहितता। न चाऽन्यत्र संस्काराऽप्रणिहितताया: शून्यता। संस्काराऽप्रणिहिततैव शून्यता। शून्यतैव संस्काराऽप्रणिहितता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्कारा अप्रणिहिता इति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विज्ञानमप्रणिहितमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् विज्ञानाऽप्रणिहितता विज्ञानाऽप्रणिहिततया शून्या। या च विज्ञानाऽप्रणिहितता शून्यता। न सा विज्ञानाऽप्रणिहितता। न चाऽन्यत्र विज्ञानाऽप्रणिहितताया: शून्यता। विज्ञानाऽप्रणिहिततैव

शून्यता। शून्यतैव विज्ञानाऽप्रणिहितता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विज्ञानमप्रणिहितमिति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपं विविक्तमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् रूपविविक्तता रूपविविक्ततया शून्या। या च रूपविविक्तता शून्यता न सा रूपविविक्तता। न चाऽन्यत्र रूपविविक्ततायाः शून्यता। रूपविविक्तैव शून्यता शून्यतैव रूपविविक्तता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता रूपं विविक्तमिति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनाविविक्तेति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् वेदनाविविक्तता वेदनाविविक्ततया शून्या। या च वेदनाविविक्तता शून्यता न सा वेदनाविविक्तता। न चाऽन्यत्र वेदनाविविक्ततायाः शून्यता। वेदनाविविक्ततैव शून्यता शून्यतैव वेदनाविविक्तता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता वेदनाविविक्तेति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञाविविक्तेति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् संज्ञाविविक्तता संज्ञाविविक्ततया शून्या। या च संज्ञाविविक्तता शून्यता न सा संज्ञाविविक्तता। न चाऽन्यत्र संज्ञाविविक्ततायाः शून्यता। संज्ञाविविक्ततैव शून्यता शून्यतैव संज्ञाविविक्तता। अनेन

भगवन् पर्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संज्ञाविविक्तेति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्काराः विविक्ता इति न स्थातव्यं। तत्कस्य हेतोस्तथाहि। भगवन् संस्कारविविक्ता संस्कारविविक्ततया शून्या। या च संस्कारविविक्ता शून्यता न सा संस्कारविविक्ता। न चाऽन्यत्र संस्कारविविक्ततायाः शून्यता। संस्कारविविक्तैव शून्यता। शून्यतैव संस्कारविविक्ता। अनेन भगवन् पर्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता संस्काराविविक्ता इति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विज्ञानं विविक्तमिति न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् विज्ञानविविक्ता विज्ञानविविक्ततया शून्या। या च विज्ञानविविक्ता शून्यता न सा विज्ञानविविक्ता। न चाऽन्यत्र विज्ञानविविक्ततायाः शून्यता। विज्ञानविविक्तैव शून्यता। शून्यतैव विज्ञानविविक्ता। अनेन भगवन् पर्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता विज्ञानं विविक्तमिति न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता तथतायां न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् तथता तथतया शून्या। या च तथता शून्यता न सा तथता। न चाऽन्यत्र तथतायाः शून्यता। तथतैव शून्यता। शून्यतैव तथता। अनेन भगवन् पर्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता तथतायां न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता धर्म्मतायां न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् धर्म्मता धर्म्मतया शून्या। या च धर्म्मता शून्यता। न सा धर्म्मता। न चाऽन्यत्र धर्म्मतायाः शून्यता। शून्यतैव धर्म्मता। अनेन भगवन पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता धर्म्मतायां न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता धर्म्मधातौ न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन धर्म्मधातु धर्म्मधातुना शून्या। या च धर्म्मधातु शून्यता न स धर्म्मधातुः। न चाऽन्यत्र धर्म्मधातोः शून्यता। धर्म्मधातुरेव शून्यता। शून्यतैव धर्म्मधातुः। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता धर्म्मधातौ न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता धर्म्मनियामतायां न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन् धर्म्मनियामता धर्म्मनियामतया शून्या। या च धर्म्मनियामता शून्यता न सा धर्म्मनियामता। न चाऽन्यत्र धर्म्मनियामतायाः शून्यता। धर्म्मनियामतैव शून्यता। शून्यतैव धर्म्मनियामता। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता धर्म्मनियामतायां न स्थातव्यं।

पुनरपरं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता भूतकोट्यां न स्थातव्यं। तत्कस्य हेतोस्तथाहि भगवन्। भूतकोटिर्भूतकोट्या शून्या। या च भूतकोटि शून्यता न सा

कौशलेनाहङ्कारममकारगतेन मानसेन शब्दे तिष्ठति। स शब्दस्याऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन गन्धे तिष्ठति। स गन्धस्याऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन रसे तिष्ठति। स रसस्याऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन स्पर्शे तिष्ठति। स स्पर्शस्याऽभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन धर्म्मेषु तिष्ठति। स धर्म्माणामभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। तत्कस्य हेतोस्तथाहि। अभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमिता योगमापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन चक्षुर्व्विज्ञाने तिष्ठति। स चक्षुर्व्विज्ञानस्याभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन श्रोत्रविज्ञाने तिष्ठति। स श्रोत्रविज्ञानस्याभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स

चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशले-नाहङ्कारममकारगतेन मानसेन घ्राणविज्ञाने तिष्ठति। स घ्राण-विज्ञानस्याऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशले-नाहङ्कारममकारगतेन मानसेन जिह्वाविज्ञाने तिष्ठति। स जिह्वाविज्ञानस्याभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपाय-कौशलेनाहङ्कारममकारगतेन मानसेन कायविज्ञाने तिष्ठति। स कायविज्ञानस्याभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपाय-कौशलेनाहङ्कारममकारगतेन मानसेन विज्ञाने तिष्ठति। स मनोविज्ञानस्याभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्मायाहि अभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमिता योगमापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननु-पायकौशलेनाहङ्कारममकारगतेन मानसेन चक्षुः संस्पर्शे तिष्ठति। स चक्षुः संस्पर्शस्याभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपाय-कौशलेनाहङ्कारममकारगतेन मानसेन श्रोत्रसंस्पर्शे तिष्ठति। स श्रोत्रसंस्पर्शस्याभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपाय-

भूतकोटिः। न चाऽन्यत्र भूतकोट्याः शून्यता। भूतकोटिरेव शून्यता। शून्यतैव भूतकोटिः। अनेन भगवन् पर्य्यायेण बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता भूतकोट्यां न स्थातव्यं।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन रूपे तिष्ठति। रूपस्याऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन वेदनायां तिष्ठति। वेदनाया अभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन संज्ञायां तिष्ठति। संज्ञाऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन संस्कारे तिष्ठति। संस्कारानामभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन विज्ञाने तिष्ठति। विज्ञानस्याऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां परिगृह्णाति न प्रज्ञापारमितायोगमापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननु- [illegible] ममकार [illegible] मानसेन चक्षुषि तिष्ठति। चक्षु-

षोऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन श्रोत्रे तिष्ठति। श्रोत्रस्याऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन घ्राणे तिष्ठति। घ्राणस्याभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन जिह्वायां तिष्ठति। स जिह्वाया अभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन काये तिष्ठति। स कायस्याभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन मनसि तिष्ठति। स मनसोऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति न प्रज्ञापारमितायोगमापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन रूपे तिष्ठति। स रूपस्याऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपाय-

कौशलेनाहङ्कारममकारगतेन मानसेन घ्राणसंस्पर्शे तिष्ठति । स घ्राणसंस्पर्शस्याऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपाय-कौशलेनाहङ्कारममकारगतेन मानसेन जिह्वासंस्पर्शे तिष्ठति । स जिह्वासंस्पर्शस्याभिसंस्कारे चरति न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपाय-कौशलेनाहङ्कारममकारगतेन मानसेन कायसंस्पर्शे तिष्ठति । स कायसंस्पर्शस्याभिसंस्कारे चरति न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपाय-कौशलेनाहङ्कारममकारगतेन मानसेन मनःसंस्पर्शे तिष्ठति । स मनःसंस्पर्शस्याऽभिसंस्कारे चरति न चरति प्रज्ञापारमितायां । तत्कस्य हेतोस्तथाहि अभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमिता योगमापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपाय-कौशलेनाहङ्कारममकारगतेन मानसेन चक्षुःसंस्पर्शजायां वेदनायां तिष्ठति । स चक्षुःसंस्पर्शजाया वेदनाया अभिसंस्कारे चरति न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन श्रोत्रसंस्पर्शजायां वेदनायां तिष्ठति । स श्रोत्रसंस्पर्शजाया वेदनाया अभिसंस्कारे चरति न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कार-

ममकारगतेन मानसेन घ्राणसंस्पर्शजायां वेदनायां तिष्ठति। स घ्राणसंस्पर्शजाया वेदनाया अभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन जिह्वासंस्पर्शजायां वेदनायां तिष्ठति। स जिह्वासंस्पर्शजाया वेदनाया अभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन कायसंस्पर्शजायां वेदनायां तिष्ठति। स कायसंस्पर्शजाया वेदनाया अभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन मनःसंस्पर्शजायां वेदनायां तिष्ठति। स मनःसंस्पर्शजाया वेदनाया अभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्नह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति न प्रज्ञापारमिता योगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन पृथिवीधातौ तिष्ठति। स पृथिवीधातोरभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनाब्धातौ तिष्ठति। सोऽब्धातोरभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन्

बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कार-ममकारगतेन मानसेन तेजोधातौ तिष्ठति । स तेजोधातोरभि-संस्कारे चरति न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कार-ममकारगतेन मानसेन वायुधातौ तिष्ठति । स वायुधातोरभि-संस्कारे चरति न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कार-ममकारगतेन मानसेनाकाशधातौ तिष्ठति । स आकाशधातो-रभिसंस्कारे चरति न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कार-ममकारगतेन मानसेन विज्ञानधातौ तिष्ठति । स विज्ञानधातो-रभिसंस्कारे चरति न चरति प्रज्ञापारमितायां । तत्कस्य हेतो-र्नह्यभिसंस्कारे चरन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां परि-गृह्णाति । न प्रज्ञापारमिता योगमापद्यते । अपरिपूरयन् प्रज्ञा-पारमितां न निर्याति सर्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्न-नुपायकौशलेनाहङ्कारममकारगतेन मानसेन विद्यायां तिष्ठति । सोऽविद्याया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ननुपा-यकौशलेनाहङ्कारममकारगतेन संस्कारेषु तिष्ठति । स संस्का-राणामभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भ-गवन बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेना-

हङ्कारममकारगतेन मानसेन नामरूपे तिष्ठति। स नामरूपस्याभि संस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन षडायतने तिष्ठति। स षडायतनस्याभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन स्पर्शे तिष्ठति। स स्पर्शस्याभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन वेदनायां तिष्ठति। स वेदनाया अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन तृष्णाया तिष्ठति। स तृष्णायां अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनोपादाने तिष्ठति। स उपादानस्याभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन भवे तिष्ठति। स भवस्याभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन जातौ तिष्ठति। स जातेरभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन्

शून्यतायां तिष्ठति । स महाशून्यताया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन परमार्थशून्यतायां तिष्ठति । स परमार्थशून्यताया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन संस्कृतशून्यतायां तिष्ठति । स संस्कृतशून्यताया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनात्यन्तशून्यतायां तिष्ठति । सोऽत्यन्तशून्यताया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनानवराग्रशून्यतायां तिष्ठति । सोऽनवराग्रशून्यताया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमियायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन प्रकृतिशून्यतायां तिष्ठति । स प्रकृतिशून्यताया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन सर्व्वधर्म्मशून्यतायां तिष्ठति । स सर्व्वधर्म्मशून्यताया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां

चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन स्वलक्षणशून्यतायां तिष्ठति। स स्वलक्षणशून्यताया अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनाऽनुपलम्भशून्यतायां तिष्ठति। सोऽनुपलम्भशून्यताया अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनाऽभावशून्यतायां तिष्ठति। सोऽभावशून्यताया अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन स्वभावशून्यतायां तिष्ठति। स स्वभावशून्यताया अभिसंस्कारे चरति न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनाऽभावस्वभावशून्यतायां तिष्ठति। सोऽभावस्वभावशून्यताया अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्येह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगमापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन स्मृत्युपस्थानेषु तिष्ठति। स स्मृत्युपस्थानानामभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां।

बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन जरामरणेतिष्ठति । स जरामरणस्याभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्नेह्याभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति न प्रज्ञापारमिता योगमापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन दानपारमितायां तिष्ठति । स दानपारमिताया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन शीलपारमितायां तिष्ठति । सशीलपारमिताया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेम मानसेन क्षान्तिपारमितायां चरति । स क्षान्तिपारमितायां अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन वीर्य्यपारमितायां तिष्ठति । स वीर्य्यपारमिताया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन ध्यानपारमितायां तिष्ठति । स ध्यानपारमितायां अभि-

संस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन प्रज्ञापारमितायां तिष्ठति। स प्रज्ञापारमितायां अभिसंस्कारेचरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्नह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमिता योगमापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनाध्यात्मशून्यतायां तिष्ठति। सोऽध्यात्मशून्यताया अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन बहिर्द्धाशून्यतायां तिष्ठति। स बहिर्द्धाशून्यताया अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनाध्यात्मबहिर्द्धाशून्यतायां तिष्ठति। सोऽध्यात्मबहिर्द्धाशून्यताया अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममगतेन मानसेन शून्यताशून्यतायां तिष्ठति। स शून्यताशून्यतायां अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन महा-

तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमितायोगं समापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नुपायकौशलेनाहङ्कारममकारगतेन मानसेन सम्यक्प्रहाणेषु तिष्ठति । स सम्यक्प्रहाणानामभिसंस्कारेचरति । न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्ह्यभिसंस्कारेचरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमितायोगं समापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नुपायकौशलेनाहङ्कारममकारगतेन मानसेन ऋद्धिपादेषु तिष्ठति । स ऋद्धिपादानामभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमितायोगं समापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नुपायकौशलेनाहङ्कारममकारगतेन मानसेनेन्द्रियेषु तिष्ठति । स इन्द्रियाणामभिसंस्कारे चरति न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमितायोगं समापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन बलेषु तिष्ठति । स बलानामभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्यो ह्यभिसंस्कारे चरन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमितायोगं समापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनार्य्याष्टाङ्गमार्गे तिष्ठति । स आर्य्याष्टाङ्गमार्गस्याभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्यो ह्यभिसंस्कारे चरन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमितायोगं समापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनार्य्यसत्येषु तिष्ठति । स आर्य्यसत्यानामभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्यो ह्यभिसंस्कारे चरन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमितायोगं समापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन ध्यानेषु तिष्ठति । स ध्यानानामभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्यो ह्यभिसंस्कारे चरन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितां

परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनाऽप्रमाणेषु तिष्ठति। सोऽप्रमाणानामभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्णह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनारूप्यसमापत्तिषु तिष्ठति। स आरूप्यसमापत्तीनामभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्णह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनाष्टासुविमोक्षेषु तिष्ठति। स विमोक्षानामभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्णह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्-

नुपायकौशलेनाहङ्कारममकारगतेन मानसेन नवानुपूर्व्वविहार समापत्तिषु तिष्ठति। स नवानुपूर्व्वविहार समापत्तीनामभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नुपायकौशलेनाहङ्कारममकारगतेन मानसेन शून्यतानिमित्ताप्रणिहितविमोक्षसुखेषु तिष्ठति। स शून्यतानिमित्ताप्रणिहितविमोक्षसुखानामभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां ननिर्यातिसर्व्वाकारज्ञतायां।

सचेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नुपायकौशलेनाहङ्कारममकारगतेन मानसेनाभिज्ञासु तिष्ठति। सोऽभिज्ञानामभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां परिगृह्णाति। न प्रज्ञापारमितायोगंसमापद्यते। अपरिपूरयन् प्रज्ञापारमितां ननिर्यातिसर्व्वाकारज्ञतायां।

सचेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नुपायकौशलेनाहङ्कारममकारगतेन मानसेन समाधिषु तिष्ठति। स समाधीनामभिसंस्कारे चरति। न चरति प्रज्ञापारमि-

तायां। तत्कस्य हेतोर्णंद्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां परिग्टह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यांति सर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन धारणीमुखेषु तिष्ठति। स धारणीमुखानामभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्णंद्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां परिग्टह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यांति सर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन दशसु तथागतबलेषु तिष्ठति। स तथागतबलानामभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्णंद्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिग्टह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यांति सर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन चतुर्षुवैशारद्येषु तिष्ठति। सवैशारद्यानामभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्णंद्यभिसंस्कारे चरन् बोधि-

सत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगंसमापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन चतसृषु प्रतिसम्बित्सु तिष्ठति। स प्रतिसम्बिदामभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्यद्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन महाकरुणायां तिष्ठति। स महाकरुणाया अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्यद्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनाष्टादशावेणिकबुद्धधर्मेषु तिष्ठति। सोष्टादशावेणिकबुद्धधर्म्मानामभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्यद्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति।

न प्रज्ञापारमितायोगंसमापद्यते। अपरिपूरयन् प्रज्ञापारमितां ननिर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नुपायकौशलेनाहङ्कारममकारगतेन मानसेन स्रोतआपत्तिफले तिष्ठति। स स्रोतआपत्तिफलस्याभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्ण्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नुपायकौशलेनाहङ्कारममकारगतेन मानसेन सकृदागामिफले तिष्ठति। स सकृदागामिफलस्याभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्ण्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नुपायकौशलेनाहङ्कारममकारगतेन मानसेनाऽनागामिफले तिष्ठति। सोऽनागामिफलस्याभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्ण्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्न-नुपायकौशलेनाहङ्कारममकारगतेन मानसेनार्हत्वे तिष्ठति । सोर्हत्त्वस्याभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्ण्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञा-पारमितां परिगृह्णाति । न प्रज्ञापारमितायोगं समापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननु-पायकौशलेनाहङ्कारममकारगतेन मानसेन प्रत्येकबोधौ तिष्ठति । स प्रत्येकबोधेरभिसंस्कारे चरति । न चरति प्रज्ञापारमि-तायां । तत्कस्य हेतोर्ण्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमितायोगंसमापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्न-नुपायकौशलेनाहङ्कारममकारगतेन मानसेन मार्गाकारज्ञतायां तिष्ठति । स मार्गाकारज्ञताया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्ण्ह्यभिसंस्कारे चरन् बोधिसत्त्वोम-हासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमितायोगमा-पद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाका-रज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्न-नुपायकौशलेनाहङ्कारममकारगतेन मानसेन सर्व्वाकारज्ञतायां तिष्ठति । स सर्व्वाकारज्ञतया अभिसंस्कारे चरति । न चरति

प्रज्ञापारमितायां । तत्कस्य हेतोर्यद्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमितायोगं समापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन भूतकोटौ तिष्ठति । स भूतकोटेरभिसंस्कारे चरति न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्यद्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमितायोगं समापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां ।

तत्कस्य हेतोस्तथाहि भगवन् रूपमपरिगृहीतं यस्य रूपस्यापरिग्रहो न तद्रूपं प्रकृतिशून्यतामुपादाय । वेदनाऽपरिगृहीता यस्य वेदनाया अपरिग्रहो न सा वेदना प्रकृति शून्यतामुपादाय । संज्ञाऽपरिगृहीता यस्य संज्ञाया अपरिग्रहो न सा संज्ञा प्रकृति शून्यतामुपादाय । सस्कारा अपरिगृहीताः यस्य संस्काराणामपरिग्रहो न ते संस्काराः प्रकृति शून्यतामुपादाय । विज्ञानमपरिगृहीतं यस्य विज्ञानस्यापरिग्रहो न तद्विज्ञानं प्रकृति शून्यतामुपादाय । चक्षुरपरिगृहीतं यस्य चक्षुषोऽपरिग्रहः न तच्चक्षुः प्रकृति शून्यतामुपादाय । श्रोत्रमपरिगृहीतं यस्य श्रोत्रस्यापरिग्रहो न तत् श्रोत्रं प्रकृतिशून्यतामुपादाय । घ्राणमपरिगृहीतं यस्य घ्राणस्यापरिग्रहो न तद्घ्राणं प्रकृति शून्यतामुपादाय । जिह्वाऽपरिगृहीता यस्य जिह्वाया अपरिग्रहो न सा जिह्वा प्रकृति शून्यतामुपादाय ।

कायोऽपरिगृहीतः यश्च कायस्यापरिग्रहो न स कायः प्रकृति शून्यतानुपादाय । मनोऽपरिगृहीतं । यश्च मनसोऽपरिग्रहो न तन्मनः प्रकृति शून्यतानुपादाय ।

रूपमपरिगृहीतं यश्च रूपस्यापरिग्रहो न तद्रूपं प्रकृति शून्यतानुपादाय । शब्दोऽपरिगृहीतो यश्च शब्दस्यापरिग्रहो न स शब्दः प्रकृति शून्यतानुपादाय । गन्धोऽपरिगृहीतो यश्च गन्धस्यापरिग्रहो न स गन्ध प्रकृति शून्यतानुपादाय । रसोऽपरिगृहीतो यश्च रसस्यापरिग्रहो न स रसः प्रकृति शून्यतानुपादाय । स्पर्शोऽपरिगृहीतो यश्च स्पर्शस्याऽपरिग्रहो न स स्पर्शः प्रकृति शून्यतानुपादाय । धर्मा अपरिगृहीताः यश्च धर्माणामपरिग्रहो न ते धर्माः प्रकृति शून्यतानुपाद्याय । चक्षुर्विज्ञानमपरिगृहीतं यश्च चक्षुर्वि ज्ञानमपरिग्रहो न तत् चक्षुः प्रकृति शून्यतानुपादाय । ज्ञानमपरिगृहीत यश्च ज्ञानस्यापरिग्रहो न स ज्ञानं प्रकृतिशून्यतानुपादाय । श्रोत्रविज्ञानमपरिगृहीतं यश्च श्रोत्रविज्ञानस्या परिग्रहो न तत् श्रोत्रविज्ञानं प्रकृति शून्यतानुपादाय । घ्राणविज्ञानमपरिगृहीतं यश्च घ्राणविज्ञानस्या परिग्रहो न तत् घ्राणविज्ञानं प्रकृति शून्यतानुपादाय । जिह्वाविज्ञानमपरिगृहीतं यश्च जिह्वाविज्ञानस्यापरिग्रहो न तत् जिह्वाविज्ञानं प्रकृति शून्यतानुपादाय । कायविज्ञानमपरिगृहीतं यश्च कायविज्ञानस्यापरिग्रहो न तत् कायविज्ञानं प्रकृति शून्यतानुपादाय । मनोविज्ञानमपरिगृहीतं यश्च मनोविज्ञानस्यापरिग्रहो न तन्मनोविज्ञानं । प्रकृति शून्यतानुपादाय ।

चक्षुः संस्पर्शोऽपरिगृहीतो यश्च चक्षुः संस्पर्शस्यापरिग्रहो न स

प्रज्ञापारमितायां। तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वो-महासत्त्वः प्रज्ञापारमितां न परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन तथतायां तिष्ठति। स तथताया अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनावितथतायां तिष्ठति। सोऽवितथतायां अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन् प्रज्ञापारमितां न निर्यातिसर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेनाऽनन्यतथतायां तिष्ठति। सोऽनन्यतथतायां अभिसंस्कारे चरति। न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति। न प्रज्ञापारमितायोगं समापद्यते। अपरिपूरयन प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन धर्म्मतायां तिष्ठति । स धर्म्मताया अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां। तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमितायोगं समापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन धर्म्मधातौ तिष्ठति । स धर्म्मधातोरभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां परिगृह्णाति । न प्रज्ञापारमितायोगं समापद्यते । अपरिपूरयन् प्रज्ञापारमितां ननिर्यातिसर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन धर्म्मस्थितितायां तिष्ठति । स धर्म्मस्थितितायां अभिसंस्कारे चरति । न चरति प्रज्ञापारमितायां । तत्कस्य हेतोर्ह्यभिसंस्कारे चरन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितां परिगृह्णाति । न प्रज्ञापारमिता योगमापद्यते । अपरिपूरयन् प्रज्ञापारमितां न निर्याति सर्व्वाकारज्ञतायां ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकौशलेनाहङ्कारममकारगतेन मानसेन धर्म्मनियामतायां तिष्ठति । स धर्म्मनियामताया अभिसंस्कारे चरति । न चरति

चक्षुः संस्पर्शः प्रकृति शून्यतानुपादाय। श्रोत्र संस्पर्शोऽपरिगृहीतो यस्य श्रोत्रसंस्पर्शस्यापरिग्रहो न स श्रोत्रसंस्पर्शः प्रकृति शून्यतानुपादाय। घ्राणसंस्पर्शोऽपरिगृहीतो यस्य घ्राणसंस्पर्शस्यापरिग्रहो न स घ्राण संस्पर्शः प्रकृति शून्यतानुपादाय। जिह्वा संस्पर्शोऽपरिगृहीतो यस्य जिह्वासंस्पर्शस्यापरिग्रहो न स जिह्वासंस्पर्शः प्रकृति शून्यतानुपादाय। कायसंस्पर्शोऽपरिगृहीतो यस्य कायसंस्पर्शस्यापरिग्रहो न स कायसंस्पर्शः प्रकृति शून्यतानुपादाय। मनः संस्पर्शोऽपरिगृहीतो यस्य मनःसंस्पर्शस्यापरिग्रहो न स मनःसंस्पर्शः प्रकृति शून्यतानुपादाय।

चक्षुःसंस्पर्शप्रत्ययवेदनाऽपरिगृहीता। यस्य चक्षुःसंस्पर्शप्रत्ययवेदनाया अपरिग्रहो न सा चक्षु.संस्पर्शप्रत्ययवेदना प्रकृतिशून्यतामुपादाय। श्रोत्रसंस्पर्शप्रत्ययवेदनाऽपरिगृहीता। यस्य श्रोत्रसंस्पर्शप्रत्ययवेदनाया अपरिग्रहो न सा श्रोत्रसंस्पर्शप्रत्ययवेदनाप्रकृति शून्यतामुपादाय। घ्राणसंस्पर्शप्रत्ययवेदनाऽपरिगृहीता। यस्य घ्राणसंस्पर्शप्रत्ययवेदनाया अपरिग्रहः न सा घ्राणसंस्पर्शप्रत्ययवेदना प्रकृतिशून्यतामुपादाय। जिह्वासंस्पर्शप्रत्ययवेदनाऽपरिगृहीता। यस्य जिह्वासंस्पर्शप्रत्ययवेदनाया अपरिग्रहो न सा जिह्वासंस्पर्शप्रत्ययवेदना प्रकृति शून्यतामुपादाय। कायसंस्पर्शप्रत्ययवेदनाऽपरिगृहीता। यस्य कायसंस्पर्शप्रत्ययवेदनाया अपरिग्रहो न सा कायसंस्पर्शप्रत्ययवेदना प्रकृति शून्यतामुपादाय। मनःसंस्पर्शप्रत्ययवेदनाऽपरिगृहीता। यस्य मनःसंस्पर्शप्रत्ययवेदनाया अपरिग्रहो न सा मन.संस्पर्शप्रत्ययवेदना प्रकृति शून्यतामुपादाय।

पृथिवीधातुरपरिगृहीतः। यश्च पृथिवीधातोरपरिग्रहो न स पृथिवीधातुः प्रकृतिशून्यतामुपादाय। अब्धातुरपरिगृहीतो यश्चाब्धातोरपरिग्रहो न सोऽब्धातुः प्रकृति शून्यतामुपादाय। तेजोधातुरपरिगृहीतो यश्च तेजोधातोरपरिग्रहो न सतेजोधातुः प्रकृति शून्यतामुपादाय। वायुधातुरपरिगृहीतो यश्च वायुधातोरपरिग्रहो न स वायुधातुः प्रकृतिशून्यतामुपादाय। आकाशधातुरपरिगृहीतो यश्चाकाशधातोरपरिग्रहः न स आकाशधातुः प्रकृति शून्यतामुपादाय।

विज्ञानधातुरपरिगृहीतो यश्च विज्ञानधातोरपरिग्रहो न स विज्ञानधातुः प्रकृतिशून्यतामुपादाय। अविद्याऽपरिगृहीता। यश्चा विद्याया अपरिग्रहो न सा अविद्या प्रकृतिशून्यतामुपादाय। संस्कारा अपरिगृहीता। यश्च संस्काराणामपरिग्रहो न ते संस्काराः प्रकृति शून्यतामुपादाय। विज्ञानमपरिगृहीतं। यश्च विज्ञानस्यापरिग्रहो न तद्विज्ञानं प्रकृतिशून्यतामुपादाय। नामरूपमपरिगृहीतं। यश्च नामरूपस्यापरिग्रहो न तन्नामरूपं प्रकृतिशून्यतामुपादाय। षडायतनमपरिगृहीतं। यश्च षडायतनस्यापरिग्रहो न तत् षडायतनं प्रकृतिशून्यतामुपादाय। स्पर्शोऽपरिगृहीतो यश्च स्पर्शस्यापरिग्रहो न स स्पर्श. प्रकृतिशून्यतामुपादाय। वेदनाऽपरिगृहीता। यश्च वेदनाया अपरिग्रहो न सा वेदना प्रकृति शून्यतामुपादाय। तृष्णाऽपरिगृहीता। यश्च तृष्णाया अपरिग्रहो न सा तृष्णा प्रकृति शून्यतामुपादाय। उपादानमपरिगृहीतं। यश्चोपादानस्यापरिग्रहो न तदुपादानं प्रकृतिशून्यतामुपादाय। भवोऽपरिगृहीतो

यस्य भवस्यापरिग्रहो न स भवः प्रकृति शून्यतामुपादाय । जातिरपरिगृहीता । यस्य जातेरपरिग्रहो न सा जातिः प्रकृति शून्यतामुपादाय । जरामरणमपरिगृहीतं यस्य जरामरणस्यापरिग्रहो न तत् जरामरणं प्रकृतिशून्यतामुपादाय ।

दानपारमिताऽपरिगृहीता। यस्य दानपारमितायाः अपरिग्रहो न सा दानपारमिता प्रकृति शून्यतामुपादाय । शीलपारमिताऽपरिगृहीता । यस्य शीलपारमितायाः अपरिग्रह न सा शीलपारमिताप्रकृतिशून्यतामुपादाय । क्षान्तिपारमिताऽपरिगृहीता । यस्य क्षान्तिपारमितायाः अपरिग्रहो न सा क्षान्तिपारमिता प्रकृति शून्यतामुपादाय । वीर्य्यपारमिताऽपरिगृहीता । यस्य वीर्य्यपारमितायाः अपरिग्रहो न सा वीर्य्यपारमिता प्रकृति शून्यतामुपादाय । ध्यानपारमिताऽपरिगृहीता । यस्य ध्यानपारमितायाः अपरिग्रहो न सा ध्यानपारमिता प्रकृतिशून्यतामुपादाय । प्रज्ञापारमिताऽपरिगृहीता । यस्य प्रज्ञापारमितायाः अपरिग्रहो न सा प्रज्ञापारमिता प्रकृतिशून्यतामुपादाय ।

अध्यात्मशून्यताऽपरिगृहीता । यस्याध्यात्मशून्यतायाः अपरिग्रहो न सा अध्यात्मशून्यता प्रकृतिशून्यतामुपादाय । वहिर्द्धाशून्यताऽपरिगृहीता । यस्य वहिर्द्धाशून्यतायाः अपरिग्रहो नसा वहिर्द्धाशून्यता प्रकृति शून्यतामुपादाय। अध्यात्मवहिर्द्धाशून्यताऽपरिगृहीता। यस्याध्यात्मवहिर्द्धाशून्यतायाः अपरिग्रहो न साऽध्यात्मवहिर्द्धाशून्यता प्रकृतिशून्यतामुपादाय । शून्यता शून्यताऽपरिगृहीता यस्य शून्यताशून्यतायाः अपरिग्रहो न सा शून्यताशून्यता । प्रकृति

शून्यतामुपादाय । महाशून्यताऽपरिगृहीता । यश्च महाशून्यतायाः अपरिग्रहो न सा महाशून्यता प्रकृति शून्यतामुपादाय । परमार्थशून्यताऽपरिगृहीता । यश्च परमार्थशून्यताया अपरिग्रहो न सा परमार्थशून्यता प्रकृतिशून्यतामुपादाय । संस्कृतशून्यताऽपरिगृहीता । यश्च संस्कृतशून्यताया अपरिग्रहो न सा संस्कृतशून्यता प्रकृतिशून्यतामुपादाय । असंस्कृतशून्यताऽपरिगृहीता यश्चासंस्कृतशून्यताया अपरिग्रहो न साऽसंस्कृतशून्यताप्रकृतिशून्यतामुपादाय । अत्यन्तशून्यताऽपरिगृहीता यश्चात्यन्तशून्यताया अपरिग्रहो न सा अत्यन्तशून्यता प्रकृतिशून्यतामुपादाय । अनवराग्र शून्यताऽपरिगृहीता । यश्चाऽनवराग्रशून्यतायाअपरिग्रहोन साऽनवराग्रशून्यता प्रकृतिशून्यतामुपादाय । अनवकारशून्यताऽपरिगृहीता यश्चाऽनवकारशून्यताया अपरिग्रहो न साऽनवकार शून्यता प्रकृतिशून्यतामुपादाय । प्रकृतिशून्यताऽपरिगृहीता । यश्च प्रकृतिशून्यताया अपरिग्रहो न सा प्रकृतिशून्यता प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यताऽपरिगृहीता । यश्च सर्व्वधर्म्मशून्यतायाअपरिग्रहो न सा सर्व्वधर्म्मशून्यता प्रकृतिशून्यतामुपादाय । स्वलक्षणशून्यताऽपरिगृहीता । यश्च स्वलक्षणशून्यताया-अपरिग्रहो न सा स्वलक्षणशून्यता प्रकृतिशून्यतामुपादाय । अनुपलम्भशून्यताऽपरिगृहीता यश्चानुपलम्भशून्यतायाअपरिग्रहो न साऽनुपलम्भशून्यता प्रकृतिशून्यतामुपादाय । अभावशून्यताऽपरिगृहीता । यश्चाभावशून्यताया अपरिग्रहो न साऽभावशून्यताप्रकृति शून्यतामुपादाय । स्वभावशून्यताऽपरिगृहीता ।

त्तिफलं प्रकृतिशून्यतामुपादाय। सकृदागामिफलमपरिगृहीतं। यस्य सकृदागामिफलस्यापरिग्रहो न तत् सकृदागामिफलं प्रकृतिशून्यतामुपादाय। अनागामिफलमपरिगृहीतं। यस्यानागामिफलस्यापरिग्रहो न तदनागामिफलं प्रकृति शून्यतामुपादाय। अर्हत्त्वमपरिगृहीतं। यस्यार्हत्त्वस्यापरिग्रहो न तदर्हत्त्वं प्रकृतिशून्यतामुपादाय। प्रत्यक्वोधिरपरिगृहीता यस्य प्रत्येकबोधेरपरिग्रहो न सा प्रत्येकबोधिः प्रकृतिशून्यतामुपादाय। मार्गाकारज्ञताऽपरिगृहीता। यस्य मार्गाकारज्ञतायाः अपरिग्रहो न सा मार्गाकारज्ञता प्रकृतिशून्यतामुपादाय। सर्व्वाकारज्ञताऽपरिगृहीता। यस्य सर्व्वाकारज्ञताया अपरिग्रहो न सा सर्व्वाकारज्ञता प्रकृतिशून्यतामुपादाय। तथताऽपरिगृहीता। यस्य तथताया अपरिग्रहो न सा तथता प्रकृतिशून्यतामुपादाय। अवितथताऽपरिगृहीता। यस्यावितथताया अपरिग्रहो न सा अवितथता प्रकृतिशून्यतामुपादाय। अनन्यतथताऽपरिगृहीता। यस्यानन्यतथताया अपरिग्रहो न सा अनन्यतथता प्रकृतिशून्यतामुपादाय। धर्म्मताऽपरिगृहीता। यस्य धर्म्मताया अपरिग्रहो न सा धर्म्मता प्रकृतिशून्यतामुपादाय। धर्म्मधातुरपरिगृहीतो यस्य धर्म्मधातोरपरिग्रहो न स धर्म्मधातुः प्रकृतिशून्यतामुपादाय। धर्म्मस्थितिता अपरिगृहीता। यस्य धर्म्मस्थितितायाअपरिग्रहो न सा धर्म्मस्थितिता प्रकृतिशून्यतामुपादाय। धर्म्मनियामताऽपरिगृहीता। यस्य धर्म्मनियामताया अपरिग्रहो न सा धर्म्मनियामता प्रकृतिशून्यतामुपादाय। भूतकोटिरपरिगृहीता। यस्य भूतकोटेरपरिग्रहो न सा भूतकोटिः प्रकृति-

शून्यतामुपादाय । सापि प्रज्ञापारमिताऽपरिगृहीता यस्य प्रज्ञापारमितायाः अपरिग्रहो न सा प्रज्ञापारमिता प्रकृतिशून्यतामुपादाय ।

एवं खलु भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता प्रकृतिशून्याः सर्व्वधर्म्मा व्युपपरीक्षितव्याः । तथापरीक्षितव्या यथा नकाचिद्धर्म्मेषु मनसोऽव्यवचारो भवेत् । इदं बोधिसत्त्वस्य महासत्त्वस्य सर्व्वधर्म्मापरिगृहीतं नाम समाधिमण्डलं विपुलं पुरस्कृत मप्रमाणनियतमसंहार्य्यमसाधारणं सर्व्वश्रावकप्रत्येकबुद्धैः । यत्र समाधिमण्डले विहरन् बोधिसत्त्वो महासत्त्वो निर्य्यास्यति सर्व्वाकारज्ञतायाः । सापि सर्व्वाकारज्ञताऽपरिगृहीता अध्यात्मशून्यतामुपादाय । वहिर्द्धाशून्यतामुपादाय । अध्यात्मवहिर्द्धाशून्यतामुपादाय । शून्यताशून्यतामुपादाय । महाशून्यतामुपादाय । परमार्थशून्यतामुपादाय । संस्कृतशून्यतामुपादाय । असंस्कृतशून्यतामुपादाय । अत्यन्तशून्यतामुपादाय । अनवरागशून्यतामुपादाय । अनवकारशून्यतामुपादाय । प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यतामुपादाय । स्वलक्षणशून्यतामुपादाय । अनुपलम्भशून्यतामुपादाय । अभावशून्यतामुपादाय स्वभावशून्यतामुपादाय । अभावस्वभावशून्यतामुपादाय ।

तत्कस्य हेतोर्न हि सा निमित्ततोवक्तव्या । तथाहि निमित्तः क्लेशतः । कतरन्निमित्तमिति । रूपं निमित्तं संज्ञानिमित्तं संस्कारनिमित्तं विज्ञानं निमित्तं चक्षुर्निमित्तं श्रोत्रं निमित्तं घ्राणं निमित्तं जिह्वानिमित्तं कायोनिमित्तं मनोनिमित्तं । रूपं निमित्तं

यश्च स्वभावशून्यतायाश्रपरिग्रहोन सा स्वभावशून्यता प्रकृतिशून्यतामुपादाय । अभावस्वभावशून्यताऽपरिगृहीता यश्चाऽभावस्वभावशून्यतायाश्रपरिग्रहोन साऽभावस्वभावशून्यता प्रकृतिशून्यतामुपादाय ।

स्मृत्युपस्थानान्यपरिगृहीतानि । यश्च स्मृत्युपस्थानानामपरिग्रहो न तानि स्मृत्युपस्थानानि प्रकृति शून्यतामुपादाय । सम्यक्प्रहाणान्यपरिगृहीतानि । यश्च सम्यक्प्रहाणानामपरिग्रहो न तानि सम्यक्प्रहाणानि प्रकृतिशून्यतामुपादाय । ऋद्धिपादाश्रपरिगृहीता । यश्च ऋद्धिपादानामपरिग्रहोन ते ऋद्धिपादाः प्रकृतिशून्यतामुपादाय । इन्द्रियाण्यपरिगृहीतानि । यश्चेन्द्रियाणामपरिग्रहो न तानीन्द्रियाणि प्रकृति शून्यतामुपादाय । बलान्यपरिगृहीतानि । यश्च बलानामपरिग्रहो न तानि बलानि प्रकृतिशून्यतामुपादाय । बोध्यङ्गान्यपरिगृहीतानि। यश्च बोध्यङ्गानामपरिग्रहो न तानि बोध्यङ्गानि प्रकृतिशून्यतामुपादाय । आर्य्याष्टाङ्गमार्गोऽपरिगृहीतो-यश्चार्य्याष्टाङ्गमार्गस्यापरिग्रहो न स आर्य्याष्टाङ्गमार्गः प्रकृतिशून्यतामुपादाय । आर्य्यसत्यान्यपरिगृहीतानि । यश्चार्य्यसत्यानामपरिग्रहोम तान्यार्य्यसत्यानि प्रकृतिशून्यतामुपादाय । ध्यानान्यपरिगृहीतानि । यश्च ध्यानानामपरिग्रहो न तानि ध्यानानि प्रकृतिशून्यतामुपादाय । अप्रमाणान्यपरिगृहीतानि । यश्चाऽप्रमाणानामपरिग्रहो न तान्यप्रमाणानि प्रकृतिशून्यतामुपादाय । आरूप्यसमापत्तयोऽपरिगृहीता। यश्चारूप्यसमापत्तीनामपरिग्रहो न ता आरूप्यसमापत्तयः प्रकृतिशून्यतामुपादाय । अष्टविमोक्षाश्रपरिगृहीता

यस्य विमोक्षाणामपरिग्रहेन ते विमोक्षाः प्रकृतिशून्यतामुपादाय। नवाऽनुपूर्व्वविहारसमापत्तयोऽपरिगृहीताः। यस्य नवाऽनुपूर्व्वविहारसमापत्तीनामपरिग्रहेन तानवाऽनुपूर्व्वविहारसमापत्तयः प्रकृतिशून्यतामुपादाय। शून्यताऽऽनिमित्ताऽप्रणिहितविमोक्षमुखान्यपरिगृहीतानि। यस्य शून्यतानिमित्ताप्रणिहित विमोक्षमुखानामपरिग्रहो न तानि शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि प्रकृतिशून्यतामुपादाय। अभिज्ञाः अपरिगृहीताः यस्याऽभिज्ञानामपरिग्रहेन ताअभिज्ञाः प्रकृति शून्यतामुपादाय। समाधयोऽपरिगृहीताः यस्य समाधीनामपरिग्रहो न ते समाधयः प्रकृति शून्यतामुपादाय। धारणीमुखान्यपरिगृहीतानि। यस्य धारणीमुखानामपरिग्रहो न तानि धारणीमुखानि प्रकृतिशून्यतामुपादाय। दशतथागतबलान्यपरिगृहीतानि। यस्य तथागतबलानामपरिग्रहो न तानि तथागतबलानि प्रकृति शून्यतामुपादाय। वैशारद्यान्यपरिगृहीतानि यस्य वैशारद्यानामपरिग्रहेन तानि वैशारद्यानि प्रकृतिशून्यतामुपादाय। चतस्रःप्रतिसम्विदोऽपरिगृहीताः। यस्य चतसृणा प्रतिसम्विदार्परिग्रहेन ताः प्रतिसम्विदः प्रकृतिशून्यतामुपादाय। महाकरुणा अपरिगृहीता। यस्य महाकरुणायाअपरिग्रहेन सा महाकरुणा प्रकृतिशून्यतामुपादाय। अष्टादशाऽऽवेणिकबुद्धधर्म्मा अपरिगृहीताः। यस्यावेणिक बुद्धधर्म्माणामपरिग्रहो न ते आवेणिकबुद्धधर्म्माः प्रकृतिशून्यातामुपादाय। स्रोत आपत्तिफलमपरिगृहीतं। यस्य स्रोत आपत्तिफलस्यापरिग्रहो न तत् स्रोत आप-

शब्दोनिमित्तं गन्धोनिमित्तं रसोनिमित्तं। स्पर्शोनिमित्तं। धर्म्मा-निमित्तं। चक्षुर्विज्ञानं निमित्तं श्रोत्रविज्ञानं निमित्तं। घ्राणवि-ज्ञानं निमित्तं जिह्वाविज्ञानं निमित्तं कायविज्ञानं निमित्तं मनोविज्ञानं निमित्तं। चक्षुःसंस्पर्शजावेदनानिमित्तं। श्रोत्रसंस्पर्श-जावेदनानिमित्तं। घ्राणसंस्पर्शजावेदनानिमित्तं। जिह्वासंस्पर्शजावेद-नानिमित्तं। कायसंस्पर्शजावेदनानिमित्तं। मनःसंस्पर्शजावेदना-निमित्तं। पृथिवीधातुर्निमित्तं। अब्धातुर्निमित्तं। तेजोधातु-र्निमित्तं। वायुधातुर्निमित्तं। आकाशधातुर्निमित्तं। विज्ञान-धातुर्निमित्तं। अविद्यानिमित्तं। संस्कारानिमित्तं। नामरूपं निमित्तं। षडायतनं निमित्तं। वेदनानिमित्तं। तृष्णानिमित्तं। उपादानं निमित्तं। भवोनिमित्तं। जरामरणं निमित्तं। दानपारमितानिमित्तं। शीलपारमितानिमित्तं। क्षान्तिपारमि-तानिमित्तं। वीर्य्यपारमितानिमित्तं। ध्यानपारमितानिमित्तं। प्रज्ञापारमितानिमित्तं। अध्यात्मशून्यतानिमित्तं। बहिर्द्धाशून्य-तानिमित्तं। अध्यात्मबहिर्द्धाशून्यतानिमित्तं। शून्यताशून्यतानि-मित्तं। महाशून्यतानिमित्तं। परमार्थशून्यतानिमित्तं। संस्कृत-शून्यतानिमित्तं। असंस्कृतशून्यतानिमित्तं। अत्यन्तशून्यतानिमित्तं। अनवराग्रशून्यतानिमित्तं। अनवकारशून्यतानिमित्तं। प्रकृतिशू-न्यतानिमित्तं। सर्व्वधर्म्मशून्यतानिमित्तं। स्वलक्षणशून्यतानिमित्तं। अनुपलम्भशून्यतानिमित्तं। अभावशून्यतानिमित्तं। स्वभावशून्य-तानिमित्तं। अभावस्वभावशून्यतानिमित्तं। आर्य्याष्टाङ्गमार्गोनि-मित्तं। आर्य्यसत्यानिनिमित्तं। ध्यानानिनिमित्तं। अप्रमाणानि-

निमित्तं । आरूप्यसमापत्तयोर्निमित्तं । अष्टौविमोक्षानिमित्तं । नवानुपूर्व्वविहारसमापत्तयोनिमित्तं । शून्यतानिमित्तं । प्रणिहितं-निमित्तं । अभिज्ञानिमित्तं । समाधयोनिमित्तं । धारणीमुखानि-निमित्तं । दशतथागतबलानिनिमित्तं । चत्वारिवैशारद्यानिनिमित्तं । चतस्रःप्रतिसम्बिदोनिमित्तं । महाकरुणानिमित्तं । अष्टादशावेणि-कावुद्धधर्म्मानिमित्तं । अवराणिनिमित्तानि । एकोदाहरोनिमित्तं । व्युदाहरोनिमित्तं । पृथग्दाहरोनिमित्तं ।

अयमुच्यते क्लेशः यचेत् स निमित्ततउद्ग्रहीतव्यो भविष्यत्येवे-ऽश्रेणिकः परिव्राजकः श्रद्धां प्रतिलप्स्यते । नाऽच सर्व्वज्ञज्ञाने । कतमाश्रद्धा यदुत प्रज्ञापारमितायाः अभिश्रद्धधानताऽवकल्पनता अधिमुच्यनता प्रत्ययनताचित्तता तुलनाव्युपपरीक्षणता । तच्च न निमित्तयोगेन । एव मानिमित्तानिमित्ताऽनुग्रहीतव्या । श्रेणिकः पुनः परिव्राजकोऽसर्व्वज्ञानेऽधिमुच्यश्रद्धानुसारीप्रादेशिकेन ज्ञाने-नावतीर्णः । सोऽवतीर्य्य न रूपं परिगृहीतवान् । न वेदनां परि-गृहीतवान् । न संज्ञां परिगृहीतवान् । न संस्कारान् परिगृहीत-वान् । नविज्ञानं परिगृहीतवान् । तथाहि स्वलक्षणशून्येषु सर्व्वधर्म्मेषु परिग्राहकं नोपलब्धा । तत्कस्य हेतोस्तथाहि नाऽध्यात्मं प्राप्त्यभि-समयतस्तत् ज्ञानं समनुपश्यतिस्म । न वहिर्द्धा प्राप्त्यभिसमय-तस्तत् ज्ञानं समनुपश्यतिस्म नाऽध्यात्मवहिर्द्धाप्राप्त्यभिसमयतस्तत्-ज्ञानं समनुपश्यतिस्म । नाप्यन्यत्रप्राप्त्यभिसमयतस्तत्ज्ञानं समनु-पश्यतिस्म । तत्कस्य हेतोस्तथाहि स तद्धर्म्मं न समनुपश्यतिस्म । येन प्रजानीयात् यो वा प्रजानीयात् । यद्वाप्रजानीयात् । नाऽध्यात्मरूपस्य

तत्ज्ञानं समनुपश्यतिस्म। न वहिर्द्धारूपस्य तत्ज्ञानं समनुपश्यतिस्म। नाऽध्यात्मवहिर्द्धारूपस्य तत्ज्ञानं समनुपश्यतिस्म। नाऽप्यन्यत्ररूपात्तत्ज्ञानं समनुपश्यतिस्म। नाध्यात्मवेदनायास्तत्ज्ञानं समनुपश्यतिस्म। न वहिर्द्धावेदनायास्तत्ज्ञानं समनुपश्यतिस्म। नाऽध्यात्मवहिर्द्धावेदनायास्तत्ज्ञानं समनुपश्यतिस्म। नाऽप्यन्यत्रवेदनायास्तत्ज्ञानं समनुपश्यतिस्म। नाध्यात्मसंज्ञायास्तत्ज्ञानं समनुपश्यतिस्म। न वहिर्द्धासंज्ञायास्तत्ज्ञानं समनुपश्यतिस्म। नाध्यात्मवहिर्द्धासंज्ञायास्तत्ज्ञानं समनुपश्यतिस्म। नाऽप्यन्यत्रसंज्ञायास्तत्ज्ञानं समनुपश्यतिस्म। नाऽध्यात्मसंस्काराणां तत्ज्ञानं समनुपश्यतिस्म। न वहिर्द्धासंस्काराणां तत्ज्ञानं समनुपश्यतिस्म। नाध्यात्मवहिर्द्धासंस्काराणां तत्ज्ञानं समनुपश्यतिस्म। नाऽप्यन्यत्रसंस्कारेभ्यः तत्ज्ञानं समनुपश्यतिस्म। नाऽध्यात्मविज्ञानस्य तत्ज्ञानं समनुपश्यतिस्म। न वहिर्द्धाविज्ञानस्य तत्ज्ञानं समनुपश्यतिस्म। नाऽध्यात्मवहिर्द्धाविज्ञानस्य तत्ज्ञानं समनुपश्यतिस्म। नाऽप्यन्यत्रविज्ञानस्य तत्ज्ञानं समनुपश्यतिस्म। अध्यात्मवहिर्द्धाशून्यतामुपादाय।

स नाऽध्यात्मञ्चक्षुषस्तत्ज्ञानं समनुपश्यतिस्म। न वहिर्द्धाचक्षुषस्तत्ज्ञानं समनुपश्यतिस्म। नाऽध्यात्मवहिर्द्धाचक्षुषस्तत्ज्ञानं समनुपश्यतिस्म। नाऽप्यन्यत्रचक्षुषस्तत्ज्ञानं समनुपश्यतिस्म। स नाध्यात्मं श्रोत्रस्य तत्ज्ञानं समनुपश्यतिस्म। न वहिर्द्धाश्रोत्रस्य तत्ज्ञानं समनुपश्यतिस्म। नाऽध्यात्मवहिर्द्धाश्रोत्रस्य तत्ज्ञानं समनुपश्यतिस्म। नाप्यन्यत्रश्रोत्रात् तत्ज्ञानं समनुपश्यतिस्म।

नाध्यात्मं घ्राणस्य तत्ज्ञानं समनुपश्यति स्म। न बहिर्द्धाघ्राणस्य तत्ज्ञानं समनुपश्यति स्म। नाध्यात्म बहिर्द्धाघ्राणस्य तत्ज्ञानं समनुपश्यति स्म। नाऽप्यन्यत्रघ्राणात् तत्ज्ञानं समनुपश्यति स्म। स नाध्यात्मं जिह्वायास्तत्ज्ञानं समनुपश्यति स्म। न बहिर्द्धाजिह्वायास्तत्ज्ञानं समनुपश्यति स्म। नाध्यात्मबहिर्द्धाजिह्वायास्तत्ज्ञानं समनुपश्यति स्म। नाप्यन्यत्रजिह्वायास्तत्ज्ञानं समनुपश्यति स्म। स नाध्यात्मं कायस्य तत्ज्ञानं समनुपश्यति स्म। न बहिर्द्धाकायस्य तत्ज्ञानं समनुपश्यति स्म। नाध्यात्मबहिर्द्धाकायस्य तत्ज्ञानं समनुपश्यति स्म। नाऽप्यन्यत्र कायस्य तत्ज्ञानं समनुपश्यति स्म। स नाध्यात्मंमनसस्तत्ज्ञानं समनुपश्यति स्म। न बहिर्द्धामनसस्तत्ज्ञानं समनुपश्यति स्म। नाध्यात्म बहिर्द्धामनसस्तत्ज्ञानं समनुपश्यति स्म। नाप्यन्यत्र मनसस्तत्ज्ञानं समनुपश्यति स्म। अध्यात्म बहिर्द्धाशून्यतामुपादाय।

नाऽध्यात्मंरूपस्य तत्ज्ञानं समनुपश्यति स्म। न बहिर्द्धारूपस्य तत्ज्ञानं समनुपश्यति स्म। नाध्यात्मबहिर्द्धा रूपस्य तत्ज्ञानं समनुपश्यति स्म। नाप्यन्यत्र रूपात्तत्ज्ञानं समनुपश्यति स्म। स नाध्यात्मं शब्दस्य तत्ज्ञानं समनुपश्यति स्म। न बहिर्द्धाशब्दस्य तत्ज्ञानं समनुपश्यति स्म। नाध्यात्मबहिर्द्धाशब्दस्य तत्ज्ञानं समनुपश्यति स्म। नाप्यन्यत्र शब्दस्य तत्ज्ञानं समनुपश्यति स्म। स नाध्यात्मं गन्धस्य तत्ज्ञानं समनुपश्यति स्म। न बहिर्द्धागन्धस्य तत्ज्ञानं समनुपश्यति स्म। नाध्यात्मबहिर्द्धागन्धस्य तत्ज्ञान समनुपश्यति स्म। नाप्यन्यत्र गन्धस्य तत्ज्ञानं समनुपश्यति स्म।

प्रजानाति। श्रोत्रसंस्पर्शप्रत्ययवेदनाविरहिता श्रोत्रसंस्पर्शप्रत्ययवेदनास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। घ्राणसंस्पर्शप्रत्ययवेदनाविरहिता घ्राणसंस्पर्शप्रत्ययवेदनास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। जिह्वासंस्पर्शप्रत्ययवेदनाविरहिता जिह्वासंस्पर्शप्रत्ययवेदनास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। कायसंस्पर्शप्रत्ययवेदनाविरहिता कायसंस्पर्शप्रत्ययवेदनास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। मनः संस्पर्शप्रत्ययवेदना विरहिता मनः संस्पर्शप्रत्ययवेदनास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति।

पृथिवीधातुरायुष्मञ्छारद्वतीपुत्र विरहितः पृथिवीधातुस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। अब्धातुर्व्विरहितोऽब्धातुस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। तेजोधातुर्व्विरहितस्तेजोधातुस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। वायुधातुर्व्विरहितो वायुधातुस्वभावेन तद्बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। आकाशधातुर्व्विरहित आकाशधातुस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। विज्ञानधातुर्व्विरहितो विज्ञानधातुस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति।

अविद्या आयुष्मञ्छारद्वतीपुत्र विरहिताऽविद्यास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। संस्कारा विरहिताः संस्कारस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। विज्ञानं विरहितं विज्ञानस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। नामरूपं विरहितं नाम रूपस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। षडायतनं विरहितं षडायतनस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। तृष्णा विरहिता तृष्णास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। उपादानं विरहितमुपादानस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। भवोविरहितो भवस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। जातिर्व्विरहिता जातिस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। जरामरणं विरहितं जरामरणस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति।

दानपारमितायुष्मञ्छारद्वतीपुत्र विरहिता दानपारमितास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। शीलपारमिता विरहिता शीलपारमितास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। क्षान्तिपारमिताविरहिता क्षान्तिपारमितास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः

प्रज्ञापारमितायां चरन् यथाभूत प्रजानाति। वीर्य्यपारमिता विरहिता वीर्य्यपारमितास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूत प्रजानाति। ध्यानपारमिता विरहिता ध्यानपारमितास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। प्रज्ञापारमिता विरहिता प्रज्ञापारमितास्वभावेन तद्बोधिसत्त्वोमहासत्त्व प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति।

अध्यात्मशून्यतायुष्मञ्छारद्वतीपुत्र विरहिताऽध्यात्मशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्व प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। वहिर्द्धाशून्यताविरहिता वहिर्द्धाशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्व. प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। अध्यात्मवहिर्द्धाशून्यताविरहिता अध्यात्मवहिर्द्धाशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूत प्रजानाति। शून्यताशून्यताविरहिता शून्यताशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्व. प्रज्ञापारमितायां चरन् यथाभूत प्रजानाति। महाशून्यताविरहिता महाशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्व' प्रज्ञापारमितायां चरन् यथाभूत प्रजानाति। परमार्थशून्यताविरहिता परमार्थशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमिताया चरन् यथाभूत प्रजानाति। संस्कृतशून्यताविरहिता संस्कृतशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। असंस्कृतशून्यताविरहिताऽसंस्कृतशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्व. प्रज्ञापारमिताया चरन् यथाभूत प्रजानाति।

अत्यन्तशून्यताविरहिता अत्यन्तशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । अनवराग्रशून्यताविरहिता अनवराग्रशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । अनवकारशून्यताविरहिता अनवकारशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । प्रकृतिशून्यताविरहिता प्रकृतिशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । सर्व्वधर्म्मशून्यताविरहिता सर्व्वधर्म्मशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । स्वलक्षणशून्यताविरहिता स्वलक्षणशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । अनुपलम्भशून्यताविरहिताऽनुपलम्भशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूत प्रजानाति । अभावशून्यताविरहिताऽभावशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । स्वभावशून्यताविरहितास्वभावशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । अभावस्वभावशून्यताविरहिताऽभावस्वभावशून्यतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति ।

चत्वारिस्मृत्युपस्थानान्यायुष्मञ्छारद्वतीपुत्र विरहितानि स्मृत्युपस्थान स्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । चत्वारि सम्यक्प्रहाणानि विरहितानि सम्यक्-

प्रहाणस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । चत्वार ऋद्धिपादाविरहिताः ऋद्धिपादस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । पञ्चेन्द्रियाणिविरहितानि इन्द्रियस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । पञ्चबलानि विरहितानि बलस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । सप्तबोध्यङ्गानि विरहितानि बोध्यङ्गस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । आर्य्याष्टाङ्गमार्गोविरहितः आर्य्याष्टाङ्गमार्गस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । चत्वार्य्यार्य्यसत्यान्यायुष्मञ्छारद्वतीपुत्र विरहितान्यार्य्यसत्यस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । चत्वारिध्यानानि विरहितानि ध्यानस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । चत्वार्य्यप्रमाणानि विरहितान्यप्रमाणस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । चतस्र आरूप्यसमापत्तयोविरहिता आरूप्यसमापत्तिस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । अष्टौविमोक्षविरहिता विमोक्षस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । नवानुपूर्व्वविहारसमापत्तयोविरहिता अनुपूर्व्वविहारसमापत्तिस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति । शून्यतानिमित्ताप्रणिहित-

विमोक्षमुखानि विरहितानि शून्यतानिमित्ताप्रणिहितविमोक्ष-मुखस्वभावेन तद्बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यथा-भूतं प्रजानाति। अभिज्ञाविरहिता अभिज्ञास्वभावेन तद्बोधि-सत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। समाधयो विरहिताः समाधिस्वभावेन तद्बोधिसत्त्वो महासत्त्वः प्रज्ञा-पारमितायां चरन् यथाभूतं प्रजानाति। धारणीमुखानि विर-हितानि धारणीमुखस्वभावेन तद्बोधिसत्त्वो महासत्त्वः प्रज्ञापार-मितायां चरन् यथाभूतं प्रजानाति।

दशतथागतबलान्यायुष्मञ्छारद्वतीपुत्र विरहितानि दशतथाग-तबलस्वभावेन तद्बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। चत्वारि वैशारद्यानि विरहितानि वैशारद्य-स्वभावेन तद्बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। चतस्रः प्रतिसम्विदो विरहिताः प्रतिसम्वित्स्वभावेन तद्बो-धिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यथाभूत प्रजानाति। महामैत्री विरहिता महामैत्रीस्वभावेन तद्बोधिसत्त्वो महासत्त्वः प्रज्ञा-पारमितायां चरन् यथाभूतं प्रजानाति। महाकरुणाविरहिता महाकरुणास्वभावेन तद्बोधिसत्त्वो महासत्त्व प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। अष्टादशावेणिकबुद्धधर्मा विरहिता आवेणिक बुद्धधर्मस्वभावेन तद्बोधिसत्त्वो महासत्त्व प्रज्ञापारमितायां चरन् यथाभूत प्रजानाति।

स्रोत आपत्तिफलमायुष्मञ्छारद्वतीपुत्र विरहितं स्रोत आप-त्तिफलस्वभावेन तद्बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्

यथाभूतं प्रजानाति। सकृदागामिफलं विरहितं सकृदागामिफल-स्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। अनागामिफलं विरहितमनागामिफलस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। अर्हत्त्वं विरहितमर्हत्त्वस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। प्रत्येकबोधिर्विरहिता प्रत्येकबोधिस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। मार्गाकारज्ञताविरहिता मार्गाकारज्ञतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापरमितायां चरन् यथाभूतं प्रजानाति। सर्व्वाकारज्ञताविरहिता सर्व्वाकारज्ञतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति।

तथता आयुष्मञ्छारद्वतीपुत्र विरहिता तथतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। अवितथताविरहिता अवितथतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। अनन्यतथताविरहिता अनन्यतथतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। धर्म्मताविरहिता धर्म्मतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। धर्म्मधातुर्व्विरहितो धर्म्मधातुस्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। धर्म्मनियामता विरहिता धर्म्मनियामतास्वभावेन तद्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यथाभूतं प्रजानाति। भूतकोटिर्व्विरहिता भूतकोटि

स्वभावेन तद्बोधिसत्त्वोमहासत्त्व प्रज्ञापारमितायां चरन् यथाभूत प्रजानाति ।

अनेनायुष्मञ्छारद्वतीपुत्र कारणेनाविरहितो बोधिसत्त्वोमहासत्त्व प्रज्ञापारमितायावेदितव्य । आह । कथ पुनरायुष्मन् सुभूते रूपस्य स्वभाव । कथ वेदनाया स्वभाव । कथ सज्ञाया स्वभाव । कथ सस्काराणा स्वभाव । कथ विज्ञानस्य स्वभाव । कथ चक्षुष स्वभाव । कथ श्रोत्रस्य स्वभाव । कथ घ्राणस्य स्वभाव । कथ जिह्वाया स्वभाव । कथ कायस्य स्वभाव । कथ मनस स्वभाव । कथ रूपस्य स्वभाव । कथ शब्दस्य स्वभाव । कथ गन्धस्य स्वभाव । कथ रसस्य स्वभाव । कथ स्पर्शस्य स्वभाव । कथ धर्माणा स्वभाव । कथ चक्षुर्विज्ञानस्य स्वभाव । कथ श्रोत्रविज्ञानस्य स्वभाव । कथ घ्राणविज्ञानस्य स्वभाव । कथ जिह्वाविज्ञानस्य स्वभाव । कथ कायविज्ञानस्य स्वभाव । कथ मनोविज्ञानस्य स्वभाव । कथ चक्षु सस्पर्शस्य स्वभाव । कथ श्रोत्रसस्पर्शस्य स्वभाव । कथ घ्राणसस्पर्शस्य स्वभाव । कथ जिह्वासस्पर्शस्य स्वभाव । कथ कायसस्पर्शस्य स्वभाव । कथ मन सस्पर्शस्य स्वभाव । कथ चक्षु सस्पर्शप्रत्ययवेदनाया स्वभाव । कथ श्रोत्रसस्पर्शप्रत्ययवेदनाया स्वभाव । कथ घ्राणसस्पर्शप्रत्ययवेदनाया स्वभाव । कथ जिह्वासस्पर्शप्रत्ययवेदनाया स्वभाव । कथ कायसस्पर्शप्रत्ययवेदनाया स्वभाव । कथ मन सस्पर्शप्रत्ययवेदनाया स्वभाव ।

कथ पृथिवीधातो स्वभाव । कथमब्धातो स्वभाव । कथ तेजोधातो स्वभाव । कथ वायुधातो स्वभाव । कथमाकाशधातो

स्वभावः। कथं विज्ञानधातोः स्वभावः। कथमविद्यायाः स्वभावः। कथं संस्काराणां स्वभावः। कथं विज्ञानस्य स्वभावः। कथं नामरूपस्य स्वभावः। कथं षड़ायतनस्य स्वभावः। कथं स्पर्शस्य स्वभावः। कथं वेदनायाः स्वभावः। कथं तृष्णायाः स्वभावः। कथमुपादानस्य स्वभावः। कथं भवस्य स्वभावः। कथं जातेः स्वभावः। कथं जरामरणस्य स्वभावः।

कथं दानपारमितायाः स्वभावः। कथं शीलपारमितायाः स्वभावः। कथं क्षान्तिपारमितायाः स्वभावः। कथं वीर्य्यपारमितायाः स्वभावः। कथं ध्यानपारमितायाः स्वभावः। कथं प्रज्ञापारमितायाः स्वभावः।

कथमध्यात्मशून्यतायाः स्वभावः। कथं वहिर्द्धाशून्यतायाः स्वभावः। कथमध्यात्मवहिर्द्धाशून्यतायाः स्वभावः। कथं शून्यताशून्यतायाः स्वभावः। कथं महाशून्यतायाः स्वभावः। कथं परमार्थशून्यतायाः स्वभावः। कथं संस्कृतशून्यतायाः स्वभावः। कथमसंस्कृतशून्यतायाः स्वभावः। कथमत्यन्तशून्यतायाः स्वभावः। कथमनवराग्रशून्यतायाः स्वभावः। कथमनवकारशून्यतायाः स्वभावः। कथं प्रकृतिशून्यतायाः स्वभावः। कथं सर्व्वधर्म्मशून्यतायाः स्वभावः। कथं स्वलक्षणशून्यतायाः स्वभावः। कथमनुपलम्भशून्यतायाः स्वभावः। कथमभावशून्यतायाः स्वभावः। कथं स्वभावशून्यतायाः स्वभावः। कथमभावस्वभाव शून्यतायाः स्वभावः। कथं स्मृत्युपस्थानानां स्वभावः। कथं सम्यक्प्रहाणानां स्वभावः। कथमृद्धिपादानां स्वभावः। कथमिन्द्रियाणां स्वभावः। कथं बलानां स्वभावः।

कथं बोध्यङ्गानां स्वभावः । कथमार्य्याष्टाङ्गमार्गस्य स्वभावः । कथ-मार्य्यसत्यानां स्वभावः । कथं ध्यानानां स्वभावः । कथमप्रमाणानां स्वभावः । कथमारूप्यसमापत्तीनां स्वभावः । कथं विमोक्षाणां स्वभावः । कथं नवानुपूर्व्वविहारसमापत्तीनां स्वभावः । कथं शून्यतानिमित्ताप्रणिहितविमोक्षमुखानां स्वभावः । कथमभिज्ञानां स्वभावः। कथं समाधीनां स्वभावः। कथं धारणीमुखानां स्वभावः। कथं दशतथागतबलानां स्वभावः। कथं वैशारद्यानां स्वभावः । कथं प्रतिसम्विदां स्वभावः । कथं महामैत्र्याः स्वभावः । कथं महाकरु-णायाः स्वभावः। कथमावेणिकबुद्धधर्म्माणां स्वभावः । कथं स्रोत आपत्तिफलस्य स्वभावः । कथं सकृदागामिफलस्य स्वभावः । कथमनागामिफलस्य स्वभावः । कथमर्हत्त्वस्य स्वभावः । कथं प्रत्येकबोधेः स्वभावः । कथं मार्गाकारज्ञतायाः स्वभावः । कथं सर्व्वाकारज्ञतायाः स्वभावः । कथं तथतायाः स्वभावः । कथमवि-तथतायाः स्वभावः । कथमनन्यतथतायाः स्वभावः । कथं धर्म्मतायाः स्वभावः । कथं धर्म्मधातोः स्वभावः । कथं धर्म्मस्थितितायाः स्वभावः। कथं धर्म्मनियामतायाः स्वभावः । कथं भूतकोटेः स्वभावः ।

सुभूतिराह । अभाव आयुष्मञ्छारद्वतीपुत्र रूपस्य स्वभावः । अभावोवेदनायाः स्वभावः । अभावः संज्ञायाः स्वभावः । अभावः संस्काराणां स्वभावः । अभावोविज्ञानस्य स्वभावः । अभावश्चक्षुषः स्वभावः । अभावः श्रोत्रस्य स्वभावः । अभावो घ्राणस्य स्वभावः । अभावोजिह्वायाः स्वभावः । अभावः कायस्य स्वभावः । अभावो-मनसः स्वभावः । अभावोरूपस्य स्वभावः । अभावः शब्दस्य स्वभावः।

अभावोगन्धस्य स्वभावः। अभावोरसस्य स्वभावः। अभावः स्पर्शस्य स्वभावः। अभावोधर्म्माणां स्वभावः। अभावश्चक्षुर्व्विज्ञानस्य स्वभावः। अभावः श्रोत्रविज्ञानस्य स्वभावः। अभावोघ्राणविज्ञानस्य स्वभावः। अभावोजिह्वाविज्ञानस्य स्वभावः। अभावः कायविज्ञानस्य स्वभावः। अभावोमनोविज्ञानस्य स्वभावः। अभावश्चक्षुः संस्पर्शस्य स्वभावः। अभावः श्रोत्रसंस्पर्शस्य स्वभावः। अभावोघ्राणसंस्पर्शस्य स्वभावः। अभावोजिह्वासंस्पर्शस्य स्वभावः। अभावः कायसंस्पर्शस्य स्वभावः। अभावोमनःसंस्पर्शस्य स्वभावः। अभावश्चक्षुःसंस्पर्शप्रत्ययवेदनायाः स्वभावः। अभावः श्रोत्रसंस्पर्शप्रत्ययवेदनायाः स्वभावः। अभावोघ्राणसंस्पर्शप्रत्ययवेदनायाः स्वभावः। अभावोजिह्वासंस्पर्शप्रत्ययवेदनायाः स्वभावः। अभावः कायसंस्पर्शप्रत्ययवेदनायाः स्वभावः। अभावोमनःसंस्पर्शप्रत्ययवेदनायाः स्वभावः। अभावः पृथिवीधातोः स्वभावः। अभावोऽब्धातोः स्वभावः। अभावस्तेजोधातोः स्वभावः। अभावोवायुधातोः स्वभावः। अभाव आकाशधातोः स्वभावः। अभावोविज्ञानधातोः स्वभावः। अभावोऽविद्यायाः स्वभावः। अभावः संस्काराणां स्वभावः। अभावोविज्ञानस्य स्वभावः। अभावोनामरूपस्य स्वभावः। अभावः षडायतनस्य स्वभावः। अभावः स्पर्शस्य स्वभावः। अभावोवेदनायाः स्वभावः। अभावस्तृष्णायाः स्वभावः। अभाव उपादानस्य स्वभावः। अभावोभवस्य स्वभावः। अभावोजातेः स्वभावः। अभावोजरामरणस्य स्वभावः।

अभावोदानपारमितायाः स्वभावः। अभावः शीलपारमितायाः स्वभावः। अभावः क्षान्तिपारमितायाः स्वभावः। अभावोवीर्य्यपार-

मितायाः स्वभावः। अभावोध्यानपारमितायाः स्वभावः। अभावः प्रज्ञापारमितायाः स्वभावः।

अभावोऽध्यात्मशून्यतायाः स्वभावः। अभावोबहिर्द्धाशून्यतायाः स्वभावः। अभावोऽध्यात्मबहिर्द्धाशून्यतायाः स्वभावः। अभावः शून्यतायाः स्वभावः। अभावोमहाशून्यतायाः स्वभावः। अभावः परमार्थशून्यतायाः स्वभावः। अभावः संस्कृतशून्यतायाः स्वभावः। अभावोऽसंस्कृतशून्यतायाः स्वभावः। अभावोऽत्यन्तशून्यतायाः स्वभावः। अभावोऽनवरागशून्यतायाः स्वभावः। अभावोऽनवकारशून्यतायाः स्वभावः। अभावः प्रकृतिशून्यतायाः स्वभावः। अभावः सर्व्वधर्म्मशून्यतायाः स्वभावः। अभावः स्वलक्षणशून्यतायाः स्वभावः। अभावोऽनुपलम्भशून्यतायाः स्वभावः। अभावोऽभावशून्यतायाः स्वभावः। अभावः स्वभावशून्यतायाः स्वभावः। अभावोऽभावस्वभावशून्यतायाः स्वभावः।

अभावः स्मृत्युपस्थानानां स्वभावः। अभावः सम्यक्प्रहाणानां स्वभावः। अभावः ऋद्धिपादानां स्वभावः। अभावः इन्द्रियाणां स्वभावः। अभावोबलानां स्वभावः। अभावोबोध्यङ्गानां स्वभावः। अभावः आर्य्याष्टाङ्गमार्गस्य स्वभावः। अभावः आर्य्यसत्यानां स्वभावः। अभावोध्यानानां स्वभावः। अभावोऽप्रमाणानां स्वभावः। अभावः आरूप्यसमापत्तीनां स्वभावः। अभावोविमोक्षाणां स्वभावः। अभावोऽनुपूर्व्वविहारसमापत्तीनां स्वभावः। अभावः शून्यतानिमित्ताप्रणिहितविमोक्षमुखानां स्वभावः। अभावोऽभिज्ञानां स्वभावः। अभावः समाधीनां स्वभावः। अभावोधारणीमुखानां स्वभावः।

अभावस्तथागतबलानां स्वभावः। अभावोवैशारद्यानां स्वभावः। अभावः प्रतिसम्विदां स्वभावः। अभावोमहामैत्र्याः स्वभावः। अभावोमहाकरुणायाः स्वभावः। अभावोऽष्टादशावेणिकबुद्धधर्म्माणां स्वभावः। अभावः स्रोत आपत्तिफलस्य स्वभावः। अभावः सकृदागामिफलस्य स्वभावः। अभावोऽनागामिफलस्य स्वभावः। अभावोऽर्हत्त्वस्य स्वभावः। अभावः प्रत्येकबोधेः स्वभावः।

अभावोमार्गाकारज्ञतायाः स्वभावः। अभावः सर्व्वाकारज्ञतायाः स्वभावः। अभावस्तथतायाः स्वभावः। अभावोऽवितथतायाः स्वभावः। अभावोऽनन्यतथतायाः स्वभावः। अभावोधर्म्मतायाः स्वभावः। अभावोधर्म्मधातोः स्वभावः। अभावोधर्म्मस्थितितायाः स्वभावः। अभावोधर्म्मनियामतायाः स्वभावः। अभावोभूतकोटेः स्वभावः।

अनेनायुष्मञ्छारद्वतीपुत्र पर्य्यायेणैव वेदितव्यः। यथारूपं विरहितं रूपस्वभावेन। वेदनाविरहिता वेदनास्वभावेन। संज्ञाविरहिता संज्ञास्वभावेन। संस्काराविरहिताः संस्कारस्वभावेन। विज्ञानं विरहितं विज्ञानस्वभावेन। चक्षुर्व्विरहितं चक्षुःस्वभावेन। श्रोत्रं विरहितं श्रोत्रस्वभावेन। घ्राणं विरहितं घ्राणस्वभावेन। जिह्वाविरहितं जिह्वास्वभावेन। कायोविरहितः कायस्वभावेन। मनोविरहितः मनःस्वभावेन। रूपं विरहितं रूपस्वभावेन। शब्दोविरहितः शब्दस्वभावेन। गन्धोविरहितो गन्धस्वभावेन। रसोविरहितो रसस्वभावेन। स्पर्शोविरहितः स्पर्शस्वभावेन। धर्म्माविरहिताः धर्म्मस्वभावेन। चक्षुर्व्विज्ञानं विरहितं चक्षुर्व्विज्ञानस्वभावेन। श्रोत्रविज्ञानं विरहितं श्रोत्रविज्ञानस्वभावेन। घ्राणविज्ञानं विर-

हितं घ्राणविज्ञानस्वभावेन । जिह्वाविज्ञानं विरहितं जिह्वाविज्ञानस्वभावेन । कायविज्ञानं विरहितं कायविज्ञानस्वभावेन । मनोविज्ञानं विरहितं मनोविज्ञानस्वभावेन । चक्षुःसंस्पर्शोविरहितश्चक्षुःसंस्पर्शस्वभावेन । श्रोत्रसंस्पर्शोविरहितः श्रोत्रसंस्पर्शस्वभावेन । घ्राणसंस्पर्शोविरहितो घ्राणसंस्पर्शस्वभावेन । जिह्वासंस्पर्शोविरहितो जिह्वासंस्पर्शस्वभावेन । कायसंस्पर्शोविरहितः कायसंस्पर्शस्वभावेन । मनः संस्पर्शोविरहितो मनः संस्पर्शस्वभावेन । चक्षुः संस्पर्शप्रत्ययवेदनाविरहिता चक्षुः संस्पर्शप्रत्ययवेदनास्वभावेन । श्रोत्रसंस्पर्शप्रत्ययवेदनाविरहिता श्रोत्रसंस्पर्शप्रत्ययवेदनास्वभावेन । घ्राणसंस्पर्शप्रत्ययवेदनाविरहिता घ्राणसंस्पर्शप्रत्ययवेदनास्वभावेन । जिह्वासंस्पर्शप्रत्ययवेदनाविरहिता जिह्वासंस्पर्शप्रत्ययवेदनास्वभावेन । कायसंस्पर्शप्रत्ययवेदनाविरहिता कायसंस्पर्शप्रत्ययवेदनास्वभावेन । मनः संस्पर्शप्रत्ययवेदनाविरहिता मनः संस्पर्शप्रत्ययवेदनास्वभावेन । पृथिवीधातुर्व्विरहितः पृथिवीधातुस्वभावेन । अब्धातुर्व्विरहितोऽब्धातुस्वभावेन । तेजोधातुर्व्विरहितस्तेजोधातुस्वभावेन । वायुधातुर्व्विरहितो वायुधातुस्वभावेन । आकाशधातुर्व्विरहित आकाशधातुस्वभावेन । विज्ञानधातुर्व्विरहितो विज्ञानधातुस्वभावेन । अविद्याविरहिताऽविद्यास्वभावेन । संस्काराविरहिताः संस्कारस्वभावेन । विज्ञानं विरहितं विज्ञानस्वभावेन । नामरूपं विरहितं नामरूपस्वभावेन । षडायतनं विरहितं षडायतनस्वभावेन । स्पर्शोविरहितःस्पर्शस्वभावेन । वेदनाविरहिता वेदनास्वभावेन । तृष्णाविरहिता तृष्णास्वभावेन । उपादानं विरहितमुपादानस्वभावेन । भवोविरहितो भवस्व-

भावेन। जातिर्व्विरहिता जातिस्वभावेन। जरामरणं विरहितं जरामरणस्वभावेन।

दानपारमिताविरहिता दानपारमितास्वभावेन। शीलपारमिताविरहिता शीलपारमितास्वभावेन। क्षान्तिपारमिताविरहिता क्षान्तिपारमितास्वभावेन। वीर्य्यपारमिताविरहिता वीर्य्यपारमिता स्वभावेन। ध्यानपारमिताविरहिता ध्यानपारमितास्वभावेन। प्रज्ञापारमिताविरहिता प्रज्ञापारमितास्वभावेन।

अध्यात्मशून्यताविरहिता अध्यात्मशून्यतास्वभावेन। वहिर्द्धाशून्यताविरहिता वहिर्द्धाशून्यतास्वभावेन। अध्यात्मवहिर्द्धाशून्यताविरहिता अध्यात्मवहिर्द्धाशून्यतास्वभावेन। शून्यताशून्यताविरहिता शून्यताशून्यतास्वभावेन। महाशून्यताविरहिता महाशून्यतास्वभावेन। परमार्थशून्यताविरहिता परमार्थशून्यतास्वभावेन। संस्कृतशून्यताविरहिता संस्कृतशून्यतास्वभावेन। असंस्कृतशून्यताविरहिता असंस्कृतशून्यतास्वभावेन। अत्यन्तशून्यताविरहिता अत्यन्तशून्यतास्वभावेन। अनवराग्रशून्यताविरहिता अनवराग्रशून्यतास्वभावेन। अनवकारशून्यताविरहिता अनवकारशून्यतास्वभावेन। प्रकृतिशून्यताविरहिता प्रकृतिशून्यतास्वभावेन। सर्व्वधर्म्मशून्यताविरहिता सर्व्वधर्म्मशून्यतास्वभावेन। स्वलक्षणशून्यताविरहिता स्वलक्षणशून्यतास्वभावेन। अनुपलम्भशून्यताविरहिता अनुपलम्भशून्यतास्वभावेन। अभावशून्यताविरहिता अभावशून्यतास्वभावेन। स्वभावशून्यताविरहिता स्वभावशून्यतास्वभावेन। अभावस्वभावशून्यताविरहिता अभावस्वभावशून्यतास्वभावेन।

संस्पर्शविरहितो मनःसंस्पर्शलक्षणेन। चक्षुःसंस्पर्शप्रत्ययवेदनाविरहिता चक्षुःसंस्पर्शप्रत्ययवेदनालक्षणेन। श्रोत्रसंस्पर्शप्रत्ययवेदनाविरहिता श्रोत्रसंस्पर्शप्रत्ययवेदनालक्षणेन। घ्राणसंस्पर्शप्रत्ययवेदनाविरहिता घ्राणसंस्पर्शप्रत्ययवेदनालक्षणेन। जिह्वासंस्पर्शप्रत्ययवेदनाविरहिता जिह्वासंस्पर्शप्रत्ययवेदनालक्षणेन। कायसंस्पर्शप्रत्ययवेदनाविरहिता कायसंस्पर्शप्रत्ययवेदनालक्षणेन। मनःसंस्पर्शप्रत्ययवेदनाविरहिता मनःसंस्पर्शप्रत्ययवेदनालक्षणेन।

पृथिवीधातुर्विरहितः पृथिवीधातुलक्षणेन। अब्धातुर्विरहितोऽब्धातुलक्षणेन। तेजोधातुर्विरहितस्तेजोधातुलक्षणेन। वायुधातुर्विरहितो वायुधातुलक्षणेन। आकाशधातुर्विरहित आकाशधातुलक्षणेन। विज्ञानधातुर्विरहितो विज्ञानधातुलक्षणेन। अविद्याविरहिता अविद्यालक्षणेन। संस्काराविरहिताः संस्कारलक्षणेन। विज्ञानं विरहितं विज्ञानलक्षणेन। नामरूपं विरहितं नामरूपलक्षणेन। षडायतनं विरहितं षडायतनलक्षणेन। स्पर्शो विरहितः स्पर्शलक्षणेन। वेदनाविरहिता वेदनालक्षणेन। तृष्णाविरहिता तृष्णालक्षणेन। उपादानं विरहितमुपादानलक्षणेन। भवोविरहितो भवलक्षणेन। जातिर्विरहिता जातिलक्षणेन। जरामरणं विरहितं जरामरलक्षणेन।

दानपारमिताविरहिता दानपारमितालक्षणेन। शीलपारमिताविरहिता शीलपारमितालक्षणेन। क्षान्तिपारमिताविरहिता क्षान्तिपारमितालक्षणेन। वीर्य्यपारमिताविरहिता वीर्य्यपारमितालक्षणेन। ध्यानपारमिताविरहिता ध्यानपारमितालक्षणेन। प्रज्ञापारमिता विरहिता प्रज्ञापारमितालक्षणेन।

अध्यात्मशून्यताविरहिता अध्यात्मशून्यतालक्षणेन। बहिर्द्धाशून्यताविरहिता बहिर्द्धाशून्यतालक्षणेन। अध्यात्मबहिर्द्धाशून्यताविरहिता अध्यात्मबहिर्द्धाशून्यतालक्षणेन। शून्यताशून्यताविरहिता शून्यताशून्यतालक्षणेन। महाशून्यताविरहिता महाशून्यतालक्षणेन। परमार्थशून्यताविरहिता परमार्थशून्यतालक्षणेन। संस्कृतशून्यताविरहिता संस्कृतशून्यतालक्षणेन। असंस्कृतशून्यताविरहिता असंस्कृतशून्यतालक्षणेन। अत्यन्तशून्यताविरहिता अत्यन्तशून्यतालक्षणेन। अनवराग्रशून्यताविरहिता अनवराग्रशून्यतालक्षणेन। अनवकारशून्यताविरहिता अनवकारशून्यतालक्षणेन। प्रकृतिशून्यताविरहिता प्रकृतिशून्यतालक्षणेन। सर्व्वधर्म्मशून्यताविरहिता सर्व्वधर्म्मशून्यतालक्षणेन। स्वलक्षणशून्यताविरहिता स्वलक्षणशून्यतास्वभावेन। अनुपलम्भशून्यताविरहिता अनुपलम्भशून्यतालक्षणेन। अभावशून्यताविरहिता अभावशून्यतालक्षणेन। स्वभावशून्यताविरहिता स्वभावशून्यतालक्षणेन। अभावस्वभावशून्यताविरहिता अभावस्वभावशून्यतालक्षणेन।

स्मृत्युपस्थानानि विरहितानि स्मृत्युपस्थानलक्षणेन। सम्यक् प्रहाणानि विरहितानि सम्यक् प्रहाणलक्षणेन। ऋद्धिपादाविरहिता ऋद्धिपादलक्षणेन। इन्द्रियाणि विरहितानि इन्द्रियलक्षणेन। बलानि विरहितानि बललक्षणेन। बोध्यङ्गानि विरहितानि बोध्यङ्गलक्षणेन। आर्य्याष्टाङ्गमार्गोविरहित आर्य्याष्टाङ्गमार्गलक्षणेन। आर्य्यसत्यानि विरहितान्यार्य्यसत्यलक्षणेन। ध्यानानि विरहितानि ध्यानलक्षणेन। अप्रमाणानि विरहितानि अप्रमाणलक्षणेन—

स्मृत्युपस्थानानि विरहितानि स्मृत्युपस्थानस्वभावेन । सम्यक् प्रहाणानि विरहितानि सम्यक्प्रहाणस्वभावेन । ऋद्धिपादाविरहिताः ऋद्धिपादस्वभावेन । इन्द्रियाणि विरहितानि इन्द्रियस्वभावेन । बलानि विरहितानि बलस्वभावेन । बोध्यङ्गानि विरहितानि बोध्यङ्गस्वभावेन । आर्य्याष्टाङ्गमार्गोविरहित आर्य्याष्टाङ्गमार्गस्वभावेन । आर्य्यसत्यानि विरहितान्यार्य्यसत्यस्वभावेन । ध्यानानि विरहितानि ध्यानस्वभावेन । अप्रमाणानि विरहितान्यप्रमाणस्वभावेन । आरूप्यसमापत्तयोविरहिता आरूप्यसमापत्तिस्वभावेन । अष्टविमोक्षाविरहिता अष्टविमोक्षस्वभावेन । अनुपूर्वविहारसमापत्तयो विरहिता अनुपूर्वविहारसमापत्तिस्वभावेन । शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखानि विरहितानि शून्यतानिमित्ताप्रणिहितविमोक्षमुखस्वभावेन । समाधयोविरहिताः समाधिस्वभावेन । धारणीमुखानि विरहितानि धारणीमुखस्वभावेन । तथागतबलानि विरहितानि तथागतबलस्वभावेन । वैशारद्यानि विरहितानि वैशारद्यस्वभावेन । प्रतिसम्बिदोविरहिताः प्रतिसम्बित् स्वभावेन । महामैत्रीविरहिता महामैत्रीस्वभावेन । महाकरुणाविरहिता महाकरुणास्वभावेन । आवेणिकबुद्धधर्म्माविरहिता आवेणिकबुद्धधर्म्मस्वभावेन । स्रोत आपत्तिफलं विरहितं स्रोत आपत्तिफलस्वभावेन । सकृदागामिफलं विरहितं सकृदागामिफलस्वभावेन । अनागामिफलं विरहितमनागामि फलस्वभावेन । अर्हत्त्वं विरहितमर्हत्त्वस्वभावेन । प्रत्येकबोधिर्विरहिता प्रत्येकबोधिस्वभावेन । मार्गाकारज्ञताविरहिता मार्गाकारज्ञतास्वभावेन । सर्व्वाकारज्ञता-

विरहिता सर्व्वाकारज्ञताखभावेन। तथताविरहिता तथताखभावेन। अवितथताविरहिता अवितथताखभावेन। अनन्यतथताविरहिता अनन्यतथताखभावेन। धर्म्मताविरहिता धर्म्मताखभावेन। धर्म्मधातुर्व्विरहितो धर्म्मधातुखभावेन। धर्म्मस्थितिताविरहिता धर्म्मस्थितिताखभावेन। धर्म्मनियामताविरहिता धर्म्मनियामताखभावेन। भूतकोटिर्व्विरहिता भूतकोटिखभावेन।

पुनरपरमायुष्मञ्छारद्वतीपुत्र रूपं विरहितं रूपलक्षणेन। वेदनाविरहिता वेदनालक्षणेन। संज्ञाविरहिता संज्ञालक्षणेन। संस्काराविरहिताः संस्कारालक्षणेन। विज्ञानं विरहितं विज्ञानलक्षणेन। चक्षुर्व्विरहितं चक्षुर्लक्षणेन। श्रोत्रं विरहितं श्रोत्रलक्षणेन। घ्राणं विरहितं घ्राणलक्षणेन। जिह्वाविरहिता जिह्वालक्षणेन। कायोविरहितः कायलक्षणेन। मनोविरहितं मनोलक्षणेन। रूपं विरहितं रूपलक्षणेन। शब्दोविरहितः शब्दलक्षणेन। गन्धोविरहितो गन्धलक्षणेन। रसोविरहितो रसलक्षणेन। स्पर्शोविरहितः स्पर्शलक्षणेन। धर्म्मविरहिता धर्म्मलक्षणेन। चक्षुर्व्विज्ञानं विरहितं चक्षुर्व्विज्ञानलक्षणेन। श्रोत्रविज्ञानं विरहितं श्रोत्रविज्ञानलक्षणेन। घ्राणविज्ञानं विरहितं घ्राणविज्ञानलक्षणेन। जिह्वाविज्ञानं विरहितं जिह्वाविज्ञानलक्षणेन। कायविज्ञानं विरहितं कायविज्ञानलक्षणेन। मनोविज्ञानं विरहितं मनोविज्ञानलक्षणेन। चक्षुःसंस्पर्शोविरहितश्चक्षुःसंस्पर्शलक्षणेन। श्रोत्रसंस्पर्शोविरहितं श्रोत्रसंस्पर्शलक्षणेन। घ्राणसंस्पर्शोविरहितो घ्राणसंस्पर्शलक्षणेन। जिह्वासंस्पर्शोविरहितो जिह्वासंस्पर्शलक्षणेन। कायसंस्पर्शोविरहितः कायसंस्पर्शलक्षणेन। मनः-

क्षेन। आरूप्य समापत्तयोविरहिता आरूप्य समापत्तिलक्षणेन। अष्टौ विमोक्षाविरहिता अष्टविमोक्षलक्षणेन। अनुपूर्व्वविहारसमापत्तयोविरहिता अनुपूर्व्वविहारसमापत्तिलक्षणेन। शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि विरहितानि शून्यतानिमित्ताप्रणिहितविमोक्षमुखलक्षणेन। अभिज्ञाविरहिता अभिज्ञालक्षणेन। समाधयोविरहिताः समाधिलक्षणेन। धारणीमुखानि विरहितानि धारणीमुखलक्षणेन। तथागतबलानि विरहितानि तथागतबललक्षणेन। वैशारद्यानि विरहितानि वैशारद्यलक्षणेन। प्रतिसम्विदोविरहिताः प्रतिसम्विद्लक्षणेन। महामैत्रीविरहिता महामैत्रीलक्षणेन। महाकरुणाविरहिता महाकरुणालक्षणेन। आवेणिकबुद्धधर्म्माविरहिता आवेणिकबुद्धधर्म्मस्वभावेन। स्रोत आपत्तिफलं विरहितं स्रोत आपत्तिफललक्षणेन। सकृदागामिफलं विरहितं सकृदागामिफललक्षणेन। अनागामिफलं विरहितमनागामिलक्षणेन। अर्हत्त्वविरहितमर्हत्त्वलक्षणेन। प्रत्येकबोधिर्व्विरहिता प्रत्येकबोधिलक्षणेन। मार्गाकारज्ञताविरहिता मार्गाकारज्ञतालक्षणेन। सर्व्वाकारज्ञताविरहिता सर्व्वाकारज्ञतालक्षणेन। तथताविरहिता तथतालक्षणेन। अवितथताविरहिता अवितथतालक्षणेन। अनन्यतथताविरहिता अनन्यतथतालक्षणेन। धर्म्मताविरहिता धर्म्मतालक्षणेन। धर्म्मधातुर्व्विरहितो धर्म्मधातुलक्षणेन। धर्म्मस्थितिताविरहिता धर्म्मस्थिततालक्षणेन। धर्म्मनियामताविरहिता धर्म्मनियामतालक्षणेन। भूतकोटिर्व्विरहिता भूतकोटिलक्षणेन। लक्षणस्वभावेनापि लक्षणं विरहितं। स्वभावलक्षणेनापि लक्षणस्वभावोविरहितः।

आह। य आयुष्मन् सुभूते बोधिसत्त्वोमहासत्त्वोऽत्र शिक्षायां शिक्षिष्यते। सनिर्यास्यति सर्व्वाकारज्ञतायां। सुभूतिराह। एवमेवैतदायुष्मञ्छारद्वतीपुत्र एव मेतत्। यो बोधिसत्त्वोमहासत्त्वोऽत्र शिक्षायां शिक्षिष्यते। सनिर्यास्यति सर्व्वाकारज्ञतायां। तत्कस्य हेतोस्तथाह्यायुष्मञ्छारद्वतीपुत्राजाताऽनिर्याताः सर्व्वधर्म्माः। आह। कतम आयुष्मन् सुभूतेऽजाताऽनिर्याताः सर्व्वधर्म्माः। सुभूतिराह। रूपमायुष्मञ्छारद्वतीपुत्र शून्यंरूपेण। तस्य नैव जातिरुपलभ्यते। न निर्याणं। वेदनाशून्यावेदनया तस्य नैव जातिरुपलभ्यते न निर्याणं। संज्ञाशून्यासंज्ञया। तस्यानैव जातिरुपलभ्यते। न निर्याणं। संस्काराः शून्याः। संस्कारैस्तेषां नैवजातिरुपलभ्यते न निर्याणं। विज्ञानं शून्यं विज्ञानेन तस्य नैव जातिरुपलभ्यते न निर्याणं। चक्षुरायुष्मञ्छारद्वतीपुत्र शून्यं चक्षुषा तस्य नैव जातिरुपलभ्यते न निर्याणं। श्रोत्रं शून्यं श्रोत्रेण तस्य नैव जातिरुपलभ्यते न निर्याणं। घ्राणं शून्यं घ्राणेन तस्य नैवजातिरुपलभ्यते न निर्याणं। जिह्वाशून्या जिह्वया तस्या नैवजातिरुपलभ्यते न निर्याणं। कायः शून्यः कायेन तस्य नैव जातिरुपलभ्यते न निर्याणं। मनः शून्यं मनसा तस्य नैव जातिरुपलभ्यते न निर्याणं। रूपमायुष्मञ्छारद्वतीपुत्र शून्यं रूपेण तस्य नैव जातिरुपलभ्यते न निर्याणं। शब्दः शून्यः शब्देन तस्य नैव जातिरुपलभ्यते न निर्याणं। गन्धः शून्योगन्धेन तस्य नैव जातिरुपलभ्यते न निर्याणं। रसः शून्योरसेन तस्य नैव जातिरुपलभ्यते न निर्याणं। स्पर्शः शून्यः स्पर्शेन तस्य नैव जातिरुपलभ्यते न निर्याणं। धर्म्माः शून्याधर्म्मैस्तेषां नैव जातिरुपलभ्यते न निर्याणं।

चक्षुर्विज्ञानमायुष्मञ्छारद्वतीपुत्र शून्यं चक्षुर्विज्ञानेन तस्य नैव जातिरुपलभ्यते न निर्याणं। श्रोत्रविज्ञानं शून्यं श्रोत्रविज्ञानेन तस्य नैव जातिरुपलभ्यते न निर्याणं। घ्राणविज्ञानं शून्यं घ्राणविज्ञानेन तस्य नैव जातिरुपलभ्यते न निर्याणं। जिह्वाविज्ञानं शून्यं जिह्वाविज्ञानेन तस्य नैव जातिरुपलभ्यते न निर्याणं। कायविज्ञानं शून्यं कायविज्ञानेन तस्य नैव जातिरुपलभ्यते न निर्याणं। मनोविज्ञानं शून्यं मनोविज्ञानेन तस्य नैव जातिरुपलभ्यते न निर्याणं।

चक्षुःसंस्पर्श आयुष्मञ्छारद्वतीपुत्र शून्यश्चक्षुःसंस्पर्शेन तस्य नैव जातिरुपलभ्यते न निर्याणं। श्रोत्रसंस्पर्शः शून्यः श्रोत्रसंस्पर्शेन तस्य नैव जातिरुपलभ्यते न निर्याणं। घ्राणसंस्पर्शः शून्यो घ्राणसंस्पर्शेन तस्य नैव जातिरुपलभ्यते न निर्याणं। जिह्वासंस्पर्शः शून्यो जिह्वासंस्पर्शेन तस्य नैवजातिरुपलभ्यते न निर्याणं। कायसंस्पर्शः शून्यः कायसंस्पर्शेन तस्य नैव जातिरुपलभ्यते न निर्याणं। मनः संस्पर्शः शून्यो मनः संस्पर्शेन तस्य नैवजातिरुपलभ्यते न निर्याणं।

चक्षुःसंस्पर्शप्रत्ययवेदनाशून्या चक्षुःसंस्पर्शप्रत्ययवेदनया तस्या नैव जातिरुपलभ्यते न निर्याणं। श्रोत्रसंस्पर्शप्रत्ययवेदना शून्या श्रोत्रसंस्पर्शप्रत्ययवेदनया तस्या नैव जातिरुपलभ्यते न निर्याणं। घ्राणसंस्पर्शप्रत्ययवेदना शून्या घ्राणसंस्पर्शप्रत्ययवेदनया तस्या नैव जातिरुपलभ्यते न निर्याणं। जिह्वासंस्पर्शप्रत्ययवेदना शून्या जिह्वासंस्पर्शप्रत्ययवेदनया तस्यानैव जातिरुपलभ्यते न निर्याणं। कायसंस्पर्शप्रत्ययवेदना शून्या कायसंस्पर्शप्रत्ययवेदनया तस्यानैव जातिरुपलभ्यते न निर्याणं। मनःसंस्पर्शप्रत्ययवेदना शून्या मनःसंस्पर्शप्रत्ययवेदनया तस्यानैव जातिरुपलभ्यते न निर्याणं।

पृथिवीधातुरायुष्मञ्छारद्वतीपुत्र शून्यः पृथिवीधातुना तस्य नैवजातिरूपलभ्यते न निर्याणं। अब्धातुः शून्योऽब्धातुना तस्य नैवजातिरूपलभ्यते न निर्याणं। तेजोधातुः शून्यस्तेजोधातुना तस्य नैवजातिरूपलभ्यते न निर्याणं। वायुधातुः शून्यो वायुधातुना तस्य नैवजातिरूपलभ्यते न निर्याणं। आकाशधातुः शून्य आकाशधातुना तस्य नैवजातिरूपलभ्यते न निर्याणं। विज्ञानधातुः शून्यो विज्ञानधातुना। तस्य नैवजातिरूपलभ्यते न निर्याणं।

अविद्या आयुष्मञ्छारद्वतीपुत्र शून्याऽविद्यया तस्यानैवजातिरूपलभ्यते न निर्याणं। संस्काराः शून्याः संस्कारैः तेषां नैवजातिरूपलभ्यते न निर्याणं। विज्ञानं शून्यं विज्ञानेन तस्य नैवजातिरूपलभ्यते न निर्याणं। नामरूपं शून्यं नामरूपेण तस्य नैवजातिरूपलभ्यते न निर्याणं। षड़ायतनं शून्यं षड़ायतनेन तस्य नैवजातिरूपलभ्यते न निर्याणं। स्पर्शः शून्यः स्पर्शेन तस्य नैवजातिरूपलभ्यते न निर्याणं। वेदनाशून्यावेदनया तस्यानैवजातिरूपलभ्यते न निर्याणं। तृष्णाशून्यातृष्णया तस्यानैवजातिरूपलभ्यते न निर्याणं। उपादानं शून्यमुपादानेन तस्य नैवजातिरूपलभ्यते न निर्याणं। भवः शून्योभवेन तस्य नैवजातिरूपलभ्यते न निर्याणं। जातिः शून्यो जात्या तस्यानैवजातिरूपलभ्यते न निर्याणं। जरामरणं शून्यं जरामरणेन तस्य नैवजातिरूपलभ्यते न निर्याणं।

दानपारमितायुष्मञ्छारद्वतीपुत्र शून्यादानपारमितया तस्या नैवजातिरूपलभ्यते न निर्याणं। शीलपारमिता शून्या शीलपार-

मितया तस्यानैवजातिरुपलभ्यते न निर्याणं। चान्तिपारमिता शून्या चान्तिपारमितया तस्यानैवजातिरुपलभ्यते न निर्याणं। वीर्य्यपारमिता शून्या वीर्य्यपारमितया तस्यानैवजातिरुपलभ्यते न निर्याणं। ध्यानपारमिता शून्या ध्यानपारमितया तस्यानैवजातिरुपलभ्यते न निर्याणं। प्रज्ञापारमिता शून्या प्रज्ञापारमितया तस्यानैवजातिरुपलभ्यते न निर्याणं।

अध्यात्मशून्यतायुष्मञ्छारद्वतीपुत्र शून्याऽध्यात्मशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं। वहिर्द्धाशून्यताशून्या वहिर्द्धाशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं। अध्यात्मवहिर्द्धाशून्यताशून्याऽध्यात्मवहिर्द्धाशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं। शून्यताशून्यता शून्या शून्यताशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं। महाशून्यताशून्या महाशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं। परमार्थशून्यताशून्या परमार्थशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं। संस्कृतशून्यताशून्या संस्कृतशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं। असंस्कृतशून्यताशून्या असंस्कृतशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं। अत्यन्तशून्यताशून्या अत्यन्तशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं। अनवराग्रशून्यताशून्या अनवराग्रशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं। अनवकारशून्यताशून्याऽनवकारशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं। प्रकृतिशून्यताशून्या प्रकृतिशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं। सर्व्वधर्म्मशून्यता शून्या सर्व्वधर्म्मशून्यतया तस्यानैवजातिरुपलभ्यते न निर्याणं।

स्वलक्षणशून्यताशून्या स्वलक्षणशून्यतया तथानैवजातिरूपलभ्यते न निर्याणं । अनुपलम्भशून्यताशून्या अनुपलम्भशून्यतया तथानैवजातिरूपलभ्यते न निर्याणं । अभावशून्यताशून्या अभावशून्यतया तथानैवजातिरूपलभ्यते न निर्याणं । स्वभावशून्यताशून्या स्वभावशून्यतया । तथानैवजातिरूपलभ्यते न निर्याणं । अभावस्वभावशून्यताशून्याऽभावस्वभावशून्यतया तथानैवजातिरूपलभ्यते न निर्याणं ।

स्मृत्युपस्थानान्यायुष्मञ्छारद्वतीपुत्र शून्यानि स्मृत्युपस्थानैः तेषां नैवजातिरूपलभ्यते न निर्याणं । सम्यक्प्रहाणानि शून्यानि सम्यक्प्रहाणैः तेषां नैवजातिरूपलभ्यते न निर्याणं । ऋद्धिपादाः शून्याः ऋद्धिपादैः तेषां नैवजातिरूपलभ्यते न निर्याणं । इन्द्रियाणि शून्यानीन्द्रियैः तेषां नैवजातिरूपलभ्यते न निर्याणं । बलानि शून्यानि बलैः तेषां नैवजातिरूपलभ्यते न निर्याणं । बोध्यङ्गानि शून्यानि बोध्यङ्गैः तेषां नैवजातिरूपलभ्यते न निर्याणं । आर्याष्टाङ्गमार्गः शून्य आर्याष्टाङ्गमार्गेण तस्य नैवजातिरूपलभ्यते न निर्याणं ।

आर्यसत्यान्यायुष्मञ्छारद्वतीपुत्र शून्यान्यार्यसत्यैः तेषां नैवजातिरूपलभ्यते न निर्याणं । ध्यानानि शून्यानि ध्यानैः तेषां नैवजातिरूपलभ्यते न निर्याणं । अप्रमाणानि शून्यान्यप्रमाणैः तेषां नैवजातिरूपलभ्यते न निर्याणं । आरूप्यसमापत्तयः शून्या आरूप्यसमापत्तिभिः तेषां नैवजातिरूपलभ्यते न निर्याणं । अष्टौ विमोक्षाः शून्याविमोक्षैः तेषां नैवजातिरूपलभ्यते न

निर्याणं। नवाऽनुपूर्व्वविहारसमापत्तयः शून्या नवाऽनुपूर्व्वविहारसमापत्तिभिः तासां नैवजातिरुपलभ्यते न निर्याणं। शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि शून्यानि शून्यतानिमित्ताप्रणिहितविमोक्षैः तेषां नैवजातिरुपलभ्यते न निर्याणं। अभिज्ञाः शून्या अभिज्ञाभिः तासां नैवजातिरुपलभ्यते न निर्याणं। समाधयः शून्याः समाधिभिः तेषां नैवजातिरुपलभ्यते न निर्याणं। धारणीमुखानि शून्यानि धारणीमुखैः तेषां नैवजातिरुपलभ्यते न निर्याणं। दशतथागतबलानि शून्यानि दशतथागतबलैः तेषां नैवजातिरुपलभ्यते न निर्याणं। चत्वारिवैशारद्यानि शून्यानि वैशारद्यैः तेषां नैवजातिरुपलभ्यते न निर्याणं। चतस्रः प्रतिसम्विदः शून्याः प्रतिसम्विद्भिः तासां नैवजातिरुपलभ्यते न निर्याणं। महामैत्रीशून्या महामैत्र्या तस्यानैवजातिरुपलभ्यते न निर्याणं। महाकरुणाशून्या महाकरुणया तस्यानैवजातिरुपलभ्यते न निर्याणं। अष्टादशावेणिकाबुद्धधर्माः शून्या आवेणिक बुद्धधर्मैः तेषां नैवजातिरुपलभ्यते न निर्याणं।

स्रोत आपत्तिफलमायुष्मञ्छारद्वतीपुत्र शून्यं स्रोत आपत्तिफलेन तस्य नैवजातिरुपलभ्यते न निर्याणं। सकृदागामिफलं शून्यं सकृदागमिफलेन तस्य नैवजातिरुपलभ्यते न निर्याणं। अनागामिफलं शून्यमनागामिफलेन तस्य नैवजातिरुपलभ्यते न निर्याणं। अर्हत्त्वं शून्यमर्हत्त्वेन तस्य नैवजातिरुपलभ्यते न निर्याणं। प्रत्येकबोधिः शून्या प्रत्येकबोध्या। तस्यानैवजातिरुपलभ्यते न निर्याणं।

तथतायुष्मञ्छारद्वतीपुत्र शून्या तथतया। तस्यानैवजातिरुप-लभ्यते न निर्याणं। अवितथताशून्याऽवितथतया। तस्यानैवजाति-रुपलभ्यते न निर्याणं। अनन्यतथतायुष्मञ्छारद्वतीपुत्र शून्याऽनन्य-तथतया तस्यानैवजातिरुपलभ्यते न निर्याणं। धर्मताशून्या धर्मतया तस्यानैवजातिरुपलभ्यते न निर्याणं। धर्मधातुः शून्यो धर्मधातुना तस्य नैवजातिरुपलभ्यते न निर्याणं। धर्मस्थितिताशून्या धर्मस्थितितया तस्यानैवजातिरुपलभ्यते न निर्याणं। धर्मनिया-मताशून्या धर्मनियामतया तस्यानैवजातिरुपलभ्यते न निर्याणं। भूतकोटिः शून्या भूतकोट्या तस्यानैवजातिरुपलभ्यते न निर्याणं।

एवमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताया अभ्यासीभवति। स यथा यथा सर्व्वाकार-ज्ञताया अभ्यासी भवति स तथा तथा कायपरिशुद्धिं वाक्परिशुद्धिं चित्तपरिशुद्धिं लक्षणपरिशुद्धिञ्चाधिगच्छति। यथा यथा काय-परिशुद्धिं वाक्परिशुद्धिं चित्तपरिशुद्धिञ्चाधिगच्छति। स तथा-तया बोधिसत्त्वोमहासत्त्वो रागसहगतं चित्त नोत्पादयति। द्वेष सहगतं मोहसहगतं मानसहगतं मायाशाठ्यसहगतं ईर्ष्यामात्सर्य्य-सहगतं लोभसहगतं दृष्टिसहगतं चित्त नोत्पादयति। स रागचि-त्तमुत्पाद्य द्वेषमोहमायाशाठ्येर्ष्या मात्सर्य्यलोभसहगतं चित्तमुत्पादयन् न(?) जातुमातुः कुक्षावुपपद्यते। सततसमितमुपपादुको भवति। न च कदाचिद्पायेषूपपद्यते। अन्यत्र सत्त्वपरिपाकहेतोः सर्व्वबुद्धक्षे-त्रेण बुद्धक्षेत्रं संक्रामति। सत्त्वान् परिपाचयन् न जातुबुद्धैर्भगवद्भि-र्व्विरहितो भवति। यावदनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धः।

तथाप्यस्मिन्नायुष्मन् शारद्वतीपुत्र बोधिसत्त्वेन महासत्त्वेनेमां गुणानुशं-सां प्रतिलब्धुकामेनेयं प्रज्ञापारमितायामभियुक्तरूपेण चरितव्यं। एवं ह्यायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् स्वभासीभवति सर्वाकारज्ञतायां ॥ ० ॥

शतसाहस्र्याः प्रज्ञापारमितायाश्चतुर्थः परिवर्त्तः।

———

## अथ पञ्चमः परिवर्त्तः ।



अथायुष्मान् सुभूतिर्भगवन्तमेतदवोचत् । सचेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपायकौशलेन प्रज्ञापारमितायां चरन् रूपे चरति निमित्ते चरति । स चेद् वेदनायां चरति निमित्ते चरति । स चेत् संज्ञायां चरति निमित्ते चरति । स चेत् संस्कारेषु चरति निमित्ते चरति । स चेद्विज्ञाने चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपायकौशलेन प्रज्ञापारमितायां चरन् रूप नित्यमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् रूपमनित्यमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् रूपं सुखमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वो ऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् रूपं दुःखमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् रूपमात्मेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपायकौशलेन प्रज्ञापारमितायां चरन् रूपमनात्मेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् रूपं शान्तमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहा-

मत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् रूपमशान्तमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् रूपं विविक्तमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् रूपमविविक्तमिति चरति निमित्ते चरति ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् वेदनानित्येति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् वेदनाऽनित्येति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् वेदनासुखेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् वेदनां दुःखेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् वेदनां शान्तेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् वेदनामशान्तेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वो महासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् वेदनां विविक्तेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् वेदनामविविक्तेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संज्ञानित्येति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन

प्रज्ञापारमितायां चरन् संज्ञा अनित्येति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संज्ञासुखेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संज्ञादुःखेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संज्ञा आत्मेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संज्ञा अनात्मिकेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संज्ञाशान्तेति चरति निमित्ते चरति स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संज्ञाऽशान्तेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संज्ञाविविक्तेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संज्ञाऽविविक्तेति चरति निमित्ते चरति ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संस्कारानित्या इति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संस्कारा अनित्या इति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संस्कारा सुखा इति चरति निमित्ते चरति । स चेद्भगवन् बोधि-

चरन् चक्षुः शान्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् चक्षुरशान्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् चक्षुर्विविक्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् चक्षुरविविक्तमिति चरति निमित्ते चरति।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रं नित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रमनित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रं सुखमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वो महासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रं दुःखमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वो ऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रमात्मेति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रमनात्मेति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रं शान्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रमशान्तमिति चरति निमित्ते चरति। स

चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोचं विविक्तमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोचमविविक्तमिति चरति निमित्ते चरति ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणं नित्यमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणमनित्यमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणं सुखमिति चरति निमित्ते चरति । स चद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन घ्राणं दुःखमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणमात्मेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणमनात्मेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणं शान्तमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापापमितायां चरन् घ्राणमशान्तमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणं विविक्तमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणमविविक्तमिति चरति निमित्ते चरति ।

सत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संस्कारा-दुःखा इति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहा-सत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संस्कारा आत्मान इति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वो-ऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संस्काराः अनात्मान इति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संस्काराः शान्ता इति चरति निमित्ते चरति। स चेद्भगवन बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संस्काराः अशान्ता इति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञा-पारमितायां चरन् संस्काराविविक्ता इति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् संस्कारा अविविक्ता इति चरति निमित्ते चरति।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापार-मितायां चरन् विज्ञानं नित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् विज्ञानमनित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् विज्ञानं सुखमिति चरति निमित्ते चरति। स चेद्भगवन् बोधि-सत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् विज्ञानं दुःखमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहा-सत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् विज्ञानमात्मेति

चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् विज्ञानमनात्मेति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञा-पारमितायां चरन् विज्ञानं शान्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् विज्ञानमशान्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् विज्ञानं विविक्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् विज्ञानमविविक्तमिति चरति निमित्ते चरति।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापार-मितायां चरन् चक्षुर्नित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् चक्षुरनित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधि-सत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् चक्षुः सुखमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहा-सत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् चक्षुर्दुःखमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् चक्षुरात्मेति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञा-पारमितायां चरन् चक्षुरनात्मेति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां

चरन् चक्षुः शान्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् चक्षुरशान्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् चक्षुर्विविक्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वो-महासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् चक्षुरविविक्त-मिति चरति निमित्ते चरति।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापा-रमितायां चरन् श्रोत्रं नित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रमनित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रं सुखमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वो महासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रं दुःख-मिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वो ऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रमात्मेति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौश-लेन प्रज्ञापारमितायां चरन् श्रोत्रमनात्मेति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञा-पारमितायां चरन् श्रोत्रं शान्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमि-तायां चरन् श्रोत्रमशान्तमिति चरति निमित्ते चरति। स

चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रं विविक्तमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् श्रोत्रमविविक्तमिति चरति निमित्ते चरति ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणं नित्यमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणमनित्यमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणं सुखमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन घ्राणं दुःखमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणमात्मेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणमनात्मेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणं शान्तमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापापमितायां चरन् घ्राणमशान्तमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणं विविक्तमिति चरति निमिते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् घ्राणमविविक्तमिति चरति निमित्ते चरति ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशल्येन प्रज्ञापारमितायां चरन् शिक्षानित्येति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शिक्षाऽनित्येति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शिक्षासुखमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शिक्षादुःखमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शिक्षा आत्मेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शिक्षाऽनात्मेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शिक्षाशान्तेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शिक्षाऽशान्तेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शिक्षाविविक्तेति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शिक्षाऽविविक्तेति चरति निमित्ते चरति ।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् कायोनित्यमिति चरति निमित्ते चरति । स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां

चरन् कायोऽनित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् कायः सुखमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् कायो-दुःखमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वो-महासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् काय आत्मेति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनु-पाय कौशलेन प्रज्ञापारमितायां चरन् कायोऽनात्मेति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् कायः शान्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् कायोऽशान्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौ-शलेन प्रज्ञापारमितायां चरन् कायोविविक्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् कायोऽविविक्तमिति चरति निमित्ते चरति।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापार-मितायां चरन् मनोनित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् मनोऽनित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन्

निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शब्दः शान्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शब्दोऽशान्त इति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शब्दोविविक्तमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् शब्दोऽविविक्तमिति चरति निमित्ते चरति।

स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां* चरन् गन्धोनित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् गन्धोऽनित्यमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् गन्धः सुखमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् गन्धोदुःखमिति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् गन्ध आत्मेति चरति निमित्ते चरति। स चेद्भगवन् बोधिसत्त्वोमहासत्त्वोऽनुपाय कौशलेन प्रज्ञापारमितायां चरन् गन्धोऽनात्मेति चरति

* आदर्शपुस्तके गन्धादिशब्दानां केषाञ्चित् द्वितीयान्तत्वं केषाञ्चित् प्रथमान्तत्वं दृश्यते।

स्पर्शः। न चान्यच शून्यतायाः स्पर्शः। नान्यत्र स्पर्शाच्छून्यता। शून्यतैव स्पर्शः। स्पर्श एव शून्यता। *या वेदना शून्यता न सा वेदना। न चान्यच शून्यतायाः वेदना। नान्यत्र वेदनायाः शून्यता। शून्यतैव वेदना। वेदनैव शून्यता। या तृष्णा शून्यता न सा तृष्णा। न चान्यच शून्यतायास्तृष्णा। नान्यच तृष्णायाः शून्यता। शून्यतैव तृष्णा। तृष्णैव शून्यता। या उपादानशून्यता न तदुपादानं। न चान्यच शून्यताया उपादानं। नान्यचोपादानाच्छून्यता। शून्यतैवोपादानं। उपादानमेव शून्यता। या भवशून्यता न स भवः। न चान्यच शून्यतायाः भवः। नान्यत्र भवाच्छून्यता। शून्यतैव भवः। भव एव शून्यता। या जाति शून्यता न सा जातिः। न चान्यच शून्यतायाः जातिः। नान्यच जातेः शून्यता। शून्यतैव जातिः। जातिरेव शून्यता। या जरामरणशून्यता न तज्जरामरणं। न चान्यच शून्यतायाः जरामरणं। नान्यच जरामरणाच्छून्यता। शून्यतैव जरामरण। जरामरणमेव शून्यता।

या दानपारमिता शून्यता न सा दानपारमिता। न चान्यच शून्यतायाः दानपारमिता। नान्यत्र दानपारमितायाः शून्यता। शून्यतैव दानपारमिता। दानपारमितैव शून्यता। या शीलपारमितायाः शून्यता न सा शीलपारमिता। न चान्यत्र शून्यतायाः शीलपारमिता। नान्यच शीलपारमितायाः शून्यता। शून्यतैव

* क, ग, पुस्तकेषु पाठ।

शून्यता । शून्यतैवाऽब्धातुः । अब्धातुरेव शून्यता । या तेजोधातु शून्यता न स तेजोधातुः । न चाऽन्यत्र शून्यतायास्तेजोधातुः । नाऽन्यत्र तेजोधातोः शून्यता । शून्यतैव तेजोधातुः । तेजोधातुरेव शून्यता । या वायुधातुशून्यता न स वायुधातुः । न चाऽन्यत्र शून्यतायाः वायुधातुः । नाऽन्यत्र वायुधातोः शून्यता । शून्यतैव वायुधातुः । वायुधातुरेव शून्यता । या आकाशधातु शून्यता न स आकाशधातुः । न चाऽन्यत्र शून्यताया आकाशधातुः । नाऽन्यत्राऽऽकाशधातोः शून्यता । शून्यतैवाऽऽकाशधातुः । आकाशधातुरेव शून्यता ।

या विज्ञानधातु शून्यता न स विज्ञानधातुः । न चाऽन्यत्र शून्यतायाः विज्ञानधातुः । नाऽन्यत्र विज्ञानधातोः शून्यता । शून्यतैव विज्ञानधातुः । विज्ञानधातुरेव शून्यता । या ऽविद्याशून्यता न सा ऽविद्या । न चाऽन्यत्र शून्यताया अविद्या । नाऽन्यत्राऽविद्यायाः शून्यता । शून्यतैवाऽविद्या । अविद्यैव शून्यता । या संस्कारशून्यता न ते संस्काराः । न चाऽन्यत्र शून्यतायाः संस्काराः । नाऽन्यत्र संस्कारेभ्यः शून्यता । शून्यतैव संस्काराः । संस्कारा एव शून्यता । या विज्ञानशून्यता न तद्विज्ञानं । न चाऽन्यत्र शून्यतायाः विज्ञानं । नाऽन्यत्र विज्ञानाच्छून्यता । शून्यतैव विज्ञानं । विज्ञानमेव शून्यता ।

या नामरूपशून्यता न तन्नामरूपं । न चाऽन्यत्र शून्यतायाः नामरूपं । नाऽन्यत्र नामरूपाच्छून्यता । शून्यतैव नामरूपं । नामरूपमेव शून्यता । या षडायतनशून्यता न तत्षडायतनं । न चाऽन्यत्र शून्यतायाः षडायतनं । नाऽन्यत्र षडायतनाच्छून्यता । शून्यतैव षडायतनं । [illegible] शून्यता । या स्पर्श शून्यता न स

स्पर्शः। न चाऽन्यत्र शून्यतायाः स्पर्शः। नाऽन्यत्र स्पर्शाच्छून्यता। शून्यतैव स्पर्शः। स्पर्श एव शून्यता। *या वेदना शून्यता न सा वेदना। न चाऽन्यत्र शून्यतायाः वेदना। नाऽन्यत्र वेदनायाः शून्यता। शून्यतैव वेदना। वेदनैव शून्यता। या तृष्णा शून्यता न सा तृष्णा। न चाऽन्यत्र शून्यतायास्तृष्णा। नाऽन्यत्र तृष्णायाः शून्यता। शून्यतैव तृष्णा। तृष्णैव शून्यता। या उपादानशून्यता न तदुपादानं। न चाऽन्यत्र शून्यताया उपादानं। नाऽन्यत्रो-पादानाच्छून्यता। शून्यतैवोपादानं। उपादानमेव शून्यता। या भवशून्यता न स भवः। न चाऽन्यत्र शून्यतायाः भवः। नाऽन्यत्र भवाच्छून्यता। शून्यतैव भवः। भव एव शून्यता। या जाति शून्यता न सा जातिः। न चाऽन्यत्र शून्यतायाः जातिः। नाऽन्यत्र जातेः शून्यता। शून्यतैव जातिः। जातिरेव शून्यता। या जरामरणशून्यता न तज्जरामरणं। न चाऽन्यत्र शून्यतायाः जरामरणं। नाऽन्यत्र जरामरणाच्छून्यता। शून्यतैव जरामरणं। जरामरणमेव शून्यता।

या दानपारमिता शून्यता न सा दानपारमिता। न चाऽन्यत्र शून्यतायाः दानपारमिता। नाऽन्यत्र दानपारमितायाः शून्यता। शून्यतैव दानपारमिता। दानपारमितैव शून्यता। या शीलपार-मितायाः शून्यता न सा शीलपारमिता। न चाऽन्यत्र शून्यतायाः शीलपारमिता। नाऽन्यत्र शीलपारमितायाः शून्यता। शून्यतैव

---

* क, ग, पुस्तकेषु पाठः।

चक्षुर्विज्ञानधातुरेव शून्यता । या श्रोत्रधातु शून्यता न स श्रोत्र-धातु । न चाऽन्यत्र शून्यताया श्रोत्रधातु । नाऽन्यत्र श्रोत्रधातौ शून्यता । शून्यतैव श्रोत्रधातु । श्रोत्रधातुरेव शून्यता । या शब्द-धातुशून्यता न स शब्दधातु । न चाऽन्यत्र शून्यताया शब्दधातु । नाऽयत्र शब्दधातौ शून्यता । शून्यतैव शब्दधातु । शब्दधातुरेव शून्यता । या श्रोत्रविज्ञानधातु शून्यता । न स श्रोत्रविज्ञान-धातु । न चाऽन्यत्र शून्यताया श्रोत्रविज्ञानधातु । नाऽन्यत्र श्रोत्रविज्ञानधातौ शून्यता । शून्यतैव श्रोत्रविज्ञानधातु । श्रोत्रविज्ञानधातुरेव शून्यता । या घ्राणधातुशून्यता न स घ्राण-धातु । न चाऽन्यत्र शून्यताया घ्राणधातु । नाऽन्यत्र घ्राणधातौ शून्यता । शून्यतैव घ्राणधातु । घ्राणधातुरेव शून्यता । या गन्धधातु शून्यता न स गन्धधातु । न चाऽन्यत्र शून्यताया गन्धधातु । नाऽन्यत्र गन्धधातौ शून्यता । शून्यतैव गन्धधातु । गन्धधातुरेव शून्यता । या घ्राणविज्ञानधातु शून्यता । न स घ्राणविज्ञानधातु । न चाऽन्यत्र शून्यताया घ्राणविज्ञानधातु । नाऽन्यत्र घ्राणविज्ञान-धातौ शून्यता । शून्यतैव घ्राणविज्ञानधातु । घ्राणविज्ञानधातुरेव शून्यता । या जिह्वाधातुशून्यता न स जिह्वाधातु । न चाऽन्यत्र शून्यताया जिह्वाधातु । नाऽन्यत्र जिह्वाधातौ शून्यता । शून्यतैव जिह्वाधातु । जिह्वाधातुरेव शून्यता । या रसधातु शून्यता । न स रसधातु । न चाऽन्यत्र शून्यताया रसधातु । नाऽन्यत्र रसधातौ शून्यता । शून्यतैव रसधातु । रसधातुरेव शून्यता । या जिह्वा-विज्ञानधातुशून्यता न स जिह्वाविज्ञानधातु । न चाऽन्यत्र शून्यताया

जिह्वाविज्ञानधातुः । नाऽन्यत्र जिह्वाविज्ञानधातोः शून्यता । शून्यतैव जिह्वाविज्ञानधातुः । जिह्वाविज्ञानधातुरेव शून्यता । या कायधातुशून्यता न स कायधातुः । न चाऽन्यत्र शून्यतायाः कायधातुः । नाऽन्यत्र कायधातोः शून्यता । शून्यतैव कायधातुः । कायधातुरेव शून्यता । या स्पर्शधातु शून्यता न स स्पर्शधातुः । न चाऽन्यत्र शून्यतायाः स्पर्शधातुः । नाऽन्यत्र स्पर्शधातोः शून्यता । शून्यतैव स्पर्शधातुः । स्पर्शधातुरेवशून्यता ।

या कायविज्ञानधातुशून्यता न स कायविज्ञानधातुः । न चाऽन्यत्र शून्यतायाः कायविज्ञानधातुः । नाऽन्यत्र कायविज्ञानधातोः शून्यता । शून्यतैव कायविज्ञानधातुः । कायविज्ञानधातुरेव शून्यता । या मनोधातु शून्यता न स मनोधातुः । न चाऽन्यत्र शून्यतायाः मनोधातुः । नाऽन्यत्र मनोधातोः शून्यता । शून्यतैव मनोधातुः । मनोधातुरेव शून्यता । या धर्म्मधातुशून्यता न स धर्म्मधातु । न चाऽन्यत्र शून्यतायाः धर्म्मधातुः । नाऽन्यत्र धर्म्मधातोः शून्यता । शून्यतैव धर्म्मधातुः । धर्म्मधातुरेव शून्यता । या मनोविज्ञानधातुशून्यता न स मनोविज्ञानधातुः । न चाऽन्यत्र शून्यतायाः मनोविज्ञानधातुः । नाऽन्यत्र मनोविज्ञानधातोः शून्यता । शून्यतैव मनोविज्ञानधातुः । मनोविज्ञानधातुरेव शून्यता ।

या पृथिवीधातुशून्यता न स पृथिवीधातुः । न चाऽन्यत्र शून्यतायाः पृथिवीधातुः । नाऽन्यत्र पृथिवीधातोः शून्यता । शून्यतैव पृथिवीधातुः । पृथिवीधातुरेव शून्यता । या ऽब्धातु शून्यता न माऽब्धातुः । न चाऽन्यत्र शून्यताया अब्धातुः । नाऽन्य

शीलपारमिता । शीलपारमितैव शून्यता । या क्षान्तिपारमिता शून्यता न सा क्षान्तिपारमिता । न चाऽन्यत्र शून्यतायाः क्षान्तिपारमिता । नाऽन्यत्र क्षान्तिपारमितायाः शून्यता । शून्यतैव क्षान्तिपारमिता । क्षान्तिपारमितैव शून्यता । या वीर्य्यपारमिता शून्यता न सा वीर्य्यपारमिता । न चाऽन्यत्र शून्यतायाः वीर्य्यपारमिता । नाऽन्यत्र वीर्य्यपारमितायाः शून्यता । शून्यतैव वीर्य्यपारमिता । वीर्य्यपारमितैव शून्यता । या ध्यानपारमिता शून्यता न सा ध्यानपारमिता । न चाऽन्यत्र शून्यतायाः ध्यानपारमिता । नाऽन्यत्र ध्यानपारमितायाः शून्यता । शून्यतैव ध्यानपारमिता । ध्यानपारमितैव शून्यता । या प्रज्ञापारमिता शून्यता न सा प्रज्ञापारमिता । न चाऽन्यत्र शून्यतायाः प्रज्ञापारमिता । नाऽन्यत्र प्रज्ञापारमितायाः शून्यता । शून्यतैव प्रज्ञापारमिता । प्रज्ञापारमितैव शून्यता ।

या अध्यात्मशून्यतायाः शून्यता न सा अध्यात्मशून्यता । न चाऽन्यत्र शून्यताया अध्यात्मशून्यता । नाऽन्यत्राध्यात्मशून्यतायाः शून्यता । शून्यतैवाऽध्यात्मशून्यता । अध्यात्मशून्यतैव शून्यता । या बहिर्द्धाशून्यतायाः शून्यता न सा बहिर्द्धाशून्यता । न चाऽन्यत्र शून्यतायाः बहिर्द्धाशून्यता । नाऽन्यत्र बहिर्द्धाशून्यतायाः शून्यता । शून्यतैव बहिर्द्धाशून्यता । बहिर्द्धाशून्यतैव शून्यता । या अध्यात्मबहिर्द्धाशून्यतायाः शून्यता न सा अध्यात्मबहिर्द्धाशून्यता । न चाऽन्यत्र शून्यताया अध्यात्मबहिर्द्धाशून्यता । नाऽन्यत्राऽध्यात्मबहिर्द्धाशून्यतायाः शून्यता । शून्यतैवाऽध्यात्मबहिर्द्धाशून्यता ।

अध्यात्मबहिर्द्धाशून्यतैव शून्यता। या शून्यताशून्यतायाः शून्यता न सा शून्यताशून्यता। न चान्यत्र शून्यतायाः शून्यताशून्यता। नाऽन्यत्र शून्यता शून्यतायाः शून्यता। शून्यतैव शून्यताशून्यता। शून्यताशून्यतैव शून्यता। या महाशून्यतायाः शून्यता न सा महाशून्यता। न चाऽन्यत्र शून्यतायाः महाशून्यता। नाऽन्यत्र महाशून्यतायाः शून्यता। शून्यतैव महाशून्यता। महाशून्यतैव शून्यता। या परमार्थशून्यतायाः शून्यता न सा परमार्थशून्यता। न चाऽन्यत्र शून्यतायाः परमार्थशून्यता। नाऽन्यत्र परमार्थशून्यतायाः शून्यता। शून्यतैव परमार्थशून्यता। परमार्थशून्यतैव शून्यता। या संस्कृतशून्यतायाः शून्यता। न सा संस्कृतशून्यता। न चाऽन्यत्र शून्यतायाः संस्कृतशून्यता। नाऽन्यत्र संस्कृतशून्यतायाः शून्यता। शून्यतैव संस्कृतशून्यता। संस्कृतशून्यतैव शून्यता। या असंस्कृतशून्यतायाः शून्यता न सा असंस्कृतशून्यता। न चाऽन्यत्र शून्यताया असंस्कृतशून्यता। नाऽन्यत्राऽसंस्कृतशून्यतायाः शून्यता। शून्यतैवाऽसंस्कृतशून्यता। असंस्कृतशून्यतैव शून्यता। या अत्यन्तशून्यतायाः शून्यता। न सा अत्यन्तशून्यता। न चाऽन्यत्र शून्यतायाः अत्यन्तशून्यता। नाऽन्यत्राऽत्यन्तशून्यतायाः शून्यता। शून्यतैवाऽत्यन्तशून्यता। अत्यन्तशून्यतैव शून्यता। याऽनवराग्रशून्यतायाः शून्यता। न साऽनवराग्रशून्यता। न चाऽन्यत्र शून्यताया अनवराग्रशून्यता। नाऽन्यत्राऽनवराग्रशून्यतायाः शून्यता। शून्यतैवाऽनवराग्रशून्यता। या ऽनवकारशून्यतायाः शून्यता। न सा ऽनवकार शून्यता। न चाऽन्यत्र शून्यताया अनवकार शून्यता। नाऽन्यत्राऽनवकार-

शून्यतायाः शून्यता । शून्यतैवाऽनवकार शून्यता । अनवकारशून्यतैव शून्यता । या प्रकृतिशून्यतायाः शून्यता । न सा प्रकृतिशून्यता । न चाऽन्यत्र शून्यतायाः प्रकृतिशून्यता । नाऽन्यत्र प्रकृतिशून्यतायाः शून्यता । शून्यतैव प्रकृतिशून्यता । प्रकृतिशून्यतैव शून्यता । या सर्व्वधर्म्मशून्यतायाः शून्यता न सा सर्व्वधर्म्मशून्यता । न चाऽन्यत्र शून्यतायाः सर्व्वधर्म्मशून्यता । नाऽन्यत्र सर्व्वधर्म्मशून्यतायाः शून्यता । शून्यतैव सर्व्वधर्म्मशून्यता । सर्व्वधर्म्मशून्यतैव शून्यता । या स्वलक्षण-शून्यतायाः शून्यता न सा स्वलक्षणशून्यता । न चाऽन्यत्र शून्यतायाः स्वलक्षणशून्यता । नाऽन्यत्र स्वलक्षणशून्यतायाः शून्यता । शून्यतैव स्वलक्षणशून्यता । स्वलक्षणशून्यतैव शून्यता । या ऽनुपलम्भशून्यतायाः शून्यता न सा अनुपलम्भ शून्यता । न चाऽन्यत्र शून्यताया अनुपलम्भशून्यता । नाऽन्यत्राऽनुपलम्भशून्यतायाः शून्यता । शून्य-तैवानुपलम्भशून्यता । अनुपलम्भशून्यतैव शून्यता । या ऽभावशून्य-तायाः शून्यता न सा ऽभावशून्यता । न चाऽन्यत्र शून्यताया अभावशून्यता । नाऽन्यत्राऽभावशून्यतायाः शून्यता । शून्यतैवाऽभाव-शून्यता । अभावशून्यतैव शून्यता । या स्वभावशून्यतायाः शून्यता न सा स्वभावशून्यता । न चाऽन्यत्र शून्यतायाः स्वभावशून्यता । नाऽन्यत्र स्वभावशून्यतायाः शून्यता । शून्यतैव स्वभावशून्यता । स्वभावशून्यतैव शून्यता । या ऽभावस्वभावशून्यता न सा ऽभाव-स्वभावशून्यता । न चाऽन्यत्र शून्यताया अभावस्वभावशून्यता । नाऽन्यत्राऽभावस्वभावशून्यतायाः शून्यता । शून्यतैवाऽभावस्वभाव-शून्यता । अभावस्वभावशून्यतैव शून्यता ।

या चतुर्णां स्मृत्युपस्थानानां शून्यता न तानि स्मृत्युपस्थानानि। न चाऽन्यत्र शून्यतायाः स्मृत्युपस्थानानि। नाऽन्यत्र स्मृत्युपस्थानेभ्यः शून्यता। शून्यतैव स्मृत्युपस्थानानि। स्मृत्युपस्थानान्येव शून्यता। या चतुर्णां सम्यक्प्रहाणानां शून्यता न तानि सम्यक्प्रहाणानि। न चाऽन्यत्र शून्यतायाः सम्यक्प्रहाणानि। नाऽन्यत्र सम्यक्प्रहाणेभ्यः शून्यता। शून्यतैव सम्यक्प्रहाणानि। सम्यक्प्रहाणान्येव शून्यता। या चतुर्णामृद्धिपादानां शून्यता न ते ऋद्धिपादाः। न चाऽन्यत्र शून्यताया ऋद्धिपादाः। नाऽन्यत्र ऋद्धिपादेभ्यः शून्यता। शून्यतैव ऋद्धिपादाः। ऋद्धिपादा एव शून्यता। या पञ्चानामिन्द्रियाणां शून्यता। न तानीन्द्रियाणि। न चाऽन्यत्र शून्यताया इन्द्रियाणि। नाऽन्यत्रेन्द्रियेभ्यः शून्यता। शून्यतैवेन्द्रियाणि। इन्द्रियाण्येव शून्यता। या पञ्चानां बलानां शून्यता न तानि बलानि। न चाऽन्यत्र शून्यतायाः बलानि। नाऽन्यत्र बलेभ्य, शून्यता। शून्यतैव बलानि। बलान्येव शून्यता। या सप्तानां बोध्यङ्गानां शून्यता। न तानि बोध्यङ्गानि। न चाऽन्यत्र शून्यतायाः बोध्यङ्गानि। नाऽन्यत्र बोध्यङ्गेभ्यः शून्यता। शून्यतैव बोध्यङ्गानि। बोध्यङ्गान्येव शून्यता।

या आर्य्याष्टाङ्गमार्गस्य शून्यता न स आर्य्याष्टाङ्गमार्गः। न चाऽन्यत्र शून्यताया आर्य्याष्टाङ्गमार्गः। नाऽन्यत्राऽर्य्याष्टाङ्गमार्गाच्छून्यता। शून्यतैवाऽर्य्याष्टाङ्गमार्गः। आर्य्याष्टाङ्गमार्ग एव शून्यता। या चतुर्णामार्य्यसत्यानां शून्यता। न तन्यार्य्यसत्यानि। न चाऽन्यत्र शून्यताया आर्य्यसत्यानि। नाऽन्यत्रार्य्यसत्येभ्य एव शून्यता। शून्यतैवार्य्यसत्यानि। आर्य्यसत्यान्येव शून्यता। या चतुर्णां ध्यानानां

शून्यता न तानि ध्यानानि। न चाऽन्यत्र ध्यानेभ्यः शून्यता। नाऽन्यत्र ध्यानेभ्यः शून्यता। शून्यतैव ध्यानानि। ध्यानान्येव शून्यता। या चतुर्णामप्रमाणानां शून्यता न तान्यप्रमाणानि। न चाऽन्यत्र शून्यताया अप्रमाणानि। नाऽन्यत्राऽप्रमाणेभ्यः शून्यता। शून्यतैवाऽप्रमाणानि। अप्रमाणान्येव शून्यता। या चतसृणामारूप्यसमापत्तीनां शून्यता न ता आरूप्यसमापत्तयः। न चाऽन्यत्र शून्यताया आरूप्यसमापत्तयः। नाऽन्यत्राऽरूप्यसमापत्तिभ्यः शून्यता। शून्यतैवाऽरूप्यसमापत्तयः। आरूप्यसमापत्तय एव शून्यता। या अष्टानां विमोक्षाणां शून्यता। न ते विमक्षाः। न चाऽन्यत्र शून्यतायाः विमोक्षाः। नाऽन्यत्र विमोक्षेभ्यः शून्यता। शून्यतैव विमोक्षाः। विमोक्षाएव शून्यता। या नवानुपूर्व्वविहारसमापत्तीनां शून्यता न ता अनुपूर्व्वविहारसमापत्तयः। न चाऽन्यत्र शून्यताया अनुपूर्व्वविहारसमापत्तयः। नाऽन्यत्रानुपूर्व्वविहारसमापत्तिभ्यः शून्यता। शून्यतैवाऽनुपूर्व्वविहारसमापत्तयः। आनुपूर्व्वविहारसमापत्तय एव शून्यता।

या शून्यता निमित्ताप्रणिहितविमोक्षमुखानां शून्यता। न तानि शून्यता निमित्ताप्रणिहितविमोक्षमुखानि। न चाऽन्यत्र शून्यतायाः शून्यता निमित्ताप्रणिहितविमोक्षमुखानि। नाऽन्यत्र शून्यता निमित्ताप्रणिहितविमोक्षमुखेभ्यः शून्यता। शून्यतैव शून्यता निमित्ताप्रणिहितविमोक्षमुखानि। शून्यता निमित्ताप्रणिहितविमोक्षमुखान्येव शून्यता। या पञ्चानामभिज्ञानां शून्यता न ता अभिज्ञाः। न चाऽन्यत्र शून्यताया अभिज्ञाः। नाऽन्यत्राभिज्ञाभ्यः शून्यता। शून्यतैवाऽभिज्ञाः। अभिज्ञा एव शून्यता। या समाधीनां

शून्यता न ते समाधयः। न चान्यत्र शून्यतायाः समाधयः। नान्यत्र समाधिभ्यः शून्यता। शून्यतैव समाधयः। समाधय एव शून्यता। या धारणीमुखानां शून्यता न तानि धारणीमुखानि। न चान्यत्र शून्यतायाः धारणीमुखानि। नान्यत्र धारणीमुखेभ्यः शून्यता। शून्यतैव धारणीमुखानि। धारणीमुखान्येव शून्यता। या दशानां तथागतबलानां शून्यता न तानि तथागतबलानि। न चान्यत्र शून्यतायाः तथागतबलानि। नान्यत्र तथागतबलेभ्यः शून्यता। शून्यतैव तथागतबलानि। तथागतबलान्येव शून्यता। या चतुर्णां वैशारद्यानां शून्यता न तानि वैशारद्यानि। न चान्यत्र शून्यतायाः वैशारद्यानि। नान्यत्र वैशारद्येभ्यः शून्यता। शून्यतैव वैशारद्यानि। वैशारद्यान्येव शून्यता। या चतसृणां प्रतिसम्विदां शून्यता न ताः प्रतिसम्विदः। न चान्यत्र शून्यतायाः प्रतिसम्विदः। नान्यत्र प्रतिसम्विदः शून्यता। शून्यतैव प्रतिसम्विदः। प्रतिसम्विद एव शून्यता। या महामैत्र्याः शून्यता न सा महामैत्री। न चान्यत्र शून्यतायाः महामैत्री। नान्यत्र महामैत्र्याः शून्यता। शून्यतैव महामैत्री। महामैत्र्येव शून्यता। या महाकरुणायाः शून्यता न सा महाकरुणा। न चान्यत्र शून्यतायाः महाकरुणा। नान्यत्र महाकरुणायाः शून्यता। शून्यतैव महाकरुणा। महाकरुणैव शून्यता। या ऽष्टादशानामावेणिकबुद्धधर्म्माणां शून्यता। न ते आवेणिकबुद्धधर्म्माः। न चान्यत्र शून्यताया आवेणिकबुद्धधर्म्माः। नान्यत्रावेणिकबुद्धधर्म्मेभ्यः शून्यता। शून्यतैवावेणिकबुद्धधर्म्माः। आवेणिकबुद्धधर्म्मा एव शून्यता।

या सर्व्वज्ञतायाः शून्यता न सा सर्व्वज्ञता। न चान्यत्र शून्यतायाः सर्व्वज्ञता। नान्यत्र सर्व्वज्ञतायाः शून्यता। शून्यतैव सर्व्वज्ञता। सर्व्वज्ञतैव शून्यता। या मार्गाकारज्ञतायाः शून्यता न सा मार्गाकारज्ञता। न चान्यत्र शून्यतायाः मार्गाकारज्ञता। नान्यत्र मार्गाकारज्ञतायाः शून्यता। शून्यतैव मार्गाकारज्ञता। मार्गाकारज्ञतैव शून्यता। या सर्व्वाकारज्ञतायाः शून्यता। न सा सर्व्वाकारज्ञता। न चान्यत्र शून्यतायाः सर्व्वाकारज्ञता। नान्यत्र सर्व्वाकारज्ञतायाः शून्यता। शून्यतैव सर्व्वाकारज्ञता। सर्व्वाकारज्ञतैव शून्यता।

एवं ह्यायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नुपायकौशलो वेदितव्यः। एवं खल्वायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् भव्योऽनुत्तरां सम्यक्सम्बोधिमभिसम्बोद्धुं। स खलु पुनर्ब्बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरामीति नोपैति। न चरामीति नोपैति। चरामीति न चरामीति नोपैति। नैव चरामि च न चरामीति नोपैति। शारद्वतीपुत्र आह। केन कारणेनायुष्मन् सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरंश्चरामीति नोपैति न चरामीति नोपैति। चरामि च न चरामीति नोपैति। नैव चरामि च न चरामीत्येवमपि नोपैति। सुभूतिराह। तथाह्यायुष्मञ्छारद्वतीपुत्र प्रज्ञापारमितायां स्वभावोनोपलभ्यते। तत्कस्य हेतोस्तथाह्यभावस्वभावाप्रज्ञापारमिता। अनेनायुष्मञ्छारद्वतीपुत्र पर्य्यायेण बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरामीति नोपैति। न चरामीति नोपैति।

चरामि च न चरामीति नोपैति। नैव चरामि च न चरामीत्येवमपि नोपैति। तत्कस्य हेतोस्तथाहि तेन सर्व्वधर्म्मा अभावस्वभावा इत्यनुगता अनुपात्ताः। स चेदेवं प्रज्ञापारमितायां चरतो बोधिसत्त्वस्य महासत्त्वस्य चित्तं नावलीयते। न संलीयते नोत्त्रस्यति न संत्रस्यति। न संत्रासमापद्यते। वेदितव्यमायुष्मञ्छारद्वतीपुत्रासन्नीभवत्ययं बोधिसत्त्वोमहासत्त्वः सर्व्वाकारज्ञताया इति।

सापि खलु सर्व्वाकारज्ञता अद्वया अद्वैधीकारा सर्व्वधर्म्माभावस्वभावतामुपादाय। अयं सर्व्वधर्म्मानुत्पादोनाम समाधिर्व्बोधिसत्त्वानां महासत्त्वानां विपुलःपुरस्कृतोऽप्रमाणनियतः असंहार्य्यः सर्व्वश्रावकप्रत्येकबुद्धैः। अनेन समाधिनाविहरन् बोधिसत्त्वोमहासत्त्वः चिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यते।

आह। किं पुनरायुष्मन् सुभुते अनेनैव समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः चिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अथान्यैरपि समाधिभिः। सुभूतिराह अन्यैरप्यायुष्मञ्छारद्वतीपुत्र समाधिभिर्व्विहरन् बोधिसत्त्वोमहासत्त्वः चिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। आह कतमैः पुनरायुष्मन् सुभुतेऽन्यैः समाधिभिर्व्विहरन् बोधिसत्त्वोमहासत्त्वः चिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। सुभूतिराह। अस्ति शूरङ्गमोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः चिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति सिंहविक्रीडितोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः चिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति सुचन्द्रोनाम समाधिर्येन समाधिना विहरन्

बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति चन्द्रध्वजकेतुर्नाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति सर्व्वधर्म्मोद्गतोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति सर्व्वधर्म्ममुद्रोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति विलोकितमूर्द्धोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति धर्म्मधातुनियतोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति नियतध्वजकेतुर्नाम समाधिर्येन समाधिनाविहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति वज्रोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति सर्व्वधर्म्मप्रवेशमुद्रोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति रश्मिप्रमुक्तोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति बलव्यूहोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति समुद्गतोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति निरुक्तिनियत-

प्रवेशोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्त्यधिवचन संप्रवेशोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति दिग्विलोकितोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्याधारमुद्रोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यसंप्रमोषोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति सर्व्वधर्म्मसमवसरणमुद्रोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्त्याकाशस्फुरणोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति वज्रमण्डलोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति ध्वजाग्रकेयूरोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्तीन्द्रकेतुर्नाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति स्रोतोऽनुगतोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति *सिंहविक्रीड़ितोनाम समाधिर्येन समाधिना विहरन् बोधि-

* क, ख, ग, घ पुस्तकेषु पाठः ।

सत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति व्यध्वस्तोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति वैरोचनोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यनेषोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यनिकेतस्थितोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति निश्चिन्तोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति विमलप्रदीपोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यनन्तप्रभोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति प्रभाकरोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति समन्तावभासोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति शुद्धावभासोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते।

अस्ति रतिकरोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति विद्युत्प्रदीपोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहा-

सत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यचयोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यजयोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति तेजोरतीनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति क्षयापगतोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते।

अस्त्यनिञ्जोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति विवर्णोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते।

अस्ति सूर्यप्रदीपोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति चन्द्रविमलोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति प्रज्ञाप्रदीपोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति शुद्धप्रतिभासोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यालोकोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति काराकारोनाम समाधिर्येन समाधिना विहरन्

बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति ज्ञानकेतुर्नाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वो-महासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते ।

अस्ति वज्रोपमोनाम समाधिर्येन समाधिना विहरन् बोधि-सत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति चित्तस्थितिर्नाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति समन्तालोकोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति सुप्रतिष्ठितोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्-सम्बोधिमभिसम्बुध्यते । अस्ति रत्नकोटिर्नाम समाधिर्येन समा-धिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधि-मभिसम्बुध्यते ।

अस्ति वरधर्म्ममुद्रोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति सर्व्वधर्म्मसमतानाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति रतिजहोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वो-महासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति धर्म्मोद्गतोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति विकिरणोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां

सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति सर्व्वधर्मपदप्रभेदोनाम समाधिर्य्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति समाक्षरावकारोनाम समाधिर्य्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यक्षरागतोनाम समाधिर्य्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते।

अस्त्यावरणच्छेदोनाम समाधिर्य्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यविकारोनाम समाधिर्य्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यप्रकारोनाम समाधिर्य्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति नामनियतप्रवेशोनाम समाधिर्य्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यनिकेतचारोनाम समाधिर्य्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति तिमिरापगतोनाम समाधिर्य्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति चारित्रवतीनाम समाधिर्य्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यचलोनाम समाधिर्य्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति विषयतीर्णोनाम समा-

धिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति सर्व्वगुणसञ्चयोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते।

अस्ति स्थितनिश्चित्तोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति शुभपुष्पितशुद्धिर्नाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति बोध्यङ्गवतीनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यनन्तप्रभोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यसमसमोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति सर्व्वधर्म्मातिक्रमणोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति परिच्छेदकरोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते।

अस्ति विमतिविकरोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति निरधिष्ठानोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्येकव्यूहोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः

क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्याकारोऽभिनिर्हारोनामसमाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्येकाकारोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्याकारानवकारोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते।

अस्ति नैर्वेधिकसर्व्वभवतलापगतोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति सर्व्वसङ्केतरुतप्रवेशोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति गिरिघोषाक्षरविमुक्तोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति ज्वलनोल्कोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति लक्षणपरिशोधनोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते।

अस्त्यनाविलक्षान्तिर्नाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति सर्व्वाकारवरोपेतनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति सर्व्वसुखदुःखनिरभिनन्दीनाम समाधिर्येन समाधिना विहरन्

बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्त्यक्षयकरण्डोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वो-महासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति धारणीमतिर्नाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वो-महासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति सम्यक्त्वमिथ्यात्वसर्व्वसंग्रहणोनाम समाधिर्येन समाधिना विहरन् बोधि-सत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते ।

' अस्ति सर्व्वरोधनिरोधसंप्रशमनोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभि-सम्बुध्यते । अस्त्यनुरोधाप्रतिरोधोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति विमलप्रभासोनाम समाधिर्येन समाधिना विहरन् बोधि-सत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते ।

अस्ति सारवतीनाम समाधिर्येन समाधिना विहरन् बोधि-सत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति परिपूर्णचन्द्रविमलोनाम समाधिर्येन समाधिना विहरन् बोधि-सत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति विद्युत्प्रभोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति महाव्यूहोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । अस्ति सर्व्वलोकप्रभाकरोनाम समाधि-र्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां

सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति समाधिसमतानाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते।

अस्त्यरजोविरजोनययुक्तोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यरणसमवसरणोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यरणसरणसर्व्वसमवसरणोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्यनिलम्भनिकेतनिरतोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति तथता स्थितनिश्चित्तोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति कायकलिसंप्रमथनोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति वाक्कलिविध्वंसनगगणकल्पोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्त्याकाशाऽसङ्गविमुक्तिनिरूपधिशेषोनाम समाधिर्येन समाधिना विहरन् बोधिसत्त्वोमहासत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। अस्ति इमे आयुष्मञ्छारद्वतीपुत्रसमाधयो बोधिसत्त्वानां महासत्त्वानां यैः समाधिभिर्व्विहरन्तो बोधिसत्त्वामहासत्त्वाः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यन्ते।

अथ बुद्धानुभावेनायुष्मान् सुभूतिः पुनरप्येवमाह। व्याकृतोऽवतारमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वस्तैः पौर्व्वकैस्तथागतैरर्हद्भिः सम्यक्सम्बुद्धैरनुत्तरायां सम्यक्सम्बोधौ। येऽपि तत्र तर्हि दशसु दिक्षु गङ्गानदीवालुकोपमेषु लोकधातुषु तथागताः सम्यक्सम्बुद्धास्तिष्ठन्ति ध्रियन्ते यापयन्ति। तेऽपि तथागताः सम्यक्सम्बुद्धास्तं बोधिसत्त्वं व्याकुर्व्वन्ति य एभिः समाधिभिर्व्विहरति। समाधिमपि न समनुपश्यति। नापि तेन समाधिनामन्यते। अहं समाहित इति अहं समापत्स्य इत्यहं समापद्य इत्यहं समापन्नवानिति। सर्व्वंच ते तस्य बोधिसत्त्वस्य महासत्त्वस्य विकल्पा न संविद्यन्ते न प्रवर्त्तन्ते।

आह। किं पुनरायुष्मन् सुभूतेऽत्र समाधिषु स्थितो बोधिसत्त्वो महासत्त्वो व्याक्रियते तथागतैरर्हद्भिः सम्यक्सम्बुद्धैः। सुभूतिराह। नोहीदमायुष्मञ्छारद्वतीपुत्र, तत्कस्य हेतोर्नह्यायुष्मञ्छारद्वतीपुत्रान्याप्रज्ञापारमितान्यः समाधिरन्यो बोधिसत्त्वः। प्रज्ञापारमितैव समाधिसमाधिरेव बोधिसत्त्वः, बोधिसत्त्व एव समाधिः। आह आयुष्मन् सुभूते नान्यः समाधिरन्यो बोधिसत्त्वो नान्यो बोधिसत्त्वोऽन्यः समाधिः। समाधिरेव बोधिसत्त्वो बोधिसत्त्व एव समाधिः सर्व्वधर्म्मसमतामुपादाय। तत् किं पुनः शक्यं समाधि दर्शयितुं। सुभूतिराह। नोहीदमायुष्मञ्छारद्वतीपुत्र। आह किं पुनरायुष्मन् सुभूते सकुलपुत्रस्तं समाधिं संजानाति। सुभूतिराह। न संजानात्यायुष्मञ्छारद्वतीपुत्र। आह। तत्कथं न संजानाति। सुभूतिराह। यथा न कल्पयति। आह। कस्मादायुष्मन् सुभूते

न विजानाति न संजानाति। सुभूतिराह। अविद्यमानत्वात्तस्य समाधेस्तस्य बोधिसत्त्वस्य। न विजानाति न संजानाति।

अथ भगवानायुष्मते सुभूतये साधुकारमदात्। साधु साधु सुभूते। सुभाषितैषा वाक्। यथापि ते मया विहारिणां श्रावकानामग्रतायां निर्दिष्टस्तथायमुपदेशः। एवञ्च बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिचितव्यं। ध्यानपारमितायां शिचितव्यं। वीर्य्यपारमितायां शिचितव्यं। चान्तिपारमितायां शिचितव्यं। शीलपारमितायां शिचितव्यं। दानपारमितायां शिचितव्यं। स्मृत्युपस्थानेषु शिचितव्यं। सम्यक्प्रहाणेषु शिचितव्यं। ऋद्धिपादेषु शिचितव्यं। इन्द्रियेषु शिचितव्यं। वलेषु शिचितव्यं। बोध्यङ्गेषु शिचितव्यं। आर्य्याष्टाङ्गमार्गे शिचितव्यं। आर्य्यसत्येषु शिचितव्यं। ध्यानेषु शिचितव्यं। अप्रमाणेषु शिचितव्यं। आरूप्यसमापत्तिषु शिचितव्यं। विमोचेषु शिचितव्यं। अनुपूर्व्वविहारसमापत्तिषु शिचितव्य। शून्यता निमित्ताप्रणिहितविमोचमुखेषु शिचितव्यं। अभिज्ञासु शिचितव्यं। समाधिषु शिचितव्यं। धारणीमुखेषु शिचितव्यं। तथागतवलेषु शिचितव्यं। वैशारद्येषु शिचितव्यं। प्रतिसम्बित्सु शिचितव्यं। महामैत्र्यां शिचितव्यं। महाकरुणायां शिचितव्यं। आवेणिकबुद्धधर्म्मेषु शिचितव्यं।

अथायुष्मान्छारद्वतीपुत्रो भगवन्तमेतदवोचत्। एवं शिचमाणो भगवन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां शिचतेऽनुपलम्भयोगेन। ध्यानपारमितायां शिचतेऽनुपलम्भयोगेन। वीर्य्यपारमितायां शिचतेऽनुपलम्भयोगेन। चान्तिपारमितायां शिचतेऽनुप-

लम्भयोगेन। शीलपारमितायां शिचतेऽनुपलम्भयोगेन। दानपारमितायां शिचतेऽनुपलम्भयोगेन। स्मृत्युपस्थानेषु शिचतेऽनुपलम्भयोगेन। सम्यक्प्रहाणेषु शिचतेऽनुपलम्भयोगेन। ऋद्धिपादेषु शिचतेऽनुपलम्भयोगेन। इन्द्रियेषु शिचतेऽनुपलम्भयोगेन। बलेषु शिचतेऽनुपलम्भयोगेन। बोध्यङ्गेषु शिचतेऽनुपलम्भयोगेन। आर्य्याष्टाङ्गमार्गे शिचतेऽनुपलम्भयोगेन। आर्य्यसत्येषु शिचतेऽनुपलम्भयोगेन। ध्यानेषु शिचतेऽनुपलम्भयोगेन। अप्रमाणेषु शिचतेऽनुपलम्भयोगेन। आरूप्यसमापत्तिषु शिचतेऽनुपलम्भयोगेन। अनुपूर्व्वविहारसमापत्तिषु शिचतेऽनुपलम्भयोगेन। शून्यतानिमित्ताप्रणिहितविमोचमुखेषु शिचतेऽनुपलम्भयोगेन। अभिज्ञासु शिचतेऽनुपलम्भयोगेन। धारणीमुखेषु शिचतेऽनुपलम्भयोगेन। तथागतबलेषु शिचतेऽनुपलम्भयोगेन। वैशारद्येषु शिचतेऽनुपलम्भयोगेन। प्रतिसम्वित्सु शिचतेऽनुपलम्भयोगेन। महामैत्र्यां शिचतेऽनुपलम्भयोगेन। महाकरुणायां शिचतेऽनुपलम्भयोगेन। आवेणिकबुद्धधर्म्मेषु शिचतेऽनुपलम्भयोगेन।

भगवानाह। एवं शिचमाणः शारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां शिचतेऽनुपलम्भयोगेन। वीर्य्यपारमितायां शिचतेऽनुपलम्भयोगेन। चान्तिपारमितायां शिचतेऽनुपलम्भयोगेन। शीलपारमितायां शिचतेऽनुपलम्भयोगेन। दानपारमितायां शिचतेऽनुपलम्भयोगेन। स्मृत्युपस्थानेषु शिचतेऽनुपलम्भयोगेन। सम्यक्प्रहाणेषु शिचतेऽनुपलम्भयोगेन। ऋद्धिपादेषु शिचतेऽनुपलम्भयोगेन। इन्द्रियेषु शिचतेऽनुपलम्भयोगेन। बलेषु शिचतेऽनुप-

लम्भयोगेन । बोध्यङ्गेषु शिक्षतेऽनुपलम्भयोगेन । आर्य्याष्टाङ्गमार्गे शिक्षतेऽनुपलम्भयोगेन । आर्य्यसत्येषु शिक्षतेऽनुपलम्भयोगेन । ध्यानेषु शिक्षतेऽनुपलम्भयोगेन । अप्रमाणेषु शिक्षतेऽनुपलम्भयोगेन । आरूप्यसमापत्तिषु शिक्षतेऽनुपलम्भयोगेन । विमोक्षेषु शिक्षतेऽनुपलम्भयोगेन । अनुपूर्व्वविहारसमापत्तिषु शिक्षतेऽनुपलम्भयोगेन । शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु शिक्षतेऽनुपलम्भयोगेन । अभिज्ञासु शिक्षतेऽनुपलम्भयोगेन। समाधिषु शिक्षतेऽनुपलम्भयोगेन। धारणीमुखेषु शिक्षतेऽनुपलम्भयोगेन। तथागतबलेषु शिक्षतेऽनुपलम्भयोगेन । वैशारद्येषु शिक्षतेऽनुपलम्भयोगेन। प्रतिसम्वित्सु शिक्षतेऽनुपलम्भयोगेन । महामैत्र्यां शिक्षतेऽनुपलम्भयोगेन । महाकरुणायां शिक्षतेऽनुपलम्भयोगेन। आवेणिकबुद्धधर्म्मेषु शिक्षतेऽनुपलम्भयोगेन ।

शारद्वतीपुत्र आह। किमिति भगवन्नोपलभते । भगवानाह । आत्मानं शारद्वतीपुत्र नोपलभते। जीवं नोपलभते । जन्तुं नोपलभते । पोषं नोपलभते। पुरुषं नोपलभते । पुद्गलं नोपलभते । मनुजं नोपलभते । मानवं नोपलभते। कारकं नोपलभते। जानकं नोपलभते । पश्यकं नोपलभते । अत्यन्तविशुद्धितामुपादाय ।

रूपं नोपलभतेऽत्यन्तविशुद्धितामुपादाय। वेदनां नोपलभतेऽत्यन्तविशुद्धितामुपादाय। संज्ञां नोपलभतेऽत्यन्तविशुद्धितामुपादाय । संस्कारान्नोपलभतेऽत्यन्तविशुद्धितामुपादाय। विज्ञानं नोपलभतेऽत्यन्तविशुद्धितामुपादाय। चक्षुर्नोपलभतेऽत्यन्तविशुद्धितामुपादाय । श्रोत्रं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । घ्राणं

नोपलभतेऽत्यन्तविशुद्धितामुपादाय । जिह्वां नोपलभतेऽत्यन्तविशुद्धितामुपादाय । कायं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । मनो नोपलभतेऽत्यन्तविशुद्धितामुपादाय । रूपं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । शब्दं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । गन्धं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । रसं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । स्पर्शं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । धर्मान्नोपलभतेऽत्यन्तविशुद्धितामुपादाय ।

चक्षुर्धातुं रूपधातुं चक्षुर्विज्ञानधातुं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । श्रोत्रधातुं शब्दधातुं श्रोत्रविज्ञानधातुं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । घ्राणधातुं गन्धधातुं घ्राणविज्ञानधातुं नोपलभते । जिह्वाधातुं रसधातुं जिह्वाविज्ञानधातुं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । कायधातुं स्पर्शधातुं कायविज्ञानधातुं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । मनोधातुं धर्मधातुं मनोविज्ञानधातुं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । पृथिवीधातुमब्धातुं तेजोधातुं वायुधातुमाकाशधातुं विज्ञानधातुं नोपलभतेऽत्यन्तविशुद्धितामुपादाय ।

अविद्यां नोपलभतेऽत्यन्तविशुद्धितामुपादाय । संस्कारान्नोपलभतेऽत्यन्तविशुद्धितामुपादाय । विज्ञानं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । नामरूपं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । षडायतनं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । स्पर्शं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । वेदनां नोपलभतेऽत्यन्तविशुद्धितामुपादाय । तृष्णां नोपलभतेऽत्यन्तविशुद्धितामुपादाय । उपादानं

नोपलभतेऽत्यन्तविशुद्धितामुपादाय । भवं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । जातिः नोपलभतेऽत्यन्तविशुद्धितामुपादाय । जरामरणं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । दुःखं नोपलभतेऽत्यन्तविशुद्धितामुपादाय ।

समुदयं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । निरोधं नोपलभतेऽत्यन्तविशुद्धिता मुपादाय । मार्गं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । कामधातु नोपलभतेऽत्यन्तविशुद्धितामुपादाय । रूपधातुमारूप्यधातु नोपलभतेऽत्यन्तविशुद्धितामुपादाय । दानपारमितां शीलपारमितां क्षान्तिपारमितां वीर्य्यपारमितां ध्यानपारमितां प्रज्ञापारमितां नोपलभतेऽत्यन्तविशुद्धितामुपादाय ।

स्मृत्युपस्थानानि नोपलभतेऽत्यन्तविशुद्धितामुपादाय । सम्यक्प्रहाणानि नोपलभतेऽत्यन्तविशुद्धितामुपादाय । ऋद्धिपादान्नोपलभतेऽत्यन्तविशुद्धितामुपादाय । इन्द्रियाणि बलानि बोध्यङ्गानि नोपलभतेऽत्यन्तविशुद्धितामुपादाय । आर्य्याष्टाङ्गमार्गं नोपलभतेऽत्यन्तविशुद्धितामुपादाय । आर्य्यसत्यानिनोपलभतेऽत्यन्तविशुद्धितामुपादाय । ध्यानानि चाप्रमाणानि नोपलभतेऽत्यन्तविशुद्धितामुपादाय । आरूप्यसमापत्तीर्नोपलभतेऽत्यन्तविशुद्धितामुपादाय । विमोक्षान्नोपलभतेऽत्यन्तविशुद्धितामुपादाय । अनुपूर्व्वविहारसमापत्तीर्नोपलभतेऽत्यन्तविशुद्धितामुपादाय । शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि नोपलभतेऽत्यन्तविशुद्धितामुपादाय । अभिज्ञा नोपलभतेऽत्यन्तविशुद्धितामुपादाय । समाधीन्नोपलभतेऽत्यन्तविशुद्धितामुपादाय । धारणीमुखानि नोपलभतेऽत्यन्तविशुद्धिता-

मुपादाय। तथागतबलानि नोपलभतेऽत्यन्तविशुद्धितामुपादाय। वैशारद्यानि नोपलभतेऽत्यन्तविशुद्धितामुपादाय। प्रतिसम्विदा नोपलभतेऽत्यन्तविशुद्धितामुपादाय। महामैत्रीं नोपलभतेऽत्यन्तविशुद्धितामुपादाय। महाकरुणां नोपलभतेऽत्यन्तविशुद्धितामुपादाय। आवेणिकबुद्धधर्मान्नोपलभतेऽत्यन्तविशुद्धितामुपादाय। स्रोत आपत्तिफलं नोपलभतेऽत्यन्तविशुद्धितामुपादाय। सकृदागामिफलं नोपलभतेऽत्यन्तविशुद्धितामुपादाय। अनागामिफलं नोपलभतेऽत्यन्तविशुद्धितामुपादाय। अर्हत्त्वं नोपलभतेऽत्यन्तविशुद्धितामुपादाय। प्रत्येकबुद्धत्वं नोपलभतेऽत्यन्तविशुद्धितामुपादाय। बोधिसत्त्वं नोपलपतेऽत्यन्तविशुद्धितामुपादाय। बोधिं नोपलभतेऽत्यन्तविशुद्धितामुपादाय। बुद्धं नोपलभतेऽत्यन्तविशुद्धितामुपादाय।

आह। किमिति भगवन् विशुद्धिता। भगवानाह। अनुत्पादः। अनिरोधः। असंक्लेशः। अव्यवदानमप्रादुर्भावोऽनुपलम्भोऽनभिसंस्कारः सर्व्वधर्म्माणामेषामाविशुद्धिरित्युच्यते। एवं हि शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो न कचिद्धर्मे शिचते। तत्कस्य हेतोर्नैते शारद्वतीपुत्रधर्म्मास्तथासंविद्यन्ते यथा बालपृथग्जना अभिनिविष्टाः।

आह। कथं भगवन्नेते धर्म्माः संविद्यन्ते। भगवानाह। यथा न संविद्यन्ते तथा विद्यन्ते। एव मविद्यमाना तेनोच्यते अविद्येति।

आह। कस्मात् पुनर्भगवन्नसंविद्यमाना उच्यतेऽविद्येति। भगवानाह। रूपं न संविद्यतेऽध्यात्मशून्यतामुपादाय। वहिर्द्धाशून्यतामुपादाय। अध्यात्मवहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपा-

दाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराऽग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

वेदना शारद्वतीपुत्र न संविद्यते। अध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

संज्ञा शारद्वतीपुत्र न संविद्यतेऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

संस्काराः शारद्वतीपुत्र न संविद्यन्तेऽध्यात्मशून्यतामुपादाय । बहिर्द्धाशून्यतामुपादाय । अध्यात्मबहिर्द्धाशून्यतामुपादाय । शून्यताशून्यतामुपादाय । परमार्थशून्यतामुपादाय । संस्कृतशून्यतामुपादाय । असंस्कृतशून्यतामुपादाय । अत्यन्तशून्यतामुपादाय । अनवरागशून्यतामुपादाय । अनवकारशून्यतामुपादाय । प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यतामुपादाय । स्वलक्षणशून्यतामुपादाय अनुपलम्भशून्यतामुपादाय । अभावशून्यतामुपादाय । स्वभावशून्यतामुपादाय । अभावस्वभावशून्यतामुपादाय ।

विज्ञानं शारद्वतीपुत्र न संविद्यते अध्यात्मशून्यतामुपादाय । बहिर्द्धाशून्यतामुपादाय । अध्यात्मबहिर्द्धाशून्यतामुपादाय । शून्यताशून्यतामुपादाय । महाशून्यतामुपादाय । परमार्थशून्यतामुपादाय । संस्कृतशून्यतामुपादाय । असंस्कृतशून्यतामुपादाय । अत्यन्तशून्यतामुपादाय । अनवरागशून्यतामुपादाय । अनवकारशून्यतामुपादाय । प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यतामुपादाय । स्वलक्षणशून्यतामुपादाय । अनुपलम्भशून्यतामुपादाय । अभावशून्यतामुपादाय । स्वभावशून्यतामुपादाय । अभावस्वभावशून्यतामुपादाय ।

चक्षुः शारद्वतीपुत्र न संविद्यते अध्यात्मशून्यतामुपादाय । *एवं श्रोत्रं घ्राणं जिह्वा काय मनो न संविद्यते ऽध्यात्मशून्यतामुपादाय । बहिर्द्धाशून्यतामुपादाय । अध्यात्मबहिर्द्धाशून्यतामुपा-

* आदर्शपुस्तके यथा दृष्टं तथा लिखितं । वस्तुतः श्रोत्रघ्राणादीन् प्रत्येकमध्यात्मशून्यतामुपादायेत्यादि लिखितमुचितं प्रतिभाति पूर्व्वापरयोस्तथैव लिखनादिति ।

दाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

रूपं शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। एवं शब्दोगन्धोरसः स्पर्शोधर्म्मो न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

चक्षुर्व्विज्ञानं शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादय। एवं श्रोत्रविज्ञानं घ्राणविज्ञानं जिह्वाविज्ञानं कायविज्ञानं मनोविज्ञानं न संविद्यते ऽध्याशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यता-

मुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

चक्षुः संस्पर्शः शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

एवं शारद्वतीपुत्र श्रोत्रसंस्पर्शोघ्राणसंस्पर्शोजिह्वासंस्पर्शः कायसंस्पर्शः मनः संस्पर्शो न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादायः। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादायः। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

चक्षुः संस्पर्शप्रत्ययवेदना शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

श्रोत्रसंस्पर्शप्रत्ययवेदना शारद्वतीपुत्र न संविद्यतेऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

घ्राणसंस्पर्शप्रत्ययवेदना शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृति-

शून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

जिह्वासंस्पर्शप्रत्ययवेदना शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

कायसंस्पर्शप्रत्ययवेदना शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

मनः संस्पर्शप्रत्ययवेदना शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धा-

शून्यतामुपादाय । अध्यात्मबहिर्द्धाशून्यतामुपादाय । शून्यताशून्यतामुपादाय । महाशून्यतामुपादाय । परमार्थशून्यतामुपादाय । संस्कृतशून्यतामुपादाय । असंस्कृतशून्यतामुपादाय । अनवराग्रशून्यतामुपादाय । अनवकारशून्यतामुपादाय । प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यतामुपादाय । स्वलक्षणशून्यतामुपादाय । अनुपलम्भशून्यतामुपादाय । अभावशून्यतामुपादाय । स्वभावशून्यतामुपादाय । अभावस्वभावशून्यतामुपादाय ।

पृथिवीधातुः शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय । बहिर्द्धाशून्यतामुपादाय । अध्यात्मबहिर्द्धाशून्यतामुपादाय । शून्यताशून्यतामुपादाय । महाशून्यतामुपादाय । परमार्थशून्यतामुपादाय । संस्कृतशून्यतामुपादाय । असंस्कृतशून्यतामुपादाय । अत्यन्तशून्यतामुपादाय । अनवराग्रशून्यतामुपादाय । अनवकारशून्यतामुपादाय । प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यतामुपादाय । स्वलक्षणशून्यतामुपादाय । अनुपलम्भशून्यतामुपादाय । अभावशून्यतामुपादाय । स्वभावशून्यतामुपादाय । अभावस्वभावशून्यतामुपादाय ।

अब्धातुः शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय । बहिर्द्धाशून्यतामुपादाय । अध्यात्मबहिर्द्धाशून्यतामुपादाय । शून्यताशून्यतामुपादाय । महाशून्यतामुपादाय । परमार्थशून्यतामुपादाय । संस्कृतशून्यतामुपादाय । असंस्कृतशून्यतामुपादाय । अत्यन्तशून्यतामुपादाय । अनवराग्रशून्यतामुपादाय । अनवकारशून्यतामुपादाय । प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यतामुपादाय । स्वलक्षणशून्यतामुपादाय । अनुपलम्भशून्यतामुपादाय । अभावशून्यतामुपादाय । स्वभावशून्यतामुपादाय । अभावस्वभावशून्यतामुपादाय ।

तेजोधातुः शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय । बहिर्द्धाशून्यतामुपादाय । अध्यात्मबहिर्द्धाशून्यतामुपादाय । शून्यताशून्यतामुपादाय । महाशून्यतामुपादाय । परमार्थशून्यतामुपादाय । संस्कृतशून्यतामुपादाय । असंस्कृतशून्यतामुपादाय । अत्यन्तशून्यतामुपादाय । अनवराग्रशून्यतामुपादाय । अनवकारशून्यतामुपादाय । प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यतामुपादाय । स्वलक्षणशून्यतामुपादाय । अनुपलम्भशून्यतामुपादाय । अभावशून्यतामुपादाय । स्वभावशून्यतामुपादाय । अभावस्वभावशून्यतामुपादाय ।

वायुधातुः शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय । बहिर्द्धाशून्यतामुपादाय । अध्यात्मबहिर्द्धाशून्यतामुपादाय । शून्यताशून्यतामुपादाय । महाशून्यतामुपादाय । परमार्थशून्यतामुपादाय । संस्कृतशून्यतामुपादाय । असंस्कृतशून्यतामुपादाय । अत्यन्तशून्यतामुपादाय । अनवराग्रशून्यतामुपादाय । अनवकारशून्यतामुपादाय । प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यतामुपादाय । स्वलक्षणशून्यतामुपादाय । अनुपलम्भशून्यतामुपादाय । अभावशून्यतामुपादाय । स्वभावशून्यतामुपादाय । अभावस्वभावशून्यतामुपादाय ।

आकाशधातुः शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय । बहिर्द्धाशून्यतामुपादाय । अध्यात्मबहिर्द्धाशून्यतामुपादाय । शून्यताशून्यतामुपादाय । महाशून्यतामुपादाय । परमार्थशून्यतामुपादाय । संस्कृतशून्यतामुपादाय । असंस्कृतशून्यतामुपादाय । अत्यन्तशून्यतामुपादाय । अनवराग्रशून्यतामुपादाय । अनवकारशून्यतामुपादाय । प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यतामुपादाय । स्वलक्षणशून्यता-

सुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

विज्ञानधातुः शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। वहिर्द्धाशून्यतामुपादाय। अध्यात्मवहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

नामरूपं शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। वहिर्द्धाशून्यतामुपादाय। अध्यात्मवहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

षड़ायतनं शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। वहिर्द्धाशून्यतामुपादाय। अध्यात्मवहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यता-

जातिः शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

जरामरणं शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

दानपारमिता शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्मशून्यतामुपादाय। स्वलक्षणशून्यता-

सुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

शीलपारमिता शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

क्षान्तिपारमिता शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

वीर्य्यपारमिता शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय।

सुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

रूपं शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

वेदना शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

तृष्णा शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय।

 अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यता-

शून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

उपादानं शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यता मुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

भवः शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

ध्यानपारमिता शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

प्रज्ञापारमिता शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्मशून्यतामुपादाय।

स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

स्मृत्युपस्थानानि शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय। वहिर्द्धाशून्यतामुपादाय। अध्यात्मवहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

सम्यक्प्रहाणानि शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय। वहिर्द्धाशून्यतामुपादाय। अध्यात्मवहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

ऋद्धिपादाः शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय। वहिर्द्धाशून्यतामुपादाय। अध्यात्मवहिर्द्धाशून्यतामुपादाय। शून्यता-

शून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

इन्द्रियाणि शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

आर्य्यसत्यानि शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

ध्यानानि शारद्वतीपुत्र न संविद्यन्तेऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

अप्रमाणानि शारद्वतीपुत्र न संविद्यन्तेऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

आरूप्यसमापत्तयः शारद्वतीपुत्र न संविद्यन्तेऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपा-

दाय । स्वलक्षणशून्यतामुपादाय । अनुपलम्भशून्यतामुपादाय । अभावशून्यतामुपादाय । स्वभावशून्यतामुपादाय । अभावस्वभावशून्यतामुपादाय ।

अष्टौ विमोक्षाः शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय । बहिर्द्धाशून्यतामुपादाय । अध्यात्मबहिर्द्धाशून्यतामुपादाय । शून्यताशून्यतामुपादाय । महाशून्यतामुपादाय । परमार्थशून्यतामुपादाय । संस्कृतशून्यतामुपादाय । असंस्कृतशून्यतामुपादाय । अत्यन्तशून्यतामुपादाय । अनवराग्रशून्यतामुपादाय । अनवकारशून्यतामुपादाय । प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यतामुपादाय । स्वलक्षणशून्यतामुपादाय । अनुपलम्भशून्यतामुपादाय । अभावशून्यतामुपादाय । स्वभावशून्यतामुपादाय । अभावस्वभावशून्यतामुपादाय ।

नवानुपूर्व्वविहारसमापत्तयः शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय । बहिर्द्धाशून्यतामुपादायः । अध्यात्मबहिर्द्धाशून्यतामुपादाय । शून्यताशून्यतामुपादाय । महाशून्यतामुपादाय । परमार्थशून्यतामुपादाय । संस्कृतशून्यतामुपादाय । असंस्कृतशून्यतामुपादाय । अत्यन्तशून्यतामुपादाय । अनवराग्रशून्यतामुपादाय । अनवकारशून्यतामुपादाय । प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यतामुपादायः । स्वलक्षणशून्यतामुपादाय । अनुपलम्भशून्यतामुपादाय । अभावशून्यतामुपादाय । स्वभावशून्यतामुपादाय । अभावस्वभावशून्यतामुपादाय ।

शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि शारद्वतीपुत्र न संवि-

ध्यन्ते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्म-बहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

अभिज्ञाः शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

समाधयः शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यता-

मुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

धारणीमुखानि शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

तथागतबलानि शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

चत्वारि वैशारद्यानि शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यता-

मुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

चतस्रः प्रतिसम्विदः शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

महामैत्री शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यता-

मुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

महाकरुणा शारद्वतीपुत्र न संविद्यते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

अष्टादशावेणिकाबुद्धधर्म्माः शारद्वतीपुत्र न संविद्यन्ते ऽध्यात्मशून्यतामुपादाय। बहिर्द्धाशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यतामुपादाय। शून्यताशून्यतामुपादाय। महाशून्यतामुपादाय। परमार्थशून्यतामुपादाय। संस्कृतशून्यतामुपादाय। असंस्कृतशून्यतामुपादाय। अत्यन्तशून्यतामुपादाय। अनवराग्रशून्यतामुपादाय। अनवकारशून्यतामुपादाय। प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यतामुपादाय। स्वलक्षणशून्यतामुपादाय। अनुपलम्भशून्यतामुपादाय। अभावशून्यतामुपादाय। स्वभावशून्यतामुपादाय। अभावस्वभावशून्यतामुपादाय।

तत्र बालपृथग्जना अभिनिवेशेन तृष्णामभिनिविष्टाः। तैरविद्याकल्पिता। अविद्याऽभिनिविश्योभयोरुत्तरयोः सक्ताः। यदुतोच्छेदशा तयोस्तेन जानन्ति न पश्यन्ति। ये धर्म्मा न संविद्यन्ते

तान् कल्पयित्वानामल्पेऽभिनिविष्टाः । दानपारमितायामभिनिविष्टाः । शीलपारमितायामभिनिविष्टाः । क्षान्तिपारमितायामभिनिविष्टाः । वीर्य्यपारमितायामभिनिविष्टाः । ध्यानपारमितायामभिनिविष्टाः । प्रज्ञापारमितायामभिनिविष्टाः ।

अध्यात्मशून्यतायामभिनिविष्टाः । बहिर्द्धाशून्यतायामभिनिविष्टाः । अध्यात्मबहिर्द्धाशून्यतायामभिनिविष्टाः । शून्यताशून्यतायामभिनिविष्टाः । महाशून्यतायामभिनिविष्टाः । परमार्थशून्यतायामभिनिविष्टाः । संस्कृतशून्यतायामभिनिविष्टाः । असंस्कृतशून्यतायामभिनिविष्टाः । अत्यन्तशून्यतायामभिनिविष्टाः । अनवरागशून्यतायामभिनिविष्टाः । अनवकारशून्यतायामभिनिविष्टाः । प्रकृतिशून्यतायामभिनिविष्टाः । सर्व्वधर्मशून्यतायामभिनिविष्टाः । स्वलक्षणशून्यतायामभिनिविष्टाः । अनुपलम्भशून्यतायामभिनिविष्टाः । अभावशून्यतायामभिनिविष्टाः । स्वभावशून्यतायामभिनिविष्टाः । अभावस्वभावशून्यतायामभिनिविष्टाः ।

स्मृत्युपस्थानेष्वभिनिविष्टाः । सम्यक्प्रहाणेष्वभिनिविष्टाः । ऋद्धिपादेष्वभिनिविष्टाः । इन्द्रियेष्वभिनिविष्टाः । बलेष्वभिनिविष्टाः । बोध्यङ्गेष्वभिनिविष्टाः । आर्य्याष्टाङ्गमार्गेऽभिनिविष्टाः । आर्य्यसत्येष्वभिनिविष्टाः । ध्यानेष्वभिनिविष्टाः । अप्रमाणेष्वभिनिविष्टाः । आरूप्यसमापत्तिष्वभिनिविष्टाः । विमोक्षेष्वभिनिविष्टाः । नवानुपूर्व्वविहारसमापत्तिष्वभिनिविष्टाः । शून्यतानिमित्ताप्रणिहितविमोक्षमुखेष्वभिनिविष्टाः । अभिज्ञास्वभिनिविष्टाः । समाधिष्वभिनिविष्टाः । धारणीमुखेष्वभिनिविष्टाः । तथागतबलेष्वभि-

निविष्टाः । वैशारद्येष्वभिनिविष्टाः । प्रतिसम्वित्स्वभिनिविष्टाः । महामैत्र्यामभिनिविष्टाः । महाकरुणायामभिनिविष्टाः । आवेणिकबुद्धधर्मेष्वभिनिविष्टाः ।

तेऽभिनिविष्टा एवं सन्तः अविद्यमानान् धर्मान् कल्पयन्ति । ते न जानन्ति न पश्यन्ति । किं न जानन्ति न पश्यन्ति ।

रूपं न जानन्ति न पश्यन्ति । वेदनां न जानन्ति न पश्यन्ति । संज्ञां न जानन्ति न पश्यन्ति । संस्कारान्न जानन्ति न पश्यन्ति । विज्ञानं न जानन्ति न पश्यन्ति । चक्षुर्न जानन्ति न पश्यन्ति । श्रोत्रं न जानन्ति न पश्यन्ति । घ्राणं न जानन्ति न पश्यन्ति । जिह्वां न जानन्ति न पश्यन्ति । कायं न जानन्ति न पश्यन्ति । मनो न जानन्ति न पश्यन्ति ।

रूपं न जानन्ति न पश्यन्ति । शब्दं न जानन्ति न पश्यन्ति । गन्धं न जानन्ति न पश्यन्ति । रसं न जानन्ति न पश्यन्ति । स्पर्शं न जानन्ति न पश्यन्ति । धर्मान्न जानन्ति न पश्यन्ति ।

चक्षुर्विज्ञानं न जानन्ति न पश्यन्ति । श्रोत्रविज्ञानं न जानन्ति न पश्यन्ति । घ्राणविज्ञानं न जानन्ति न पश्यन्ति । जिह्वाविज्ञानं न जानन्ति न पश्यन्ति । कायविज्ञानं न जानन्ति न पश्यन्ति । मनोविज्ञानं न जानन्ति न पश्यन्ति ।

चक्षुःसंस्पर्शं न जानन्ति न पश्यन्ति । श्रोत्रसंस्पर्शं न जानन्ति न पश्यन्ति । घ्राणसंस्पर्शं न जानन्ति न पश्यन्ति । जिह्वासंस्पर्शं न जानन्ति न पश्यन्ति । कायसंस्पर्शं न जानन्ति न पश्यन्ति । मनःसंस्पर्शं न जानन्ति न पश्यन्ति ।

चक्षुःसंस्पर्शप्रत्ययवेदना न जानन्ति न पश्यन्ति। श्रोत्रसंस्पर्श-प्रत्ययवेदना न जानन्ति न पश्यन्ति। घ्राणसंस्पर्शप्रत्ययवेदना न जानन्ति न पश्यन्ति। जिह्वासंस्पर्शप्रत्ययवेदना न जानन्ति न पश्यन्ति। कायसंस्पर्शप्रत्ययवेदना न जानन्ति न पश्यन्ति। मनः-संस्पर्शप्रत्ययवेदना न जानन्ति न पश्यन्ति।

दानपारमिता न जानन्ति न पश्यन्ति। शीलपारमिता न जानन्ति न पश्यन्ति। क्षान्तिपारमिता न जानन्ति न पश्यन्ति। वीर्य्यपारमिता न जानन्ति न पश्यन्ति। ध्यानपारमिता न जानन्ति न पश्यन्ति। प्रज्ञापारमिता न जानन्ति न पश्यन्ति।

अध्यात्मशून्यता न जानन्ति न पश्यन्ति। बहिर्द्धाशून्यता न जानन्ति न पश्यन्ति। अध्यात्मबहिर्द्धाशून्यता न जानन्ति न पश्यन्ति। शून्यताशून्यता न जानन्ति न पश्यन्ति। महाशून्यता न जानन्ति न पश्यन्ति। परमार्थशून्यता न जानन्ति न पश्यन्ति। संस्कृतशून्यता न जानन्ति न पश्यन्ति। असंस्कृतशून्यता न जानन्ति न पश्यन्ति। अत्यन्तशून्यता न जानन्ति न पश्यन्ति। अनवराग्रशून्यता न जानन्ति न पश्यन्ति। अनवकारशून्यता न जानन्ति न पश्यन्ति। प्रकृतिशून्यता न जानन्ति न पश्यन्ति। सर्व्वधर्म्मशून्यता न जानन्ति न पश्यन्ति। स्वलक्षणशून्यता न जानन्ति न पश्यन्ति। अनुपलम्भशून्यता न जानन्ति न पश्यन्ति। अभावशून्यता न जानन्ति न पश्यन्ति। स्वभावशून्यता न जानन्ति न पश्यन्ति। अभावस्वभावशून्यता न जानन्ति न पश्यन्ति।

स्मृत्युपस्थानानि न जानन्ति न पश्यन्ति। सम्यक्प्रहाणानि न

वेदनया शून्येति न श्रद्दधाति। कायसंस्पर्शप्रत्ययवेदना कायसंस्पर्शप्रत्ययवेदनया शून्येति न श्रद्दधाति। मनःसंस्पर्शप्रत्ययवेदना मनःसंस्पर्शप्रत्ययवेदनया शून्येति न श्रद्दधाति।

दानपारमिता दानपारमितायाः शून्येति न श्रद्दधाति। शीलपारमिता शीलपारमितायाः शून्येति न श्रद्दधाति। क्षान्तिपारमिता क्षान्तिपारमितायाः शून्येति न श्रद्दधाति। वीर्य्यपारमिता वीर्य्यपारमितायाः शून्येति न श्रद्दधाति। ध्यानपारमिता ध्यानपारमितायाः शून्या इति न श्रद्दधाति। प्रज्ञापारमिता प्रज्ञापारमितायाः शून्येति न श्रद्दधाति।

अध्यात्मशून्यता अध्यात्मशून्यतया शून्येति न श्रद्दधाति। बहिर्द्धाशून्यता बहिर्द्धाशून्यतया शून्येति न श्रद्दधाति। अध्यात्मबहिर्द्धाशून्यता अध्यात्मबहिर्द्धाशून्यतया शून्येति न श्रद्दधाति। शून्यताशून्यता शून्यताशून्यतया शून्येति न श्रद्दधाति। महाशून्यता महाशून्यतया शून्येति न श्रद्दधाति। परमार्थशून्यता परमार्थशून्यतया शून्येति न श्रद्दधाति। संस्कृतशून्यता संस्कृतशून्यतया शून्येति न श्रद्दधाति। असंस्कृतशून्यताऽसंस्कृतशून्यतया शून्येति न श्रद्दधाति। अत्यन्तशून्यता अत्यन्तशून्यतया शून्येति न श्रद्दधाति। अनवराग्रशून्यता अनवराग्रशून्यतया शून्येति न श्रद्दधाति। अनवकारशून्यता अनवकारशून्यतया शून्येति न श्रद्दधाति। प्रकृतिशून्यता प्रकृतिशून्यतया शून्येति न श्रद्दधाति। सर्व्वधर्म्मशून्यता सर्व्वधर्म्मशून्यतया शून्येति न श्रद्दधाति। स्वलक्षणशून्यता स्वलक्षणशून्यतया शून्येति न श्रद्दधाति। अनुपलम्भशून्यता अनुपलम्भशून्यतया शून्येति न

श्रद्दधति । अभावशून्यता अभावशून्यतया शून्येति न श्रद्दधति । स्वभावशून्यता स्वभावशून्यतया शून्येति न श्रद्दधति । अभावस्वभावशून्यता अभावस्वभावशून्यतया शून्येति न श्रद्दधति ।

चत्वारि स्मृत्युपस्थानानि स्मृत्युपस्थानैः शून्यानीति न श्रद्दधति । चत्वारि सम्यक्प्रहाणानि सम्यक्प्रहाणैः शून्यानीति न श्रद्दधति । ऋद्धिपादा ऋद्धिपादैः शून्या इति न श्रद्दधति । इन्द्रियाणीन्द्रियैः शून्यानीति न श्रद्दधति । बलानि बलैः शून्यानीति न श्रद्दधति । बोध्यङ्गानि बोध्यङ्गैः शून्यानीति न श्रद्दधति । आर्य्याष्टाङ्गमार्गं आर्य्याष्टाङ्गमार्गेण शून्य इति न श्रद्दधति । आर्य्यसत्यान्यार्य्यसत्यैः शून्यानीति न श्रद्दधति । ध्यानानि ध्यानैः शून्यानीति न श्रद्दधति । अप्रमाणान्यप्रमाणैः शून्यानीति न श्रद्दधति । आरूप्यसमापत्तय आरूप्यसमापत्तिभिः शून्या इति न श्रद्दधति । अष्टौ विमोक्षाः विमोक्षैः शून्या इति न श्रद्दधति । नवानुपूर्व्वविहारसमापत्तयो नवानुपूर्व्वविहारसमापत्तिभिः शून्या इति न श्रद्दधति । शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि शून्यतानिमित्ताप्रणिहितविमोक्षमुखैः शून्यानीति न श्रद्दधति । अभिज्ञा अभिज्ञाभिः शून्या इति न श्रद्दधति । समाधयः समाधिभिः शून्या इति न श्रद्दधति । धारणीमुखानि धारणीमुखैः शून्यानीति न श्रद्दधति । तथागतबलानि तथागतबलैः शून्यानीति न श्रद्दधति । वैशारद्यानि वैशारद्यैः शून्यानीति न श्रद्दधति । प्रतिसम्विदः प्रतिसम्विद्भिः शून्या इति न श्रद्दधति । महामैत्री महामैत्र्या शून्येति न

जानन्ति न पश्यन्ति। ऋद्धिपादान् न जानन्ति न पश्यन्ति। पञ्चेन्द्रियाणि न जानन्ति न पश्यन्ति। पञ्चबलानि न जानन्ति न पश्यन्ति। सप्तबोध्यङ्गानि न जानन्ति न पश्यन्ति। आर्य्याष्टाङ्गमार्गं न जानन्ति न पश्यन्ति। आर्य्यसत्यानि न जानन्ति न पश्यन्ति। ध्यानानि न जानन्ति न पश्यन्ति। अप्रमाणानि न जानन्ति न पश्यन्ति। आरूप्यसमापत्तीर्नजानन्ति न पश्यन्ति। अष्टौविमोचान्नजानन्ति न पश्यन्ति। नवानुपूर्व्वविहारसमापत्तीर्नजानन्ति न पश्यन्ति। शून्यतानिमित्ताप्रणिहितविमोचमुखानि न जानन्ति न पश्यन्ति। अभिज्ञा न जानन्ति न पश्यन्ति। समाधीन्नजानन्ति न पश्यन्ति। धारणीमुखानि न जानन्ति न पश्यन्ति। तथागतबलानि न जानन्ति न पश्यन्ति। चत्वारिवैशारद्यानि न जानन्ति न पश्यन्ति। चतस्रः प्रतिसम्विदो न जानन्ति न पश्यन्ति। महामैत्री न जानन्ति न पश्यन्ति। महाकरुणां न जानन्ति न पश्यन्ति। अष्टादशावेणिकान् बुद्धधर्म्मान्नजानन्ति न पश्यन्ति।

ते बाला इति संख्यां गच्छन्ति। ते न निर्यान्ति। कुतो न निर्यान्ति। कामधातोर्न निर्यान्ति। रूपधातोर्न निर्यान्ति। आरूप्यधातोर्न निर्यान्ति। श्रावकधातोर्न निर्यान्ति। प्रत्येकबुद्धभूमेर्न निर्यान्ति।

ते न श्रद्दधति। किमिति न श्रद्दधति। रूपं रूपेणशून्यमिति न श्रद्दधति। वेदनावेदनयाशून्येति न श्रद्दधति। संज्ञासंज्ञयाशून्येति न श्रद्दधति। संस्काराः संस्कारैः शून्या इति न श्रद्दधति। विज्ञानं विज्ञानेन शून्यमिति न श्रद्दधति।

चक्षुश्चक्षुषा शून्यमिति न श्रद्दधाति। एवं श्रोत्रेण शून्यमिति न श्रद्दधाति। घ्राणं घ्राणेन शून्यमिति न श्रद्दधाति। जिह्वा-जिह्वया शून्येति न श्रद्दधाति। कायः कायेन शून्य इति न श्रद्दधाति। मनो मनसा शून्यमिति न श्रद्दधाति। रूपं रूपेण शून्यमिति न श्रद्दधाति। शब्दः शब्देन शून्य इति न श्रद्दधाति। गन्धो गन्धेन शून्य इति न श्रद्दधाति। रसो रसेन शून्य इति न श्रद्दधाति। स्पर्शः स्पर्शेन शून्य इति न श्रद्दधाति। धर्म्माः धर्म्मैः शून्या इति न श्रद्दधाति। चक्षुर्व्विज्ञानं चक्षुर्व्विज्ञानेन शून्यमिति न श्रद्दधाति। श्रोत्रविज्ञानं श्रोत्रविज्ञानेन शून्यमिति न श्रद्दधाति। घ्राणविज्ञानं घ्राणविज्ञानेन शून्यमिति न श्रद्दधाति। जिह्वाविज्ञानं जिह्वाविज्ञानेन शून्यमिति न श्रद्दधाति। कायविज्ञानं काय-विज्ञानेन शून्यमिति न श्रद्दधाति। मनोविज्ञानं मनोविज्ञानेन शून्यमिति न श्रद्दधाति।

चक्षुःसंस्पर्शश्चक्षुःसंस्पर्शेन शून्य इति न श्रद्दधाति। श्रोत्रसंस्पर्शः श्रोत्रसंस्पर्शेन शून्य इति न श्रद्दधाति। घ्राणसंस्पर्शो घ्राणसंस्पर्शेन शून्य इति न श्रद्दधाति। जिह्वासंस्पर्शो जिह्वासंस्पर्शेन शून्य इति न श्रद्दधाति। कायसंस्पर्शः कायसंस्पर्शेन शून्य इति न श्रद्दधाति। मनःसंस्पर्शो मनःसंस्पर्शेन शून्य इति न श्रद्दधाति।

चक्षुःसंस्पर्शप्रत्ययवेदना चक्षुःसंस्पर्शप्रत्ययवेदनया शून्या इति न श्रद्दधाति। श्रोत्रसंस्पर्शप्रत्ययवेदना श्रोत्रसंस्पर्शप्रत्ययवेदनया शून्येति न श्रद्दधाति। घ्राणसंस्पर्शप्रत्ययवेदना घ्राणसंस्पर्शप्रत्ययवेदनया शून्येति न श्रद्दधाति। जिह्वासंस्पर्शप्रत्ययवेदना जिह्वासंस्पर्शप्रत्यय-

श्रद्दधति। महाकरुणा महाकरुणया शून्येति न श्रद्दधति। आवेणिकबुद्धधर्म्माः आवेणिकबुद्धधर्म्मैः शून्या इति न श्रद्दधति।

स्रोत आपत्तिफलं स्रोत आपत्तिफलेन शून्यमिति न श्रद्दधति। सकृदागामिफलं सकृदागामिफलेन शून्यमिति न श्रद्दधति। अनागामिकफलमनागामिकफलेन शून्यमिति न श्रद्दधति। अर्हत्त्वमर्हत्त्वेन शून्यमिति न श्रद्दधति। प्रत्येकबोधिः प्रत्येकबोध्या शून्येति न श्रद्दधति। मार्गाकारज्ञता मार्गाकारज्ञतया शून्येति न श्रद्दधति। सर्व्वाकारज्ञता सर्व्वाकारज्ञतया शून्येति न श्रद्दधति।

ते न प्रतितिष्ठन्ति। कमिति न प्रतितिष्ठन्ति। दानपारमितायां न प्रतितिष्ठन्ति। शीलपारमितायां न प्रतितिष्ठन्ति। क्षान्तिपारमितायां न प्रतितिष्ठन्ति। वीर्य्यपारमितायां न प्रतितिष्ठन्ति। ध्यानपारमितायां न प्रतितिष्ठन्ति। प्रज्ञापारमितायां न प्रतितिष्ठन्ति।

अध्यात्मशून्यतायां न प्रतितिष्ठन्ति। बहिर्द्धाशून्यतायां न प्रतितिष्ठन्ति। अध्यात्मबहिर्द्धाशून्यतायां न प्रतितिष्ठन्ति। शून्यताशून्यतायां न प्रतितिष्ठन्ति। महाशून्यतायां न प्रतितिष्ठन्ति। परमार्थशून्यतायां न प्रतितिष्ठन्ति। संस्कृतशून्यतायां न प्रतितिष्ठन्ति। असंस्कृतशून्यतायां न प्रतितिष्ठन्ति। अत्यन्तशून्यतायां न प्रतितिष्ठन्ति। अनवराग्रशून्यतायां न प्रतिष्ठन्ति। अनवकारशून्यतायां न प्रतितिष्ठन्ति। प्रकृतिशून्यतायां न प्रतितिष्ठन्ति। सर्व्वधर्म्मशून्यतायां न प्रतितिष्ठन्ति। स्वलक्षणशून्यतायां न प्रतितिष्ठन्ति। अनुपलम्भशून्यतायां न प्रतितिष्ठन्ति।

अभावशून्यतायां न प्रतितिष्ठन्ति। स्वभावशून्यतायां न प्रतितिष्ठन्ति। अभावस्वभावशून्यतायां न प्रतितिष्ठन्ति।

अवैवर्त्तिकभूमौ न प्रतितिष्ठन्ति। स्मृत्युपस्थानेषु न प्रतितिष्ठन्ति। सम्यक्प्रहाणेषु न प्रतितिष्ठन्ति। ऋद्धिपादेषु न प्रतितिष्ठन्ति। इन्द्रियेषु न प्रतितिष्ठन्ति। बलेषु न प्रतितिष्ठन्ति। बोध्यङ्गेषु न प्रतितिष्ठन्ति। आर्य्याष्टाङ्गमार्गे न प्रतितिष्ठन्ति। आर्य्यसत्येषु न प्रतितिष्ठन्ति। ध्यानेषु न प्रतितिष्ठन्ति। अप्रमाणेषु न प्रतितिष्ठन्ति। आरूप्यसमापत्तिषु न प्रतितिष्ठन्ति। अष्टासु विमोक्षेषु न प्रतितिष्ठन्ति। नवाऽनुपूर्व्वविहारसमापत्तिषु न प्रतितिष्ठन्ति। अभिज्ञासु न प्रतितिष्ठन्ति। समाधिषु न प्रतितिष्ठन्ति। धारणीमुखेषु न प्रतितिष्ठन्ति। तथागतबलेषु न प्रतितिष्ठन्ति। वैशारद्येषु न प्रतितिष्ठन्ति। प्रतिसम्वित्सु न प्रतितिष्ठन्ति। महामैत्र्यां न प्रतितिष्ठन्ति। महाकरुणायां न प्रतितिष्ठन्ति। अष्टादशावेणिकबुद्धधर्म्मेषु न प्रतितिष्ठन्ति।

तेऽभिनिविष्टाः। किमित्यभिनिविष्टाः। रूपेऽभिनिविष्टाः। वेदनायामभिनिविष्टाः। संज्ञायामभिनिविष्टाः। संस्कारेष्वभिनिविष्टाः। विज्ञानेऽभिनिविष्टाः। चक्षुःष्वभिनिविष्टाः। श्रोत्रेष्वभिनिविष्टाः। घ्राणेऽभिनिविष्टाः। जिह्वायामभिनिविष्टाः। कायेऽभिनिविष्टाः। मनस्यभिनिविष्टाः। रूपेऽभिनिविष्टाः। शब्देऽभिनिविष्टाः। गन्धेऽभिनिविष्टाः। रसेऽभिनिविष्टाः। स्पर्शेऽभिनिविष्टाः। धर्म्मेष्वभिनिविष्टाः। चक्षुर्धातावभिनिविष्टाः। श्रोत्रधातावभिनिविष्टाः। घ्राणधातावभिनिविष्टाः। जिह्वाधातावभिनिविष्टाः। कायधातावभिनिविष्टाः। मनोधातावभिनिविष्टाः।

चक्षुर्विज्ञानधातावभिनिविष्टाः। श्रोत्रविज्ञानधातावभिनिविष्टाः। घ्राणविज्ञानधातावभिनिविष्टाः। जिह्वाविज्ञानधातावभिनिविष्टाः। कायविज्ञानधातावभिनिविष्टाः। मनोविज्ञानधातावभिनिविष्टाः। धर्म्मधातुष्वभिनिविष्टाः। विज्ञानेऽभिनिविष्टाः। रागेऽभिनिविष्टाः। द्वेषेऽभिनिविष्टाः। मोहेऽभिनिविष्टाः। दृष्टिकृतेऽभिनिविष्टाः। अविद्यायामभिनिविष्टाः। संस्कारेष्वभिनिविष्टाः। विज्ञानेऽभिनिविष्टाः। नामरूपेऽभिनिविष्टाः। षडायतनेऽभिनिविष्टाः। स्पर्शेऽभिनिविष्टाः। वेदनायामभिनिविष्टाः। तृष्णायामभिनिविष्टाः। उपादानेऽभिनिविष्टाः। भावेऽभिनिविष्टाः। जातावभिनिविष्टाः। जरामरणेष्वभिनिविष्टाः।

दानपारमितायामभिनिविष्टाः। शीलपारमितायामभिनिविष्टाः। क्षान्तिपारमितायामभिनिविष्टाः। वीर्य्यपारमितायामभिनिविष्टाः। ध्यानपारमितायामभिनिविष्टाः। प्रज्ञापारमितायामभिनिविष्टाः।

अध्यात्मशून्यतायामभिनिविष्टाः। बहिर्द्धाशून्यतायामभिनिविष्टाः। अध्यात्मबहिर्द्धाशून्यतायामभिनिविष्टाः। शून्यताशून्यतायामभिनिविष्टाः। महाशून्यतायामभिनिविष्टाः। परमार्थशून्यतायामभिनिविष्टाः। संस्कृतशून्यतायामभिनिविष्टाः। असंस्कृतशून्यतायामभिनिविष्टाः। अत्यन्तशून्यतायामभिनिविष्टाः। अनवराग्रशून्यतायामभिनिविष्टाः। अनवकारशून्यतायामभिनिविष्टाः। प्रकृतिशून्यतायामभिनिविष्टाः। सर्व्वधर्म्मशून्यतायामभिनिविष्टाः। स्वलक्षणशून्यतायामभिनिविष्टाः। अनुपलम्भशून्यतायामभिनिविष्टाः।

अभावशून्यतायामभिनिविष्टाः। स्वभावशून्यतायामभिनिविष्टाः। अभावस्वभावशून्यतायामभिनिविष्टाः।

स्मृत्युपस्थानेष्वभिनिविष्टाः। सम्यक्प्रहाणेष्वभिनिनिष्टाः। ऋद्धिपादेष्वभिनिविष्टाः। इन्द्रियेष्वभिनिविष्टाः। बलेष्वभिनिविष्टाः। बोध्यङ्गेष्वभिनिविष्टाः। आर्य्याष्टाङ्गमार्गेऽभिनिविष्टाः। आर्य्यसत्येष्वभिमिनिविष्टाः। ध्यानेष्वभिनिविष्टाः। अप्रमाणेष्वभिनिविष्टाः। आरूप्यसमापत्तिष्वभिनिविष्टाः। अष्टासु विमोचेष्वभिनिविष्टाः। नवानुपूर्व्वविहारसमापत्तिष्वभिनिविष्टाः। शून्यतानिमित्ताप्रणिहितविमोचमुखेष्वभिनिविष्टाः। अभिज्ञास्वभिनिविष्टाः। समाधिष्वभिनिमिष्टाः। तथागतबलेष्वभिनिविष्टाः। वैशारद्येष्वभिनिविष्टाः। प्रतिसम्वित्स्वभिनिविष्टाः। महामैत्र्यामभिनिविष्टाः। महाकरुणायामभिनिविष्टाः। आवेणिकबुद्धधर्म्मेष्वभिनिविष्टाः। स्रोत आपत्तिफलेष्वभिनिविष्टाः। सकृदागामिफलेष्वभिनिविष्टाः। अनागामिफलेष्वभिनिविष्टाः। अर्हत्त्वेऽभिनिविष्टाः। प्रत्येकबोधावभिनिविष्टाः। मार्गाकारज्ञतायामभिनिविष्टाः। अनुत्तरायां सम्यक्सम्बोधावभिनिविष्टाः।

तेन कारणेन बाला इत्युच्यन्ते। आह। एवं शिक्षमाणो भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षते। सर्व्वाकारज्ञतायां निर्याति। भगवानाह। इह शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽनुपायकौशलेन प्रज्ञापारमितां कल्पयित्वाऽभिनिविशते। ध्यानपारमितां कल्पयित्वाऽभिनिविशते। वीर्य्यपारमितां कल्पयित्वाऽभिनिविशते। क्षान्तिपारमितां कल्पयित्वा-

ऽभिनिविशते। शीलपारमितां कल्पयित्वाऽभिनिविशते। दान-पारमितां कल्पयित्वाऽभिनिविशते। अध्यात्मशून्यतां कल्पयित्वाऽभिनिविशते। बहिर्धाशून्यतां कल्पयित्वाऽभिनिविशते। अध्यात्मबहिर्धाशून्यतां कल्पयित्वाऽभिनिविशते। शून्यताशून्यतां कल्पयित्वाऽभिनिविशते। महाशून्यतां कल्पयित्वाऽभिनिविशते। परमार्थशून्यतां कल्पयित्वाऽभिनिविशते। संस्कृतशून्यतां कल्पयित्वाऽभिनिविशते। असंस्कृतशून्यतां कल्पयित्वाऽभिनिविशते। अत्यन्तशून्यतां कल्पयित्वाऽभिनिविशते। अनवराग्रशून्यतां कल्पयित्वाऽभिनिविशते। अनवकारशून्यतां कल्पयित्वाऽभिनिविशते। प्रकृतिशून्यतां कल्पयित्वाऽभिनिविशते। सर्वधर्मशून्यतां कल्पयित्वाऽभिनिविशते। स्वलक्षणशून्यतां कल्पयित्वाऽभिनिविशते। अनुपलम्भशून्यतां कल्पयित्वाऽभिनिविशते। अभावशून्यतां कल्पयित्वाऽभिनिविशते। स्वभावशून्यतां कल्पयित्वाऽभिनिविशते। अभावस्वभावशून्यतां कल्पयित्वाऽभिनिविशते।

स्मृत्युपस्थानानि कल्पयित्वाऽभिनिविशते। सम्यक्प्रहाणानि कल्पयित्वाऽभिनिविशते। ऋद्धिपादान् कल्पयित्वाऽभिनिविशते। इन्द्रियाणि कल्पयित्वाऽभिनिविशते। बलानि कल्पयित्वाऽभिनिविशते। बोध्यङ्गानि कल्पयित्वाऽभिनिविशते। आर्याष्टाङ्गमार्गं कल्पयित्वाऽभिनिविशते। आर्यसत्यानि कल्पयित्वाऽभिनिविशते। ध्यानानि कल्पयित्वाऽभिनिविशते। अप्रमाणानि कल्पयित्वाऽभिनिविशते। आरूप्यसमापत्तीः कल्पयित्वाऽभिनिविशते। शून्यतानिमित्ताप्रणिहितविमोक्षाणि कल्पयित्वाऽभिनिविशते। अभिज्ञाः

कल्पयित्वाऽभिनिविशते। समाधीन् कल्पयित्वाऽभिनिविशते। धारणीमुखानि कल्पयित्वाऽभिनिविशते। तथागतबलानि कल्पयित्वाऽभिनिविशते। वैशारद्यानि कल्पयित्वाऽभिनिविशते। प्रतिसम्विदः कल्पयित्वाऽभिनिविशते। महामैत्रीं कल्पयित्वाऽभिनिविशते। महाकरुणां कल्पयित्वाऽभिनिविशते। अष्टादशावेणिकबुद्धधर्मान् कल्पयित्वाऽभिनिविशते। सर्व्वज्ञतां कल्पयित्वाऽभिनिविशते। मार्गाकारज्ञतां कल्पयित्वाऽभिनिविशते। सर्व्वाकारज्ञतां कल्पयित्वाऽभिनिविशते।

अनेन शारद्वतीपुत्र पर्य्यायेण बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां न शिक्षते। सर्व्वाकारज्ञतायां न निर्याति। आह। कथं पुनर्भगवन् बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षते। यथाशिक्षमाणः प्रज्ञापारमितायां निर्याति। भगवानाह। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरंस्तां प्रज्ञापारमितां नोपलभते। न समनुपश्यत्येव खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः ध्यानपारमितायां चरंस्तां ध्यानपारमितां नोपलभते न समनुपश्यत्येवं खलु शिक्षमाणः शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो वीर्य्यपारमितायां चरंस्तां वीर्य्यपारमितां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां

निर्यात्यनुपलम्भयोगेन। यदा खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः क्षान्तिपारमितायां चरंस्तां क्षान्तिपारमितां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः शीलपारमितायां चरंस्तां शीलपारमितां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो दानपारमितायां चरंस्तां दानपारमिता नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन।

यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽध्यात्मशून्यतायां चरंस्तामध्यात्मशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो बहिर्द्धाशून्यतायां चरंस्तां बहिर्द्धाशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽध्यात्मबहिर्द्धाशून्यतायां चरंस्तामध्यात्मबहिर्द्धाशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा खलु शारद्वतीपुत्र बोधिसत्त्वोमहा-

सत्त्वः शून्यताशून्यतायां चरंस्तां शून्यताशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो महाशून्यतायां चरंस्तां महाशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः परमार्थशून्यतायां चरंस्तां परमार्थशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः संस्कृतशून्यतायां चरंस्तां संस्कृतशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽसंस्कृतशून्यतायां चरंस्तामसंस्कृतशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽत्यन्तशून्यतायां चरंस्तामत्यन्तशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽनवराग्रशून्यतायां चरंस्तामनवराग्रशून्यतां नोपलभते न समनुपश्यत्येवं खलु शार-

द्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽनवकारशून्यतायां चरंस्तामनवकारशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रकृतिशून्यतायां चरंस्तां प्रकृतिशून्यतां नोपलभते न समनुपश्यत्येवं खलु बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः सर्व्वधर्म्मशून्यतायां चरंस्तां सर्व्वधर्म्मशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः स्वलक्षणशून्यतायां चरंस्तां स्वलक्षणशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽनुपलम्भशून्यतायां चरंस्तामनुपलम्भशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽभावशून्यतायां चरंस्तामभावशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भ-

योगेन । यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः स्वभावशून्यतायां चरंस्तां स्वभावशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽभावस्वभावशून्यतायां चरंस्तामभावस्वभावशून्यतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन ।

यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः स्मृत्युपस्थानेषु चरंस्तानि स्मृत्युपस्थानानि नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन । यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः सम्यक् प्रहाणेषु चरंस्तानि सम्यक् प्रहाणानि नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन । यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः ऋद्धिपादेषु चरंस्तानृद्धिपादान् नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन । यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्व इन्द्रियेषु चरंस्तानीन्द्रियाणि नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन । यदा शारद्वती-

पुच बोधिसत्त्वोमहासत्त्वोबलेषु चरंस्तानि बलानि नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुच बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुच बोधिसत्त्वोमहासत्त्वो बोध्यङ्गेषु चरंस्तानि बोध्यङ्गानि नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुच बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुच बोधिसत्त्वोमहासत्त्व आर्य्याष्टाङ्गमार्गं चरंस्तमार्य्याष्टाङ्गमार्गं नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुच बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुच बोधिसत्त्वोमहासत्त्व आर्य्यसत्येषु चरंस्तान्यार्य्यसत्यानि नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुच बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुच बोधिसत्त्वोमहासत्त्वो ध्यानेषु चरंस्तानि ध्यानानि नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुच बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुच बोधिसत्त्वोमहासत्त्वोऽप्रमाणेषु चरंस्तान्यप्रमाणानि नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुच बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुच बोधिसत्त्वोमहासत्त्व आरूप्यसमापत्तिषु चरंस्ता आरूप्यसमापत्तीर्नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुच बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां

शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो विमोक्षेषु चरंस्तानि विमोक्षाणि नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽनुपूर्व्वविहारसमापत्तिषु चरंस्ता अनुपूर्व्वविहारसमापत्तीर्नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु चरंस्तानि शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽभिज्ञासु चरंस्ता अभिज्ञानोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः समाधिषु चरंस्तान् समाधीन् नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोध्यानेषु चरंस्तानि ध्यानानि नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाण सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वो-

महासत्त्वोऽप्रमाणेषु चरंस्तान्यप्रमाणानि नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन ।

यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वश्चतसृषु प्रतिसम्वित्सु चरंस्ताः प्रतिसम्विदो नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन । यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो-महामैत्र्यां चरंस्तां महामैत्रीं नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन । यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो महाकरुणायां चरंस्तां महाकरुणां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन । यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो आवेणिकबुद्धधर्म्मेषु चरंस्तानावेणिकबुद्धधर्म्मान्नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन ।

यदा खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः सर्व्वाकारज्ञतायां चरंस्तां सर्व्वाकारज्ञतां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन । यदा शारद्वतीपुत्र बोधिसत्त्वो-महासत्त्वो मार्गाकारज्ञतायां चरंस्तां मार्गाकारज्ञतां नोपलभते न

समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन। यदा शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरंस्तां प्रज्ञापारमितां नोपलभते न समनुपश्यत्येवं खलु शारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षमाणः सर्व्वाकारज्ञतायां निर्यात्यनुपलम्भयोगेन।

आह। कस्याऽनुपलम्भयोगेन। भगवानाह। अध्यात्मशून्यताया अनुपलम्भयोगेन। बहिर्द्धाशून्यताया अनुपलम्भयोगेन। अध्यात्मबहिर्द्धाशून्यताया अनुपलम्भयोगेन। शून्यताशून्यताया अनुपलम्भयोगेन। महाशून्यताया अनुपलम्भयोगेन। परमार्थशून्यताया अनुपलम्भयोगेन। संस्कृतशून्यताया अनुपलम्भयोगेन। असंस्कृतशून्यताया अनुपलम्भयोगेन। अत्यन्तशून्यताया अनुपलम्भयोगेन। अनवराग्रशून्यताया अनुपलम्भयोगेन। अनवकारशून्यताया अनुपलम्भयोगेन। प्रकृतिशून्यताया अनुपलम्भयोगेन। सर्व्वधर्म्मशून्यताया अनुपलम्भयोगेन। स्वलक्षणशून्यताया अनुपलम्भयोगेन। अनुपलम्भशून्यताया अनुपलम्भयोगेन। अभावशून्यताया अनुपलम्भयोगेन। स्वभावशून्यताया अनुपलम्भयोगेन। अभावस्वभावशून्यताया अनुपलम्भयोगेन।

शतसाहस्रयाः प्रज्ञापारमितायाः पञ्चमः परिवर्त्तः॥

---

# अथ षष्ठः परिवर्त्तः।



अथायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः प्रज्ञापारमितायां शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः ध्यानपारमितायां शिक्षित्वा सर्व्वाकारज्ञतां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषो वीर्य्यपारमितायां शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः क्षान्तिपारमितायां शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः शील-पारमितायां शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकार-ज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषो दानपारमितायां शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत्। किमयं मायापुरुषोऽध्यात्मशून्यतायां शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः

सतः कथं निर्द्देष्टव्यं । यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषो बहिर्द्धाशून्यतायां शिचिला सर्व्वाकारज्ञतायां निर्यास्यति । सर्व्वाकारज्ञतामनुप्राप्स्यतीति । तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं । यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषोऽध्यात्मबहिर्द्धाशून्यतायां शिचिला सर्व्वाकारज्ञतायां निर्यास्यति । सर्व्वाकारज्ञतामनुप्राप्स्यतीति । तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं । यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः शून्यताशून्यतायां शिचिला सर्व्वाकारज्ञतायां निर्यास्यति । सर्व्वाकारज्ञतामनुप्राप्स्यतीति । तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं । यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषो महाशून्यतायां शिचिला सर्व्वाकारज्ञतायां निर्यास्यति । सर्व्वाकारज्ञतामनुप्राप्स्यतीति । तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं । यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः परमार्थशून्यतायां शिचिला सर्व्वाकारज्ञतायां निर्यास्यति । सर्व्वाकारज्ञतामनुप्राप्स्यतीति । तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं । यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः संस्कृतशून्यतायां शिचिला सर्व्वाकारज्ञतायां निर्यास्यति । सर्व्वाकारज्ञतामनुप्राप्स्यतीति । तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं । यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषोऽसंस्कृतशून्यतायां शिचिला सर्व्वाकारज्ञतायां निर्यास्यति । सर्व्वाकारज्ञतामनुप्राप्स्यतीति भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं । यो भगवन्नव पृच्छेत् मायापुरुषोऽत्यन्तशून्यतायां शिचिला सर्व्वाकारज्ञतायां स्यति । सर्व्वाकारज्ञतामनुप्राप्स्यतीति । तस्य भगवन्नेवं

मतः कथं निर्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषोऽनवराग्रशून्यतायां शिथिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः मतः कथं निर्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषोऽनवकारशून्यतायां शिथिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः मतः कथं निर्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः प्रकृतिशून्यतायां शिथिला सर्व्वाकारज्ञतायां निर्यास्यतीति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः मतः कथं निर्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः सर्व्वधर्मशून्यतायां शिथिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः मतः. कथं निर्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः स्वलक्षणशून्यतायां शिथिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः मतः कथं निर्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषोऽनुपलम्भशून्य-[illegible]ं शिथिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञताम-[illegible]ीति। तस्य भगवन्नेवं पृच्छतः मतः कथं निर्देष्टव्यं। [illegible] भगवन्नेवं पृच्छेत् किमयं मायापुरुषोऽभावशून्यतायां शिथिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः मतः कथं निर्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः स्वभावशून्यतायां शिथिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भग-

न्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषोऽभावस्वभावशून्यतायां शिचिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति।

तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं। पृच्छेत् किमयं मायापुरुषः स्मृत्युपस्थानेषु शिचिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः सम्यक् प्रहाणेषु शिचिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुष ऋद्धिपादेषु शिचिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुष इन्द्रियेषु शिचिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषो बोध्यङ्गेषु शिचिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुष आर्य्याष्टाङ्गमार्गे शिचिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुष आर्य्यसत्येषु शिचिला सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य

मतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषोऽनव-
राग्रशून्यतायां शिचित्वा सर्व्वाकारज्ञतायां निर्यास्यति । सर्व्वाका-
रज्ञतामनुप्राप्स्यतीति । तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्दे-
ष्टव्यं । यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषोऽनवकारशून्यतायां
शिचित्वा सर्व्वाकारज्ञतायां निर्यास्यति । सर्व्वाकारज्ञतामनुप्राप्स्य-
तीति । तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं । यो भगव-
न्नेवं पृच्छेत् किमयं मायापुरुषः प्रकृतिशून्यतायां शिचित्वा
सर्व्वाकारज्ञतायां निर्यास्यतीति । सर्व्वाकारज्ञतामनुप्राप्स्यतीति ।
तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं । यो भगवन्नेवं पृच्छेत्
किमयं मायापुरुषः सर्व्वधर्म्मशून्यतायां शिचित्वा सर्व्वाकारज्ञतायां
निर्यास्यति । सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः
सतः, कथं निर्द्देष्टव्यं । यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः
स्वलक्षणशून्यतायां शिचित्वा सर्व्वाकारज्ञतायां निर्यास्यति । सर्व्वा-
कारज्ञतामनुप्राप्स्यतीति । तस्य भगवन्नेवं पृच्छतः सतः कथं
निर्द्देष्टव्यं । यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषोऽनुपलम्भशून्य-
तायां शिचित्वा सर्व्वाकारज्ञतायां निर्यास्यति । सर्व्वाकारज्ञताम-
नुप्राप्स्यतीति । तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं ।
यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषोऽभावशून्यतायां शिचित्वा
सर्व्वाकारज्ञतायां निर्यास्यति । सर्व्वाकारज्ञतामनुप्राप्स्यतीति ।
तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं । यो भगवन्नेवं
पृच्छेत् किमयं मायापुरुषः स्वभावशून्यतायां शिचित्वा सर्व्वाकार-
ज्ञतायां निर्यास्यति । सर्व्वाकारज्ञतामनुप्राप्स्यतीति । तस्य भग-

मेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषोऽभावस्वभावशून्यतायां शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति।

तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं। पृच्छेत् किमयं मायापुरुषः स्मृत्युपस्थानेषु शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषः सम्यक् प्रहाणेषु शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुष ऋद्धिपादेषु शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुष इन्द्रियेषु शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुषो बोध्यङ्गेषु शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुष आर्य्याष्टाङ्गमार्गे शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य भगवन्नेवं पृच्छतः सतः कथं निर्द्देष्टव्यं। यो भगवन्नेवं पृच्छेत् किमयं मायापुरुष आर्य्यसत्येषु शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। तस्य

तत् किं मन्यसे सुभूते ऽन्यद्रूपमन्यमाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यावेदनाऽन्यामाया। आह। नोहीदं भगवन्। तत् किं मन्यसे सुभूते ऽन्यासंज्ञाऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्येसंस्काराः। अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यद्विज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यच्चक्षुरन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यच्छ्रोत्रमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यद्घ्राणमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याजिह्वाऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यःकायोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यन्मनोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यद्रूपमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यः शब्दोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्योगन्धोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्योरसोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यःस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्येधर्मा अन्यामाया। आह। नोहीदं भगवन्। भगवानाह।

तत् किं मन्यसे सुभूते ऽन्यचक्षुर्विज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यत् श्रोत्रविज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यद्घ्राणविज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यज्जिह्वाविज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यत्कायविज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यन्मनोविज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यश्चक्षुःसंस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यः श्रोत्रसंस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यो घ्राणसंस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यो जिह्वासंस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यः कायसंस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यो मनःसंस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्या चक्षुःसंस्पर्शप्रत्ययवेदनाऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्या श्रोत्रसंस्पर्शप्रत्ययवेदना अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्या घ्राणसंस्पर्शप्रत्ययवेदनाऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्या जिह्वा-

तत् किं मन्यसे सुभूते ऽन्यद्रूपमन्यमाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यावेदनाऽन्यामाया। आह। नोहीदं भगवन्। तत् किं मन्यसे सुभूते ऽन्यासंज्ञाऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्येसंस्कारा। अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यद्विज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यच्चक्षुरण्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यच्छ्रोत्रमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यद्घ्राणमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याजिह्वाऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यःकायोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यन्मनोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यद्रूपमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यः शब्दोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्योगन्धोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्योरसोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्य स्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्येधर्मा अन्यामाया। आह। नोहीदं भगवन्। भगवानाह।

तत् किं मन्यसे सुभूते ऽन्यच्चक्षुर्विज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यत् श्रोत्रविज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यद्घ्राणविज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यज्जिह्वाविज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यत्कायविज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यन्मनोविज्ञानमन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यच्चक्षुःसंस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यःश्रोत्रसंस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याघ्राणसंस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्योजिह्वासंस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यः कायसंस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्योमनःसंस्पर्शोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याचक्षुःसंस्पर्शप्रत्ययवेदनाऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याश्रोत्रसंस्पर्शप्रत्ययवेदना अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याघ्राणसंस्पर्शप्रत्ययवेदनाऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याजिह्वा-

संस्पर्शप्रत्ययवेदना ऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्याकायसंस्पर्शप्रत्ययवेदना ऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यामनःसंस्पर्शप्रत्ययवेदना ऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यः पृथिवीधातुरन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्योऽब्धातुरन्यामाया । आह । नोहीदं भगवन् । भगवानाह[1] । तत् किं मन्यसे सुभूते ऽन्यस्तेजोधातुरन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्योवायुधातुरन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्य आकाशधातुरन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्योविज्ञानधातुरन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्याऽविद्याऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्येसंस्कारा अन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यद्विज्ञानमन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यन्नामरूपमन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यत् षडायतनमन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यःस्पर्शोऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यावेदनाऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह ।

तत् किं मन्यसे सुभूते ऽन्याद्रूपणाऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यदुपादानमन्यामाया । आह । नोहीद भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्योभवोऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्याजातिरन्यामाया । आह । नोहीदं भगवन्। भगवानाह । तत् किं मन्यसे सुभूते ऽन्यत् जरामरणमन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यादानपारमिताऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्याशीलपारमिताऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्याक्षान्तिपारमिताऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यावीर्यपारमिताऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्याध्यानपारमिताऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्याप्रज्ञापारमिताऽन्यामाया । आह । नोहीदं भगवन् ।

भगवानाह । तत् किं मन्यसे सुभूते ऽन्याऽध्यात्मशून्यता अन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्याबहिर्द्धाशून्यता अन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्याऽध्यात्मबहिर्द्धाशून्यता अन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्याशून्यताशून्यता अन्यामाया । आह । नोहीदं

भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यामहाशून्यता-ऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यापरमार्थशून्यताऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यासंस्कृतशून्यता-ऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याऽसंस्कृतशून्यताऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्या अत्यन्तशून्यताऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याऽनवराग्रशून्यता अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याऽनवकारशून्यताऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याप्रकृतिशून्यताऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यासर्वधर्मशून्यताऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्या-स्वलक्षणशून्यताऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याऽनुपलम्भशून्यताऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याऽभाव-शून्यताऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यास्वभावशून्यताऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्याऽभावशून्यता-ऽन्यामाया। आह। नोहीदं भगवन्।

भगवानाह। तत् किं मन्यसे सुभूते ऽन्यानि स्मृत्युपस्थानानि

अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यानि सम्यक्प्रहाणानि अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्ये ऋद्धिपादाः अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यानीन्द्रियाणि अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् कि मन्यसे सुभूते ऽन्यानि बलानि अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यानि बोध्यङ्गानि अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्योऽष्टाङ्गमार्गोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यान्यार्यसत्यानि अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यानि ध्यानानि अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यान्यप्रमाणानि अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्या आरूप्यसमापत्तयोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यानि शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्या अभिज्ञा अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्ये समाधयोऽन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते ऽन्यानि धारणीमुखानि अन्यामाया। आह। नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे

सुभूते ऽन्यानि तथागतबलानि अन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यानि वैशारद्यानि अन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्या प्रतिसम्बिदोऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यामहामैत्री अन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यामहाकरुणाऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्येऽष्टादशावेणिकबुद्धधर्म्माः अन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्याबोधिरन्यामाया । आह । नोहीदं भगवन् ।

न भगवन्नन्यद्रुपमन्यामाया । रूपमेव माया मायैव रूपं । न भगवन्नन्यावेदनाऽन्यामाया । वेदनैव माया मायैव वेदना । न भगवन्नन्यासंज्ञाऽन्यामाया । संज्ञैव माया मायैव संज्ञा । न भगवन्नन्येसंस्कारा अन्यामाया । संस्कारा एव माया मायैव संस्काराः । न भगवन्नन्यद्विज्ञानमन्यमाया । विज्ञानमेव माया मायैव विज्ञानं । न भगवन्नन्यच्चक्षुरन्यामाया । चक्षुरेव माया मायैव चक्षुः । न भगवन्नन्यच्छ्रोत्रमन्यामाया । श्रोत्रमेव माया मायैव श्रोत्रं । न भगवन्नन्यद्घ्राणमन्यामाया । घ्राणमेव माया मायैव घ्राणं । न भगवन्नन्याजिह्वाऽन्यामाया । जिह्वैव माया मायैव जिह्वा । न भगवन्नन्यः कायोऽन्यामाया । काय एव माया मायैव कायः । न भगवन्नन्यन्मनोऽन्यामाया । मन एव माया मायैव मनः ।

न भगवन्नन्यद्रूपमन्यामाया । रूपमेव माया मायैव रूपं ।

न भगवन्नन्य शब्दोऽन्यामाया। शब्द एव माया मायैव शब्द'। न भगवन्नन्योगन्धोऽन्यामाया। गन्ध एव माया मायैव गन्धः। न भगवन्नन्योरसोऽन्यामाया। रस एव माया मायैव रसः। न भगवन्नन्य स्पर्शोऽन्यामाया। स्पर्श एव माया मायैव स्पर्श'। न भगवन्नन्ये धर्म्मा अन्यामाया। धर्म्मा एव माया मायैव धर्म्मा। न भगवन्नन्यचक्षुर्व्विज्ञानमन्या माया। चक्षुर्व्विज्ञानमेव माया मायैव चक्षुर्व्विज्ञान। न भगवन्नन्यत् श्रोत्रविज्ञानमन्या माया। श्रोत्रविज्ञानमेव माया मायैव श्रोत्रविज्ञान। न भगवन्नन्यद्घ्राण-विज्ञानमन्या माया। घ्राणविज्ञानमेव माया मायैव घ्राणविज्ञान। न भगवन्नन्यज्जिह्वाविज्ञानमन्या माया। जिह्वाविज्ञानमेव माया मायैव जिह्वाविज्ञान। न भगवन्नन्यत् कायविज्ञानमन्या माया। कायविज्ञानमेव माया मायैव कायविज्ञान। न भगवन्नन्यन्मनो-विज्ञानमन्या माया। मनोविज्ञानमेव माया मायैव मनोविज्ञान। न भगवन्नन्यश्चक्षु सस्पर्शोऽन्या माय। चक्षु सस्पर्श एव माया मायैव चक्षु सस्पर्श। न भगवन्नन्य श्रोत्रसस्पर्शोऽन्यामाया। श्रोत्रसस्पर्श एव माया मायैव श्रोत्रसस्पर्श। न भगवन्नन्यो घ्राणसस्पर्शोऽन्या माया। घ्राणसस्पर्श एव माया मायैव घ्राणसस्पर्श। न भगवन्नन्यो जिह्वा-सस्पर्शोऽन्या माया। जिह्वासस्पर्श एव माया मायैव जिह्वासस्पर्श.। न भगवन्नन्य कायसस्पर्शोऽन्या माया। कायसस्पर्श एव माया मायैव कायसस्पर्श। न भगवन्नन्योमन सस्पर्शोऽन्या माया। मन सस्पर्श एव माया मायैव मन सस्पर्श। न भगवन्नन्याचक्षुसस्पर्शप्रत्ययवेदना ऽन्यामाया। चक्षु सस्पर्शप्रत्ययवेदनैव माया मायैव चक्षु सस्पर्श-

सुभूते ऽन्यानि तथागतबलानि अन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यानि वैशारद्यानि अन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्या प्रतिसम्विदोऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यामहामैत्री अन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्यामहाकरुणाऽन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्येऽष्टादशावेणिकबुद्धधर्माः अन्यामाया । आह । नोहीदं भगवन् । भगवानाह । तत् किं मन्यसे सुभूते ऽन्याबोधिरन्यामाया । आह । नोहीदं भगवन् ।

न भगवन्नन्यद्रुपमन्यामाया । रूपमेव माया मायैव रूपं । न भगवन्नन्यावेदनाऽन्यामाया । वेदनैव माया मायैव वेदना । न भगवन्नन्यासंज्ञाऽन्यामाया । संज्ञैव माया मायैव संज्ञा । न वाधुध्नेसंस्कारा अन्यामाया । संस्कारा एव माया मायैव धातुरन्या माया भगवन्नन्यद्विज्ञातुरेव मा[illegible] । [illegible] भगवन्नन्यो विज्ञानधातुरन्या माया । विज्ञानधातुरेव माया मायैव विज्ञानधातुः । न भगवन्नन्याऽविद्याऽन्या माया । अविद्यैव माया मायैवाविद्या । न भगवन्नन्य संस्काराः अन्या माया । संस्कारा एव माया मायैव संस्काराः । न भगवन्नन्यद्विज्ञानमन्या माया । विज्ञानमेव माया मायैव विज्ञानं । न भगवन्नन्यनामरूपमन्या माया । नामरूपमेव माया मायैव नामरूपं । न भगवन्नन्यत् षड़ायतनमन्या माया । षड़ायतनमेव माया मायैव षड़ायतनं ।

न भगवन्नन्यः शब्दोऽन्यामाया। शब्द एव माया मायैव शब्दः। न भगवन्नन्योगन्धोऽन्यामाया। गन्ध एव माया मायैव गन्धः। न भगवन्नन्योरसोऽन्यामाया। रस एव माया मायैव रसः। न भगवन्नन्यः स्पर्शोऽन्यामाया। स्पर्श एव माया मायैव स्पर्शः। न भगवन्नन्ये धर्मा अन्यामाया। धर्मा एव माया मायैव धर्माः। न भगवन्नन्यच्चक्षुर्व्विज्ञानमन्या माया। चक्षुर्व्विज्ञानमेव माया मायैव चक्षुर्व्विज्ञानं। न भगवन्नन्यत् श्रोत्रविज्ञानमन्या माया। श्रोत्रविज्ञानमेव माया मायैव श्रोत्रविज्ञानं। न भगवन्नन्यद्घ्राण-विज्ञानमन्या माया। घ्राणविज्ञानमेव माया मायैव घ्राणविज्ञानं। न भगवन्नन्यज्जिह्वाविज्ञानमन्या माया। जिह्वाविज्ञानमेव माया मायैव जिह्वाविज्ञानं। न भगवन्नन्यत् कायविज्ञानमन्या माया। कायविज्ञानमेव माया मायैव कायविज्ञानं। न भगवन्नन्यन्मनो-विज्ञानमन्या माया। मनोविज्ञानमेव माया मायैव मनोविज्ञानं। न भगवन्नन्यश्चक्षुःसंस्पर्शोऽन्या माय। चक्षुःसंस्पर्श एव मा[illegible]ऽन्या [illegible]। [illegible]ऽन्यामा[illegible]या मायैव ध्यान-पारमिता। न भगवन्नन्या प्रज्ञापारमिताऽन्या माया। प्रज्ञा-पारमितैव माया मायैव प्रज्ञापारमिता।

न भगवन्नन्याऽध्यात्मशून्यताऽन्या माया। अध्यात्मशून्यतैव माया मायैवाध्यात्मशून्यता। न भगवन्नन्यावहिर्द्धाशून्यताऽन्या माया। वहिर्द्धाशून्यतैव माया मायैव वहिर्द्धाशून्यता। न भगवन्नन्याऽध्यात्मवहिर्द्धाशून्यताऽन्या माया। अध्यात्मवहिर्द्धाशून्यतैव माया मायैवाऽध्यात्मवहिर्द्धाशून्यता। न भगवन्नन्याशून्यताशून्यताऽन्यामाया।

शून्यताशून्यतैव माया मायैव शून्यता शून्यता। न भगवन्नन्या महाशून्यताऽन्या माया। महाशून्यतैव माया मायैव महाशून्यता। न भगवन्नन्या परमार्थशून्यताऽन्या माया। परमार्थशून्यतैव माया मायैव परमार्थशून्यता। न भगवन्नन्या संस्कृतशून्यताऽन्या माया। संस्कृतशून्यतैव माया मायैव संस्कृतशून्यता। न भगवन्नन्याऽसंस्कृतशून्यताऽन्या माया। असंस्कृतशून्यतैव माया मायैवासंस्कृतशून्यता। न भगवन्नन्याऽत्यन्तशून्यताऽन्या माया। अत्यन्तशून्यतैव माया मायैवात्यन्तशून्यता। न भगवन्नन्यानवराग्रशून्यताऽन्यामाया। अनवराग्रशून्यतैव माया मायैवाऽनवराग्रशून्यता। न भगवन्नन्यानवकारशून्यताऽन्या माया। अनवकारशून्यतैव माया मायैवानवकारशून्यता। न भगवन्नन्या प्रकृतिशून्यताऽन्या माया। प्रकृतिशून्यतैव माया मायैव प्रकृतिशून्यता। न भगवन्नन्या सर्व्वधर्मशून्यताऽन्या माया। सर्व्वधर्मशून्यतैव माया मायैव सर्व्वधर्मशून्यता। न भगवन्नन्यास्वलक्षणशून्यताऽन्या माया। स्वलक्षणशून्यतैव माया मायैव स्वलक्षणशून्यता। न भगवन्नन्याऽनुपलम्भशून्यताऽन्या माया। अनुपलम्भशून्यतैव माया मायैवानुपलम्भशून्यता। न भगवन्नन्याऽभावशून्यताऽन्या माया। अभावशून्यतैव माया मायैवाभावशून्यता। न भगवन्नन्या स्वभावशून्यताऽन्या माया। स्वभावशून्यतैव माया मायैव स्वभावशून्यता। न भगवन्नन्याऽभावस्वभावशून्यताऽन्या माया। अभावस्वभावशून्यतैव माया मायैवाभावस्वभावशून्यता।

न भगवन्नन्यानि स्मृत्युपस्थानान्यन्यामाया। स्मृत्युपस्थानान्येव माया मायैव स्मृत्युपस्थानानि। न भगवन्नन्यानि सम्यक्प्रहाणानि

अन्या माया। सम्यक्प्रहाणान्येव माया मायैव सम्यक्प्रहाणानि। न भगवन्नन्ये ऋद्धिपादा अन्यामाया। ऋद्धिपादा एव माया मायैव ऋद्धिपादाः। न भगवन्नन्यानीन्द्रियाण्यन्यामाया। इन्द्रियाण्येव माया मायैवेन्द्रियाणि। न भगवन्नन्यानि बलान्यमाया। बलान्येव माया मायैव बलानि। न भगवन्नन्यानि बोध्यङ्गान्यन्या माया। बोध्यङ्गान्येव माया मायैव बोध्यङ्गानि। न भगवन्नन्याऽर्य्याष्टाङ्गमार्गोऽन्या माया। आर्य्याष्टाङ्गमार्ग एव माया मायैवार्य्याष्टाङ्गमार्गः। न भगवन्नन्या न्यार्य्यसत्यान्यन्या माया। आर्य्यसत्यान्येव माया मायैवार्य्यसत्यानि। न भगवन्नन्यानि ध्यानान्यन्या माया। ध्यानान्येव माया मायैव ध्यानानि। न भगवन्नन्यान्यप्रमाणान्यन्या माया। अप्रमाणान्येव माया मायैवाप्रमाणानि। न भगवन्नन्या आरूप्यसमापत्तयोऽन्या माया। आरूप्यसमापत्तय एव माया मायैवारूप्यसमापत्तयः। न भगवन्नन्ये विमोचा अन्यामाया। विमोचा एव माया मायैव विमोचाः। न भगवन्नन्या नवानुपूर्व्वविहार समापत्तयोऽन्यामाया। नवानुपूर्व्वविहारसमापत्तय एव माया मायैव नवानुपूर्व्वविहारसमापत्तयः। न भगवन्नन्यानि शून्यतानिमित्ताप्रणिहितविमोचमुखानि अन्यामाया। शून्यतानिमित्ताप्रणिहितविमोचमुखान्येव माया मायैव शून्यतानिमित्ताप्रणिहितविमोचमुखानि। न भगवन्नन्याऽभिज्ञा अन्यामाया। अभिज्ञैव माया मायैवाभिज्ञा। न भगवन्नन्ये समाधयोऽन्यामाया। समाधय एव माया मायैव समाधयः। न भगवन्नन्यानि धारणीमुखान्यन्या माया। धारणीमुखान्येव माया मायैव धारणीमुखानि। न भगवन्नन्यानि तथागतबलान्यन्यामाया।

तथागतबलान्येव माया मायैव तथागतबलानि। न भगवन्नन्यानि वैशारद्यानि अन्यामाया। वैशारद्यान्येव माया मायैव वैशारद्यानि। न भगवन्नन्याः प्रतिसम्विदोऽन्यामाया। प्रतिसम्विद एव माया मायैव प्रतिसम्विदः। न भगवन्नन्यामहामैत्री अन्यामाया। महामैत्र्येव माया मायैव महामैत्री। न भगवन्नन्या महाकरुणाऽन्यामाया। महाकरुणैव माया मायैव महाकरुणा। न भगवन्नन्याऽष्टादशावेणिकबुद्धधर्माः अन्यामाया। अष्टादशावेणिकबुद्धधर्मा एव माया मायैवाष्टादशावेणिकबुद्धधर्माः। न भगवन्नन्यच्छ्रोत आपत्तिफलमन्यामाया। श्रोत आपत्तिफलमेव माया मायैव श्रोत आपत्तिफलं। न भगवन्नन्यत्सकृदागामिफलमन्यामाया। सकृदागामिफलमेव माया मायैव सकृदागामिफलं। न भगवन्नन्यदनागामिफलमन्यामाया। अनागामिफलमेव माया मायैवानागामिफलं। न भगवन्नन्यदर्हत्त्वमन्यामाया। अर्हत्त्वमेव माया मायैवार्हत्त्वं। न भगवन्नन्याप्रत्येकबोधिरन्यामाया। प्रत्येकबोधिरेव माया मायैव प्रत्येकबोधिः। न भगवन्नन्यामार्गाकारज्ञताऽन्यामाया। मार्गाकारज्ञतैव माया मायैव मार्गाकारज्ञता। न भगवन्नन्यासर्व्वाकारज्ञताऽन्यामाया। सर्व्वाकारज्ञतैव माया मायैव सर्व्वाकारज्ञता।

तत् किं मन्यसे सुभूतेऽपि सुमायाया उत्पादो वा निरोधो वा। आह नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूतेऽपि ऽसुमायायाः संक्लेशो वा व्यवदानं वा। आह नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते यस्य नोत्पादो न निरोधो न व्यवदानमपि स न प्रज्ञापारमितायां शिक्षिष्यते। सर्व्वाकारज्ञतायां

निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यतीति। आह नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूतेऽपैषा स संज्ञासमज्ञाप्रज्ञप्तिव्यवहारः। पञ्चसूपादानस्कन्धेषु यदुतबोधिसत्त्व इति। आह नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते संज्ञासमज्ञाप्रज्ञप्तिव्यवहारमात्रेण पञ्चानामुपादानस्कन्धानामुत्पादो वा निरोधो वा संक्लेशोवाव्यवदानं वोपलभ्यते। आह नोहीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते यस्य न संज्ञा न समज्ञा न प्रज्ञप्तिर्न व्यवहारो न नाम न नामप्रज्ञप्तिर्न कायो न कायकर्म्म, न वाक् न वाक्कर्म्म, न मनो न मनःकर्म्मनोत्पादो न निरोधो न सङ्क्लेशो न व्यवदानमपि नु स प्रज्ञापारमितायां शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यति सर्व्वाकारज्ञतामनुप्राप्स्यतीति। आह नोहीदं भगवन्।

भगवानाह। एवं खलु सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां शिक्षित्वा सर्व्वाकरज्ञतायां निर्यास्यति। सर्व्वाकारज्ञतामनुप्राप्स्यत्यनुपलम्भयोगेन। आह। यथाहं भगवन् भगवतोभाषितस्यार्थमाजानामि। प्रज्ञापारमितायां शिक्षमाणेन बोधिसत्त्वेन महासत्त्वेन मायापुरुषेणेव शिक्षितव्यं। भवत्यनुत्तरायां सम्यक्सम्बोधौ। तत्कस्य हेतोस्तथाहि भगवन् सर्व्वे एते मायापुरुषावेदितव्याः। यदुतपञ्चस्कन्धाः।

भगवानाह। तत् किं मन्यसे सुभूतेऽपि त्विमे पञ्चस्कन्धाः प्रज्ञापारमितायां शिक्षित्वा सर्व्वाकारज्ञतायां निर्यास्यन्ति। आह। नोहीदं भगवन्। तत्कस्य हेतोस्तथाहि भगवन्नभावस्वभावः पञ्चस्कन्धाः। स चाभावस्वभावोनोपलभ्यते। भगवानाह। तत् किं मन्यसे सुभूते

स्वप्नोपमाः पञ्चस्कन्धाः प्रज्ञापारमितायां शिचिला सर्व्वाकारज्ञतायां निर्यान्ति। आह नोहीदं भगवन्। तत्कस्य हेतोस्तथाहि भगवन्नभावस्वभावः पञ्चस्कन्धाः। स चाभावस्वभावो नोपलभ्यते। भगवानाह। तत् किं मन्यसे सुभूते मायोपमाः पञ्चस्कन्धाः प्रज्ञापारमितायां शिचिला सर्व्वाकारज्ञतायां निर्यान्ति। आह नोहीदं भगवन्। तत्कस्यहेतोस्तथाहि भगवन्नभावस्वभावाः पञ्चस्कन्धाः स चाभावस्वभावोनोपलभ्यते। भगवानाह। तत् किं मन्यसे सुभूते प्रतिश्रुत्कोपमाः पञ्चस्कन्धाः प्रज्ञापारमितायां शिचिला सर्व्वाकारज्ञतायां निर्यान्ति। आह नोहीदं भगवन्। तत्कस्य हेतोस्तथाहि भगवन्नभावस्वभावाः प्रतिश्रुत्काः स चाभावस्वभावोनोपलभ्यते। भगवानाह। तत् किं मन्यसे सुभूते प्रतिभासोपमाः पञ्चस्कन्धाः प्रज्ञापारमितायां शिचिला सर्व्वाकारज्ञतायां निर्यान्ति। आह नोहीदं भगवन्। तत्कस्य हेतोस्तथाहि भगवन्नभावस्वभावः प्रतिभासः स चाभावस्वभावो नोपलभ्यते। भगवानाह। तत् किं मन्यसे सुभूते उदकचन्द्रोपमाः पञ्चस्कन्धाः प्रज्ञापारमितायां शिचिला सर्व्वाकारज्ञतायां निर्यान्ति। आह नोहीदं भगवन्। तत्कस्य हेतोस्तथाहि भगवन्नभावस्वभाव उदकचन्द्रः स चाभावस्वभावोनोपलभ्यते। भगवानाह। तत् किं मन्यसे सुभूते मरीच्युपमाः पञ्चस्कन्धाः प्रज्ञापारमितायां शिचिला सर्व्वाकारज्ञतायां निर्यान्ति। आह नोहीदं भगवन्। तत्कस्य हेतोस्तथाहि भगवन्नभावस्वभावोमरीचिः स चाभावस्वभावोनोपलभ्यते। भगवानाह। तत् किं मन्यसे सुभूते निर्म्मितोपमाः पञ्चस्कन्धाः प्रज्ञापारमितायां शिचिला सर्व्वाकारज्ञतायां निर्यान्ति।

आह नोहीदं भगवन् । तत्कस्य हेतोस्तथाहि भगवन्नभावस्वभावो-निर्मितः । स चाभावस्वभावोनोपलभ्यते । भगवानाह । तत् किं मन्यसे सुभूते स्वप्नोपमं रूपं स्वप्नोपमा वेदना स्वप्नोपमा संज्ञा स्वप्नोपमाः संस्कारा. स्वप्नोपमं विज्ञानं । तत् षडिन्द्रियं ते पञ्चो-पादानस्कन्धाः । ते चाऽध्यात्मशून्यतया नोपलभ्यन्ते बहिर्द्धाशून्यतया नोपलभ्यन्ते। अध्यात्मबहिर्द्धाशून्यतया नोपलभ्यन्ते । शून्यताशून्यतया नोपलभ्यन्ते । महाशून्यतया नोपलभ्यन्ते । परमार्थशून्यतया नोप-लभ्यन्ते । संस्कृतशून्यतया नोपलभ्यन्ते । असंस्कृतशून्यतया नोप-लभ्यन्ते । अत्यन्तशून्यतया नोपलभ्यन्ते । अनवराग्रशून्यतया नोप-लभ्यन्ते । अनवकारशून्यतया नोपलभ्यन्ते । प्रकृतिशून्यतया नोप-लभ्यन्ते । सर्व्वधर्म्मशून्यतया नोपलभ्यन्ते । स्वलक्षणशून्यतया नोप-लभ्यन्ते । अनुपलम्भशून्यतया नोपलभ्यन्ते । अभावशून्यतया नोप-लभ्यन्ते । स्वभावशून्यतया नोपलभ्यन्ते । अभावस्वभावशून्यतया नोपलभ्यन्ते ।

मायोपमं सुभूते रूपं मायोपमा वेदना मायोपमा संज्ञा मायोपमाः सस्कारा: मायोपमं विज्ञानं । यच्च विज्ञानं तत् षडिन्द्रियं । तत् पञ्चोपादानस्कन्धाः । ते चाऽध्यात्मशून्यतया नोपलभ्यन्ते। बहिर्द्धाशून्यतया नोपलभ्यन्ते । अध्यात्मबहिर्द्धाशून्यतया नोपलभ्यन्ते । शून्यताशून्यतया नोपलभ्यन्ते । महाशून्यतया नोप-लभ्यन्ते । परमार्थशून्यतया नोपलभ्यन्ते । संस्कृतशून्यतया नोप-लभ्यन्ते । असंस्कृतशून्यतया नोपलभ्यन्ते । अत्यन्तशून्यतया नोप-लभ्यन्ते । अनवराग्रशून्यतया नोपलभ्यन्ते । अनवकारशून्यतया नोप-

लभ्यन्ते। प्रकृतिशून्यतया नोपलभ्यन्ते। सर्व्वधर्म्मशून्यतया नोपलभ्यन्ते। स्वलक्षणशून्यतया नोपलभ्यन्ते। अनुपलम्भशून्यतया नोपलभ्यन्ते। अभावशून्यतया नोपलभ्यन्ते। स्वभावशून्यतया नोपलभ्यन्ते। अभावस्वभावशून्यतया नोपलभ्यन्ते।

प्रतिश्रुत्कोपमं सुभूते रूपं प्रतिश्रुत्कोपमा वेदना प्रतिश्रुत्कोपमा संज्ञा। प्रतिश्रुत्कोपमाः संस्काराः। प्रतिश्रुत्कोपमं विज्ञानं। तत् षडिन्द्रियं तत्पञ्चोपादानस्कन्धास्ते चाऽध्यात्मशून्यतया नोपलभ्यन्ते। बहिर्द्धाशून्यतया नोपलभ्यन्ते। अध्यात्मबहिर्द्धाशून्यतया नोपलभ्यन्ते। शून्यताशून्यतया नोपलभ्यन्ते। महाशून्यतया नोपलभ्यन्ते। परमार्थशून्यतया नोपलभ्यन्ते। संस्कृतशून्यतया नोपलभ्यन्ते। असंस्कृतशून्यतया नोपलभ्यन्ते। अत्यन्तशून्यतया नोपलभ्यन्ते। अनवराग्रशून्यतया नोपलभ्यन्ते। अनवकारशून्यतया नोपलभ्यन्ते। प्रकृतिशून्यतया नोपलभ्यन्ते। सर्व्वधर्म्मशून्यतया नोपलभ्यन्ते। स्वलक्षणशून्यतया नोपलभ्यन्ते। अनुपलम्भशून्यतया नोपलभ्यन्ते। अभावशून्यतया नोपलभ्यन्ते। स्वभावशून्यतया नोपलभ्यन्ते। अभावस्वभावशून्यतया नोपलभ्यन्ते।

प्रतिभासोपमं सुभूते रूपं प्रतिभासोपमा वेदना। प्रतिभासोपमा संज्ञा। प्रतिभासोपमाः संस्काराः। प्रतिभासोपमं विज्ञानं। यच्च विज्ञानं तत् षडिन्द्रियं तत्पञ्चोपादानस्कन्धाः। ते चाऽध्यात्मशून्यतया नोपलभ्यन्ते। बहिर्द्धाशून्यतया नोपलभ्यन्ते। अध्यात्मबहिर्द्धाशून्यतया नोपलभ्यन्ते। शून्यताशून्यतया नोपलभ्यन्ते। महाशून्यतया नोपलभ्यन्त। परमार्थशून्यतया नोपलभ्यन्त। संस्कृत-

शून्यतया नोपलभ्यन्ते। असंस्कृतशून्यतया नोपलभ्यन्ते। अत्यन्तशून्यतया नोपलभ्यन्ते। अनवराग्रशून्यतया नोपलभ्यन्ते। अनवकारशून्यतया नोपलभ्यन्ते। प्रकृतिशून्यतया नोपलभ्यन्ते। सर्व्वधर्म्मशून्यतया नोपलभ्यन्ते। स्वलक्षणशून्यतया नोपलभ्यन्ते। अनुपलम्भशून्यतया नोपलभ्यन्ते। अभावशून्यतया नोपलभ्यन्ते। स्वभावशून्यतया नोपलभ्यन्ते। अभावस्वभावशून्यतया नोपलभ्यन्ते।

उदकचन्द्रोपमं सुभूते रूपं। उदकचन्द्रोपमा वेदना। उदकचन्द्रोपमा संज्ञा। उदकचन्द्रोपमाः संस्काराः। उदकचन्द्रोपमं विज्ञानं। यच्च विज्ञानं तत् षडिन्द्रियं तत्पञ्चोपादानस्कन्धाः। ते चाऽध्यात्मशून्यतया नोपलभ्यन्ते। बहिर्द्धाशून्यतया नोपलभ्यन्ते। अध्यात्मबहिर्द्धाशून्यतया नोपलभ्यन्ते। शून्यताशून्यतया नोपलभ्यन्ते। महाशून्यतया नोपलभ्यन्ते। परमार्थशून्यतया नोपलभ्यन्ते। संस्कृतशून्यतया नोपलभ्यन्ते। असंस्कृतशून्यतया नोपलभ्यन्ते। अत्यन्तशून्यतया नोपलभ्यन्ते। अनवराग्रशून्यतया नोपलभ्यन्ते। अनवकारशून्यतया नोपलभ्यन्ते। प्रकृतिशून्यतया नोपलभ्यन्ते। सर्व्वधर्म्मशून्यतया नोपलभ्यन्ते। स्वलक्षणशून्यतया नोपलभ्यन्ते। अनुपलम्भशून्यतया नोपलभ्यन्ते। अभावशून्यतया नोपलभ्यन्ते। स्वभावशून्यतया नोपलभ्यन्ते। अभावस्वभावशून्यतया नोपलभ्यन्ते।

मरीच्युपमं सुभूते रूपं मरीच्युपमा वेदना। मरीच्युपमा संज्ञा। मरीच्युपमाः संस्काराः। मरीच्युपमं विज्ञानं। यच्च विज्ञानं तत्षडिन्द्रियं। तत्पञ्चोपादानस्कन्धाः। ते चाऽध्यात्मशून्यतया नोपलभ्यन्ते। बहिर्द्धाशून्यतया नोपलभ्यन्ते। नाऽध्यात्म-

बहिर्द्धाशून्यतया नोपलभ्यन्ते। शून्यताशून्यतया नोपलभ्यन्ते। महाशून्यतया नोपलभ्यन्ते। परमार्थशून्यतया नोपलभ्यन्ते। संस्कृतशून्यतया नोपलभ्यन्त। असंस्कृतशून्यतया नोपलभ्यन्ते। अत्यन्तशून्यतया नोपलभ्यन्ते। अनवराग्रशून्यतया नोपलभ्यन्ते। अनवकारशून्यतया नोपलभ्यन्ते। प्रकृतिशून्यतया नोपलभ्यन्ते। सर्व्वधर्म्मशून्यतया नोपलभ्यन्ते। स्वलक्षणशून्यतया नोपलभ्यन्ते। अनुपलम्भशून्यतया नोपलभ्यन्ते। अभावशून्यतया नोपलभ्यन्ते। स्वभावशून्यतया नोपलभ्यन्ते। अभावस्वभावशून्यतया नोपलभ्यन्ते।

आह। माईव भगवन्नवयान संप्रस्थितो बोधिसत्त्वोमहासत्त्व इमं निर्द्देशं श्रुत्वात्तस्येत्सन्त्रासमापद्येत। भगवानाह। स चेत् सुभूते नवयानसंप्रस्थितो बोधिसत्त्वोमहासत्त्वो न प्रज्ञापारमितायामुपायकौशलो भवेत्। नैव कल्याणमित्रहस्तगतो भवेत्। उत्तस्येत् सन्त्रासमापद्येत। आह। कतमद्भगवन् बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायामुपायकौशलं। यच चरन् बोधिसत्त्वोमहासत्त्व इमं निर्द्देशं श्रुत्वा नोत्त्रस्यन्ति। न सन्त्रासमापद्येत।

भगवानाह। इह सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायाश्चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तेन चित्तेन रूपमनित्यमिति प्रत्यवेचते। तच्च नोपलभते। वेदनामनित्येति प्रत्यवेचते नोपलभते। संज्ञामनित्येति प्रत्यवेचते नोपलभते। संस्कारानित्या इति प्रत्यवेचते नोपलभते। विज्ञानमनित्यमिति प्रत्यवेचते नोपलभते। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं। पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापार-

मितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तेन चित्तेन रूपं दु खमिति प्रत्यवेचते तच्च नोपलभते । वेदनादु खेति* संज्ञादुःखेति संस्काराः दु.खा इति विज्ञानं दुःखमिति प्रत्यवेचते तच्च नोपलभते । इद बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिताया चरत उपायकौशलं । पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तेन चित्तेन रूपमनात्मेति प्रत्यवेचते तच्च नोपलभते । वेदना अनात्मेति संज्ञा अनात्मेति संस्कारा अनात्मान इति विज्ञानमनात्मेति प्रत्यवेचते तच्च नोपलभते । इद सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं । पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्व प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञता प्रतिसयुक्तेन चित्तेन रूप शान्तमिति प्रत्यवेचते तच्च नोपलभते वेदना शान्तेति सज्ञा शान्तेति सस्काराः शान्ता इति विज्ञान शान्तमिति प्रत्यवेचते तच्च नोपलभते । इद सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतमुपायकौशल । पुनरपर सुभूते बोधिसत्त्वोमहासत्त्व· प्रज्ञापारमितायां चरन सर्व्वाकारज्ञताप्रतिसयुक्तेन चित्तेन रूप शून्यमिति वेदनाशून्येति संज्ञाशून्येति सस्कारा. शून्या इति विज्ञान शून्यमिति प्रत्यवेचते तच्च नोपलभते । इद सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशल । पुनरपर सुभूते बोधिसत्त्वोमहासत्त्व

---

* ख । ग । घ । पुस्तके वेदना, सज्ञा, इत्यादिशब्दोत्तर दु खादिशब्दात् परं प्रत्यवेचते तच्च नोपलभते इति लिखित । एव परत्रापि सर्व्वत्र-वेदनादिशब्दोत्तरानात्मादिशब्दात् परमपि ।

प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञता प्रतिसंयुक्तेन चित्तेन रूपमानिमित्तमिति वेदना आनिमित्तेति संज्ञा आनिमित्तेति संस्काराः आनिमित्ता इति विज्ञानमानिमित्तमिति प्रत्यवेचते तच्च नोपलभते। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं।

पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्वाकारज्ञता प्रतिसंयुक्तेन चित्तेन रूपमप्रणिहितमिति प्रत्यवेचते तच्च नोपलभते। वेदनाऽप्रणिहितेति प्रत्यवेचते तच्च नोपलभते। संज्ञाऽप्रणिहितेति प्रत्यवेचते तच्च नोपलभते। संस्काराः अप्रणिहि-तेति प्रत्यवेचते तच्च नोपलभते। विज्ञानमप्रणिहितमिति प्रत्यवेचते तच्च नोपलभते। इदं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं। पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञा-पारमितायां चरन् सर्व्वाकारज्ञता प्रतिसंयुक्तेन चित्तेन रूपमनभि-संस्कारमिति प्रत्यवेचते तच्च नोपलभते। वेदनाऽनभिसंस्कारेति प्रत्यवेचते। तच्च नोपलभते। संज्ञाऽनभिसंस्कारेति प्रत्यवेचते तच्च नोपलभते। संस्कारा अनभिसंस्कारा इति प्रत्यवेचते तच्च नोप-लभते। विज्ञानमनभिसंस्कारमिति प्रत्यवेचते तच्च नोपलभते। इदं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं। पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तेन चित्तेन रूपं विविक्तमिति प्रत्यवेचते तच्च नोपलभते। वेदनाविविक्तेति प्रत्यवेचते तच्च नोपलभते। संज्ञाविविक्तेति प्रत्यवेचते तच्च नोपलभते। संस्काराविविक्ता इति

प्रत्यवेक्षते तांश्च नोपलभते। विज्ञानं विविक्तमिति प्रत्यवेक्षते तच्च नोपलभते। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं।

पुनरपि सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञता प्रतिसंयुक्तेन चित्तेन रूपमनित्याकारेण प्रत्यवेक्षते तच्च नोपलभते। वेदनामनित्याकारेण प्रत्यवेक्षते तच्च नोपलभते। संज्ञामनित्याकारेण प्रत्यवेक्षते तच्च नोपलभते। संस्कारानिनित्याकारेण प्रत्यवेक्षते तांश्च नोपलभते। विज्ञानमनित्याकारेण प्रत्यवेक्षते तच्च नोपलभते। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं।

पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तेन चित्तेन रूपं दुःखाकारेण प्रत्यवेक्षते तच्च नोपलभते। वेदनां दुःखाकारेण प्रत्यवेक्षते तच्च नोपलभते। संज्ञां दुःखाकारेण प्रत्यवेक्षते तच्च नोपलभते। संस्कारान् दुःखाकारेण प्रत्यवेक्षते तांश्च नोपलभते। विज्ञानं दुःखाकारेण प्रत्यवेक्षते तच्च नोपलभते। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं।

पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञता प्रतिसंयुक्तेन चित्तेन रूपमनात्माकारेण प्रत्यवेक्षते-तच्च नोपलभते। वेदनामनात्माकारेण प्रत्यवेक्षते तच्च नोपलभते। संज्ञामनात्माकारेण प्रत्यवेक्षते तच्च नोपलभते। संस्कारानात्माकारेण प्रत्यवेक्षते तांश्च नोपलभते। विज्ञानमनात्माकारेण

प्रत्यवेक्षते तच्च नोपलभते। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः रूपं शान्ताकारेण प्रत्यवेक्षते तच्च नोपलभते। वेदनां शान्ताकारेण प्रत्यवेक्षते तच्च नोपलभते। संज्ञां शान्ताकारेण प्रत्यवेक्षते तच्च नोपलभते। संस्कारान् शान्ताकारेण प्रत्यवेक्षते तांश्च नोपलभते। विज्ञानं शान्ताकारेण प्रत्यवेक्षते तच्च नोपलभते। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः रूपं शून्याकारेण प्रत्यवेक्षते तच्च नोपलभते। वेदनां शून्याकारेण प्रत्यवेक्षते तच्च नोपलभते। संज्ञां शून्याकारेण प्रत्यवेक्षते तच्च नोपलभते। संस्कारान् शून्याकारेण प्रत्यवेक्षते तांश्च नोपलभते। विज्ञानं शून्याकारेण प्रत्यवेक्षते तच्च नोपलभते। इदं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैरूपमानिमित्तमिति प्रत्यवेक्षते तच्च नोपलभते। वेदनामानिमित्ताकारेण प्रत्यवेक्षते तच्च नोपलभते। संज्ञामानिमित्ताकारेण प्रत्यवेक्षते तच्च नोपलभते। संस्कारानानिमित्ताकारेण प्रत्यवेक्षते तांश्च नोपलभते। विज्ञानमानिमित्ताकारेण प्रत्यवेक्षते तच्च नोपलभते। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारै रूपमप्रणिहिताकारेण प्रत्यवेक्षते तच्च नोपलभते। वेदनामप्रणिहिताकारेण प्रत्यवेक्षते तच्च नोपलभते। संज्ञामप्रणिहिताकारेण प्रत्यवेक्षते तच्च नोपलभते। संस्कारान् अप्रणिहिताकारेण प्रत्यवेक्षते तच्च नोपलभते। विज्ञानमप्रणिहिताकारेण प्रत्यवेक्षते तच्च नोपलभते। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारै रूपमनभिसंस्काराकारेण प्रत्यवेक्षते तच्च नोपलभते। वेदनामनभिसंस्काराकारेण प्रत्यवेक्षते तच्च नोपलभते। संज्ञामनभिसंस्काराकारेण प्रत्यवेक्षते तच्च नोपलभते। संस्कारानभिसंस्काराकारेण प्रत्यवेक्षते तांश्च नोपलभते। विज्ञानमनभिसंस्काराकारेण प्रत्यवेक्षते तच्च नोपलभते। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारै रूपं विविक्ताकारेण प्रत्यवेक्षते तच्च नोपलभते। वेदनां विविक्ताकारेण प्रत्यवेक्षते तच्च नोपलभते। संज्ञां विविक्ताकारेण प्रत्यवेक्षते तच्च नोपलभते। संस्कारान् विविक्ताकारेण प्रत्यवेक्षते तांश्च नोपलभते। विज्ञानं विविक्ताकारेण प्रत्यवेक्षते तच्च नोपलभते। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलं।

तस्य पुनः सुभूते बोधिसत्त्वस्य महासत्त्वस्यैवं प्रत्यवेक्षमाणस्यैवं भवत्यहं सर्व्वसत्त्वेभ्यो रूपमनित्यमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। रूपं दुःखमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। रूपमनात्मेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। रूपं शान्तमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। रूपं शून्यमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। रूपमानिमित्तमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। रूपमप्रणिहितमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। रूपमनभिसंस्कारमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। रूपं विविक्तमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन।

वेदनामनित्येति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। वेदनां दुःखेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। वेदनामनात्मेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। वेदनां शान्तेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। वेदनां शून्येति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। वेदनामानिमित्तेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। वेदनामप्रणिहितेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। वेदनामनभिसंस्कारेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। वेदनां विविक्तेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन।

संज्ञामनित्येति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संज्ञां दुःखेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संज्ञामनात्मेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संज्ञां शान्तेति धर्मं देश-

यिष्यामि तच्चाऽनुपलम्भयोगेन। संज्ञां शून्येति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संज्ञामानिमित्तेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संज्ञामप्रणिहितेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संज्ञामनभिसंस्कारेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संज्ञां विविक्तेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन।

संस्काराननित्या इति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संस्कारान् दुःखा इति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संस्कारानात्मान इति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संस्कारान् शान्ता इति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संस्कारान् शून्या इति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संस्कारानानिमित्ता इति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संस्कारानप्रणिहिता इति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संस्काराननभिसंस्कारा इति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। संस्कारानविविक्ता इति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन।

विज्ञानमनित्यमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। विज्ञानं दुःखमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। विज्ञानमनात्मेति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। विज्ञानं शान्तमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। विज्ञानं शून्यमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। विज्ञानमानिमित्तमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। विज्ञानम-

प्रणिहितमिति धर्मं देशयिष्यामि। तच्चाऽनुपलम्भयोगेन। विज्ञानमनभिसंस्कारमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन। विज्ञानं विविक्तमिति धर्मं देशयिष्यामि तच्चाऽनुपलम्भयोगेन।

इयं सुभूते बोधिसत्त्वस्य महासत्त्वस्य दानपारमिता। येन बोधिसत्त्वोमहासत्त्वो मोक्ष्यति। न सन्नत्स्यति। न सन्नाससमापद्यते।

पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैरूपमनित्याकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैरूपमनित्याकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैरूपं शान्ताकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैरूपं शून्याकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैरूपमानिमित्ताकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैरूपमप्रणिहिताकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैरूपमनभिसंस्काराकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैरूपं विविक्ताकारेण मनसिकरोति तच्चानुपलम्भयोगेन।

यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्वेदनामनित्याकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्वेदनां दुःखाकारेण मनसिकरोति तच्चानुपलम्भयोगेन।

यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्वेदनामनात्माकारेण मनसिकरोति तथानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्वेदनां शान्ताकारेण मनसिकरोति तथानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तमनसिकारैर्वेदनां शून्याकारेण मनसिकरोति तथानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तमनसिकारैर्वेदनामानिमित्ताकारेण मनसिकरोति तथानुपलम्भयोगेन। यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्वेदनामप्रणिहिताकारेण मनसिकरोति तथानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्वेदनामनभिसंस्काराकारेण मनसिकरोति तथानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्वेदनां विविक्ताकारेण मनसिकरोति तथानुपलम्भयोगेन ।

यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः सञ्ज्ञामनित्याकारेण मनसिकरोति तथानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः सञ्ज्ञां दुःखाकारेण मनसिकरोति तथानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः सञ्ज्ञामनात्माकारेण मनसिकरोति तथानुपलम्भयोगेन। यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः सञ्ज्ञां शान्ताकारेण मनसिकरोति तथानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः सञ्ज्ञा शून्याकारेण मनसिकरोति तथानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः सञ्ज्ञामानिमित्ताकारेण मनसिकरोति तथानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः सञ्ज्ञामप्रणिहिताकारेण मनसिकरोति तथानुपलम्भयोगेन। यत्र श्रावकप्रत्येक-

बुद्धप्रतिसंयुक्तैर्मनसिकारैः संज्ञामनभिसंस्काराकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः संज्ञां विविक्ताकारेण मनसिकरोति तच्चानुपलम्भयोगेन ।

यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः संस्कारानानित्याकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः संस्कारान् दुःखाकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः संस्कारानना-त्माकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यत्र श्रावकप्रत्येक-बुद्धप्रतिसंयुक्तैर्मनसिकारैः संस्कारान् शान्ताकारेण मनसिकरोति तच्चानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः संस्कारान् शून्याकारेण मनसिकरोति । तच्चानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः संस्कारानानिमित्ताकारेण मनसिकरोति तच्चानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रति-संयुक्तैर्मनसिकारैः संस्कारानप्रणिहिताकारेण मनसिकरोति तच्चा-नुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः संस्का-राननभिसंस्काराकारेण मनसिकरोति तच्चानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैः संस्कारान् विविक्ताकारेण मनसिकरोति तच्चानुपलम्भयोगेन।

यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्विज्ञानमनित्याकारेण मनसिकरोति तच्चानुपलम्भयोगेन । यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तै-र्मनसिकारैर्विज्ञानं दुःखाकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यत्र श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्विज्ञानमनात्माकारेण

मनसिकरोति तच्चानुपलम्भयोगेन । यन्न श्रावकप्रत्येकबुद्धप्रति-संयुक्तैर्मनसिकारैर्व्विज्ञानं शान्ताकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्व्विज्ञानं शून्याकारेण मनसिकरोति तच्चानुपलम्भयोगेन । यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्व्विज्ञानमानिमित्ताकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्व्विज्ञानमप्रणिहिताकारेण मनसिकरोति तच्चानुपलम्भयोगेन । यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्व्विज्ञानमनभिसंस्काराकारेण मनसिकरोति तच्चानुपलम्भयोगेन। यन्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैर्व्विज्ञानं विविक्ताकारेण मनसिकरोति तच्चानुपलम्भयोगेन।

इयं सुभूते* बोधिसत्त्वस्य महासत्त्वस्यापरामृष्टाशीलपारमिता येन बोधिसत्त्वोमहासत्त्वो नोत्स्यति न सत्स्यति न सन्नामापद्यते।

पुनरपरं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो येषां धर्म्माणामनित्याकारेण दुःखाकारेणानात्माकारेण शून्याकारेणानिमित्ताकारेणाप्रणिहिताकारेणानभिसंस्काराकारेण विविक्ताकारेण प्रत्यवेचतेचमनारोचनेयं बोधिसत्त्वस्य महासत्त्वस्य चान्तिपारमिता येन बोधिसत्त्वोमहासत्त्वो नोत्स्यति न सत्स्यति न सन्नाममापद्यते ।

पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरूपमनित्यमिति प्रत्यवेचते तच्चानुपलम्भयोगेन । सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरूपं दुःखमिति प्रत्यवेचते तच्चानुपलम्भयोगेन। सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारै-

* एवमेव पाठ ख, ग, घ, पुस्तकेऽपि दृश्यते । अर्थस्तु न सङ्गच्छते ।

रूपमनात्मेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरूप शान्तमिति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरूप शून्यमिति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरूपमानिमित्तमिति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरूपमप्रणिहितमिति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरूपमनभिसंस्कारमिति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरूप विविक्तमिति प्रत्यवेक्षते तच्चानुपलम्भयोगेन।

सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्वेदनाऽनित्येति वेदनादुःखेति* वेदनाऽनात्मेति वेदनाशान्तेति वेदनाशून्येति वेदना आनिमित्तेति वेदनाऽप्रणिहितेति वेदनाऽनभिसंस्कारेति वेदनाविविक्तेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संज्ञाऽनित्येति संज्ञादुःखेति संज्ञा अनात्मेति संज्ञाशान्तेति संज्ञाशून्येति संज्ञा आनिमित्तेति संज्ञाऽप्रणिहितेति संज्ञाऽनभिसंस्कारेति संज्ञाविविक्तेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संस्कारा अनित्या इति संस्कारादुःखा इति संस्कारा अनात्मान इति संस्कारा शान्ता इति संस्कारा शून्या इति संस्कारा आनिमित्ता इति संस्कारा अप्रणिहिता इति संस्कारा अनभिसंस्कारा इति संस्कारा विविक्ता इति प्रत्यवेक्षते

* वेदनादिष्वपि सर्व्वाकारज्ञताप्रतिसंयुक्तैरित्यादिपदानां निर्देशोऽस्तिरूपवदिति ग्रन्थस्य रीत्यानुमीयते यादर्शपुस्तके तु तथानिर्देशो नास्ति।

तथानुपलम्भयोगेन। सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्विज्ञानमनित्यमिति विज्ञानं दुःखमिति विज्ञानमनात्मेति विज्ञानं शान्तमिति विज्ञानं शून्यमिति विज्ञानमानिमित्तमितिविज्ञानमप्रणिहितमिति विज्ञानमनभिसंस्कारमिति विज्ञानं विविक्तमितिप्रत्यवेक्षते तथानुपलम्भयोगेन। तद्यथा* तेषां सर्व्वाकारज्ञताप्रतिसंयुक्तानां मनसिकाराणां मनुत्सर्जनता अनिक्षिप्तधुरता इयं बोधिसत्त्वस्य महासत्त्वस्य वीर्य्यपारमिता येन बोधिसत्त्वोमहासत्त्वो नोत्त्रस्यति न सन्त्रस्यति न सन्त्रासमापद्यते।

पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरूपमनित्यमिति प्रत्यवेक्षते तथानुपलम्भयोगेन। नच श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति। तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरूपं दुःखमिति प्रत्यवेक्षते तथानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः रूपमनात्मेति प्रत्यवेक्षते तथानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददादि तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

---

* इति समस्तपुस्तकेषु पाठ।

यदा बोधिसत्त्वोमहासत्त्व प्रज्ञापारमितायां चरन् सर्व्वाकार-ज्ञताप्रतिसंयुक्तैर्मनसिकारैरूपं शान्तमिति प्रत्यवेक्षते तच्चानुपलम्भ-योगेन । न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामव-काशं ददाति न च तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधे परिपन्थकरा ।

यदा बोधिसत्त्वोमहासत्त्व प्रज्ञापारमितायां चरन् सर्व्वाकार-ज्ञताप्रतिसंयुक्तैर्मनसिकारैरूपं शून्यमिति प्रत्यवेक्षते तच्चानुपलम्भ-योगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधे परिपन्थकरा ।

यदा बोधिसत्त्वोमहासत्त्व प्रज्ञापारमितायां चरन् सर्व्वा-कारज्ञताप्रतिसंयुक्तैर्मनसिकारै रूपमानिमित्तमिति प्रत्यवेक्षते तच्चानुपलम्भयोगेन । न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसि-काराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधे परिपन्थकरा ।

यदा बोधिसत्त्वोमहासत्त्व प्रज्ञापारमितायां चरन् सर्व्वाकार-ज्ञताप्रतिसंयुक्तैर्मनसिकारैरूपमप्रणिहितमिति प्रत्यवेक्षते तच्चा-नुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसि-काराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां ये बोधे परिपन्थकरा ।

यदा बोधिसत्त्वोमहासत्त्व प्रज्ञापारमितायां चरन् सर्व्वाकार-ज्ञताप्रतिसंयुक्तैर्मनसिकारैरूपमनभिसंस्कारमिति प्रत्यवेक्षते तच्चा-नुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकारा-

णामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः ।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरूपं विविक्तमिति प्रत्यवेक्षते तच्चानुपलम्भयोगेन । न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः ।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्वेदनामनित्येति प्रत्यवेक्षते तच्चानुपलम्भयोगेन । न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः ।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्वेदनां दुःखेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददादि तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः ।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्वेदनामनात्मेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन । न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः ।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्वेदनां शान्तेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधे परिपन्थकराः ।

यदा बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संज्ञाऽनित्येति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संज्ञा दुःखेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति न च तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संज्ञाऽनात्मेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति न च तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संज्ञाशान्तेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संज्ञाशून्येति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संज्ञा आनिमित्तेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रति संयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संज्ञाऽप्रणिहितेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संज्ञाऽनभिसंस्कारेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संज्ञाविविक्तेति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संस्कारा अनित्या इति प्रत्यवेक्षते तच्चा-

नुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संस्कारादुःखा इति प्रत्यवेचते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संस्कारा अनात्मान इति प्रत्यवेचते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलधर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संस्काराः शान्ता इति प्रत्यवेचते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संस्काराः शून्या इति प्रत्यवेचते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संस्कारा आनिमित्ता इति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संस्कारा अप्रणिहिता इति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारै अनभिसंस्कारा इति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः संस्काराविविक्ता इति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषाञ्चाकुशलमूलानां धर्म्माणां ये बोधेः परिपन्थकराः।

यदा बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्विज्ञानमनित्यमिति प्रत्यवेक्षते तच्चा-

नुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषामकुशलमूलानां धर्म्माणां ये बोधे परिपन्थकराः।

श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारै विज्ञानं दुःखमिति प्रत्यवेक्षते तच्चानुपलम्भयोगेन। न च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामवकाशं ददाति तदन्येषामकुशलमूलानां धर्म्माणां ये बोधे परिपन्थकराः। इयं सुभूते बोधिसत्त्वस्य महासत्त्वस्य ध्यानपारमिता। येन बोधिसत्त्वोमहासत्त्वो नोत्तरिष्यति न पतिष्यति न सत्त्वसमापद्यते।

पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरेव प्रत्यवेक्षते। न रूपशून्यतया रूपं शून्यं रूपमेव शून्यता शून्यतैव रूपं। न वेदना शून्यतया वेदनाशून्या वेदनैव शून्यता शून्यतैव वेदना। न संज्ञाशून्यतया संज्ञाशून्या संज्ञैव शून्यता शून्यतैव संज्ञा। न संस्कारशून्यतया संस्काराः शून्याः संस्कारा एव शून्यता शून्यतैव संस्काराः। न विज्ञानशून्यतया विज्ञानं शून्यं। विज्ञानमेव शून्यता शून्यतैव विज्ञानं।

न चक्षुः शून्यतया चक्षुः शून्यं चक्षुरेव शून्यता शून्यतैव चक्षुः। न श्रोत्रं शून्यतया श्रोत्रं शून्यं श्रोत्रमेव शून्यता शून्यतैव श्रोत्रं। न घ्राणशून्यतया घ्राणं शून्यं घ्राणमेव शून्यता शून्यतैव घ्राणं। न जिह्वाशून्यतया जिह्वाशून्या जिह्वैव शून्यता शून्यतैव जिह्वा। न कायशून्यतया कायः शून्यः कायएव शून्यता शून्यतैव कायः। न मनः शून्यतया मनः शून्यं मनएव शून्यता शून्यतैव मनः।

न रूपशून्यतयारूपं शून्यं रूपमेव शून्यता शून्यतैव रूपं। न शब्दशून्यतया शब्दः शून्यः शब्दएव शून्यता शून्यतैव शब्दः। न गन्धशून्यतया गन्धः शून्यः गन्धएव शून्यता शून्यतैव गन्धः। न रसशून्यतया रसः शून्यः रसएव शून्यता शून्यतैव रसः। न स्पर्श-शून्यतया स्पर्शः शून्यः स्पर्शएव शून्यता शून्यतैव स्पर्शः। न धर्मशू-न्यतया धर्माः शून्याः धर्माएव शून्यता शून्यतैव धर्माः।

न चक्षुर्विज्ञानशून्यतया चक्षुर्विज्ञानं शून्यं चक्षुर्विज्ञानमेव शून्यता शून्यतैव चक्षुर्विज्ञानं। न श्रोत्रविज्ञानशून्यतया श्रोत्र-विज्ञानं शून्यं श्रोत्रविज्ञानमेव शून्यता शून्यतैव श्रोत्रविज्ञानं। न घ्राणविज्ञानशून्यतया घ्राणविज्ञानं शून्यं घ्राणविज्ञानमेव शून्यता शून्यतैव घ्राणविज्ञानं। न जिह्वाविज्ञानशून्यतया जिह्वाविज्ञानं शून्यं जिह्वाविज्ञानमेव शून्यता शून्यतैव जिह्वाविज्ञानं। न काय-विज्ञानशून्यतया कायविज्ञानं शून्यं कायविज्ञानमेव शून्यता शून्यतैव कायविज्ञानं। न मनोविज्ञानशून्यतया मनोविज्ञानं शून्यं मनो-विज्ञानमेव शून्यता शून्यतैव मनोविज्ञानं।

न चक्षुः संस्पर्शशून्यतया चक्षुः संस्पर्शः शून्यः चक्षुः संस्पर्शएव शून्यता शून्यतैव चक्षुः संस्पर्शः। न श्रोत्रसंस्पर्शशून्यतया श्रोत्रसंस्पर्शः शून्यः श्रोत्रसंस्पर्शएव शून्यता शून्यतैव श्रोत्रसंस्पर्शः। न घ्राणसंस्पर्श-शून्यतया घ्राणसंस्पर्शः शून्यः घ्राणसंस्पर्शएव शून्यता शून्यतैव घ्राणसंस्पर्शः। न जिह्वासंस्पर्श शून्यतया जिह्वासंस्पर्शः शून्यः जिह्वा-संस्पर्शएव शून्यता शून्यतैव जिह्वासंस्पर्शः। न कायसंस्पर्शशून्यतया कायसंस्पर्शः शून्यः कायसंस्पर्शएव शून्यता शून्यतैव कायसंस्पर्शः।

न मनः संस्पर्शशून्यतया मनः संस्पर्शः शून्यः मनः संस्पर्शएव शून्यता शून्यतैव मनः संस्पर्शः।

न चक्षुःसंस्पर्शप्रत्ययवेदनाशून्यतया चक्षुःसंस्पर्शप्रत्ययवेदनाशून्या चक्षुःसंस्पर्शप्रत्ययवेदनैव शून्यता शून्यतैव चक्षुःसंस्पर्शप्रत्ययवेदना। न श्रोत्रसंस्पर्शप्रत्ययवेदनाशून्यतया श्रोत्रसंस्पर्शप्रत्ययवेदनाशून्या श्रोत्रसंस्पर्शप्रत्ययवेदनैव शून्यता शून्यतैव श्रोत्रसंस्पर्शप्रत्ययवेदना। न घ्राणसंस्पर्शप्रत्ययवेदनाशून्यतया घ्राणसंस्पर्शप्रत्ययवेदनाशून्या घ्राणसंस्पर्शप्रत्ययवेदनैव शून्यता शून्यतैव घ्राणसंस्पर्शप्रत्ययवेदना। न जिह्वासंस्पर्शप्रत्ययवेदनाशून्यतया जिह्वासंस्पर्शप्रत्ययवेदनाशून्या जिह्वासंस्पर्शप्रत्ययवेदनैव शून्यता शून्यतैव जिह्वासंस्पर्शप्रत्ययवेदना। न कायसंस्पर्शप्रत्ययवेदनाशून्यतया कायसंस्पर्शप्रत्ययवेदनाशून्या कायसंस्पर्शप्रत्ययवेदनैव शून्यता शून्यतैव कायसंस्पर्शप्रत्ययवेदना। न मनः संस्पर्शप्रत्ययवेदनाशून्यतया मनःसंस्पर्शप्रत्ययवेदनाशून्या मनः संस्पर्शप्रत्ययवेदनैव शून्यता शून्यतैव मनः संस्पर्शप्रत्ययवेदना।

न पृथिवीधातुशून्यतया पृथिवीधातुः शून्यः पृथिवीधातुरेव शून्यता शून्यतैव पृथिवीधातुः। नाऽब्धातुशून्यतयाऽब्धातुः शून्यः अब्धातुरेव शून्यता शून्यतैवाब्धातुः। न तेजोधातुशून्यतया तेजोधातुः शून्यः तेजोधातुरेव शून्यता शून्यतैव तेजोधातुः। न वायुधातुशून्यतया वायुधातुः शून्यः वायुधातुरेव शून्यता शून्यतैव वायुधातुः। नाकाशधातुशून्यतया आकाशधातुः शून्यः आकाशधातुरेव शून्यता शून्यतैवाकाशधातुः। न विज्ञानधातुशून्यतया विज्ञानधातुः शून्यः विज्ञानधातुरेव शून्यता शून्यतैव विज्ञानधातुः।

नाऽविद्याशून्यतयाऽविद्याशून्याऽविद्यैव शून्यता शून्यतैवाविद्या। न संस्कारशून्यतया संस्काराः शून्याः संस्काराएव शून्यता शून्यतैव संस्काराः। न विज्ञानशून्यतया विज्ञानं शून्यं विज्ञानमेव शून्यता शून्यतैव विज्ञानं। न नामरूपशून्यतया नामरूपं शून्यं नामरूपमेव शून्यता शून्यतैव नामरूपं। न षडायतनशून्यतया षडायतनं शून्यं षडायतनमेव शून्यता शून्यतैव षडायतनं। न स्पर्शशून्यतया स्पर्शः शून्यं स्पर्श एव शून्यता शून्यतैवस्पर्शः। न तृष्णाशून्यतया तृष्णाशून्या तृष्णैव शून्यता शून्यतैव तृष्णा। नोपादानशून्यतया उपादानं शून्यं उपादानमेव शून्यता शून्यतैवोपादानं। न वेदनाशून्यतया वेदना-शून्यावेदनैव शून्यता शून्यतैव वेदना। न भवशून्यतया भवः शून्यः भवएव शून्यता शून्यतैव भवः। न जातिशून्यतया जातिः शून्या जातिरेव शून्यता शून्यतैव जातिः। न जरामरणशून्यतया जरा-मरणं शून्यं जरामरणमेव शून्यता शून्यतैव जरामरणं।

न दानपारमिताशून्यतया दानपारमिताशून्या दानपारमितैव शून्यता शून्यतैव दानपारमिता। न शीलपारमिता शून्यतया शील-पारमिताशून्या शीलपारमितैव शून्यता शून्यतैव शीलपारमिता। न क्षान्तिपारमिताशून्यतया क्षान्तिपारमिताशून्या क्षान्तिपारमितैव शून्यता शून्यतैव क्षान्तिपारमिता। न वीर्य्यपारमिताशून्यतया वीर्य्यपारमिताशून्या वीर्य्यपारमितैव शून्यता शून्यतैव वीर्य्यपारमिता। न ध्यानपारमिताशून्यतया ध्यानपारमिताशून्या ध्यानपारमितैव शून्यता शून्यतैव ध्यानपारमिता। न प्रज्ञापारमिताशून्यतया प्रज्ञा-पारमिताशून्या प्रज्ञापारमितैव शून्यता शून्यतैव प्रज्ञापारमिता।

नाध्यात्मशून्यताशून्यतया अध्यात्मशून्यताशून्या अध्यात्मशून्यतैव शून्यता शून्यतैवाध्यात्मशून्यता । न बहिर्द्धाशून्यताशून्यतया बहिर्द्धा-शून्यताशून्या बहिर्द्धाशून्यतैव शून्यता शून्यतैव बहिर्द्धाशून्यता । नाध्यात्म बहिर्द्धाशून्यताशून्यतया ऽध्यात्म बहिर्द्धाशून्यताशून्या ऽध्यात्म बहिर्द्धाशून्यतैव शून्यता शून्यतैवाध्यात्म बहिर्द्धाशून्यता । न शून्यताशून्यताशून्यतया शून्यताशून्यताशून्या शून्यता शून्यतैव शून्यता शून्यतैव शून्यताशून्यता । न महाशून्यताशून्यतया महाशून्यताशून्या महाशून्यतैव शून्यता शून्यतैव महाशून्यता । न परमार्थशून्यता-शून्यतया परमार्थशून्यताशून्या परमार्थशून्यतैव शून्यता शून्यतैव परमार्थशून्यता । न संस्कृतशून्यताशून्यतया संस्कृतशून्यताशून्या संस्कृतशून्यतैव शून्यता शून्यतैव संस्कृतशून्यता । नाऽसंस्कृतशून्यता-शून्यतया ऽसंस्कृतशून्यताशून्या असंस्कृतशून्यतैव शून्यता शून्यतैवा-संस्कृतशून्यता । नाऽत्यन्तशून्यताशून्यतया ऽत्यन्तशून्यताशून्या अत्यन्त-शून्यतैव शून्यता शून्यतैवात्यन्तशून्यता । नानवराग्रशून्यताशून्यतया ऽनवराग्रशून्यताशून्या ऽनवराग्रशून्यतैव शून्यता शून्यतैवानवराग्रशू-न्यता । नाऽनवकारशून्यताशून्यतया ऽनवकारशून्यताशून्या अनव-कारशून्यतैव शून्यता शून्यतैवानवकारशून्यता । न प्रकृतिशून्यताशू-न्यतया प्रकृतिशून्यताशून्या प्रकृतिशून्यतैव शून्यता शून्यतैव प्रकृति-शून्यता । न सर्व्वधर्म्मशून्यताशून्यतया सर्व्वधर्म्मशून्यताशून्या सर्व्व-धर्म्मशून्यतैव शून्यता शून्यतैव सर्व्वधर्म्मशून्यता । न स्वलक्षणशून्यता-शून्यतया स्वलक्षणशून्यताशून्या स्वलक्षणशून्यतैव शून्यता शून्यतैव स्वलक्षणशून्यता । नाऽनुपलम्भशून्यताशून्यतया ऽनुपलम्भशून्यताशून्या

अनुपलम्भशून्यतैव शून्यता शून्यतैवानुपलम्भशून्यता । नाऽभावशून्यताशून्यतया ऽभावशून्यताशून्या अभावशून्यतैव शून्यता शून्यतैवाभावशून्यता । न स्वभावशून्यताशून्यतया स्वभावशून्यताशून्या स्वभावशून्यतैव शून्यता शून्यतैव स्वभावशून्यता । नाभावस्वभावशून्यताशून्यतया ऽभावस्वभावशून्यताशून्या अभावस्वभावशून्यतैव शून्यता शून्यतैवाभावस्वभावशून्यता ।

न स्मृत्युपस्थानानिशून्यतया स्मृत्युपस्थानानि शून्यानि स्मृत्युपस्थानान्येव शून्यता शून्यतैव स्मृत्युपस्थानानि । न सम्यक्प्रहाणानि शून्यतया सम्यक्प्रहाणानि शून्यानि सम्यक्प्रहाणान्येव शून्यता शून्यतैव सम्यक्प्रहाणानि । नर्द्धिपादाशून्यतया ऋद्धिपादाः शून्याः ऋद्धिपादाएव शून्यता शून्यतैवर्द्धिपादाः । नेन्द्रियशून्यतया इन्द्रियाणि शून्यानि इन्द्रियाण्येव शून्यता शून्यतैवेन्द्रियाणि । न बलानि शून्यतया बलानि शून्यानि बलान्येव शून्यता शून्यतैव बलानि । न बोध्यङ्गानि शून्यतया बोध्यङ्गानि शून्यानि बोध्यङ्गान्येव शून्यता शून्यतैव बोध्यङ्गानि । नार्य्याष्टाङ्गमार्गाशून्यतया आर्य्याष्टाङ्गमार्गः शून्यः आर्य्याष्टाङ्गमार्ग एव शून्यता शून्यतैवार्य्याष्टाङ्गमार्गः । नार्य्यसत्यानि शून्यतया आर्य्यसत्यानि शून्यानि आर्य्यसत्यान्येव शून्यता शून्यतैवार्य्यसत्यानि । न ध्यानशून्यतया ध्यानानि शून्यानि ध्यानान्येव शून्यता शून्यतैव ध्यानानि । नाऽप्रमाणशून्यतया ऽप्रमाणानि शून्यानि अप्रमाणान्येव शून्यता शून्यतैवाप्रमाणानि । नारूप्यसमापत्तिशून्यतया आरूप्यसमापत्तयः शून्याः आरूप्यसमापत्तय एव शून्यता शून्यतैवारूप्यसमापत्तयः । न विमोक्षशून्यतया विमोक्षाः शून्याः विमोक्षा

एव शून्यता शून्यतैव विमोचाः। नाऽनुपूर्व्वविहारसमापत्तिशून्यतया ऽनुपूर्व्वविहारसमापत्तयः शून्याः अनुपूर्व्वविहारसमापत्तय एव शून्यता शून्यतैवानुपूर्व्वविहारसमापत्तयः। न शून्यतानिमित्ता ऽप्रणिहितविमोचमुखशून्यतया शून्यतानिमित्ताप्रणिहितविमोचमुखानि शून्यानि शून्यतानिमित्ताप्रणिहितविमोचमुखान्येव शून्यताशून्यतैव शून्यतानिमित्ताप्रणिहितविमोचमुखानि। नाऽभिज्ञाशून्यतया ऽभिज्ञाः शून्याः अभिज्ञाएव शून्यताशून्यतैवाभिज्ञाः। न समाधिशून्यतया समाधयः शून्याः समाधयएव शून्यताशून्यतैव समाधयः। न धारणीमुखशून्यतया धारणीमुखानि शून्यानि धारणीमुखान्येव शून्यता शून्यतैव धारणीमुखानि। न तथागतबलशून्यतया तथागतबलानि शून्यानि तथागतबलान्येव शून्यता शून्यतैव तथागतबलानि। न वैशारद्यशून्यतया वैशारद्यानि शून्यानि वैशारद्यान्येव शून्यता शून्यतैव वैशारद्यानि। न प्रतिसम्विच्छून्यतया प्रतिसम्विदः शून्याः प्रतिसम्विदएव शून्यता शून्यतैव प्रतिसम्विदः। न महामैत्रीशून्यतया महामैत्रीशून्या महामैत्र्येव शून्यता शून्यतैव महामैत्री। न महाकरुणाशून्यतया महाकरुणाशून्या महाकरुणैव शून्यता शून्यतैव महाकरुणा। नावेणिकबुद्धधर्म्मशून्यतया आवेणिकबुद्धधर्म्माः शून्याः आवेणिकबुद्धधर्म्माएव शून्यता शून्यतैवावेणिकबुद्धधर्म्माः। इयं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिता।

इह सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरन् उपायकौशलं। येनोपायकौशलेन समन्नागतो बोधिसत्त्वोमहासत्त्व इमं निर्देशं श्रुत्वा नोत्त्रस्यति न संत्रस्यति न संत्रासमापद्यते।

सुभूतिराह। कतमानि भगवन् बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्राणि। यैः कल्याणमित्रैः परिगृहीतो बोधिसत्त्वोमहासत्त्वः इमं प्रज्ञापारमितानिर्देशं श्रुत्वा नोत्त्रसिष्यति न संत्रस्यति न संत्रासमापद्यते। भगवानाह। इह सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपमनित्यमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्रसर्व्वाकारज्ञतायाः। *योऽस्मैवेदनाऽनित्येति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽस्मैसंज्ञाऽनित्येति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽस्मैसंस्कारा अनित्या इति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽस्मै विज्ञानमनित्यमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै

---

* पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं। इति वाक्यभागः यत्रास्ति एवं परत्रापि योऽस्मै इत्यस्मात् प्राक्प्रतीति ग्रन्थस्य रचनायाः रीत्या अनुमीयते। आदर्शपुस्तके तु नास्ति।

रूपं दुःखमिति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽसौ वेदनादुःखेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽसौ संज्ञादुःखेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽसौ संस्काराः दुःखा इति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽसौ विज्ञानं दुःखमिति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपर सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽसौ रूपमनात्मेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽसौ वेदनाऽनात्मेति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽसौ संज्ञाऽनात्मेति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽसौ संस्कारा अनात्मान इति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येक-

बुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽस्मै विज्ञानमनात्मेति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपं शान्तमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र, सर्व्वाकारज्ञतायाः। योऽस्मैवेदनाशान्तेति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽस्मैसंज्ञाशान्तेति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽस्मैसंस्काराः शान्ता इति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽस्मै विज्ञानं शान्तमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपं शून्यमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽस्मै वेदनाशून्येति धर्म्मं देशयति

तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽस्मै संज्ञाशून्येति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽस्मै संस्काराः शून्या इति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽस्मै विज्ञानं शून्यमिति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपमानिमित्तमिति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽस्मै वेदना आनिमित्तेति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽस्मै संज्ञा आनिमित्तेति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽस्मै संस्काराः आनिमित्ता इति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽस्मै विज्ञानमानिमित्तमिति धर्मं देशयति तच्चानुप-

लम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्ध-भूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपमप्रणिहितमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽस्मै वेदनाऽप्रणिहितेति धर्म्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽस्मै संज्ञाऽप्रणिहितेति धर्म्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽस्मै संस्कारा अप्रणिहिता इति धर्म्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽस्मै विज्ञानमप्रणिहितमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परि-णामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपमनभिसंस्कारमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन । सर्व्व-कुशलमूलानि [illegible] न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणा-मयत्यन्यत्र सर्व्वाकारज्ञतायाः । योऽस्मै वेदनाऽनभिसंस्कारेति धर्म्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

योऽसौ संज्ञाऽनभिसंस्कारेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽसौ संस्काराः अनभिसंस्कारा इति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽसौ विज्ञानमनभिसंस्कारमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽसौ रूपं विविक्तमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। योऽसौ वेदनाविविक्तेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽसौ वेदनाविविक्तेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं वेदितव्य।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽसौ चक्षुरनित्यमिति श्रोत्रमनित्यमिति घ्राणमनित्यमिति जिह्वाऽनित्येति कायोऽनित्य इति मनोऽनित्यमिति धर्मं देशयति तच्चा-

नुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुर्दुःखमिति श्रोत्रं दुःखमिति घ्राणं दुःखमिति जिह्वादुःखेति कायोदुःख इति मनोदुःखमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुरनात्मेति श्रोत्रमनात्मेति घ्राणमनात्मेति जिह्वाऽनात्मेति कायोऽनात्मेति मनोऽनात्मेति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः शान्तमिति श्रोत्रं शान्तमिति घ्राणं शान्तमिति जिह्वाशान्तेति कायः शान्त इति मनः शान्तमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः शून्यमिति श्रोत्रं शून्यमिति घ्राणं शून्यमिति जिह्वाशून्येति कायः शून्य इति मनः शून्यमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुरानिमित्तमिति श्रोत्रमानिमित्तमिति घ्राणमानिमित्तमिति जिह्वा आनिमित्तेति काय आनिमित्त इति मन आनिमित्तमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुरप्रणिहितमिति श्रोत्रमप्रणिहितमिति घ्राणमप्रणिहितमिति धर्मं जिह्वाऽप्रणिहितेति कायोऽप्रणिहित इति मनोऽप्रणिहितमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुरनभिसंस्कारमिति श्रोत्रमनभिसंस्कारमिति घ्राणमनभिसंस्कारमिति जिह्वाऽनभिसंस्कारेति कायोऽनभिसंस्कार इति मनोऽनभिसंस्कारमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायां।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुर्व्विविक्तमिति श्रोत्रं विविक्तमिति घ्राणं विविक्तमिति जिह्वा-विविक्तेति कायोविविक्त इति मनोविविक्तमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपमनित्यमिति शब्दोऽनित्य इति गन्धोऽनित्य इति रसोऽनित्य इति स्पर्शोऽनित्य इति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपं दुःखमिति शब्दोदुःख इति गन्धोदुःख इति रसोदुःख इति स्पर्शोदुःख इति धर्म्माःदुःखा इति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपमनात्मेति शब्दोऽनात्मेति गन्धोऽनात्मेति रसोऽनात्मेति स्पर्शोऽनात्मेति धर्म्मा अनात्मान इति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपं शान्तमिति शब्दः शान्त इति गन्धः शान्त इति रसः शान्त इति स्पर्शः शान्त इति धर्म्माः शान्ता इति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपं शून्यमिति शब्दः शून्य इति गन्धः शून्य इति रसः शून्य

इति स्पर्शाः शून्य इति धर्माः शून्या इति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपमानिमित्तमिति शब्द आनिमित्त इति गन्ध आनिमित्त इति रस आनिमित्त इति स्पर्श आनिमित्त इति धर्मा आनिमित्ता इति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपमप्रणिहितमिति शब्दोऽप्रणिहित इति गन्धोऽप्रणिहित इति रसोऽप्रणिहित इति स्पर्शोऽप्रणिहित इति धर्मा अप्रणिहिता इति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपमनभिसंस्कारमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै रूपं विविक्तमिति शब्दोविविक्त इति गन्धोविविक्त इति रसोविविक्त इति स्पर्शोविविक्त इति धर्माविविक्ता इति धर्मं देशयति

तत्रानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुर्विज्ञानमनित्यमिति श्रोत्रविज्ञानमनित्यमिति घ्राणविज्ञानमनित्यमिति कायविज्ञानमनित्यमिति मनोविज्ञानमनित्यमिति धर्म्मं देशयति तत्रानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुर्विज्ञानं दुःखमिति श्रोत्रविज्ञानं दुःखमिति घ्राणविज्ञानं दुःखमिति जिह्वाविज्ञानं दुःखमिति कायविज्ञानं दुःखमिति मनोविज्ञानं दुःखमिति धर्म्मं देशयति तत्रानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुर्व्विज्ञानमनात्मेति श्रोत्रविज्ञानमनात्मेति घ्राणविज्ञानमनात्मेति जिह्वाविज्ञानमनात्मेति कायविज्ञानमनात्मेति मनोविज्ञानमनात्मेति धर्म्मं देशयति तत्रानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुर्व्विज्ञानं शान्तमिति श्रोत्रविज्ञानं शान्तमिति घ्राणविज्ञानं

शान्तमिति जिह्वाविज्ञानं शान्तमिति कायविज्ञानं शान्तमिति मनोविज्ञानं शान्तमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुर्व्विज्ञानं शून्यमिति श्रोत्रविज्ञानं शून्यमिति घ्राणविज्ञानं शून्यमिति जिह्वाविज्ञानं शून्यमिति कायविज्ञानं शून्यमिति मनोविज्ञानं शून्यमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुर्विज्ञानमानिमित्तमिति श्रोत्रविज्ञानमानिमित्तमिति घ्राणविज्ञानमानिमित्तमिति जिह्वाविज्ञानमानिमित्तमिति कायविज्ञानमानिमित्तमिति मनोविज्ञानमानिमित्तमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुर्व्विज्ञानमप्रणिहितमिति श्रोत्रविज्ञानमप्रणिहितमिति घ्राणविज्ञानमप्रणिहितमिति जिह्वाविज्ञानमप्रणिहितमिति कायविज्ञानमप्रणिहितमिति मनोविज्ञानमप्रणिहितमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुर्विज्ञानमनभिसंस्कारमिति श्रोत्रविज्ञानमनभिसंस्कारमिति घ्राणविज्ञानमनभिसंस्कारमिति जिह्वाविज्ञानमनभिसंस्कारमिति कायविज्ञानमनभिसंस्कारमिति मनोविज्ञानमनभिसंस्कारमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुर्विज्ञानं विविक्तमिति श्रोत्रविज्ञानं विविक्तमिति घ्राणविज्ञानं विविक्तमिति जिह्वाविज्ञानं विविक्तमिति कायविज्ञानं विविक्तमिति मनोविज्ञानं विविक्तमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुःसंस्पर्शमनित्यमिति श्रोत्रसंस्पर्शमनित्यमिति घ्राणसंस्पर्शमनित्यमिति जिह्वासंस्पर्शमनित्यमिति कायसंस्पर्शमनित्यमिति मनःसंस्पर्शमनित्यमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुःसंस्पर्शं दुःखमिति श्रोत्रसंस्पर्शं दुःखमिति घ्राणसंस्पर्शं दुःखमिति जिह्वासंस्पर्शं दुःखमिति कायसंस्पर्शं दुःखमिति मनःसंस्पर्शं दुःखमिति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च

न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शमनात्मेति श्रोत्रसंस्पर्शमनात्मेति घ्राणसंस्पर्शमनात्मेति जिह्वासंस्पर्शमनात्मेति कायसंस्पर्शमनात्मेति मनः संस्पर्शमनात्मेति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शं शान्तमिति श्रोत्रसंस्पर्शं शान्तमिति घ्राणसंस्पर्शं शान्तमिति जिह्वासंस्पर्शं शान्तमिति कायसंस्पर्शं शान्तमिति मनः संस्पर्शं शान्तमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शं शून्यमिति श्रोत्रसंस्पर्शं शून्यमिति घ्राणसंस्पर्शं शून्यमिति जिह्वासंस्पर्शं शून्यमिति कायसंस्पर्शं शून्यमिति मनः संस्पर्शं शून्यमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शमानिमित्तमिति श्रोत्रसंस्पर्शमानिमित्तमिति घ्राणसंस्पर्श-

मानिमित्तमिति जिह्वासंस्पर्शमानिमित्तमिति कायसंस्पर्शमानिमित्तमिति मनः संस्पर्शमानिमित्तमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शमप्रणिहितमिति श्रोत्रसंस्पर्शमप्रणिहितमिति घ्राणसंस्पर्शमप्रणिहितमिति जिह्वासंस्पर्शमप्रणिहितमिति कायसंस्पर्शमप्रणिहितमिति मनः संस्पर्शमप्रणिहितमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शमनभिसंस्कारमिति श्रोत्रसंस्पर्शमनभिसंस्कारमिति घ्राणसंस्पर्शमनभिसंस्कारमिति जिह्वासंस्पर्शमनभिसंस्कारमिति कायसंस्पर्शमनभिसंस्कारमिति मनः संस्पर्शमनभिसंस्कारमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शं विविक्तमिति श्रोत्रसंस्पर्शं विविक्तमिति घ्राणसंस्पर्शं विविक्तमिति जिह्वासंस्पर्शं विविक्तमिति कायसंस्पर्शं विविक्तमिति मनः संस्पर्शं विविक्तमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शजावेदनाऽनित्येति श्रोत्रसंस्पर्शजावेदनाऽनित्येति घ्राणसंस्पर्शजावेदनाऽनित्येति जिह्वासंस्पर्शजावेदनाऽनित्येति कायसंस्पर्शजावेदनाऽनित्येति मनः संस्पर्शजावेदनाऽनित्येति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शजावेदनादुःखेति श्रोत्रसंस्पर्शजावेदनादुःखेति घ्राणसंस्पर्शजावेदनादुःखेति जिह्वासंस्पर्शजावेदनादुःखेति कायसंस्पर्शजावेदनादुःखेति मनः संस्पर्शजावेदनादुःखेति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शजावेदनाऽनात्मेति श्रोत्रसंस्पर्शजावेदनाऽनात्मेति घ्राणसंस्पर्शजावेदनाऽनात्मेति जिह्वासंस्पर्शजावेदनाऽनात्मेति कायसंस्पर्शजावेदनाऽनात्मेति मनः संस्पर्शजावेदनाऽनात्मेति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शजावेदनाशान्तेति श्रोत्रसंस्पर्शजावेदनाशान्तेति घ्राणसंस्पर्शजावेदनाशान्तेति जिह्वासंस्पर्शजावेदनाशान्तेति कायसंस्पर्शजावेदनाशान्तेति मनः संस्पर्शजावेदनाशान्तेति धर्मं देशयति । तच्चानुप-

लम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येक-बुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

*पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुःसंस्पर्शजावेदना शून्येति धर्म्मं देशयति। तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परि-णामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै श्रोत्रसंस्पर्शजावेदना शून्येति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै घ्राणसंस्पर्शजावेदना शून्येति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै जिह्वासंस्पर्शजावेदना शून्येति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

---

* पूर्व्वत्र सर्व्वत्र चक्षुःश्रोत्रादिपदार्थे प्रत्येकमेव, पुनरपरमित्यादि-वाक्यमावर्त्तनीयमित्येतत् लिपिदृष्ट्याऽनुमीयते। आदर्शपुस्तके तथा लेखो न दृश्यते।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै कायसंस्पर्शजावेदना*शून्येति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै मनः संस्पर्शजा वेदना शून्येति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शजावेदना आनिमित्तेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै श्रोत्रसंस्पर्शजावेदना आनिमित्तेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै घ्राणसंस्पर्शजावेदना आनिमित्तेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै जिह्वासंस्पर्शजावेदना आनिमित्तेति धर्मं देशयति तच्चानुपलम्भ-

योगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै कायसंस्पर्शजावेदना आनिमित्तेति धर्मं देशयति यत्रानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै मनः संस्पर्शजावेदना आनिमित्तेति धर्मं देशयति तत्रानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुःसंस्पर्शजावेदनाऽप्रणिहितेति धर्मं देशयति तत्रानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै श्रोत्रसंस्पर्शजावेदनाऽप्रणिहितेति धर्मं देशयति तत्रानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै घ्राणसंस्पर्शजावेदनाऽप्रणिहितेति धर्मं देशयति तत्रानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै जिह्वासंस्पर्शजावेदनाऽप्रणिहितेतिधर्मं देशयति सत्त्वानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै कायसंस्पर्शजावेदनाऽप्रणिहितेति धर्मं देशयति तत्त्वानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै मनः संस्पर्शजावेदनाऽप्रणिहितेति धर्मं देशयति तत्त्वानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शजावेदनाऽनभिसंस्कारेति धर्मं देशयति तत्त्वानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै श्रोत्रसंस्पर्शजावेदनाऽनभिसंस्कारेति धर्मं देशयति तत्त्वानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै घ्राणसंस्पर्शजावेदनाऽनभिसंस्कारेति धर्मं देशयति तत्त्वानुपलम्भ-

योगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै जिह्वासंस्पर्शजावेदनाऽनभिसंस्कारेति धर्म्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञताया ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै कायसंस्पर्शजावेदनाऽनभिसंस्कारेति धर्म्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपर सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै मनः संस्पर्शजावेदनाऽनभिसंस्कारेति धर्म्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञताया ।

पुनरपर सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै चक्षुः संस्पर्शजावेदना विविक्तेति धर्म्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै श्रोत्रसंस्पर्शजावेदना विविक्तेति धर्म्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञताया ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै घ्राणसंस्पर्शजावेदना विविक्तेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै जिह्वासंस्पर्शजावेदना विविक्तेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि [redacted] न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै कायसंस्पर्शजावेदनाविविक्तेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै मनःसंस्पर्शजावेदनाविविक्तेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतीत्यसमुत्पादोऽनित्य इति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतीत्यसमुत्पादो दुःख इति धर्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतीत्यसमुत्पादोऽनात्मेति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतीत्यसमुत्पादः शान्त इति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतीत्यसमुत्पादः शून्य इति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतीत्यसमुत्पाद आनिमित्त इति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतीत्यसमुत्पादोऽप्रणिहित इति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतीत्यसमुत्पादोऽनभिसंस्कार इति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतीत्यसमुत्पादोविविक्त इति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै दानपारमिताऽनित्येति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शीलपारमिताऽनित्येति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै क्षान्तिपारमिताऽनित्येति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वीर्य्यपारमिताऽनित्येति धर्मं देशयति तच्चानुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानपारमिताऽनित्येति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रज्ञापारमिताऽनित्येति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै दानपारमिता दुःखेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शीलपारमिता दुःखेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै क्षान्तिपारमिता दुःखेति धर्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वीर्य्यपारमिता दुःखेति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानपारमिता दुःखेति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रज्ञापारमिता दुःखेति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै दानपारमिताऽनात्मिकेति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शीलपारमिताऽनात्मिकेति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै क्षान्तिपारमिताऽनात्मिकेति धर्मं देशयति तच्चानुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वीर्य्यपारमिताऽनात्मिकेति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानपारमिताऽनात्मिकेति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रज्ञापारमिताऽनात्मिकेति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै दानपारमिताशान्तेति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शीलपारमिताशान्तेति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि न च श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाण्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाण्यनभिसंस्काराणीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाणि विविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै न दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलानि अनान्यनात्मकानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलानि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि [illegible] न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलान्यनिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलान्यनभिसंस्काराणीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलानि विविक्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलभावनतायै धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यनित्यानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गानि दुःखानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यनात्मकानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गानि शान्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गानि शून्यानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यानिमित्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यप्रणिहितानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यनभिसंस्काराणीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गानि विविक्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गभावनतायै धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमनित्यमिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गं दुःखमिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमनात्मेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गं शान्तमिति धर्मं देशयति तच्चानुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गं शून्यमिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमानिमित्तमिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमप्रणिहितमिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमनभिसंस्कारमिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गं विविक्तमिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यनात्मिकानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यानि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यनिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यनभिसंस्कारानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यानि विविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्याभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यनात्मिकानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानानि शून्यानीति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यानिमित्तानीति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्व-

कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यप्रणिहितानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यनभिसंस्काराणीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानानि विविक्तानीति धर्मं देशयति तच्चानुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानभावनतायै धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणान्यनित्यानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपर सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्र योऽस्मै अप्रमाणानि दुःखानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञताया. ।

पुनरपर सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्र योऽस्मै अप्रमाणान्यनात्मिकानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञताया ।

पुनरपर सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्र योऽस्मै अप्रमाणानि शान्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञताया ।

पुनरपर सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्र योऽस्मै अप्रमाणानि शून्यानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञताया ।

पुनरपर सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्र योऽस्मै अप्रमाणान्यानिमित्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञताया ।

पुनरपर सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्र योऽस्मै अप्रमाणान्यप्रणिहितानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणान्यनभिसंस्कारानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणानिविविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीरनित्याइति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्ती दुःखाइति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीरनात्मिकादति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीः शान्तादति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीः शून्यादति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीरानिमित्तादति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीरप्रणिहितादति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीरनभिसंस्कारादति धर्मं देशयति तच्चाऽनुपलम्भ-

योगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै श्राद्धयसमापत्तीर्व्विविक्तादिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै श्राद्धयसमापत्तिभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै विमोक्षा अनित्यादिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै विमोक्षा दुःखादिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै विमोक्षा अनात्मानादिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै विमोक्षः शान्तादिति धर्मं देशयति तथाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै विमोक्षः शून्यादिति धर्मं देशयति तथाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै विमोक्षः आनिमित्तादिति धर्मं देशयति तथाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै विमोक्षः अप्रणिहितादिति धर्मं देशयति तथाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै विमोक्षः अनभिसंस्कारादिति धर्मं देशयति तथाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै विमोक्षः विविक्तादिति धर्मं देशयति तथाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै विमोक्षभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपूर्व्वविहारसमापत्तीरनित्याइति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपूर्व्वविहारसमापत्तीर्दुःखाइति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपूर्व्वविहारसमापत्तीरनात्मिकाइति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपूर्व्वविहारसमापत्तीः शान्ताइति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपूर्व्वविहारसमापत्तीः शून्यादिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपूर्व्वविहारसमापत्तीरानिमित्तादिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपूर्व्वविहारसमापत्तीरप्रणिहितादिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपूर्व्वविहारसमापत्तीरणभिसंस्कारादिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपूर्व्वविहारसमापत्तीर्व्विविक्तादिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपूर्व्वविहारसमापत्तिभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भ-

योगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

*पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यनात्मकानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

---

* क। ग। पुस्तके पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रमित्यंशो न लिखित। योऽस्मै इत्यादि भाग सर्व्वत्र लिखित।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यतानिमित्ताप्रणिहितविमोक्षमुखानिशून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यानिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यनभिसंस्कारानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यतानिमित्ताप्रणिहितविमोक्षमुखानिविविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यतानिमित्ताप्रणिहितविमोक्षमुखभावनतायै धर्म्मं देशयति

तथाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभिज्ञा अनित्या इति धर्मं देशयति तथाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभिज्ञा दुःखा इति धर्मं देशयति तथाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभिज्ञा अनात्मान इति धर्मं देशयति तथाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभिज्ञाः शान्ता इति धर्मं देशयति तथाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभिज्ञाः शून्या इति धर्मं देशयति तथाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभिज्ञा आनिमित्तादिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभिज्ञा अप्रणिहितादिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभिज्ञा अनभिसंस्कारादिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभिज्ञाविविक्तादिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभिज्ञाभावनतायै धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै समाधयोऽनित्यादिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै समाधयो दुःखा इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै समाधयः अनात्मान इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै समाधयः शान्ता इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै समाधयः शून्या इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै समाधयः आनिमित्ता इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै समाधयोऽप्रणिहिता इति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै समाधयोऽनभिसंस्कारा इति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै समाधयोविविक्ता इति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै समाधिभावनतायै धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै धारणीमुखान्यनित्यानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै धारणीमुखानि दुःखानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै धारणीमुखान्यनात्मानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै धारणीमुखानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै धारणीमुखानि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै धारणीमुखान्यानिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै धारणीमुखान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै धारणीमुखान्यनभिसंस्कारानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै धारणीमुखानिविविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै धारणीमुखभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै तथागतबलान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै तथागतबलानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै तथागतबलान्यनात्मानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै तथागतबलानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै तथागतबलानि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै तथागतबलान्यानिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै तथागतबलान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै तथागतबलान्यनभिसंस्कारानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै तथागतबलानिविविक्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै तथागतबलभावनतायै धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्र योऽस्मै वैशारद्यान्यनित्यानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वैशारद्यानि दुःखानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपर सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वैशारद्यान्यनात्मानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपर सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वैशारद्यानि शान्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वैशारद्यानि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वैशारद्यान्यानिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वैशारद्यान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वैशारद्यान्यनभिसंस्कारानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वैशारद्यानिविविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वैशारद्यभावनतायै धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतिसम्विदोऽनित्या इति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतिसम्विदो दुःखा इति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतिसम्विदोऽनात्मान इति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतिसम्विदः शान्तादिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतिसम्विदः शून्यादिति धर्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतिसम्विद् आनिमित्तादिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतिसम्विदोऽप्रणिहिता इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतिसम्विदोऽनभिसंस्कारा इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतिसम्विदो विविक्ता इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रतिसम्विद्भावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महामैत्री अनित्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महामैत्री दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महामैत्री अनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महामैत्री शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महामैत्री शून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महामैत्री अनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽसौ महामैत्री अप्रणिहितेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽसौ महामैत्री अनभिसंस्कारेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽसौ महामैत्री विविक्तेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽसौ महामैत्री भावनतायै धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽसौ महाकरुणाऽनित्येति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाकरुणा दुःखेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच्च सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाकरुणाऽनात्मिकेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच्च सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाकरुणा शान्तेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच्च सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाकरुणा शून्येति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच्च सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाकरुणा आनिमित्तेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच्च सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाकरुणाऽप्रणिहितेति धर्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाकरुणाऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाकरुणाविविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाकरुणाभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आवेणिकबुद्धधर्म्मा अनित्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आवेणिकबुद्धधर्म्मा दुःखा इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आवेणिकबुद्धधर्म्मा अनात्मानइति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आवेणिकबुद्धधर्म्माः शान्ताइति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आवेणिकबुद्धधर्म्माः शून्याइति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आवेणिकबुद्धधर्म्मा आनिमित्ताइति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आवेणिकबुद्धधर्म्मा अप्रणिहिता इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आवेणिकबुद्धधर्म्मा अनभिसंस्कारा इति धर्म्मं देशयति तच्चाऽनुप-

लम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्ध-भूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आवेणिकबुद्धधर्म्मा विविक्तादिति धर्म्मं देशयति तच्चाऽनुपलम्भ-योगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आवेणिकबुद्धधर्म्मभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वाकारज्ञताभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

अयं बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं वेदितव्यं। येन कल्याणमित्रेण परिगृहीतो बोधिसत्त्वोमहासत्त्व इमं प्रज्ञापारमिता-निर्द्देशं श्रुत्वा नोत्त्रस्यति न सन्त्रस्यति न सन्त्रासमापद्यते।

सुभूतिराह। कथं भगवन् बोधिसत्त्वमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकुशलः पापमित्र हस्तगतोभवति। कल्याणमित्रपरि-वर्जितश्च भवति। य इमं प्रज्ञापारमितानिर्द्देशं श्रुत्वा नोत्त्रस्यति न सन्त्रस्यति न सन्त्रासमापद्यते।

भगवानाह। इह सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां

चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारः प्रज्ञापारमितां भावयत्युपलभते तथाच प्रज्ञापारमितयामन्यते। अपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो ध्यानपारमितां भावयत्युपलभते। तथाच ध्यानपारमितयामन्यते। अपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वीर्य्यपारमितां भावयत्युपलभते। तथाच वीर्य्यपारमितयामन्यते। अपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारः क्षान्तिपारमितां भावयत्युपलभते। तथाच क्षान्तिपारमितयामन्यते। अपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारः शीलपारमितां भावयत्युपलभते। तथाच शीलपारमितयामन्यते। अपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोदानपारमितां भावयत्युपलभते। तथाच दानपारमितयामन्यते। एवं हि सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकुशलो वेदितव्यः।

पुनरपरं सुभूते बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोऽध्यात्मशून्यमिति मनसिकरोति। ताञ्चाध्यात्मशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

*स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोऽरूपं बहिर्द्धाशून्यमिति मनसिकरोति। ताञ्च बहिर्द्धाशून्यतामुपलभते। तथाच शून्यतयामन्यते।

---

* स इत्यनेन पुनरपरं सुभूते बोधिसत्त्वो महासत्त्व इति पूर्व्ववाक्यैकदेशः परामृश्यः एवं परत्रापि। आदर्शपुस्तके सर्व्वत्र स इति निर्देशो दृश्यते। ग, पुस्तके च तथैव लिखितमस्ति।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो रूपमध्यात्मबहिर्द्धाशून्यमिति मनसिकरोति। नाध्यात्मबहिर्द्धाशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो रूपं शून्यताशून्यमिति मनसिकरोति। नाच शून्यताशून्यमुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो रूपं महाशून्यमिति मनसिकरोति। नाच महाशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो रूपं परमार्थशून्यमिति मनसिकरोति। नाच परमार्थशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो रूपं संस्कृतशून्यमिति मनसिकोरोति। नाच संस्कृतशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो रूपमसंस्कृतशून्यमिति मनसिकरोति। नाचाऽसंस्कृतशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो रूपमत्यन्तशून्यमिति मनसिकरोति। नाचाऽत्यन्तशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमन-

सिकारोरूपमनवराग्रशून्यमिति मनसिकरोति । ताश्चाऽनवराग्रशून्यतामुपलभते । तथाच शून्यतयामन्यतेउपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोरूपमनवकारशून्यमिति मनसिकरोति । ताश्चानवकारशून्यतामुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोरूपं प्रकृतिशून्यमिति मनसिकरोति । ताश्च प्रकृतिशून्यतामुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोरूपं सर्व्वधर्म्मशून्यमिति मनसिकरोति । ताश्च सर्व्वधर्म्मशून्यतामुपलभते । तथाचशून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायांचरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोरूपं स्वलक्षणशून्यमिति मनसिकरोति । ताश्च स्वलक्षणशून्यतामुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोरूपमनुपलम्भशून्यमिति मनसिकरोति । ताश्चाऽनुपलम्भशून्यतामुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोरूपमभावशून्यमिति मनसिकरोति । ताश्चाभावशून्यतामुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोरूपं स्वभावशून्यमिति मनसिकरोति । ताश्च स्वभावशून्यतामुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोऽरूपमभावस्वभावशून्यमिति मनसिकरोति। ताञ्चाभावस्वभावशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वेदनाऽध्यात्मशून्येति मनसिकरोति। ताञ्चाऽध्यात्मशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वेदनाबहिर्द्धाशून्येति मनसिकरोति। ताञ्च बहिर्द्धाशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वेदनाऽध्यात्मबहिर्द्धाशून्येति मनसिकरोति। ताञ्चाऽध्यात्मबहिर्द्धाशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वेदना शून्यताशून्येति मनसिकरोति। ताञ्च शून्यताशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वेदना महाशून्येति मनसिकरोति। ताञ्च महाशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वेदना परमार्थशून्येति मनसिकरोति। ताञ्च परमार्थशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वेदना संस्कृतशून्येति मनसिकरोति । तांश्च संस्कृतशून्यतामुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वेदनाऽसंस्कृतशून्येति मनसिकरोति । तांश्चाऽसंस्कृतशून्यतामुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वेदनाऽत्यन्तशून्येति धर्म्मं देशयति । तांश्चाऽत्यन्तशून्यतामुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वेदनाऽनवराग्रशून्येति मनसिकरोति । तश्चाऽनवराग्रशून्यतामुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोवेदनाऽनवकारशून्येति मनसिकरोति । तांश्चानवकारशून्यतामुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वेदना प्रकृतिशून्येति धर्म्मं देशयति । तांश्च प्रकृतिशून्यतामुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वेदना सर्व्वधर्म्मशून्येति मनसिकरोति । तांश्च सर्व्वधर्म्मशून्यताऽनुपलभते । तथाच शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायां चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो

गतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादानमध्यात्मशून्यमिति मनसिकरोति। ताञ्चाध्यात्मशून्यतामुपलभते। तथाच शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादान वहिर्द्धाशून्यमिति मनसि करोति। ताञ्च वहिर्द्धाशून्यतामुपलभते। तथाच शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकार उपादानमध्यात्मवहिर्द्धाशून्यमितिमनसि करोति। ताञ्चाऽध्यात्मवहिर्द्धाशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादानशून्यताशून्यमिति मनसि करोति। ताञ्च शून्यताशून्यतामुपभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादानं महाशून्यमितिमनसि करोति। ताञ्च महाशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादानं परमार्थशून्यमितिमनसि करोति । ताञ्च परमार्थशून्यतामुपलभते। तथा च शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारउपादानं संस्कृतशून्यमिति मनसि करोति। ताञ्च संस्कृतशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादानमसंस्कृतशून्यमितिमनसि करोति । ताञ्च ऽसंस्कृतशून्यतामुपलभते । तथा च शून्यतया मन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकार उपादानमत्यन्तशून्यमितिमनसि करोति । ताञ्चाऽत्यन्तशून्यतामुपलभते । तथा च शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादान मनवराग्रशून्यमितिमनसि करोति । ताञ्चाऽनवराग्रशून्यतामुपलभते । तथा च शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादानमनवकारशून्यमिति मनसि करोति । ताञ्चाऽनवकारशून्यतामुपलभते । तथा च शून्यतया मन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादानं प्रकृतिशून्यमितिमनसि करोति । ताञ्च प्रकृतिशून्यतामुपलभते । तथा च शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वकारज्ञताप्रतिसंयुक्तमनसिकार उपादानं सर्व्वधर्म्मं शून्यमितिमनसि करोति । ताञ्च सर्व्वधर्म्मशून्यतामुपलभते । तथा च शून्यतयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादानं स्वलक्षणशून्यमिति करोति । ताञ्च स्वलक्षणशून्यतामुपलभते । तथा च शून्यतया मन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसि-

कार उपादानमनुपलम्भशून्यमितिमनसि करोति। ताञ्चाऽनुपलम्भशून्यतामुपलभते। तथा च शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादानमभावशून्यमिति मनसिकरोति ताञ्चाऽभावशून्यतामुपलभते। तथा च शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादानं स्वभावशून्यमितिमनसिकरोति। ताञ्च स्वभावशून्यतामुपलभते। तथा च शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकार उपादानमभावस्वभावशून्यमितिमनसि करोति। ताञ्चाऽभावस्वभावशून्यतामुपलभते। तथा च शून्यतयामन्यते उपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोऽभवोऽध्यात्म शून्य इति मनसि करोति। ताञ्चाऽध्यात्मशून्यतामुपलभते। तथा च शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारो भवो वहिर्द्धाशून्य इति मनसिकरोति। ताञ्च वहिर्द्धाशून्यतामुपलभते। तथा च शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोऽभवोऽध्यात्मवहिर्द्धाशून्य इति मनसि करोति। ताञ्चाऽध्यात्मवहिर्द्धाशून्यतामुपलभते। तथा [redacted] शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्त-मनसि

कारोभवः शून्यताशून्य इति मनसिकरोति। ताञ्च शून्यताशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभव महाशून्य इति मनसि करोति। ताञ्च महाशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवः परमार्थ शून्य इति मनसिकरोति। ताञ्च परमार्थ शून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवः संस्कृतशून्यइति मनसिकरोति। ताञ्च संस्कृतशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवोऽसंस्कृतशून्य इति मनसिकरोति। ताञ्चासंस्कृतशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमिताश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवोऽत्यन्तशून्य इति मनसिकरोति। ताञ्चात्यन्तशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवोऽनवराग्रशून्य इति मनसिकरोति। ताञ्चानवराग्रशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवोऽनवकार शून्य इति मनसिकरोति। ताञ्चानवकारशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवःप्रकृतिशून्य इति मनसि करोति। ताञ्च प्रकृतिशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवः सर्वधर्मशून्य इति मनसि करोति। ताञ्च सर्वधर्मशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवः स्वलक्षणशून्य इति मनसि करोति। ताञ्च स्वलक्षणशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवोऽनुपलम्भशून्य इति मनसि करोति। ताञ्चाऽनुपलम्भशून्यतामुपलभते। तथाच शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवोऽभावशून्य इति मनसि करोति। ताञ्चाऽभावशून्यतामुपलभते। ताञ्चाऽभाव शून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवः स्वभावशून्य इति मनसिकरोति। ताञ्च स्वभावशून्यतामुपलमते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्वाकारज्ञताप्रतिसंयुक्तमनसिकारोभवोऽभावशून्य इति मनसि करोति। ताञ्चाऽभावस्वभावशून्यतामुपलते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोजातिरध्यात्मशून्येति मनसि करोति। तांश्चाऽध्यात्मशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारो जातिर्बहिर्द्धा शून्य इति मनसि करोति। तांश्च बहिर्द्धाशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोजातिरध्यात्मबहिर्द्धाशून्य इति मनसिकरोति। तांश्चाऽध्यात्म बहिर्द्धाशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारो जातिशून्यताशून्य इति मनसिकरोति। तांश्च शून्यताशून्यतामुपलभते। तथा शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारो जातिमहाशून्य इति मनसि करोति। तांश्च महाशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमिताश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोजातिः परमार्थशून्य इति मनसि करोति। तांश्च परमार्थ शून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोजातिः संस्कृतशून्यता मनसिकरोति। तांश्च संस्कृतशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारो जातिरसंस्कृतशून्येति मनसिकरोति। ताञ्चाऽसंस्कृतशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितातान्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोऽजातिरत्यन्तशून्येति मनसि करोति। ताञ्चात्यन्तशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोऽजातिरनवराग्रशून्येति मनसिकरोति। ताञ्चाऽनवराग्रशून्यतामुपलभते। तथा च शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोऽजातिरनवकार शून्येति मनसि करोति। ताञ्चाऽनवकारशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोऽजातिः प्रकृतिशून्येतिमनसिकरोति। ताञ्च प्रकृतिशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोऽजातिः सर्वधर्मशून्येति मनसिकरोति। ताञ्च सर्वधर्मशून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोऽजातिः स्वलक्षणशून्येति मनसि करोति। ताञ्च स्वलक्षणशून्यतामुपलभते। तथा च शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसि-

कारोजातिरनुपलम्भशून्येति मनसि करोति। ताञ्चाऽनुपलम्भ-शून्यतामुपलभते। तथा च शून्यतथामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसि-कारोजातिरभावशून्येति मनसिकरोति। ताञ्चाऽभाव शून्यता-मुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसि-कारोजातिः स्वभावशून्यइति मनसि करोति। ताञ्च स्वभाव-शून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगत सर्व्वाकारज्ञताप्रतिसंयुक्तमनसि-कारोजातिरभावस्वभावशून्येति मनसिकरोति। ताञ्चाऽभावस्वभाव-शून्यतामुपलभते। तथा च शून्यतया मन्यते उपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्वोमहासत्वःस्पर्शः वेदना तृष्णा उपा-दानं भवं जातिः जरामरणं स्मृत्युपस्थानानि भावयति। तानि च स्मृत्युपस्थानान्युपलभते। तैश्च स्मृत्युपस्थानैर्मन्यते उपलम्भयोगेन। एवं, सम्यक् प्रहाणानि ऋद्धिपादान् इन्द्रियाणि बलानि। बोध्य-ङ्गानि आर्य्याष्टाङ्गामार्गं आर्य्यसत्यानि ध्यानानि अप्रमाणानि आरूप्यसमापत्तीः विमोक्षान् अनुपूर्व्वविहारसमापत्तीः शून्यता-निमित्ताप्रणिहितविमोक्षम् स्वानि अभिज्ञाः समाधीन् धारणी-मुखानि तथागतबलानि वैशारद्यानि प्रतिसम्विदः महाकरुणां आवेणिकबुद्धधर्म्मान्।

स प्रज्ञापारमिताञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसि-कारोजरामरणमध्यात्मशून्यमितिमनसिकरोति। ताञ्चाऽध्यात्म-शून्यतामुपलभते। तथाच शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारो जरामरणं वहिर्द्धाशून्यमिति मनसि करोति। ताञ्च वहिर्द्धाशून्यतामुपलभते। तथाच शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारो जरामरणमध्यात्मवहिर्द्धाशून्यमितिमनसि करोति। ताञ्चाऽध्यात्मवहिर्द्धाशून्यतामुपलभते। तथाच शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोजरामरणं शून्यताशून्यमितिमनसि करोति। ताञ्चशून्यताशून्यतामुपलभते। तथाच शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारोजरामरणं महाशून्यमिति मनसिकरोति। ताञ्च महाशून्यतामुपलभते। तथाच शून्यतया मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो जरामरणं परमार्थशून्यमिति मनसिकरोति। ताञ्च परमार्थशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो जरामरणं संस्कृतशून्यमिति मनसिकरोति। ताञ्च संस्कृतशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो जरामरणमसंस्कृतशून्यमिति मनसिकरोति। ताञ्चाऽसंस्कृतशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो जरामरणमत्यन्तशून्यमिति मनसिकरोति। ताञ्चाऽत्यन्तशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो जरामरणमनवराग्रशून्यमिति मनसिकरोति। ताञ्चाऽनवराग्रशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो जरामरणमनवकारशून्यमिति मनसिकरोति। ताञ्चाऽनवकारशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो जरामरणं प्रकृतिशून्यमिति मनसिकरोति। ताञ्च प्रकृतिशून्यतामुपुलभते। तथाच शून्यतयामन्यते उपलम्भजोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो जरामरणं सर्व्वधर्म्मशून्यमिति मनसिकरोति। ताञ्च सर्व्वधर्म्मशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो जरामरणं स्वलक्षणशून्यमिति मनसिकरोति। ताञ्च स्वलक्षणशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो जरामरणमनुपलम्भशून्यमिति मनसिकरोति। ताञ्चाऽनुपलम्भशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाश्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो

सिकारो जरामरणमभावशून्यमिति मनसिकरोति। ताञ्चाऽभाव-शून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमन-सिकारो जरामरणं स्वभावशून्यमिति मनसिकरोति। ताञ्च स्वभावशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमन-सिकारो जरामरणमभावस्वभावशून्यमिति मनसिकरोति। ताञ्चा-ऽभावस्वभावशून्यतामुपलभते। तथाच शून्यतयामन्यते उपलम्भ-योगेन।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायाञ्चरन्न-पगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारः स्मृत्युपस्थानानि भाव-यति। तानि च स्मृत्युपस्थानान्युपलभते। तैश्च स्मृत्युपस्थानैर्मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमन-सिकारः सम्यक्प्रहाणानि भावयति। तानि च सम्यक्प्रहाणान्युप-लभते। तैश्च सम्यक्प्रहाणैर्मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमन-सिकारः ऋद्धिपादान् भावयति। तानि च ऋद्धिपादानुपलभते। तैश्च ऋद्धिपादैर्मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमन-सिकारः इन्द्रियाणि भावयति। तानि चेन्द्रियाण्युपलभते। तैश्चे-न्द्रियैर्मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो बलानि भावयति । तानि च बलान्युपलभते । तैश्च बलैर्मन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो बोध्यङ्गानि भावयति । तानि च बोध्यङ्गान्युपलभते । तैश्च बोध्यङ्गैर्मन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकार आर्य्याष्टाङ्गमार्गं भावयति । तैश्चाऽर्य्याष्टाङ्गमार्गमुपलभते । तेन चार्य्याष्टमार्गेन मन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकार आर्य्यसत्यानि भावयति । तानि चार्य्यसत्यान्युपलभते । तैश्च आर्य्यसत्यैर्मन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो ध्यानानि भावयति । तानि च ध्यानान्युपलभते । तैश्च ध्यानेन मन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोऽप्रमाणानि भावयति । तानि चाप्रमाणान्युपलभते । तैश्चाऽप्रमाणैर्मन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकार आरूप्यसमापत्तीर्भावयति । ताश्चारूप्यसमापत्तीरुपलभते । ताभिश्चारूप्यसमापत्तिभिर्मन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमन-

सिकारो विमोक्षान् भावयति। तांश्च विमोक्षानुपलभते। तैश्च विमोक्षैर्मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोऽनुपूर्व्वविहारसमापत्तीर्भावयति। ताश्चानुपूर्व्वविहारसमापत्तीरुपलभते। ताभिश्चानुपूर्व्वविहारसमापत्तिभिर्मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारः शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि भावयति। तानि च शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखान्युपलभते। तैश्च शून्यतानिमित्ताप्रणिहितमोक्षमुखैर्मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारोऽभिज्ञाः भावयति। ताश्चाऽभिज्ञा उपलभते। ताभिश्चाभिज्ञाभिर्मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारः समाधीन् भावयति। तांश्च समाधीनुपलभते। तैश्च समाधिभिर्मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो धारणीमुखानि भावयति। तानि च धारणीमुखान्युपलभते। तैश्च धारणीमुखैर्मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारस्तथागतबलानि भावयति। तानि च तथागतबलान्युपलभते। तैश्च तथागतबलैर्मन्यते उपलम्भयोगेन।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो वैशारद्यानि भावयति । तानि च वैशारद्यान्युपलभते । तैश्च वैशारद्यैर्मन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारः प्रतिसम्विदो भावयति । ताश्च प्रतिसम्विद उपलभते । ताभिश्च प्रतिसम्विद्भिर्मन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकारो महाकरुणाम्भावयति । तांश्च महाकरुणामुपलभते । तयाच महाकरुणयामन्यते उपलम्भयोगेन ।

स प्रज्ञापारमितायाञ्चरन्नपगतसर्व्वाकारज्ञता प्रतिसंयुक्तमनसिकार आवेणिकबुद्धधर्म्मान् भावयति । तांश्च बुद्धधर्म्मानुपलभते । तैश्च बुद्धधर्म्मैर्मन्यते उपलम्भयोगेन ।

एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायाञ्चरननुपायकुशल इमं प्रज्ञापारमितानिर्द्देशात् श्रुत्वोत्त्रस्यति सन्त्रस्यति सन्त्रासमापद्यते । आह । कथम्भगवन् बोधिसत्त्वो महासत्त्वः पापमित्रहस्तगतो भवति । येन पापमित्रेण परिगृहीत इमं प्रज्ञापारमितानिर्द्देशं श्रुत्वोत्त्रस्यति सन्त्रस्यति सन्त्रासमापद्यते । भगवानाह । इह सुभूते बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं यः प्रज्ञापारमितायां चरन्तं विरेचयति विच्छन्दयति । ध्यानपारमितायाञ्चरन्तं विरेचयति विच्छन्दयति । वीर्य्यपारमितायां चरन्तं विरेचयति विच्छन्दयति । क्षान्तिपारमितायां चरन्तं विरेचयति विच्छन्दयति । शीलपारमितायाञ्चरन्तं विरेचयति विच्छन्दयति ।

दानपारमितायाश्चरन्तं विरेचयति विछन्दयति। नाऽच शिक्षितव्यं। नैतत्तथागतभाषितं नैषधर्म्मो नविनयः। कुवितर्का एते सूत्रान्ताः नैते श्रोतव्याः नोद्ग्रहीतव्याः न धारयितव्याः न वाचयितव्याः न पर्य्यवाप्तव्याः। न योनिशो मनसि कर्त्तव्याः नैतेपरेभ्यो देशयितव्याः। इत्ययं सुभूते बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं वेदितव्यम्।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं योऽसौ नमारकर्म्माण्युपदिशति। नमारदोषानाचष्टे इति। मारः पापीयान् बुद्धवेषेणोपसंक्रम्य बोधिसत्त्वं महासत्त्वं षड्भ्यः पारमिताभ्यो विरेचयति विछन्दयति। किन्ते कुलपुत्र प्रज्ञापारमितया भावितया। किन्ते ध्यानपारमितया भावितया। किन्ते वीर्य्यपारमितया भावितया। किन्ते क्षान्तिपारमितया भावितया। किन्ते शीलपारमितया भाविताया। किन्ते दानपारमितया भावितया। इत्येवं बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं वेदितव्यम्।

पुनरपरं सुभूते मारः पापीयान् बुद्धरूपेण बोधिसत्त्वं महासत्त्वमुपसंक्रम्य श्रावक प्रतिसंयुक्तसूत्रं गेयं व्याकरणं गाथो दाननिदानत्युक्तकजातकवैपुल्याद्भुतधर्म्मावदानोपदेशं देशयति। विवृणोति विभजते उत्तानीकरोति सम्प्रकाशयति। य इमान्येवं रूपाणि मारकर्म्माणि नाचष्टे न बोधयत्ययं सुभूते बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं वेदितव्यम्।

पुनरपरं सुभूते मारः पापीयान् बुद्धवेषेण बोधिसत्त्वं महासत्त्वमुपसंक्रम्यैवं वदति। न ते किञ्चित् कुलपुत्र बोधिचित्तं नापि

लमवैवर्त्तिको न त्वं भव्यस्यनुत्तरां सम्यक्सम्बोधिमभिसम्बोद्धुम्। य इमान्येवं रूपाणि मारकर्माणि नाचष्टे न बोधयति। अयं सुभूते बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं वोधितव्यम्।

पुनरपरं सुभूते मारः पापीयान् बुद्धवेषेण बोधिसत्त्वं महासत्त्वमुपसंक्रम्यैवं वदति। चक्षुः कुलपुत्र शून्यमात्मनात्मीयेन वा। श्रोत्रं शून्यमात्मनात्मीयेन वा। घ्राणं शून्यमात्मनात्मीयेन वा। जिह्वा शून्यात्मनात्मीयेन वा। कायः शून्य आत्मनात्मीयेन वा। मनः शून्यमात्मनात्मीयेन वा। रूपं शून्यमात्मनात्मीयेन वा। शब्दः शून्य आत्मनात्मीयेन वा। गन्धः शून्य आत्मनात्मीयेन वा। रसः शून्य आत्मनात्मीयेन वा। स्पर्शः शून्य आत्मनात्मीन वा। धर्म्मः शून्य आत्मनात्मीयेन वा। चक्षुर्विज्ञानं शून्यमात्मनात्मीयेन वा। श्रोत्रविज्ञानं शून्यमात्मनात्मीयेन वा। घ्राणविज्ञानं शून्यमात्मनात्मीयेन वा। जिह्वाविज्ञानं शून्यमात्मनात्मीयेन वा। कायविज्ञानं शून्यमात्मनात्मीयेन वा। मनोविज्ञानं शून्यमात्मनात्मीयेन वा। चक्षुः संस्पर्शः शून्य आत्मनात्मीयेन वा। श्रोत्रसंस्पर्शः शून्य आत्मनात्मीयेन वा। घ्राणसंस्पर्शः शून्य आत्मनात्मीयेन वा। जिह्वासंस्पर्शः शून्य आत्मनात्मीयेन वा। कायसंस्पर्शः शून्य आत्मनात्मीयेन वा। मनः संस्पर्शः शून्य आत्मनात्मीयेन वा। चक्षुः संस्पर्शप्रत्ययवेदनाशून्यात्मनात्मीयेन वा। श्रोत्रसंस्पर्शप्रत्ययवेदनाशून्यात्मनात्मीयेन वा। घ्राणसंस्पर्शप्रत्ययवेदनाशून्यात्मनात्मीयेन वा। जिह्वासंस्पर्शप्रत्ययवेदनाशून्यात्मनात्मीयेन वा। कायसंस्पर्शप्रत्ययवेदनाशून्यात्मनात्मीयेन वा। मनःसंस्पर्शप्रत्ययवेदनाशून्यात्मनात्मीयेन वा।

पृथिवीधातुः शून्य आत्मनात्मीयेन वा । अब्धातुः शून्य आत्मनात्मीयेन वा । तेजो धातुः शून्य आत्मनात्मीयेन वा । वायु धातुः शून्य आत्मनात्मीयेन वा । आकाशधातुः शून्य आत्मनात्मीयेन वा । विज्ञानधातुः शून्य आत्मनात्मीयेन वा । अविद्याशून्यात्मनात्मीयेन वा । संस्काराः शून्या आत्मनात्मीयेन वा । विज्ञानं शून्यमात्मनात्मीयेन वा । नामरूपं शून्यमात्मनात्मीयेन वा । षडायतनं शून्यमात्मनात्मीयेन वा । स्पर्शः शून्य आत्मनात्मीयेन वा । वेदनाशून्यात्मनात्मीयेन वा । तृष्णाशून्यात्मनात्मीयेन वा । उपादानशून्यमात्मनात्मीयेन वा । भवः शून्य आत्मनात्मीयेन वा । जातिरशून्यात्मनात्मीयेन वा । जरामरणं शून्यमात्मनात्मीयेन वा ।

दानपारमिताशून्यात्मनात्मीयेन वा । शीलपारमिताशून्यात्मनात्मीयेन वा । क्षान्तिपारमिताशून्यात्मनात्मीयेन वा । वीर्य्यपारमिताशून्यात्मनात्मीयेन वा । ध्यानपारमिताशून्यात्मनात्मीयेन वा । प्रज्ञापारमिताशून्यात्मनात्मीयेन वा ।

अध्यात्मशून्यताशून्यात्मनात्मीयेन वा । बहिर्द्धाशून्यताशून्यात्मनात्मीयेन वा । अध्यात्मबहिर्द्धाशून्यतात्मनात्मीयेन वा । शून्यताशून्यताशून्यात्मनात्मीयेन वा । महाशून्यताशून्यात्मनात्मीयेन वा । परमार्थशून्यताशून्यात्मनात्मीयेन वा । संस्कृतशून्यताशून्यात्मनात्मीयेन वा । असंस्कृतशून्यताशून्यात्मनात्मीयेन वा । अत्यन्तशून्यताशून्यात्मनात्मीयेन वा । अनवराग्रशून्यताशून्यात्मनात्मीयेन वा । अनवकारशून्यताशून्यात्मनात्मीयेन वा । प्रकृतिशून्यताशून्यात्मना-

त्मीयेन वा सर्व्वधर्म्मशून्यताशून्यात्मनात्मीयेन वा। स्वलक्षणशून्यताशून्यात्मनात्मीयेन वा। अनुपलम्भशून्यताशून्यात्मनात्मीयेन वा। अभावशून्यताशून्यात्मनात्मीयेन वा। स्वभावशून्यताशून्यात्मनात्मीयेन वा। स्वभावशून्यताशून्यात्मनात्मीयेन वा।

स्मृत्युपस्थानानि शून्यान्यात्मनात्मीयेन वा। सम्यक्प्रहाणानि शून्यान्यात्मनात्मीयेन वा। ऋद्धिपादाः शून्या आत्मनात्मीयेन वा। इन्द्रियाणि शून्यान्यात्मनात्मीयेन वा। बलानि शून्यान्यात्मनात्मीयेन वा। बोध्यङ्गानि शून्यान्यात्मनात्मीयेन वा। आर्य्याष्टाङ्गमार्गः शून्य आत्मनात्मीयेन वा। आर्य्यसत्यानि शून्यान्यात्मनात्मीयेन वा। ध्यानानि शून्यान्यात्मनात्मीयेन वा। अप्रमाणानि शून्यान्यात्मनात्मीयेन वा। आरूप्यसमापत्तयः शून्या आत्मनात्मीयेन वा। विमोक्षाः शून्या आत्मनात्मीयेन वा। अनुपूर्व्वविहारसमापत्तयः शून्या आत्मनात्मीयेन वा। शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि शून्यान्यात्मनात्मीयेन वा। अभिज्ञाः शून्या आत्मनात्मीयेन वा। समाधयः शून्या आत्मनात्मीयेन वा। धारणीमुखानि शून्यान्यात्मनात्मीयेन वा। तथागतबलानि शून्यान्यात्मनात्मीयेन वा। वैशारद्यानि शून्यान्यात्मनात्मीयेन वा। प्रतिसम्विदः शून्या आत्मनात्मीयेन वा। महाकरुणाशून्यात्मनात्मीयेन वा। आवेणिकबुद्धधर्म्माः शून्या आत्मनात्मीयेन वा। किं करिष्यनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्य।

य इमान्येवं रूपाणि मारकर्म्माणि नाचष्टे नोपदिशत्ययं सुभूते बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं वेदितव्यम्।

पुनरपरं सुभूते मारः पापीयान् बुद्धवेषेण नोपसंक्रम्य बोधिसत्त्वं महासत्त्वमेवं वदति । शून्या कुलपुत्रपूर्व्वादिग्बुद्धैर्भगवद्भिर्व्वोधिसत्त्वैः श्रावकैश्च । वात्र बुद्धाः न बोधिसत्त्वाः न श्रावकाः । एवं शून्या दक्षिणादिक् पश्चिमा उत्तरा अधस्तादुपरिष्टात् यावत् समन्ताद्दशदिशः शून्या बुद्धैर्भगवद्भिर्व्वोधिसत्त्वैः श्रावकैश्च । नाऽत्र बुद्धा न बोधिसत्त्वा न श्रावकाः । य इमान्येवं रूपाणि मारकर्म्माणि नाचष्टे नोपदिशत्ययं बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं वेदितव्यम् ।

पुनरपरं सुभूते मारः पापीयान् श्रावकवेषेणोपसंक्रम्य बोधिसत्त्वं महासत्त्वं सर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारेभ्यो विरेचयति । श्रावकप्रत्येकबुद्धप्रतिसंयुक्तमनसिकारैरववदत्यनुशास्ति । य एवं रूपाणि मारकर्म्माणि नाचष्टे नोपदिशत्ययं बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं वेदितव्यम् ।

पुनरपरं सुभूते मारः पापीयानुपाध्यायाचार्य्यवेषेणोपसंक्रम्य बोधिसत्त्वं महासत्त्वं बोधिसत्त्वचर्य्याया विरेचयेः सर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारेभ्यो विरेचयति । स्मृत्युपस्थानेषु नियोजयति । सम्यक्प्रहाणेषु नियोजयति । ऋद्धिपादेषु नियोजयति । बलेषु नियोजयति । बोध्यङ्गेषु नियोजयति । आर्य्याष्टाङ्गमार्गेषु नियोजयति । आर्य्यसत्येषु नियोजयति । ध्यानेषु नियोजयति । अप्रमाणेषु नियोजयति । आरूप्यसमापत्तिषु नियोजयति । विमोक्षेषु नियोजयति । अनुपूर्व्वविहारसमापत्तिषु नियोजयति । शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु नियोजयति । एवं त्वं कुल-

पुत्रैमान् धर्मान् भावित्वा श्रावकभूमिं साक्षात् कुरु किं करिष्य-स्यनुत्तरया सम्यक्सम्बोध्या। य एवं रूपाणि मारकर्माणि नाचष्टे नोपदिशत्ययं सुभूते बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं वेदितव्यम्।

पुनरपरं सुभूते मारः पापीयान् मातापितृवेषेणोपसंक्रम्य बोधिसत्त्वं महासत्त्वमेवं वदति यत्र कुलपुत्र स्रोत आपत्तिफल साक्षात्क्रिया। सकृदागामिफल साक्षात्क्रिया। अनागामिफल साक्षात्क्रिया। अर्हत्त्व साक्षात्क्रिया। प्रत्येकबुद्धसाक्षात्क्रिया। तत्र योगमापद्यत। किन्तेऽनुत्तरया सम्यक्सम्बोध्याऽभिसम्बुद्धया। यस्याः कृतेऽप्रमेयानसंख्येयान् कल्पान् संसरन्नपरिमाणान् हस्तपाद-शिरश्छेदाननुभविष्यसि। य इमान्येवं रूपाणि मारकर्माणि न बोधयति नाचष्टे नोपदिशत्ययं सुभूते बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं वेदितव्यम्।

पुनरपरं सुभूते मारः पापीयान् भिक्षुवेषेण बोधिसत्त्वं महा-सत्त्वमुपक्रम्य* अनात्मेति शान्तमिति शून्यमिति। अनिमित्तमिति अप्रणिहितमित्यनभिसंस्कारं इति विविक्तमित्युपलम्भयोगेनोपदि-शति। वेदनाऽनित्येत्युपलम्भयोगेनोपदिशति। वेदनादुःखेत्य-नात्मेति शान्तेति शून्येति अनिमित्तेति। अप्रणिहितेति अनभि-संस्कारेति विविक्तेति उपलम्भयोगेनोपदिशति। संज्ञा अनित्ये-

---

* रूपमनित्यमित्युपलम्भयोगेनोपदिशति रूपदुःखमिति उपलम्भ-योगेनोपदिशतीति वाक्यभागः सर्वत्र प्रयोक्तव्य आदर्शपुस्तके न तथा लिखितमस्ति। आदर्शानुरूपमत्र लिखितम्।

त्युपलम्भयोगेनोपदिशति । संज्ञा दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारेति विविक्तेति उपलम्भयोगेनोपदिशति । संस्कारा अनित्या इति उपलम्भयोगेनोपदिशति । संस्कारा दुःखा इति अनात्मा न इति शान्ता इति शून्या इति अनिमित्ता इति अप्रणिहिता इति अनभिसंस्कारा इति विविक्ता इत्युपलम्भयोगेनोपदिशति । विज्ञानमनित्यमित्युपलम्भयोगेनोपदिशति । विज्ञानं दुःखमित्यनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमित्युपलम्भयोगेनोपदिशति।

चक्षुरनित्यमिति दुःखमित्यनात्मेति शान्तमिति शून्यमिति अनभिज्ञमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमित्युपलम्भयोगेनोपदिशति। घ्राणमनित्यमिति। अथायुष्मान् सुभूतिर्भगवन्तमेतदवोचत् । बोधिसत्त्वोमहासत्त्व इति भगवन्नुच्यते । कोऽस्य पदार्थः । एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत् । अपदार्थः सुभूते बोधिसत्त्वपदार्थः । तत्कस्य हेतोरनुत्पादा बोधिरनुत्पादः सत्त्वः । न हि सुभूते बोधौपदमस्तिनसत्त्वे तस्मादपदार्थो बोधिसत्त्वपदार्थः । तद्यथापि नाम सुभूते आकाशेशकुनेः पदं न विद्यते । एवमेव बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते स्वप्नेपद न विद्यते । एवमेव बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते मायायाः पदं न विद्यते एवमेव बोधिसत्त्व पदार्थो न विद्यते । तद्यथापि नाम मरीच्याः पदं न विद्यते एवमेव बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते

उदकचन्द्रस्य पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम प्रतिश्रुत्कायाः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते प्रतिभासस्य पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते प्रतिबिम्बस्य पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतनिर्मितस्य पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते भूतकोट्याः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते। तथतायाः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते अवितथतायाः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते अनन्यतथतायाः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते धर्मतायाः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते धर्मधातोः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते धर्मस्थितितायाः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते धर्मनियामतायाः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य रूपे पदं न विद्यते। वेदनायां पदं न विद्यते संज्ञायां पदं न विद्यते संस्कारेषु पदं न विद्यते विज्ञाने पदं न विद्यते संस्कारेषु पदं न विद्यते विज्ञानेपद न विद्यते।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य चक्षुषि पदं न विद्यते श्रोत्रे पदं न विद्यते घ्राणेपदं न विद्यते जिह्वायां पदं न विद्यते काये पदं न विद्यते मनसि पदं न विद्यते।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य चक्षुर्विज्ञानेपदं न विद्यते श्रोत्रविज्ञाने पदं न विद्यते घ्राणविज्ञाने पदं न विद्यते जिह्वाविज्ञानेपदं न विद्यते कायविज्ञाने पदं न विद्यते। मनोविज्ञाने पदं न विद्यते।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य चक्षुः संस्पर्शे पदं न विद्यते श्रोत्रसंस्पर्शे पदं न विद्यते। घ्राणसंस्पर्शे पदं न विद्यते। जिह्वासंस्पर्शे पदं न विद्यते। कायसंस्पर्शे पदं न विद्यते। मनः संस्पर्शेपदं न विद्यते।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य चक्षुःसंस्पर्श प्रत्ययवेदयिते पदं न विद्यते श्रोत्र-संस्पर्शप्रत्ययवेदयिते पदं न विद्यते घ्राणसंस्पर्शप्रत्ययवेदयिते पदं न विद्यते जिह्वासंस्पर्शप्रत्ययवेदयिते पदं न विद्यते कायसंस्पर्श-प्रत्ययवेदयिते पदं न विद्यते। मनःसंस्पर्शप्रत्ययवेदयिते पदं न विद्यते।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याविद्यायां पदं न विद्यते संस्कारेषु पदं न विद्यते विज्ञाने पदं न विद्यते नाम रूपे पदं न विद्यते षडायतने पदं न विद्यते स्पर्शे पदं न विद्यते वेदनायां पदं न विद्यते तृष्णायां पदं न विद्यते उपादाने पदं न विद्यते भवे पदं न विद्यते। जातौ पदं न विद्यते जरामरणे पदं न विद्यते।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य दानपारमितायां चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य शीलपारमितायां चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य क्षान्तिपारमितायाञ्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य वीर्य्यपारमितायाञ्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य ध्यानपारमितायाञ्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य प्रज्ञापारमितायाञ्चरतः पदार्थो न विद्यते।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याध्यात्म शून्यतायाञ्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य बहिर्द्धाशून्यतायाञ्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याध्यात्म बहिर्द्धा-

शून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य शून्यताशून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य महाशून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य परमार्थ शून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य संस्कृत-शून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्यासंस्कृत शून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्यात्यन्तशून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्यानवराग्र शून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्यानवकार-शून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते माया-पुरुषस्य प्रकृतिशून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य सर्वधर्मशून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य स्वलक्षणशून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याऽनुप-लम्भशून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याभाव शून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य स्वभाव शून्यतायाश्चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याभावस्वभावशून्य-तायाश्चरतः पदार्थो न विद्यते।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्च-रतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते माया-

पुरुषस्य सम्यक्प्रधानेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य सम्यक् प्रहाणेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्यर्द्धिपादेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्येन्द्रियेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य बलेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य बोध्यङ्गेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्यार्याष्टाङ्गमार्गे चरतः पदार्थो न विद्यते।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्यार्यसत्येषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य ध्यानेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याप्रमाणेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याष्टसमापत्तिषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याष्टसु विमोक्षेषु चरतः पदा दुःखमित्यनात्मेति शान्तमिति शून्यमित्यनिमित्तमित्यप्रणिहितमित्यनभिसंस्कार इति विविक्तमित्युपलम्भयोगेनोपदिशति। जिह्वाऽनित्येति दुःखेत्यनात्मेति शान्तेति शून्येत्यनिमित्तेत्यप्रणिहितेत्यनभिसंस्कार इति विविक्तेत्युपलम्भयोगेनोपदिशति। कायोऽनित्य इति दुःख इत्यनात्मेति शान्त इति शून्य इत्यनिमित्त इत्यप्रणिहित इत्यनभिसंस्कार इति विविक्त इत्युपलम्भयोगेनोपदिशति। मनोऽनित्यमिति दुःखमित्यनात्मेति शान्तमिति

अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिश्यति। मनःसंस्पर्शोऽनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिश्यति।

चक्षुः संस्पर्शप्रत्ययवेदितमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोपदिश्यति। श्रोत्रसंस्पर्शप्रत्ययवेदितमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति। अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोपदिश्यति। घ्राणसंस्पर्शप्रत्ययवेदितमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति। विविक्तमिति उपलम्भयोगेनोपदिश्यति। जिह्वासंस्पर्शप्रत्ययवेदितमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोपदिश्यति।

कायसंस्पर्शप्रत्ययवेदितमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोपदिश्यति। मनः संस्पर्शप्रत्ययवेदितमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अभिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोपदिश्यति।

पृथिवीधातुरनित्य इति दुःख इति अनात्मेति शान्त इति

शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति । अब्धातुरनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति । तेजोधातुरनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति । वायुधातुरनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति । आकाश धातुरनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति ।

विज्ञानधातुरनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति । अविद्याऽनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कार इति विविक्तेति उपलम्भयोगेनोपदिशति । संस्कारा *अनित्या इति दुःखा इति अनात्मान इति शान्ता इति शून्या* इति अनिमित्ता इति अप्रणिहिता इति अनभिसंस्कारा इति विविक्ता इत्युपलम्भयोगेनोपदिशति । विज्ञानमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोप-

शून्यमित्यनिमित्तमित्यप्रणिहितमित्यनभिसंस्कार इति विविक्त-मित्युपलम्भयोगेनोपदिशति।

रूपमनित्यमिति दुःखमित्यनात्मेति शान्तमिति शून्यमित्यनिमित्तमित्यप्रणिहितमित्यनभिसंस्कार इति विविक्तमित्युपलम्भयोगेनोपदिशति। शब्द*मनित्यमिति दुःखमित्यनात्मेति शान्तमिति शून्यमित्यनिमित्तमित्यप्रणिहितमित्यनभिसंस्कार इति विविक्तमित्युपलम्भयोगेनोपदिशति। गन्धोऽनित्य इति दुःख इत्यनात्मेति शान्त इति शून्य इत्यनिमित्त इत्यप्रणिहित इत्यनभिसंस्कार इति विविक्त इत्युपलम्भयोगेनोपदिशति। रसोऽनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इत्यप्रणिहित इत्यभिसंस्कार इति विविक्त इत्युपलम्भयोगेनोपदिशति। स्पर्शोऽनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कारा इति विविक्ता इत्युपलम्भयोगेनोपदिशति। धर्मा अनित्या इति दुःखा इति अनात्मान इति शान्ता इति शून्या इति अनिमित्ता इति अप्रणिहिता इति अनभिसंस्कारा इति विविक्ता इत्युपलम्भयोगेनोपदिशति।

चक्षुर्विज्ञानमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमित्युपलम्भयोगेनोपदिशति। श्रोत्रविज्ञानमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति। अप्रणिहितमिति अनभिसंस्कार इति विविक्तमित्युपलम्भयोगेनोप-

* शब्दशब्दस्य पुंलिङ्गे प्रयोगोयुक्तः आदर्शपुस्तके नपुंसकेन निर्दिष्टं।

दिशति। घ्राणविज्ञानमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति। अनभिसंस्कार इति विविक्तमित्युपलम्भयोगेनोपदिशति। जिह्वाविज्ञानमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमित्युपलम्भयोगेनोपदिशति। कायविज्ञानमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमित्युपलम्भयोगेनोपदिशति मनोविज्ञानमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमित्युपलम्भयोगेनोपदिशति।

चक्षुःसंस्पर्शोऽनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति। अनभिसंस्कार इति विविक्त इत्युपलम्भयोगेनोपदिशति। श्रोत्रसंस्पर्शोऽनित्य इति दुःख इति। अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इत्युपलम्भयोगेनोपदिशति। घ्राणसंस्पर्शोऽनित्य इति दुःख इति। अनात्मेति शान्त इति शून्य इति निमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इत्युपलम्भयोगेनोपदिशति।

जिह्वासंस्पर्शोऽनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति। विविक्त इत्युपलम्भयोगेनोपदिशति। कायसंस्पर्शोऽनित्य इति दुःख इति अनात्मा इति शान्त इति शून्य इति अनिमित्त इति

अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगे-नोपदिशति। मनःसंस्पर्शोऽनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति।

चक्षुः संस्पर्शप्रत्ययवेदितमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभि-संस्कार इति विविक्तमिति उपलम्भयोगेनोपदिशति। श्रोत्रसंस्पर्श-प्रत्ययवेदितमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्य-मिति। अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोपदिशति। घ्राणसंस्पर्शप्रत्ययवेदितम-नित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्त-मिति अप्रणिहितमिति अनभिसंस्कार इति। विविक्तमिति उपलम्भ-योगेनोपदिशति। जिह्वासंस्पर्शप्रत्ययवेदितमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोपदिशति।

कायसंस्पर्शप्रत्ययवेदितमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभि-संस्कार इति विविक्तमिति उपलम्भयोगेनोपदिशति। मनः संस्पर्श-प्रत्ययवेदितमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोपदिशति।

पृथिवीधातुरनित्य इति दुःख इति अनात्मेति शान्त इति

शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति। अवधातुरनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति। तेजोधातुरनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति। वायुधातुरनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति। आकाश धातुरनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति।

विज्ञानधातुरनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति। अविद्याऽनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कार इति विविक्तेति उपलम्भयोगेनोपदिशति। संस्कारा अनित्या इति दुःखा इति अनात्मान इति शान्ता इति शून्या इति अनिमित्ता इति अप्रणिहिता इति अनभिसंस्कारा इति विविक्ता इत्युपलम्भयोगेनोपदिशति। विज्ञानमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोप-

दिशति । नामरूपमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोपदिशति । षडायतनमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोपदिशति । स्पर्शोऽनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति । अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति । वेदनाऽनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति । अप्रणिहितेति अनभिसंस्कार इति विविक्तेति उपलम्भयोगेनोपदिशति । तृष्णाऽनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति । उपादानमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोपदिशति । भवोऽनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगेनोपदिशति । जातिरनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कार इति विविक्तेति उपलम्भयोगेनोपदिशति । जरामरणमनित्यमिति दुःखमिति अनात्मेति शान्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति अनभिसंस्कार इति विविक्तमिति उपलम्भयोगेनोपदिशति ।

दानपारमिताऽनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कार इति विविक्तेति उपलम्भयोगेनोपदिशति। शीलपारमिताऽनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कार इति विविक्तेति उपलम्भयोगेनोपदिशति। क्षान्तिपारमिताऽनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कार इति विविक्तेति उपलम्भयोगेनोपदिशति। वीर्य-पारमिता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनि-मित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भ-योगेनोपदिशति। ध्यानपारमिता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति निमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति। प्रज्ञापारमिताऽनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति।

अध्यात्मशून्यताऽनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति। बहिर्द्धाशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभि-संस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति। अध्यात्मबहिर्द्धा-शून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमि-त्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भ-योगेनोपदिशति। शून्यता शून्यता अनित्येति दुःखेति अनात्मेति

शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति । महाशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति । परमार्थशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति । संस्कृतशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति । असंस्कृतशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति । अत्यन्त शून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति । अनवरागशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति । अनवकारशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति । प्रकृतिशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिशति । सर्वधर्मशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति

विविक्तेति उपलम्भयोगेनोपदिश्यति । स्वलक्षणशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिश्यति । अनुपलम्भशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिश्यति । अभावशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिश्यति । स्वभाव शून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिश्यति । अभावस्वभावशून्यता अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारा इति विविक्तेति उपलम्भयोगेनोपदिश्यति ।

स्मृत्युपस्थानानि अनित्यानीति दुःखानीति अनात्मानीति शान्तानीति शून्यानीति अनिमित्तानीति अप्रणिहितानीति अनभिसंस्कारा इति विविक्तानीति उपलम्भयोगेनोपदिश्यति । सम्यक् प्रहाणान्यनित्यानीति दुःखानीति अनात्मानीति शान्तानीति शून्यानीति अनिमित्तानीति अप्रणिहितानीति अनभिसंस्कारा इति विविक्तानीति उपलम्भयोगेनोपदिश्यति । ऋद्धिपादा अनित्या इति दुःखा इति अनात्मान इति शान्ता इति शून्या इति अनिमित्ता इति अप्रणिहिता इति अनभिसंस्कारा इति विविक्ता इति उपलम्भयोगेनोपदिश्यति । इन्द्रियाण्यनित्यानीति

दुःखानीति अनात्मानीति शान्तानीति शून्यानीति अनिमित्ता-नीति अप्रणिहितानीति अनभिसंस्कारानीति* विविक्तानीति उपलम्भयोगेनोपदिशति । बलान्यनित्यानीति दुःखानीति अना-त्मानीति शान्तानीति शून्यानीति अनिमित्तानीति अप्रणिहिता-नीति अनभिसंस्कारानीति विविक्तानीति उपलम्भयोगेनोपदिशति । बोध्यङ्गान्यनित्यानीति दुःखानीति अनात्मानीति शान्तानीति शून्यानीति अनिमित्तानीति अप्रणिहितानीति अनभिसंस्कारानीति विविक्तानीति उपलम्भयोगेनोपदिशति । आर्य्याष्टाङ्गमार्गोऽनित्य इति दुःख इति अनात्मेति शान्त इति शून्य इति अनिमित्त इति अप्रणिहित इति अनभिसंस्कार इति विविक्त इति उपलम्भयोगे-नोपदिशति । आर्य्यसत्यान्यनित्यानीति दुःखानीति अनात्मानीति शान्तानीति शून्यानीति अनिमित्तानीतिअप्रणिहितानीति अनभि-संस्कारानीति विविक्तानीति उपलम्भयोगेनोपदिशति । ध्याना्य-नित्यानीति दुःखानीति अनात्मानीति शान्तानीति शून्यानीति अनिमित्तानीति अप्रणिहितानीति अनभिसंस्कारानीति विविक्ता-नीति उपलम्भयोगेनोपदिशति । अप्रमाणान्यनित्यानीति दुःखा-नीति अनात्मानीति शान्तानीति शून्यानीति अनिमित्तानीति अप्रणिहितानीति अनभिसंस्कारानीति विविक्तानीति उपलम्भ-योगेनोपदिशति । आरूप्यसमापत्तयोऽनित्या इति दुःखा इति अनात्मान इति शान्ता इति शून्या इति अनिमित्ता इति

* पूर्व्वं सर्व्वत्रानभिसंस्कारा इति पाठः इह तु अनभिसंस्कारानीति विशेष्यलिङ्गभागितया निर्दिष्टं एवं परत्रापि ।

अप्रणिहिता इति अनभिसंस्कारा इति विविक्ता इति उपलम्भयोगे-नोपदिशति। विमोक्षा अनित्या इति दुःखा इति अनात्मान इति शान्ता इति शून्या इति अनिमित्ता इति अप्रणिहिता इति अनभि-संस्कारा इति विविक्ता इति उपलम्भयोगेनोपदिशति। अनुपूर्व्व-विहारसमापत्तयोऽनित्या इति दुःखा इति अनात्मान इति शान्ता इति शून्या इति अनिमित्ता इति अप्रणिहिता इति अनभिसंस्कारा इति विविक्ता इति उपलम्भयोगेनोपदिशति। शून्यतानिमित्ता-प्रणिहितविमोक्षमुखान्यनित्यानीति दुःखानीति अनात्मानीति शान्तानीति शून्यानीति अनिमित्तानीति अप्रणिहितानीति अनभिसंस्कारानीति विविक्तानीति उपलम्भयोगेनोपदिशति। अभिज्ञा अनित्या इति दुःखा इति अनात्मान इति शान्ता इति शून्या इति अनिमित्ता इति अप्रणिहिता इति अनभिसंस्कारा इति विविक्ता इति उपलम्भयोगेनोपदिशति। समाधयोऽनित्या इति दुःखा इति अनात्मान इति शान्ता इति शून्या इति अनिमित्ता इति अप्रणिहिता इति अनभिसंस्कारा इति विविक्ता इति उपलम्भयोगेनोपदिशति।

धारणीमुखानि अनित्यानि दुःखानि अनात्मानि शान्तानि शून्यानि अनिमित्तानि अप्रणिहितानि अनभिसंस्कारानीति विविक्तानीति उपलम्भयोगेनोपदिशति। तथागत बलानि अनि-त्यानीति दुःखानीति अनात्मानीति शान्तानीति शून्यानीति अनिमित्तानीति अप्रणिहितानीति अनभिसंस्कारानीति विविक्ता-नीति उपलम्भयोगेनोपदिशति। वैशारद्यानि अनित्यानीति

दुःखानीति अनात्मानीति शान्तानीति शून्यानीति अनिमित्तानीति अप्रणिहितानीति अनभिसंस्कारानीति विविक्तानीति उपलम्भयोगेनोपदिशति । प्रतिसम्विदोऽनित्या इति दुःखा इति अनात्मान इति शान्ता इति शून्या इति अनिमित्ता इति अप्रणिहिता इति अनभिसंस्कारा इति विविक्ता इति उपलम्भयोगेनोपदिशति । महामैत्री अनित्या इति दुःखा इति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारेति विविक्तेति उपलम्भयोगेनोपदिशति । महाकरुणा अनित्येति दुःखेति अनात्मेति शान्तेति शून्येति अनिमित्तेति अप्रणिहितेति अनभिसंस्कारेति विविक्तेति उपलम्भयोगेनोपदिशति । आवेणिकबुद्धधर्मा अनित्या इति दुःखा इति अनात्मान इति शान्ता इति शून्या इति अनिमित्ता इति अप्रणिहिता इति अनभिसंस्कारा इति विविक्ता इति उपलम्भयोगेनोपदिशति । य एवंरूपाणि मारकर्माणि नाचष्टे नोपदिशत्ययं बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं वेदितव्यं । एवं हि सुभूते बोधिसत्त्वेन महासत्त्वेन पापमित्राणि वेदितव्यानि । विदित्वा च परिवर्जयितव्यानि ॥ ० ॥

शतसाहस्रयां प्रज्ञापारमितायाः षष्ठः परिवर्त्तः ॥

---

# अथ सप्तमः परिवर्त्तः।

अथायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। बोधिसत्त्वो महासत्त्व इति भगवन्नुच्यते, कोऽस्य पदार्थः। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्। अपदार्थः सुभूते बोधिसत्त्वपदार्थः। तत्कस्य हेतोरनुत्पादो बोधिरनुत्पादः सत्त्वः। नहि सुभूते बोधौपदमस्ति नवासत्त्वे तस्मादपदार्थो बोधिसत्त्वपदार्थः तद्यथापि नाम सुभूते आकाशेशकुनेः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम स्वप्नेपदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते।, तद्यथापि नाम सुभूते मायायाः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मरीच्याः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते उदकचन्द्रस्य पद न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते प्रतिश्रुत्कायाः पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते प्रतिभासस्य पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते बिम्बस्य पद न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतनिर्मितस्य पदं न विद्यते। एवमेव बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते मायापुरुषस्यार्याष्टाङ्गमार्गेचरतः पदार्थो न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य

प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्यार्यसत्येषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य ध्यानेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याऽप्रमाणेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याऽरूप्यसमापत्तिषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याष्टसुविमोक्षेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य नवस्वनुपूर्वविहारसमापत्तिषु चरतः पदं न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य शून्यतानिमित्ताऽप्रणिहितविमोक्षेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्याऽभिज्ञासु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य समाधिषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य धारणीमुखेषु चरतः पदार्थो न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते मायापुरुषस्य तथागतबलेषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य वैशारद्येषु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य प्रतिसंवित्सु चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य महामैत्र्यां चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्य महाकरुणायां चरतः पदार्थो न विद्यते। तद्यथापि नाम सुभूते मायापुरुषस्यावेणिक बुद्धधर्मेषु

चरतः पदार्थो न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते ।

तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य रूपेपदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्य रूपस्य । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य वेदनायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्या वेदनायाः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य संज्ञायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्याः संज्ञायाः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य संस्कारेषु पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तेषां संस्काराणां ।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य विज्ञानेपद न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्य विज्ञानस्य । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्बुद्धस्य चक्षुषिपद न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्य चक्षुषः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो

न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य श्रोत्रेपदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य श्रोत्रस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य घ्राणेपदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य घ्राणस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य जिह्वायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्या जिह्वायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य कायपदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य कायस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य मनसिपदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य मनसः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य रूपे पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य रूपस्य एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्व पदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य शब्दे पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वा-

त्तस्य शब्दस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हत सम्यक् सम्बुद्धस्य गन्धे पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य गन्धस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य रसे पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य रसस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य स्पर्शे पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य स्पर्शस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य धर्मेषु पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तेषां धर्माणां। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य चक्षुर्व्विज्ञाने पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य चक्षुर्व्विज्ञानस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य श्रोत्रविज्ञाने पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य श्रोत्रविज्ञानस्य। एवमेव सुभूते बोधि-

सत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य घ्राणविज्ञाने पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य घ्राणविज्ञानस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य जिह्वाविज्ञाने पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य जिह्वाविज्ञानस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य कायविज्ञाने पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य कायविज्ञानस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य मनोविज्ञाने पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य मनोविज्ञानस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य चक्षुःसंस्पर्शे पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य चक्षुःसंस्पर्शस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य श्रोत्रसंस्पर्शे पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य श्रोत्रसंस्पर्शस्य। एवमेव सुभूते बोधिसत्त्वस्य महा-

सत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हत. सम्यक् सम्बुद्धस्य घ्राणसंस्पर्शे पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्य घ्राणसंस्पर्शस्य । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हत सम्बुद्धस्य जिह्वासंस्पर्शे पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्य जिह्वासंस्पर्शस्य । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिताया चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हत सम्यक् सम्बुद्धस्य कायसंस्पर्शे पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्य कायसंस्पर्शस्य । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य मन संस्पर्शे पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्य मन संस्पर्शस्य । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिताया चरतो बोधिसत्त्वपदार्थो न विद्यते ।

तद्यथापि नाम सुभूते तथागतस्यार्हत सम्यक् सम्बुद्धस्य चक्षु-संस्पर्शे पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्य चक्षुसंस्पर्श-प्रत्ययवेदितस्य । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापार-मिताया चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हत सम्यक् सम्बुद्धस्य श्रोत्रसंस्पर्शप्रत्ययवेदिते पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्य श्रोत्रसंस्पर्शप्रत्ययवेदि-तस्य । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिताया

चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य घ्राणसंस्पर्शप्रत्ययवेदिते पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य घ्राणसंस्पर्शप्रत्ययवेदितस्य । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य जिह्वासंस्पर्शप्रत्ययवेदिते पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्य जिह्वासंस्पर्शप्रत्ययवेदितस्य ।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य कायसंस्पर्शप्रत्ययवेदिते पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य कायसंस्पर्शप्रत्ययवेदितस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य मनःसंस्पर्शप्रत्ययवेदिते पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य मनःसंस्पर्शप्रत्ययवेदितस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते ।

तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्याऽविद्यायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य अविद्यायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हत. सम्यक् सम्बुद्धस्य संस्कारेषु पदं न विद्यते । तत्कस्य हेतोर-

विद्यमानत्वात्तेषां संस्काराणाम्। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य विज्ञाने पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य विज्ञानस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य नामरूपे पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य नाम रूपस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य षडायतने पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य षडायतनस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य स्पर्शे पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य स्पर्शस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य वेदनायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्या वेदनाया। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य तृष्णायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्याः तृष्णायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमि-

तायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्याऽर्हतः सम्यक् सम्बुद्धस्योपादानेपदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्योपादानस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य भवे पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य भवस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य जातौ पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्याजातेः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य जरामरणे पद न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य जरामरणस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य दानपारमितायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य दानपारमितायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य शीलपारमितायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्याः शीलपारमितायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। [illegible] नाम सुभूते तथागतस्या-

र्हतः सम्यक् सम्बुद्धस्य क्षान्तिपारमितायां पदं न विद्यते। तत् कस्य हेतोरविद्यमानत्वात्तस्याः क्षान्तिपारमितायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य वीर्य्यपारमितायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्या वीर्य्यपारमितायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञा-पारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य ध्यानपारमितायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्या ध्यानपारमितायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्या-र्हतः सम्यक् सम्बुद्धस्य प्रज्ञापारमितायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्याः प्रज्ञापारमितायाः। एवमेव सुभूते बोधि-सत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्या-ध्यात्मशून्यतायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वा-त्तस्या अध्यात्मशून्यतायाः। एवमेव सुभूते बोधिसत्त्वस्य महास-त्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य बहिर्द्धा-शून्यतायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्या बहिर्द्धा शून्यतायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य

प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुध्याध्यात्मबहिर्द्धाशून्यतायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्या अध्यात्मबहिर्द्धा शून्यतायाः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य शून्यता शून्यतायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्याः शून्यता शून्यतायाः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य महाशून्यतायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्या महाशून्यतायाः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य परमार्थ शून्यतायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्याः परमार्थशून्यतायाः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य संस्कृतशून्यतायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्याः संस्कृतशून्यतायाः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्यासंस्कृतशून्यतायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्या असंस्कृतशून्यतायाः ।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्यात्यन्तशून्यतायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्याः अत्यन्तशून्यतायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्यानवरागशून्यतायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्या अनवरागशून्यतायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हत सम्यक्सम्बुद्धस्यानवकारशून्यतायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वत्तस्यानवकारशून्यतायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य प्रकृतिशून्यतायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वत्तस्याः प्रकृतिशून्यतायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य सर्व्वधर्म्मशून्यतायां पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्याः सर्व्वधर्म्मशून्यतायाः। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य स्वलक्षणशून्यतायां पदं न विद्यते। तत्कस्य हेतोरविद्यमान-

त्वात्तस्याः स्वलक्षणशून्यतायाः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्याऽनुपलम्भशून्यतायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्या ऽनुपलम्भशून्यतायाः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्याभावशून्यतायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्याः अभावशून्यतायाः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य स्वभावशून्यतायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्याः स्वभावशून्यतायाः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्याभावस्वभावशून्यतायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्या अभावस्वभावशून्यतायाः ।

तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य स्मृत्युपस्थानेषु पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तेषां स्मृत्युपस्थानानां । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य सम्यक्प्रहाणेषु पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तेषां सम्यक्प्रहाणानां । एवमेव

सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य ऋद्धिपादेषु पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तेषामृद्धिपादानां। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य इन्द्रियेषु पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तेषामिन्द्रियाणां।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य बलेषु पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तेषां बलानां। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य बोध्यङ्गेषु पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तेषां बोध्यङ्गानां। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य मार्गपदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तस्य मार्गस्य। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्यार्य्यसत्येषु पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तेषामार्य्यसत्यानां। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्व-

पदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य ध्यानेषु पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तेषां ध्यानानां। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्याप्रमाणेषु पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तेषामप्रमाणानां। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्यारूप्यसमापत्तिषु पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तासामारूप्यसमापत्तीनां। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य विमोक्षेषु पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तेषां विमोक्षाणां। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्यानुपूर्व्वविहारसमापत्तिषु पदं नविद्यते। तत्कस्य हेतोरविद्यमानत्वात्तासामनुपूर्व्वविहारसमापत्तीनां। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु पदं न विद्यते। तत्कस्य हेतोरविद्यमानत्वात्तेषां शून्यतानिमित्ताप्रणिहितविमोक्षाणां। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो

न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्याभिज्ञासु पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तासामभिज्ञानां । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य समाधिषु पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तेषां समाधीनां । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य धारणीमुखेषु पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तेषां धारणीमुखानां । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य तथागतबलेषु पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तेषां तथागतबलानां । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य चतुर्षु वैशारद्येषु पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तेषां वैशारद्यानां ।

एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य चतसृषु प्रतिसम्भित्सु पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तासां प्रतिसम्भिदां । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो [illegible]

न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य महाकरुणायां पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तस्या महाकरुणायाः । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्याष्टादशावेणिकबुद्धधर्मेषु पदं न विद्यते । तत्कस्य हेतोरविद्यमानत्वात्तेषामावेणिकबुद्धधर्माणां । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते ।

तद्यथापि नाम सुभूतेऽसंस्कृतधातौ संस्कृतधातुः पदं न विद्यते। संस्कृतधातवसंस्कृतधातुपदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूतेऽनुत्पादे पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते ऽनिरोधेपदा न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदं न विद्यते। तद्यथापि नाम सुभूतेऽसंक्लेशाऽव्यवदाने पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूतेऽनभिसंस्कारे पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूतेऽप्रादुर्भावे पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो

न विद्यते । तद्यथापि नाम सुभूतेऽनुपलम्भे पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते ।

आह । कस्य भगवन्ननुत्पादे पदं न विद्यते । कस्यानिरोधे पदं न विद्यते । कस्यासंक्लेशाव्यवदाने पदं न विद्यते । कस्या-ऽप्रादुर्भावे पदं न विद्यते । कस्याऽनभिसंस्कारे पदं न विद्यते । कस्याऽनुपलम्भे पदं न विद्यते । भगवानाह । रूपस्य सुभूतेऽनु-त्पादे पदं न विद्यते । रूपस्याऽनिरोधे पदं न विद्यते । रूपस्या-ऽसंक्लेशाव्यवदाने पदं न विद्यते । रूपस्याऽनभिसंस्कारे पदं न विद्यते । रूपस्याऽप्रादुर्भावे पदं न विद्यते । रूपस्याऽनुपलम्भे पदं न विद्यते । वेदनायाः सुभूते अनुत्पादे पदं न विद्यते । वेदनाया अनिरोधे पदं न विद्यते । वेदनाया असंक्लेशा व्यवदाने पदं न विद्यते । वेदनाया अनभिसंस्कारे पदं न विद्यते । वेद-नाया अप्रादुर्भावे पदं न विद्यते । वेदनाया अनुपलम्भे पदं न विद्यते । संज्ञायाः सुभूतेऽनुत्पदे पदं न विद्यते । संज्ञाया अनि-रोधे पदं न विद्यते । संज्ञाया असंक्लेशाव्यवदाने पदं न विद्यते । संज्ञाया अनभिसंस्कारे पदं न विद्यते । संज्ञाया अप्रादुर्भावे पदं न विद्यते । संज्ञाया अनुपलम्भे पदं न विद्यते । संस्काराणां सुभूतेऽनुत्पादे पदं न विद्यते । संस्काराणामनिरोधे पद न विद्यते । संस्काराणामसंक्लेशाव्यवदाने पदं न विद्यते । संस्कारा-णामनभिसंस्कारे पदं न विद्यते । संस्काराणामप्रादुर्भावे पदं न विद्यते । संस्काराणामनुपलम्भे पदं न विद्यते । विज्ञानस्य

सुभूतेऽनुत्पादे पदं न विद्यते। विज्ञानस्यानिरोधे पदं न विद्यते। विज्ञानस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। विज्ञानस्यानभिसंस्कारे पदं न विद्यते। विज्ञानस्याऽप्रादुर्भावे पदं न विद्यते। विज्ञानस्याऽनुपलम्भे पदं न विद्यते।

चक्षुषः सुभूतेऽनुत्पादे पदं न विद्यते। चक्षुषोऽनिरोधे पदं न विद्यते। चक्षुषोऽसंक्लेशाव्यवदाने पदं न विद्यते। चक्षुषोऽनभिसंस्कारे पदं न विद्यते। चक्षुषोऽप्रादुर्भावे पदं न विद्यते। चक्षुषोऽनुपलम्भे पदं न विद्यते। श्रोत्रस्य सुभूतेऽनुत्पादे पदं न विद्यते। श्रोत्रस्याऽनिरोधे पदं न विद्यते। श्रोत्रस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। श्रोत्रस्याऽनभिसंस्कारे पदं न विद्यते। श्रोत्रस्याऽप्रादुर्भावे पदं न विद्यते। श्रोत्रस्याऽनुपलम्भे पदं न विद्यते। घ्राणस्य सुभूतेऽनुत्पादे पदं न विद्यते। घ्राणस्यानिरोधे पदं न विद्यते। घ्राणस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। घ्राणस्याऽनभिसंस्कारे पदं न विद्यते। घ्राणस्याऽप्रादुर्भावे पदं न विद्यते। घ्राणस्याऽनुपलम्भे पदं न विद्यते। जिह्वायाः सुभूतेऽनुत्पादे पदं न विद्यते। जिह्वाया अनिरोधे पदं न विद्यते। जिह्वाया असंक्लेशाव्यवदाने पदं न विद्यते। जिह्वाया अनभिसंस्कारे पदं न विद्यते। जिह्वाया अप्रादुर्भावे पदं न विद्यते। जिह्वाया अनुपलम्भे पदं न विद्यते। कायस्य सुभूतेऽनुत्पादे पदं न विद्यते। कायस्याऽनिरोधे पदं न विद्यते। कायस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। कायस्याऽनभिसंस्कारे पदं न विद्यते। कायस्याऽप्रादुर्भावे पदं न विद्यते। कायस्याऽनुपलम्भे पदं न विद्यते। मनसः

सुभूतेऽनुत्पादे पदं न विद्यते । मनसोऽनिरोधे पदं न विद्यते । मनसोऽसंक्लेशाव्यवदाने पदं न विद्यते । मनसोऽनभिसंस्कारे पदं न विद्यते । मनसोप्रादुर्भावे पदं न विद्यते मनसोऽनुपलम्भे पदं न विद्यते ।

रूपस्य सुभूतेऽनुत्पादे पदं न विद्यते । रूपस्याऽनिरोधे पदं न विद्यते । रूपस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । रूपस्याऽनभिसंस्कारे पदं न विद्यते । रूपस्याऽप्रादुर्भावे पदं न विद्यते । रूपस्याऽनुपलम्भे पदं न विद्यते । शब्दस्य सुभूतेऽनुत्पादे पदं न विद्यते । शब्दस्याऽनिरोधे पदं न विद्यते । शब्दस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । शब्दस्यानभिसंस्कारे पदं न विद्यते । शब्दस्याऽप्रादुर्भावे पदं न विद्यते । शब्दस्याऽनुपलम्भे पदं न विद्यते । गन्धस्य सुभूतेऽनुत्पादे पदं न विद्यते । गन्धस्याऽनिरोधे पदं न विद्यते । गन्धस्याऽसंक्लेशाऽव्यवदाने पदं न विद्यते । गन्धस्याऽनभिसंस्कारे पदं न विद्यते । गन्धस्याऽप्रादुर्भावे पदं न विद्यते । गन्धस्याऽनुपलम्भे पदं न विद्यते । रसस्य सुभूतेऽनुत्पादे पदं न विद्यते । रसस्याऽनिरोधे पदं न विद्यते । रसस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । रसस्याऽनभिसंस्कारे पदं न विद्यते । रसस्याप्रादुर्भावे पदं न विद्यते । रसस्याऽनुपलम्भे पदं न विद्यते । स्पर्शस्य सुभूतेऽनुत्पादे पदं न विद्यते । स्पर्शस्याऽनिरोधे पदं न विद्यते । स्पर्शस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । स्पर्शस्याऽनभिसंस्कारे पदं न विद्यते । स्पर्शस्याऽप्रादुर्भावे पदं न विद्यते । स्पर्शस्याऽनुपलम्भे पदं न विद्यते । धर्माणांसुभूतेऽनुत्पादे पदं न

विद्यते । धर्म्माणामनिरोधे पदं न विद्यते । धर्म्माणामसंक्लेशाव्यवदाने पदं न विद्यते । धर्म्माणामनभिसंस्कारे पदं न विद्यते । धर्म्माणामप्रादुर्भावे पदं न विद्यते । धर्म्माणामनुपलम्भे पदं न विद्यते ।

चक्षुर्व्विज्ञानस्य सुभूतेऽनुत्पादे पदं न विद्यते । चक्षुर्व्विज्ञानस्याऽनिरोधे पदं न विद्यते । चक्षुर्व्विज्ञानस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । चक्षुर्व्विज्ञानस्याऽनभिसंस्कारे पदं न विद्यते। चक्षुर्व्विज्ञानस्याऽप्रादुर्भावे पदं न विद्यते । चक्षुर्व्विज्ञानस्याऽनुपलम्भे पदं न विद्यते । श्रोत्रविज्ञानस्य सुभूतेऽनुत्पादे पदं न विद्यते । श्रोत्रविज्ञानस्याऽनिरोधे पदं न विद्यते । श्रोत्रविज्ञानस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । श्रोत्रविज्ञानस्याऽनभिसंस्कारे पदं न विद्यते । श्रोत्रविज्ञानस्याऽप्रादुर्भावे पदं न विद्यते । श्रोत्रविज्ञानस्यानुपलम्भे पदं न विद्यते । घ्राणविज्ञानस्य सुभूतेऽनुत्पादे पदं न विद्यते । घ्राणविज्ञानस्याऽनिरोधे पदं न विद्यते । घ्राणविज्ञानस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । घ्राणविज्ञानस्याऽनभिसंस्कारे पदं न विद्यते । घ्राणविज्ञानस्याऽप्रादुर्भावे पदं न विद्यते । घ्राणविज्ञानस्याऽनुपलम्भे पदं न विद्यते । जिह्वाविज्ञानस्य सुभूतेऽनुत्पादे पदं न विद्यते । जिह्वाविज्ञानस्याऽनिरोधे पदं न विद्यते । जिह्वाविज्ञानस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । जिह्वाविज्ञानस्याऽनभिसंस्कारे पदं न विद्यते । जिह्वाविज्ञानस्याऽप्रादुर्भावे पदं न विद्यते । जिह्वाविज्ञानस्याऽनुपलम्भे पदं न विद्यते । कायविज्ञानस्य सुभूतेऽनुत्पादे पदं न विद्यते । कायविज्ञानस्याऽनि-

रोधे पदं न विद्यते। कायविज्ञानस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। कायविज्ञानस्याऽनभिसंस्कारे पदं न विद्यते। कायविज्ञानस्याऽप्रादुर्भावे पदं न विद्यते। कायविज्ञानस्याऽनुपलम्भे पदं न विद्यते। मनविज्ञानस्य सुभूतेऽनुत्पादे पदं न विद्यते। मनविज्ञानस्याऽनिरोधे पदं न विद्यते। मनविज्ञानस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। मनविज्ञानस्याऽनभिसंस्कारे पदं न विद्यते। मनविज्ञानस्याऽप्रादुर्भावे पदं न विद्यते। मनविज्ञानस्याऽनुपलम्भे पदं न विद्यते।

चक्षुःसंस्पर्शस्य सुभूतेऽनुत्पादे पदं न विद्यते। चक्षुःसंस्पर्शस्याऽनिरोधे पदं न विद्यते। चक्षुःसंस्पर्शस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। चक्षुःसंस्पर्शस्याऽनभिसंस्कारे पदं न विद्यते। चक्षुःसंस्पर्शस्याऽप्रादुर्भावे पदं न विद्यते। चक्षुःसंस्पर्शस्याऽनुपलम्भे पदं न विद्यते। श्रोत्रसंस्पर्शस्य सुभूतेऽनुत्पादे पदं न विद्यते। श्रोत्रसंस्पर्शस्याऽनिरोधे पदं न विद्यते। श्रोत्रसंस्पर्शस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। श्रोत्रसंस्पर्शस्यानभिसंस्कारे पदं न विद्यते। श्रोत्रसंस्पर्शस्याऽप्रादुर्भावे पदं न विद्यते। श्रोत्रसंस्पर्शस्याऽनुपलम्भे पदं न विद्यते। घ्राणसंस्पर्शस्य सुभूतेऽनुत्पादे पदं न विद्यते। घ्राणसंस्पर्शस्यानिरोधे पदं न विद्यते। घ्राणसंस्पर्शस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। घ्राणसंस्पर्शस्यानभिसंस्कारे पदं न विद्यते। घ्राणसंस्पर्शस्याप्रादुर्भावे पदं न विद्यते। घ्राणसंस्पर्शस्याऽनुपलम्भे पदं न विद्यते। जिह्वासंस्पर्शस्य सुभूतेऽनुत्पादे पदं न विद्यते। जिह्वासंस्पर्शस्याऽनिरोधे पदं न विद्यते। जिह्वासंस्पर्श-

स्याऽसंक्लेशाव्यवदाने पदं न विद्यते। जिह्वासंस्पर्शस्यानभिसंस्कारे पदं न विद्यते। जिह्वासंस्पर्शस्याऽप्रादुर्भावे पदं न विद्यते। जिह्वासंस्पर्शस्याऽनुपलम्भे पदं न विद्यते।

कायसंस्पर्शस्य सुभूतेऽनुत्पादे पदं न विद्यते। कायसंस्पर्शस्याऽनिरोधे पदं न विद्यते। कायसंस्पर्शस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। कायसंस्पर्शस्याऽनभिसंस्कारे पदं न विद्यते। कायसंस्पर्शस्याऽप्रादुर्भावे पदं न विद्यते। कायसंस्पर्शस्याऽनुपलम्भे पदं न विद्यते। मनःसंस्पर्शस्य सुभूतेऽनुत्पादे पदं न विद्यते। मनःसंस्पर्शस्याऽनिरोधे पदं न विद्यते। मनःसंस्पर्शस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। मनःसंस्पर्शस्याऽनभिसंस्कारे पदं न विद्यते। मनःसंस्पर्शस्याऽप्रादुर्भावे पदं न विद्यते। मनःसंस्पर्शस्याऽनुपलम्भे पदं न विद्यते।

चक्षुःसंस्पर्शप्रत्ययवेदितस्य सुभूतेऽनुत्पादे पदं न विद्यते। चक्षुःसंस्पर्शप्रत्ययवेदितस्याऽनिरोधे पदं न विद्यते। चक्षुःसंस्पर्शप्रत्ययवेदितस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। चक्षुःसंस्पर्शप्रत्ययवेदितस्याऽनभिसंस्कारे पदं न विद्यते। चक्षुःसंस्पर्शप्रत्ययवेदितस्याऽप्रादुर्भावे पदं न विद्यते। चक्षुःसंस्पर्शप्रत्ययवेदितस्याऽनुपलम्भे पदं न विद्यते। श्रोत्रसंस्पर्शप्रत्ययवेदितस्य सुभूतेऽनुत्पादे पदं न विद्यते। श्रोत्रसंस्पर्शप्रत्ययवेदितस्याऽनिरोधे पदं न विद्यते। श्रोत्रसंस्पर्शप्रत्ययवेदितस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। श्रोत्रसंस्पर्शप्रत्ययवेदितस्याऽनभिसंस्कारे पदं न विद्यते। श्रोत्रसंस्पर्शप्रत्ययवेदितस्याऽप्रादुर्भावे पदं न विद्यते। श्रोत्रसंस्पर्शस्याऽनुपलम्भे

पदं न विद्यते । घ्राणसंस्पर्शप्रत्ययवेदितस्य सुभूतेऽनुत्पादे पदं न विद्यते । घ्राणसंस्पर्शप्रत्ययवेदितस्याऽनिरोधे पदं न विद्यते । घ्राणसंस्पर्शप्रत्ययवेदितस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । घ्राणसंस्पर्शप्रत्ययवेदितस्याऽनभिसंस्कारे पदं न विद्यते । घ्राणसंस्पर्शप्रत्ययवेदितस्याऽप्रादुर्भावे पदं न विद्यते । घ्राणसंस्पर्शप्रत्ययवेदितस्याऽनुपलम्भे पदं न विद्यते । जिह्वासंस्पर्शप्रत्ययवेदितस्य सुभूतेऽनुत्पादे पदं न विद्यते । जिह्वासंस्पर्शप्रत्ययवेदितस्याऽनिरोधे पदं न विद्यते । जिह्वासंस्पर्शप्रत्ययवेदितस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । जिह्वासंस्पर्शप्रत्ययवेदितस्याऽनभिसंस्कारे पदं न विद्यते । जिह्वासंस्पर्शप्रत्ययवेदितस्याऽप्रादुर्भावे पदं न विद्यते । जिह्वासंस्पर्शप्रत्ययवेदितस्याऽनुपलम्भे पदं न विद्यते । कायसंस्पर्शप्रत्ययवेदितस्य सुभूतेऽनुत्पादे पदं न विद्यते । कायसंस्पर्शप्रत्ययवेदितस्याऽनिरोधे पदं न विद्यते । कायसंस्पर्शप्रत्ययवेदितस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । कायसंस्पर्शप्रत्ययवेदितस्याऽनभिसंस्कारे पदं न विद्यते । कायसंस्पर्शप्रत्ययवेदितस्याऽप्रादुर्भावे पदं न विद्यते । कायसंस्पर्शप्रत्ययवेदितस्याऽनुपलम्भे पदं न विद्यते । मनःसंस्पर्शप्रत्ययवेदितस्य सुभूतेऽनुत्पादे पदं न विद्यते । मनःसंस्पर्शप्रत्ययवेदितस्याऽनिरोधे पदं न विद्यते । मनःसंस्पर्शप्रत्ययवेदितस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । मनःसंस्पर्शप्रत्ययवेदितस्याऽनभिसंस्कारे पदं न विद्यते । मनःसंस्पर्शप्रत्ययवेदितस्या अप्रादुर्भावे पदं न विद्यते । मनःसंस्पर्शप्रत्ययवेदितस्याऽनुपलम्भे पदं न विद्यते ।

पृथिवीधातोः सुभूतेऽनुत्पादे पदं न विद्यते । पृथिवीधातो-

रनिरोधे पदं न विद्यते । पृथिवीधातोरसंक्लेशाव्यवदाने पदं न विद्यते। पृथिवीधातोरनभिसंस्कारे पदं न विद्यते। पृथिवीधातोरप्रादुर्भावे पदं न विद्यते । पृथिवीधातोरनुपलम्भे पदं न विद्यते । अब्धातोः सुभूतेऽनुत्पादे पदं न विद्यते । अब्धातोरनिरोधे पदं न विद्यते । अब्धातोरसंक्लेशाव्यवदाने पदं न विद्यते । अब्धातोरनभिसंस्कारे पदं न विद्यते । अब्धातोरप्रादुर्भावे पदं न विद्यते । अब्धातोरनुपलम्भे पदं न विद्यते । तेजोधातोः सुभूतेऽनुत्पादे पदं न विद्यते । तेजोधातोरनिरोधे पदं न विद्यते । तेजोधातोरसंक्लेशाव्यवदाने पदं न विद्यते । तेजोधातोरनभिसंस्कारे पदं न विद्यते। तेजोधातोरप्रादुर्भावे पदं न विद्यते । तेजोधातोरनुपलम्भे पदं न विद्यते । वायुधातोः सुभूतेऽनुत्पादे पदं न विद्यते । वायुधातोरनिरोधे पदं न विद्यते । वायुधातोरसंक्लेशाव्यवदाने पदं न विद्यते । वायुधातोरनभिसंस्कारे पदं न विद्यते । वायुधातोरप्रादुर्भावे पदं न विद्यते । वायुधातोरनुपलम्भे पदं न विद्यते । आकाशधातोः सुभूतेऽनुत्पादे पदं न विद्यते । आकाशधातोरनिरोधे पदं न विद्यते । आकाशधातोरसंक्लेशाव्यवदाने पदं न विद्यते। आकाशधातोरनभिसंस्कारे पदं न विद्यते । आकाशधातोरप्रादुर्भावे पदं न विद्यते । आकाशधातोरनुपलम्भे पदं न विद्यते ।

विज्ञानधातोः सुभूतेऽनुत्पादे पदं न विद्यते । विज्ञानधातोरनिरोधे पदं न विद्यते । विज्ञानधातोरसंक्लेशाव्यवदाने पदं न विद्यते । विज्ञानधातोरनभिसंस्कारे पदं न विद्यते । विज्ञानधातोरप्रादुर्भावे पदं न विद्यते । विज्ञानधातोरनुपलम्भे पदं न

विद्यते । अविद्यायाः सुभूतेऽनुत्पादे पदं न विद्यते । अविद्याया अनिरोधे पदं न विद्यते । अविद्याया असंक्लेशाव्यवदाने पदं न विद्यते । अविद्याया अनभिसंस्कारे पदं न विद्यते । अविद्याया अप्रादुर्भावे पदं न विद्यते । अविद्याया अनुपलम्भे पदं न विद्यते । संस्काराणां सुभूतेऽनुत्पादे पदं न विद्यते । संस्काराणामनिरोधे पदं न विद्यते । संस्काराणामसंक्लेशाव्यवदाने पदं न विद्यते । संस्काराणामनभिसंस्कारे पदं न विद्यते । संस्काराणामप्रादुर्भावे पदं न विद्यते । संस्काराणामनुपलम्भे पदं न विद्यते । विज्ञानस्य सुभूतेऽनुत्पादे पदं न विद्यते । विज्ञानस्यानिरोधे पदं न विद्यते । विज्ञानस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । विज्ञानस्यानभिसंस्कारे पदं न विद्यते । विज्ञानस्याऽप्रादुर्भावे पदं न विद्यते । विज्ञानस्यानुपलम्भे पदं न विद्यते । नामरूपस्य सुभूतेऽनुत्पादे पदं न विद्यते । नामरूपस्याऽनिरोधे पदं न विद्यते । नामरूपस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । नामरूपस्याऽनभिसंस्कारे पदं न विद्यते । नामरूपस्याऽप्रादुर्भावे पदं न विद्यते । नामरूपस्याऽनुपलम्भे पदं न विद्यते । षडायतनस्य सुभूतेऽनुत्पादे पदं न विद्यते । षडायतनस्याऽनिरोधे पदं न विद्यते । षडायतनस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । षडायतनस्यानभिसंस्कारे पदं न विद्यते । षडायतनस्याऽप्रादुर्भावे पदं न विद्यते । षडायतनस्याऽनुपलम्भे पदं न विद्यते । स्पर्शस्य सुभूतेऽनुत्पादे पदं न विद्यते । स्पर्शस्याऽनिरोधे पदं न विद्यते । स्पर्शस्याऽसंक्लेशाव्यवदाने पदं न विद्यते । स्पर्शस्याऽनभिसंस्कारे पदं

न विद्यते। स्पर्शस्याप्रादुर्भावे पदं न विद्यते। स्पर्शस्याऽनुपलम्भे पदं न विद्यते। वेदनायाः सुभूतेऽनुत्पादे पदं न विद्यते। वेदनाया अनिरोधे पदं न विद्यते। वेदनाया असंक्लेशाव्यवदाने पदं न विद्यते। वेदनाया अनभिसंस्कारे पदं न विद्यते। वेदनाया अप्रादुर्भावे पदं न विद्यते। वेदनाया अनुपलम्भे पदं न विद्यते। तृष्णायाः सुभूतेऽनुत्पादे पदं न विद्यते। तृष्णाया अनिरोधे पदं न विद्यते। तृष्णाया असंक्लेशाव्यवदाने पदं न विद्यते। तृष्णाया अनभिसंस्कारे पदं न विद्यते। तृष्णाया अप्रादुर्भावे पदं न विद्यते। तृष्णाया अनुपलम्भे पदं न विद्यते। उपादानस्य सुभूतेऽनुत्पादे पदं न विद्यते। उपादानस्याऽनिरोधे पदं न विद्यते। उपादानस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। उपादानस्याऽनभिसंस्कारे पदं न विद्यते। उपादानस्याऽप्रादुर्भावे पदं न विद्यते। उपादानस्याऽनुपलम्भे पदं न विद्यते। भवस्य सुभूतेऽनुत्पादे पदं न विद्यते। भवस्याऽनिरोधे पदं न विद्यते। भवस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। भवस्याऽनभिसंस्कारे पदं न विद्यते। भवस्याऽप्रादुर्भावे पदं न विद्यते। भवस्याऽनुपलम्भे पदं न विद्यते। जातेः सुभूतेऽनुत्पादे पदं न विद्यते। जातेरनिरोधे पदं न विद्यते। जातेरसंक्लेशाव्यवदाने पदं न विद्यते। जातेरनभिसंस्कारे पदं न विद्यते। जातेरप्रादुर्भावे पदं न विद्यते। जातेरनुपलम्भे पदं न विद्यते। जरामरणस्य सुभूतेऽनुत्पादे पदं न विद्यते। जरामरणस्याऽनिरोधे पदं न विद्यते। जरामरणस्याऽसंक्लेशाव्यवदाने पदं न विद्यते। जरामरणस्याऽन-

भिसंस्कारे पदं न विद्यते। जरामरणस्याऽप्रादुर्भावे पदं न विद्यते। जरामरणस्याऽनुपलम्भे पदं न विद्यते।

दानपारमितायाः सुभूतेऽनुत्पादे पदं न विद्यते। दानपारमिताया अनिरोधे पदं न विद्यते। दानपारमिताया असंक्लेशाव्यवदाने पदं न विद्यते। दानपारमिताया अनभिसंस्कारे पदं न विद्यते। दानपारमिताया अप्रादुर्भावे पदं न विद्यते। दानपारमिताया अनुपलम्भे पदं न विद्यते। शीलपारमितायाः सुभूतेऽनुत्पादे पदं न विद्यते। शीलपारमिताया अनिरोधे पदं न विद्यते। शीलपारमिताया असंक्लेशाव्यवदाने पदं न विद्यते। शीलपारमिताया अनभिसंस्कारे पदं न विद्यते। शीलपारमिताया अप्रादुर्भावे पदं न विद्यते। शीलपारमिताया अनुपलम्भे पदं न विद्यते। क्षान्तिपारमितायाः सुभूतेऽनुत्पादे पदं न विद्यते। क्षान्तिपारमिताया अनिरोधे पदं न विद्यते। क्षान्तिपारमिताया असंक्लेशाव्यवदाने पदं न विद्यते। क्षान्तिपारमिताया अनभिसंस्कारे पदं न विद्यते। क्षान्तिपारमिताया अप्रादुर्भावे पदं न विद्यते। क्षान्तिपारमिताया अनुपलम्भे पदं न विद्यते। वीर्य्यपारमितायाः सुभूतेऽनुत्पादे पदं न विद्यते। वीर्य्यपारमिताया अनिरोधे पदं न विद्यते। वीर्य्यपारमिताया असंक्लेशाव्यवदाने पदं न विद्यते। वीर्य्यपारमिताया अनभिसंस्कारे पदं न विद्यते। वीर्य्यपारमिताया अप्रादुर्भावे पदं न विद्यते। वीर्य्यपारमिताया अनुपलम्भे पदं न विद्यते। ध्यानपारमितायाः सुभूतेऽनुत्पादे पद न विद्यते। ध्यान-

पारमितायाः अनिरोधे पदं न विद्यते। ध्यानपारमितायाः असंक्लेशाव्यवदाने पदं न विद्यते। ध्यानपारमितायाः अनभिसंस्कारे पदं न विद्यते। ध्यानपारमितायाः अप्रादुर्भावे पदं न विद्यते। ध्यानपारमितायाः अनुपलम्भे पदं न विद्यते। प्रज्ञापारमितायाः सुभूते ऽनुत्पादे पदं न विद्यते। प्रज्ञापारमितायाः अनिरोधे पदं न विद्यते। प्रज्ञापारमितायाः असंक्लेशाव्यवदाने पदं न विद्यते। प्रज्ञापारमितायाः अनभिसंस्कारे पदं न विद्यते। प्रज्ञापारमितायाः अप्रादुर्भावे पदं न विद्यते। प्रज्ञापारमितायाः अनुपलम्भे पदं न विद्यते।

अध्यात्मशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते। अध्यात्मशून्यतायाः अनिरोधे पदं न विद्यते। अध्यात्मशून्यतायाः असंक्लेशाव्यवदाने पदं न विद्यते। अध्यात्मशून्यतायाः अनभिसंस्कारे पदं न विद्यते। अध्यात्मशून्यतायाः अप्रादुर्भावे पदं न विद्यते। अध्यात्मशून्यतायाः अनुपलम्भे पदं न विद्यते। बहिर्द्धाशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते। बहिर्द्धाशून्यतायाः अनिरोधे पदं न विद्यते। बहिर्द्धाशून्यतायाः असंक्लेशाव्यवदाने पदं न विद्यते। बहिर्द्धाशून्यतायाः अनभिसंस्कारे पदं न विद्यते। बहिर्द्धाशून्यतायाः अप्रादुर्भावे पदं न विद्यते। बहिर्द्धाशून्यतायाः अनुपलम्भे पदं न विद्यते। अध्यात्मबहिर्द्धाशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते। अध्यात्मबहिर्द्धाशून्यतायाः अनिरोधे पदं न विद्यते। अध्यात्मबहिर्द्धाशून्यतायाः असंक्लेशाव्यवदाने पदं न विद्यते। अध्यात्मबहिर्द्धाशून्यतायाः अनभिसंस्कारे पदं न विद्यते। अध्यात्मबहिर्द्धाशून्य-

ताया अप्रादुर्भावे पदं न विद्यते। अध्यात्मबहिर्द्धाशून्यताया अनुपलम्भे पदं न विद्यते । शून्यताशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते । शून्यताशून्यताया अनिरोधे पदं न विद्यते । शून्यताशून्यतायाः असंक्लेशाव्यवदाने पदं न विद्यते । शून्यताशून्यताया अनभिसंस्कारे पदं न विद्यते । शून्यताशून्यताया अप्रादुर्भावे पदं न विद्यते । शून्यताशून्यताया अनुपलम्भे पदं न विद्यते । महाशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते । महाशून्यताया अनिरोधे पदं न विद्यते । महाशून्यताया असंक्लेशाव्यवदाने पदं न विद्यते । महाशून्यताया अनभिसंस्कारे पदं न विद्यते । महाशून्यताया अप्रादुर्भावे पदं न विद्यते । महाशून्यताया अनुपलम्भे पदं न विद्यते। परमार्थशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते। परमार्थशून्यताया अनिरोधे पदं न विद्यते । परमार्थशून्यताया असंक्लेशाव्यवदाने पदं न विद्यते । परमार्थशून्यताया अनभिसंस्कारे पदं न विद्यते। परमार्थशून्यताया अप्रादुर्भावे पदं न विद्यते । परमार्थशून्यताया अनुपलम्भे पदं न विद्यते । संस्कृतशून्यताया सुभूतेऽनुत्पादे पदं न विद्यते । संस्कृतशून्यताया अनिरोधे पदं न विद्यते । संस्कृतशून्यताया असंक्लेशाव्यवदाने पदं न विद्यते । संस्कृतशून्यताया अनभिसंस्कारे पदं न विद्यते । संस्कृतशून्यताया अप्रादुर्भावे पदं न विद्यते । संस्कृतशून्यताया अनुपलम्भे पदं न विद्यते । असंस्कृतशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते । असंस्कृतशून्यताया अनिरोधे पदं न विद्यते । असंस्कृतशून्यतायां असंक्लेशाव्यवदाने पदं न विद्यते। असंस्कृतशून्यताया

अनभिसंस्कारे पदं न विद्यते। असंस्कृतशून्यताया अप्रादुर्भावे पदं न विद्यते। असंस्कृतशून्यताया अनुपलम्भे पदं न विद्यते। अत्यन्तशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते। अत्यन्तशून्यताया अनिरोधे पदं न विद्यते। अत्यन्तशून्यताया असंक्लेशाव्यवदाने पदं न विद्यते। अत्यन्तशून्यताया अनभिसंस्कारे पदं न विद्यते। अत्यन्तशून्यताया अप्रादुर्भावे पदं न विद्यते। अत्यन्तशून्यताया अनुपलम्भे पदं न विद्यते। अनवराग्रशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते। अनवराग्रशून्यताया अनिरोधे पद न विद्यते। अनवराग्रशून्यताया असंक्लेशाव्यवदाने पदं न विद्यते। अनवराग्रशून्यतायाः अनभिसंस्कारे पदं न विद्यते। अनवराग्रशून्यताया अप्रादुर्भावे पदं न विद्यते। अनवराग्रशून्यताया अनुपलम्भे पदं न विद्यते। अनवकारशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते। अनवकारशून्यताया अनिरोधे पदं न विद्यते। अनवकार शून्यताया असंक्लेशाव्यवदाने पदं न विद्यते। अनवकारशून्यताया अनभिसंस्कारे पदं न विद्यते। अनवकारशून्यताया अप्रादुर्भावे पदं न विद्यते। अनवकार शून्यताया अनुपलम्भे पदं न विद्यते। प्रकृतिशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते। प्रकृतिशून्यताया अनिरोधे पदं न विद्यते। प्रकृतिशून्यताया असंक्लेशाव्यवदाने पद न विद्यते। प्रकृतिशून्यताया अनभिसंस्कारे पदं न विद्यते। प्रकृतिशून्यताया अप्रादुर्भावे पदं न विद्यते। प्रकृतिशून्यताया अनुपलम्भे पदं न विद्यते। सर्वधर्मशून्यतायाः सुभूतेऽनुत्पादे पद न विद्यते। सर्वधर्मशून्यताया अनिरोधे पदं न विद्यते। सर्व-

धर्म्मशून्यतायाः असंक्लेशाव्यवदाने पदं न विद्यते। सर्व्वधर्म्मशून्यताया अनभिसंस्कारे पदं न विद्यते। सर्व्वधर्म्मशून्यताया अप्रादुर्भावे पदं न विद्यते। सर्व्वधर्म्मशून्यताया अनुपलम्भे पदं न विद्यते। स्वलक्षणशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते। स्वलक्षणशून्यताया अनिरोधे पदं न विद्यते। स्वलक्षणशून्यताया असंक्लेशाव्यवदाने पदं न विद्यते। स्वलक्षणशून्यताया अनभिसंस्कारे पदं न विद्यते। स्वलक्षणशून्यताया अप्रादुर्भावे पदं न विद्यते। स्वलक्षणशून्यताया अनुपलम्भे पदं न विद्यते। अनुपलम्भशून्यतायाः सुभूतेऽनुत्पादे पद न विद्यते। अनुपलम्भशून्यताया अनिरोधे पदं न विद्यते। अनुपलम्भशून्यताया असंक्लेशाव्यवदाने पदं न विद्यते। अनुपलम्भशून्यताया अनभिसंस्कारे पदं न विद्यते। अनुपलम्भशून्यताया अप्रादुर्भावे पदं न विद्यते। अनुपलम्भशून्यताया अनुपलम्भे पदं न विद्यते। अभावशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते। अभावशून्यताया अनिरोधे पदं न विद्यते। अभावशून्यताया असंक्लेशाव्यवदाने पदं न विद्यते। अभावशून्यताया अनभिसंस्कारे पदं न विद्यते। अभावशून्यताया अप्रादुर्भावे पदं न विद्यते। अभावशून्यताया अनुपलम्भे पदं न विद्यते। स्वभावशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते। स्वभावशून्यताया अनिरोधे पदं न विद्यते। स्वभावशून्यताया असंक्लेशाव्यवदाने पदं न विद्यते। स्वभावशून्यतायाः अनभिसंस्कारे पदं न विद्यते। स्वभावशून्यताया अप्रादुर्भावे पदं न विद्यते। स्वभावशून्यताया अनुपलम्भे पदं न विद्यते। अभावस्वभावशून्यतायाः सुभूतेऽनुत्पादे पदं न विद्यते।

अभावस्वभावशून्यताया अनिरोधे पदं न विद्यते। अभावस्वभावशून्यताया असंक्लेशाव्यवदाने पदं न विद्यते। अभावस्वभावशून्यताया अनभिसंस्कारे पदं न विद्यते। अभावस्वभावशून्यताया अप्रादुर्भावे पदं न विद्यते। अभावस्वभावशून्यताया अनुपलम्भे पदं न विद्यते।

स्मृत्युपस्थानानां सुभूतेऽनुत्पादे पदं न विद्यते। स्मृत्युपस्थानानामनिरोधे पदं न विद्यते। स्मृत्युपस्थानानामसंक्लेशाव्यवदाने पदं न विद्यते। स्मृत्युपस्थानानामनभिसंस्कारे पदं न विद्यते। स्मृत्युपस्थानानामप्रादुर्भावे पदं न विद्यते। स्मृत्युपस्थानानामनुपलम्भे पदं न विद्यते। सम्यक्प्रहाणानां सुभूतेऽनुत्पादे पदं न विद्यते। सम्यक्प्रहाणानामनिरोधे पदं न विद्यते। सम्यक्प्रहाणानामसंक्लेशाव्यवदाने पदं न विद्यते। सम्यक्प्रहाणानामनभिसंस्कारे पदं न विद्यते। सम्यक्प्रहाणानामप्रादुर्भावे पदं न विद्यते। सम्यक्प्रहाणानामनुपलम्भे पदं न विद्यते। ऋद्धिपादानां सुभूतेऽनुत्पादे पदं न विद्यते। ऋद्धिपादानामनिरोधे पदं न विद्यते। ऋद्धिपादानामसंक्लेशाव्यवदाने पदं न विद्यते। ऋद्धिपादानामनभिसंस्कारे पदं न विद्यते। ऋद्धिपादानामप्रादुर्भावे पदं न विद्यते। ऋद्धिपादानामनुपलम्भे पदं न विद्यते।

इन्द्रियाणां सुभूतेऽनुत्पादे पदं न विद्यते। इन्द्रियाणामनिरोधे पदं न विद्यते। इन्द्रियाणामसंक्लेशाव्यवदाने पदं न विद्यते। इन्द्रियाणामनभिसंस्कारे पदं न विद्यते। इन्द्रियाणामप्रादुर्भावे पदं न विद्यते। इन्द्रियाणामनुपलम्भे पदं न विद्यते। बलानां सुभूतेऽनुत्पादे पदं न विद्यते। बलानामनिरोधे पदं न विद्यते।

बलानामसंक्लेशाव्यवदाने पदं न विद्यते। बलानामनभिसंस्कारे पदं न विद्यते। बलानामप्रादुर्भावे पदं न विद्यते। बलानामनुपलम्भे पदं न विद्यते। बोध्यङ्गानां सुभूतेऽनुत्पादे पदं न विद्यते। बोध्यङ्गानामनिरोधे पदं न विद्यते। बोध्यङ्गानामसंक्लेशाव्यवदाने पदं न विद्यते। बोध्यङ्गानामनभिसंस्कारे पदं न विद्यते। बोध्यङ्गानामप्रादुर्भावे पदं न विद्यते। बोध्यङ्गानामनुपलम्भे पदं न विद्यते। आर्य्याष्टाङ्गमार्गस्य सुभूतेऽनुत्पादे पदं न विद्यते। आर्य्याष्टाङ्गमार्गस्यानिरोधे पदं न विद्यते। आर्य्याष्टाङ्गमार्गस्यासंक्लेशाव्यवदाने पदं न विद्यते। आर्य्याष्टाङ्गमार्गस्यानभिसंस्कारे पदं न विद्यते। आर्य्याष्टाङ्गमार्गस्याप्रादुर्भावे पदं न विद्यते। आर्य्याष्टाङ्गमार्गस्याऽनुपलम्भे पदं न विद्यते। आर्य्यसत्यानां सुभूतेऽनुत्पादे पदं न विद्यते। आर्य्यसत्यानामनिरोधे पदं न विद्यते। आर्य्यसत्यानामसंक्लेशाव्यवदाने पदं न विद्यते। आर्य्यसत्यानामनभिसंस्कारे पदं न विद्यते। आर्य्यसत्यानामप्रादुर्भावे पदं न विद्यते। आर्य्यसत्यानामनुपलम्भे पदं न विद्यते। ध्यानानां सुभूतेऽनुत्पादे पदं न विद्यते। ध्यानानामनिरोधे पदं न विद्यते। ध्यानानामसंक्लेशाव्यवदाने पदं न विद्यते। ध्यानानामनभिसंस्कारे पदं न विद्यते। ध्यानानामप्रादुर्भावे पदं न विद्यते। ध्यानानामनुपलम्भे पदं न विद्यते। अप्रमाणानां सुभूतेऽनुत्पादे पदं न विद्यते। अप्रमाणानामनिरोधे पदं न विद्यते। अप्रमाणानामसंक्लेशाव्यवदाने पदं न विद्यते। अप्रमाणानामनभिसंस्कारे पदं न विद्यते। अप्रमाणानामप्रादुर्भावे पदं न विद्यते। अप्रमाणाना-

मनुपलम्भे पदं न विद्यते। आरूप्यसमापत्तीनां सुभूतेऽनुत्पादे पदं न विद्यते। आरूप्यसमापत्तीनामनिरोधे पदं न विद्यते। आरूप्यसमापत्तीनामसंक्लेशाव्यवदाने पदं न विद्यते। आरूप्यसमापत्तीनामनभिसंस्कारे पदं न विद्यते। आरूप्यसमापत्तीनामप्रादुर्भावे पदं न विद्यते। आरूप्यसमापत्तीनामनुपलम्भे पदं न विद्यते। विमोक्षाणां सुभूतेऽनुत्पादे पदं न विद्यते। विमोक्षाणामनिरोधे पदं न विद्यते। विमोक्षाणामसंक्लेशाव्यवदाने पदं न विद्यते। विमोक्षाणामनभिसंस्कारे पदं न विद्यते। विमोक्षाणामप्रादुर्भावे पदं न विद्यते। विमोक्षाणामनुपलम्भे पदं न विद्यते। अनुपूर्वविहारसमापत्तीनां सुभूतेऽनुत्पादे पदं न विद्यते। अनुपूर्वविहारसमापत्तीनामनिरोधे पदं न विद्यते। अनुपूर्वविहारसमापत्तीनामसंक्लेशाव्यवदाने पदं न विद्यते। अनुपूर्वविहारसमापत्तीनामनभिसंस्कारे पदं न विद्यते। अनुपूर्वविहारसमापत्तीनामप्रादुर्भावे पदं न विद्यते। अनुपूर्वविहारसमापत्तीनामनुपलम्भे पदं न विद्यते। शून्यतानिमित्ताप्रणिहितविमोक्षमुखानां सुभूतेऽनुत्पादे पदं न विद्यते। शून्यतानिमित्ताप्रणिहितविमोक्षमुखानामनिरोधे पदं न विद्यते। शून्यतानिमित्ताप्रणिहितविमोक्षमुखानामसंक्लेशाव्यवदाने पदं न विद्यते। शून्यतानिमित्ताप्रणिहितविमोक्षमुखानामनभिसंस्कारे पदं न विद्यते शून्यतानिमित्ताप्रणिहितविमोक्षमुखानामप्रादुर्भावे पदं न विद्यते। शून्यतानिमित्ताप्रणिहितविमोक्षमुखानामनुपलम्भे पदं न विद्यते। अभिज्ञानां सुभूतेऽनुत्पादे पदं न विद्यते। अभिज्ञानामनिरोधे पदं न विद्यते।

अभिज्ञानामसंक्लेशाव्यवदाने पदं न विद्यते । अभिज्ञानामनभिसंस्कारे पदं न विद्यते । अभिज्ञानामप्रादुर्भावे पदं न विद्यते । अभिज्ञानामनुपलम्भे पदं न विद्यते । समाधीनां सुभूतेऽनुत्पादे पदं न विद्यते । समाधीनामनिरोधे पदं न विद्यते । समाधीनामसंक्लेशाव्यवदाने पदं न विद्यते । समाधीनामनभिसंस्कारे पदं न विद्यते । समाधीनामप्रादुर्भावे पदं न विद्यते । समाधीनामनुपलम्भे पदं न विद्यते । धारणीमुखानां सुभूतेऽनुत्पादे पदं न विद्यते । धारणीमुखानामनिरोधे पदं न विद्यते । धारणीमुखानामसंक्लेशाव्यवदाने पदं न विद्यते । धारणीमुखानामनभिसंस्कारे पदं न विद्यते । धारणीमुखानामप्रादुर्भावे पदं न विद्यते । धारणीमुखानामनुपलम्भे पदं न विद्यते । तथागतबलानां सुभूतेऽनुत्पादे पदं न विद्यते । तथागतबलानामनिरोधे पदं न विद्यते । तथागतबलानामसंक्लेशाव्यवदाने पदं न विद्यते । तथागतबलानामनभिसंस्कारे पदं न विद्यते । तथागतबलानामप्रादुर्भावे पदं न विद्यते । तथागतबलानामनुपलम्भे पदं न विद्यते । वैशारद्यानां सुभूतेऽनुत्पादे पदं न विद्यते । वैशारद्यानामनिरोधे पदं न विद्यते । वैशारद्यानामसंक्लेशाव्यवदाने पदं न विद्यते । वैशारद्यानामनभिसंस्कारे पदं न विद्यते । वैशारद्यानामप्रादुर्भावे पदं न विद्यते । वैशारद्यानामनुपलम्भे पदं न विद्यते । प्रतिसम्विदां सुभूतेऽनुत्पादे पदं न विद्यते । प्रतिसम्विदामनिरोधे पदं न विद्यते । प्रतिसम्विदामसंक्लेशाव्यवदाने पदं न विद्यते । प्रतिसम्विदामनभिसंस्कारे पदं न विद्यते । प्रतिसम्विदामप्रादुर्भावे

पदं न विद्यते । प्रतिसंविदामनुपलम्भे पदं न विद्यते । महा-मैत्र्याः सुभूतेऽनुत्पादे पदं न विद्यते । महामैत्र्या अनिरोधे पदं न विद्यते । महामैत्र्या असंक्लेशाव्यवदाने पदं न विद्यते । महा-मैत्र्या अनभिसंस्कारे पदं न विद्यते । महामैत्र्या अप्रादुर्भावे पदं न विद्यते । महामैत्र्या अनुपलम्भे पदं न विद्यते । महाक-रुणायाः सुभूतेऽनुत्पादे पदं न विद्यते । महाकरुणाया अनिरोधे पदं न विद्यते । महाकरुणाया असंक्लेशाव्यवदाने पदं न विद्यते । महाकरुणाया अनभिसंस्कारे पदं न विद्यते । महाक-रुणाया अनुपलम्भे पदं न विद्यते । आवेणिकबुद्धधर्माणां सुभूते-ऽनुत्पादे पदं न विद्यते । आवेणिकबुद्धधर्माणामनिरोधे पदं न विद्यते । आवेणिकबुद्धधर्माणामसंक्लेशाव्यवदाने पदं न विद्यते । आवेणिकबुद्धधर्माणामनभिसंस्कारे पदं न विद्यते । आवेणिकबुद्ध-धर्माणामप्रादुर्भावे पदं न विद्यते । आवेणिकबुद्धधर्माणामनुपलम्भे पदं न विद्यते ।

तद्यथापि नाम सुभूते रूपस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । वेदनाया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते । संज्ञाया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते । संस्काराणामत्य-न्तविशुद्धौ निमित्ते पदं न विद्यते । विज्ञानस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वस्य पदार्थो न विद्यते ।

तद्यथापि नाम सुभूते चक्षुषोऽत्यन्तविशुद्धौ निमित्ते पदं न विद्यते । श्रोत्रस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । घ्राणस्या-

त्यन्तविशुद्धौ निमित्ते पदं न विद्यते । जिह्वाया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते । कायस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । मनसोऽत्यन्तविशुद्धौ निमित्ते पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते ।

तद्यथापि नाम सुभूते रूपस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । शब्दस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । गन्धस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । रसस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । स्पर्शस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । धर्म्माणामत्यन्तविशुद्धौ निमित्ते पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्व पदार्थो न विद्यते ।

तद्यथापि नाम सुभूते चक्षुर्व्विज्ञानस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । श्रोत्रविज्ञानस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । घ्राणविज्ञानस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । जिह्वाविज्ञानस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । कायविज्ञानस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । मनोविज्ञानस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते ।

तद्यथापि नाम सुभूते चक्षुःसंस्पर्शस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते । श्रोत्रसंस्पर्शस्यात्यन्तविशुद्धौ पदं न विद्यते । घ्राणसंस्पर्शस्यात्यन्तविशुद्धौ पदं न विद्यते । जिह्वासंस्पर्शविज्ञानस्यात्यन्त-

विशुद्धौ पदं न विद्यते। कायसंसर्गविज्ञानस्यात्यन्तविशुद्धौ पदं न विद्यते। मनःसंसर्गस्यात्यन्तविशुद्धौ पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते चक्षुःसंसर्गप्रत्ययवेदनाया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। श्रोत्रसंसर्गप्रत्ययवेदनाया अत्यन्तविशुद्धौ पदं न विद्यते। घ्राणसंसर्गप्रत्ययवेदनाया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। जिह्वासंसर्गप्रत्ययवेदनाया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। कायसंसर्गप्रत्ययवेदनायां अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। मनः संसर्गप्रत्ययवेदनाया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते पृथिवीधातोरत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। अब्धातोरत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। तेजोधातोरत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। वायुधातोरत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। आकाशधातोरत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। विज्ञानधातोरत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते अविद्याया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। संस्काराणामत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। विज्ञानस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते। नामरूपस्यात्यन्त-

विशुद्धौ पदं न विद्यते। षडायतनस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते। स्पर्शस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते। वेदनाया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। तृष्णाया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। उपादानस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते। भवस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते। जातेरत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। जरामरणस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते दानपारमिताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। शीलपारमिताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। क्षान्तिपारमिताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। वीर्यपारमिताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। ध्यानपारमिताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। प्रज्ञापारमिताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते अध्यात्मशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। बहिर्द्धाशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। अध्यात्मबहिर्द्धाशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। शून्यताशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। महाशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। परमार्थशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं

न विद्यते। संस्कृतशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। असंस्कृतशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। अत्यन्तशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। अनवराग्रशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। अनवकारशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। प्रकृतिशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। सर्व्वधर्म्मशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। स्वलक्षणशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। अनुपलम्भशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। अभावशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। स्वभावशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। अभावस्वभावशून्यताया अत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते स्मृत्युपस्थानानामत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। सम्यक्प्रहाणानामत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। ऋद्धिपादानामत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। इन्द्रियाणामत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। बलानामत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। बोध्यङ्गानामत्यन्तविशुद्धौ निमित्ते पदं न विद्यते। आर्य्याष्टाङ्गमार्गस्यात्यन्तविशुद्धौ निमित्ते पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते आर्य्यसत्यानामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। ध्यानानामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। अप्रमाणानामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। आरूप्यसमापत्तीनामत्यन्तविशुद्धौ पदं न विद्यते। विमोक्षाणामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। अनुपूर्व्वविहारसमापत्तीनामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। शून्यतानिमित्ताप्रणिहितविमोक्षमुखानामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। अभिज्ञानामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। समाधीनामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। धारणीमुखानामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरत बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते तथागतबलानामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। वैशारद्यानामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। प्रतिसम्विदामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। महामैत्र्या अत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। महाकरुणाया अत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। आवेणिकबुद्धधर्म्माणामत्यन्तविशुद्धौ निमित्तं पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते आत्मात्यन्तविशुद्धौ पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते सत्त्वात्यन्त-

विशुद्धौ पदं न विद्यते। सत्त्वासत्तामुपादाय। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते जीवात्यन्तविशुद्धौ पदं न विद्यते। जीवासत्तामुपादाय। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते पोषात्यन्तविशुद्धौ पदं न विद्यते। पोषासत्तामुपादाय। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते पुरुषात्यन्तविशुद्धौ पदं न विद्यते। पुरुषासत्तामुपादाय। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते पुद्गलात्यन्तविशुद्धौ पदं न विद्यते। पुद्गलासत्तामुपादाय। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मनुजात्यन्तविशुद्धौ पदं न विद्यते। मनुजासत्तामुपादाय। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते मानवात्यन्तविशुद्धौ पदं न विद्यते। मानवासत्तामुपादाय। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते कारकात्यन्तविशुद्धौ पदं न विद्यते। कारकासत्तामुपादाय। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते

वेदकात्यन्तविशुद्धौ पदं न विद्यते। वेदकासत्तामुपादाय। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते ज्ञानकात्यन्तविशुद्धौ पदं न विद्यते। ज्ञानकसत्तामुपादाय। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते पश्यकात्यन्तविशुद्धौ पदं न विद्यते। पश्यकासत्तामुपादाय। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते सूर्य्यमण्डलेऽभ्युद्गच्छति अन्धकारे पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते कल्पोद्दाहे वर्त्तमाने सर्व्वसंस्कारगतानां पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य शीलस्कन्धे शीले पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य समाधौ विक्षेपे पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य प्रज्ञायां दौष्प्रज्ञे पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः

सम्यक् सम्बुद्धस्य विमुक्तौ पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतस्यार्हतः सम्यक् सम्बुद्धस्य विमुक्तिज्ञान-दर्शने पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते सूर्याचन्द्रमसोः प्रभायाः पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते ग्रहमणिरत्नविद्युज्ज्योतिषां प्रभायाः पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते चातुर्महाराजकायिकानां देवानां प्रभायाः पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते त्रायस्त्रिंशानां देवानां प्रभायाः पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते यामानां देवानां प्रभायाः पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तुषितानां देवानां प्रभायाः पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते निर्माण-रतीनां देवानां प्रभायाः पदं न विद्यते। एवमेव सुभूते बोधि-

सत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते परनिर्मितवशवर्तिनां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते ब्रह्मकायिकानां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते ब्रह्मपुरोहितानां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते ब्रह्मपार्षद्यानां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते महाब्रह्माणां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते आभानां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते परीत्ताभानां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते अप्रमाणाभानां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न

विद्यते । तद्यथापि नाम सुभूते अभास्वराणां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न भवति । तद्यथापि नाम सुभूते शुभानां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायाश्चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते परीत्तशुभानां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते ऽप्रमाणशुभानां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते शुभकृत्स्नानां देवानां प्रभाया पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते बृहानां देवानां प्रभायाः पदं न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते परीत्तबृहानां देवानां प्रभायाः पद न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते ऽप्रमाणबृहानां देवानां प्रभायाः पद न विद्यते । एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते । तद्यथापि नाम सुभूते बृहत्फलानां देवानां प्रभायाः पद न विद्यते । एवमेव सुभूते

बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते शुद्धावासकायिकानां देवानां प्रभायाः पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते।

तद्यथापि नाम सुभूते बोधिसत्त्वानां महासत्त्वानां प्रभायाः पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तद्यथापि नाम सुभूते तथागतानामर्हतां सम्यक् सम्बुद्धानां प्रभायाः पदं न विद्यते। एवमेव सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते। तत्कस्य हेतोः तथाहि या च बोधिर्यश्च बोधिसत्त्वो यश्च बोधिसत्त्वपदार्थः सर्व्वे ते धर्म्मा न संयुक्ताः परिसंयुक्ताः अरूपिणोऽनिदर्शना अप्रतिघाएकलक्षणा। यदुताऽलक्षणाः। सर्व्वधर्म्माणां सुभूते बोधिसत्त्वेन महासत्त्वेनासद्भूततायां शिक्षितव्यं। सर्वधर्म्माश्च बोधिसत्त्वेन महासत्त्वेनाऽवबोद्धव्याः। आह। कतमे भगवन् सर्वधर्म्माः। कथं भगवन् बोधिसत्त्वेन महासत्त्वेनाऽसद्भूततायां शिक्षितव्यं। कथञ्च बोधिसत्त्वेन महासत्त्वेन सर्वधर्म्मा अवबोद्धव्याः। भगवानाह। सर्वधर्म्माः सुभूते उच्यन्ते कुशलाश्चाकुशलाश्चाकृता व्याकृताश्च लौकिकाश्च लोकोत्तराश्च साश्रवाश्चानाश्रवाश्च। संस्कृताश्चाऽसंस्कृताश्च सावद्याश्चाऽनावद्याश्च। साधारणाश्चासाधारणाश्च। इमे सुभूते उच्यन्ते कुशलाधर्म्माः। एषां बोधिसत्त्वेन महासत्त्वेन सर्वधर्म्माणामसक्तायां शिक्षितव्यं। इमे सुभूते बोधिसत्त्वेन महासत्त्वेन सर्वधर्म्मा अवबोद्धव्याः।

आह कतमे भगवन् कुशलाधर्मा लौकिकाः। भगवानाह। कुशलाः सुभूते लौकिकाधर्मा उच्यन्ते मातृज्ञता पितृज्ञता श्रामण्यता ब्राह्मण्यता कुलज्येष्ठानुपालिता। दानमयं पुण्यक्रियावस्तु, शीलमयं पुण्यक्रियावस्तु, भावनामयं पुण्यक्रियावस्तु, वैयावृत्त्यसहगतमौपधिकं दशकुशलाः कर्म्मपथाः लौकिकाश्वसंज्ञाः। यदुताध्मातिकसंज्ञा, निरुत्तमकसंज्ञा, विपूतिकसंज्ञा। विलोहितकसंज्ञा, विलोमकसंज्ञा, विवादिकसंज्ञा, विच्छिद्रकसंज्ञा, अस्थिसंज्ञा, विदग्धकसंज्ञा, लौकिकानिचत्वारिध्यानानि। चत्वार्य्यप्रमाणानि। चतस्र आरूप्यसमापत्तयः। पञ्चाऽभिज्ञाः लौकिकादशानुस्मृतयः। यदुतबुद्धाऽनुस्मृतिः, धर्म्माऽनुस्मृतिः, संघाऽनुस्मृतिः, शीलाऽनुस्मृतिः, त्यागाऽनुस्मृतिः, देवाऽनुस्मृतिः, आनापानाऽनुस्मृतिः। कायगतानुस्मृतिः। उद्वेगाऽनुस्मृतिः। मरणाऽनुस्मृतिः। इमे उच्यते सुभूते कुशलालौकिकाधर्म्माः। आह। कतमे भगवन्नकुशलालौकिकाधर्म्माः। भगवानाह। दशाऽकुशलाः कर्म्मपथाः। यदुतप्राणातिपातः सुभूतेऽकुशलोलौकिकोधर्म्मः। अदत्तादानं सुभूतेऽकुशलोलौकिकोधर्म्मः। काममिथ्याचारः सुभूतेऽकुशलोलौकिकोधर्म्मः। मृषावादः सुभूतेऽकुशलोलौकिकोधर्म्मः। पारुष्यं सुभूतेऽकुशलोलौकिकोधर्म्मः। अभिध्या सुभूतेऽकुशलोलौकिकोधर्म्मः। व्यापादं सुभूतेऽकुशलोलौकिकोधर्म्मः। मिथ्यादृष्टिः सुभूतेऽकुशलोलौकिकोधर्म्मः। क्रोध उपनाहोम्रक्षः प्रदाशोविहिंसा ईर्ष्यामात्सर्य्यं मदोमिथ्यामानः। इमे उच्यन्ते सुभूते ऽकुशलोलौकिकाधर्म्माः। आह कतमे भगवन्नव्याकृताधर्म्माः। भगवानाह।

अव्याकृतं कायकर्म, अव्याकृतं वाक्कर्म। अव्याकृतं मनस्कर्म। अव्याकृतानि चत्वारि महाभूतानि। अव्याकृतानि पञ्चेन्द्रियाणि। अव्याकृतं षड़ायतनं। अव्याकृतास्तस्र आरूप्यसमापत्तयः। अव्याकृताः स्कन्धाः। अव्याकृताधातवः। अव्याकृतान्यायतनानि। अव्याकृतः सर्व्वोविपाकः। इमे उच्यन्ते अव्याकृताधर्म्माः। आह। कतमे भगवन् लौकिकाधर्म्माः। भगवानाह। लौकिकाधर्म्माः सुभूते उच्यन्ते। पञ्चस्कन्धा द्वादशायतनानि। अष्टादशधातवः। दशकुशलाः कर्मपथाः। चत्वारिध्यानानि। चत्वार्य्यप्रमाणानि। चतस्र आरूप्यसमापत्तयः। पञ्चाऽभिज्ञाः। लोकोत्तरांश्च धर्म्मान् स्थापयित्वा ये तदन्येधर्म्माः। इमे उच्यन्ते लौकिकाधर्म्माः। आह। कतमे भगवन् लोकोत्तराधर्म्माः। भगवानाह। लोकोत्तराधर्म्माः सुभूते उच्यन्ते चत्वारिस्मृत्युपस्थानानि। चत्वार्य्यप्रमाणानि। चत्वार ऋद्धिपादाः। पञ्चेन्द्रियाणि। पञ्चबलानि सप्तबोध्यङ्गानि। आर्य्याष्टाङ्गोमार्गः। शून्यताविमोक्षमुखमानिमित्तविमोक्षमुखमप्रणिहितविमोक्षमुखं। अनाज्ञातमाज्ञास्यामीतीन्द्रियं। आज्ञेन्द्रियं। आज्ञातावीन्द्रियं। सवितर्कः सविचारः समाधिः। अवितर्कोऽविचारः समाधिः। विद्याविमुक्तिसंप्रजन्यं योनिशोमनसिकारः। अष्टोविमोक्षाः। कतमेऽष्टौ रूपीरूपाणि पश्यत्ययं प्रथमोविमोक्षः। अध्यात्मरूपं संज्ञीवहिर्द्धारूपाणि पश्यत्ययं द्वितीयोविमोक्षः। शुभमचाविमुक्तोभवत्ययं तृतीयोविमोक्षः। स सर्व्वशोरूपसंज्ञानां समतिक्रमान् प्रतिघसंज्ञानामस्तंगमान्नानात्वसंज्ञानाममनसिकारादनन्तमाकाशमित्याकाशानन्त्यायतनमुपसम्पद्य विहरत्ययं चतुर्थो-

विमोचः। स सर्व्वशआकाशानन्त्यायतनं समतिक्रमादनन्तं विज्ञानमिति विज्ञानानन्त्यायतनमुपसम्पद्य विहरतीत्ययं पञ्चमोविमोचः। स सर्व्वशोविज्ञानानन्त्यायतनसमभिक्रमा नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसम्पद्य विहरतीत्यय षष्ठोविमोचः। स सर्व्वश आकिञ्चन्यायतनसमतिक्रमान्नैव संज्ञानासंज्ञायतनमुपसम्पद्य विहरतीत्ययं सप्तमोविमोचः। स सर्वशोनैवसंज्ञानासंज्ञायतनसमतिक्रमात्संज्ञावेदनायितनिरोधमुपसम्पद्य विहरतीत्ययमष्टमोविमोचः। इमेऽष्टौ विमोचाः।

नवानुपूर्व्वविहारसमापत्तयः। कतमा नव। स विविक्तं कामैः विविक्तं पापकैरकुशलधर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसम्पद्य विहरति। सवितर्कं स विचाराणां व्युपशमादध्यात्मसम्प्रसादाच्चेत स एकोतीभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसम्पद्यविहरति। सप्रीतेर्विरागादुपेचकोविहरति। स्मृतिमान् सम्प्रजानः सुखञ्च कायेन प्रतिसंवेदयति। यत्तदार्य्या आचचते। उपेचकः स्मृतिमान् सुखविहारी तृतीयं ध्यानमुपसम्पद्य विहरति। स सुखस्य च प्रहाणात् दुःखस्य च प्रहाणात् पूर्व्वमेव च सौमनस्य दौर्मनस्यानामस्तङ्गमाददुःखासुखमुपेचा स्मृतिपरिशुद्धिश्चतुर्थंध्यानमुपसम्पद्य विहरति। स सर्व्वशो रूपसंज्ञानां समतिक्रमात् प्रतिघसंज्ञानामस्तङ्गमान्नानात्वसंज्ञानाममनसिकारादनन्ताकाशमित्याकाशानन्त्यायतनमुपसम्पद्य विहरति। स सर्व्वश आकाशानन्त्यायतनसमतिक्रमादनन्तरिकज्ञानमिति विज्ञानानन्त्यायतनमुपसम्पद्यविहरति। स सर्व्वशो विज्ञाना-

नन्यायतनसमतिक्रमादाकिञ्चन्यायतनमुपसम्पद्य विहरति। स सर्व्वश आकिञ्चन्यायतनसमतिक्रमान्नैव संज्ञानासंज्ञायतनमुपसम्पद्य विहरति। स सर्व्वशोनैव संज्ञानासंज्ञायतनसमतिक्रमात् संज्ञावेदयति निरोधमुपसम्पद्य विहरति। एता नवानुपूर्व्वविहार समापत्तयः।

अध्यात्मशून्यता बहिर्द्धाशून्यता अध्यात्मबहिर्द्धाशून्यता शून्यताशून्यता महाशून्यता परमार्थशून्यता संस्कृतशून्यता असंस्कृतशून्यता अत्यन्तशून्यता अनवरायशून्यता अनवकारशून्यता प्रकृतिशून्यता सर्व्वधर्मशून्यता स्वलक्षणशून्यता अनुपलम्भशून्यता अभावशून्यता स्वभावशून्यता अभावस्वभावशून्यता। दशतथागतबलानि चत्वारिवैशारद्यानि चतस्रः प्रतिसम्विदोऽष्टादशावेणिकाबुद्धधर्म्माः इमे उच्यन्ते लोकोत्तराः धर्म्माः।

भगवानाह। सास्रवाधर्म्मा इति सुभूते यदुतपञ्चस्कन्धाः द्वादशायतनानि। अष्टादशधातवः। चत्वारि ध्यानानि। चत्वार्य्यप्रमाणानि। चतस्र आरूप्य समापत्तयः। पञ्चाऽभिज्ञाः। इमे उच्यन्ते सास्रवाधर्म्माः। भगवानाह। चत्वारि स्मृत्युपस्थानानि। चत्वारि सम्यक् प्रहाणानि। चत्वार ऋद्धिपादाः। पञ्चेन्द्रियाणि। पञ्चबलानि। सप्तबोध्यङ्गानि। आर्य्याष्टाङ्गमार्गः। चत्वार्य्यार्य्यसत्यानि। चत्वारिध्यानानि। अष्टौ विमोक्षाः। नवानुपूर्व्वविहारसमापत्तयः। शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखानि। दशतथागतबलानि। चत्वारि वैशारद्यानि। चतस्रः प्रतिसम्विदः। महामैत्री। महाकरुणा। अष्टादशावेणिकाबुद्धधर्म्माः। इमे उच्यन्ते

अनास्रवाधर्म्माः। आह। कतमे भगवन् संस्कृताधर्म्माः। भगवानाह। संस्कृताधर्म्माः सुभूते उच्यन्ते कामधातु रूपधातुरारूप्यधातुः। येऽपि तदन्ये केचित् संस्कृतधातुपर्य्यापन्नाधर्म्माः। यान्यपि चत्वारि स्मृत्युपस्थानानि। चत्वारि सम्यक् प्रहाणानि। चत्वार ऋद्धिपादा। पञ्चेन्द्रियाणि। पञ्चबलानि। सप्तबोध्यङ्गानि। आर्य्याष्टाङ्गमार्गः। चत्वार्य्यार्य्यसत्यानि। चत्वारि ध्यानानि। चत्वार्य्यप्रमाणानि। चतस्र आरूप्य समापत्तयः। अष्टौविमोक्षाः। नवाऽनुपूर्व्वविहारसमापत्तयः। शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखानि। पञ्चाऽभिज्ञाः। षट्-पारमिताः। सर्व्वशून्यताः। सर्व्वसमाधयः। सर्व्वधारणीमुखानि। दशतथागतबलानि। चत्वारि वैशारद्यानि। चतस्रः प्रतिसम्विदः। महामैत्री। महाकरुणा। अष्टादशावेणिकाबुद्धधर्म्मा। इमे उच्यन्ते संस्कृताधर्म्माः।

आह। कतमे भगवन्नसंस्कृताधर्म्माः। भगवानाह। असंस्कृता-धर्म्मा उच्यन्ते। यस्य नोत्पादोनव्ययो न स्थितेरन्यथात्वं रागक्षयो द्वेषक्षयो मोहक्षयः। तथता वितथताऽनन्यतथता धर्म्मता। धर्म्म-धातुः। धर्म्मस्थितिता। धर्म्मनियामता। अचिन्त्यधातुर्भूतकोटि-रयमुच्यतेऽसंस्कृतोधर्म्मः। आह। कतमे भगवन् साधारणा-धर्म्माः। भगवानाह। चत्वार्य्य प्रमाणानि। चतस्र आरूप्यसमा-पत्तयः। पञ्चाऽभिज्ञाः। इमे उच्यन्ते साधारणाधर्म्मा पृथग्जनैः।

आह। कतमे भगवन्नसाधारणाः। भगवानाह। चत्वारिस्मृ-त्युपस्थानानि। चत्वारिसम्यक् प्रहाणानि। चत्वार ऋद्धिपादाः। पञ्चेन्द्रियाणि। पञ्चबलानि। सप्तबोध्यङ्गानि। आर्य्याष्टाङ्गोमार्गः।

चत्वार्य्यार्य्यसत्यानि । अष्टौविमोक्षाः । नवाऽनुपूर्व्वविहारसमापत्तयः । शून्यता अनिमित्तमप्रणिहितं सर्व्वसमाधयः । सर्व्वधारणीमुखानि । दशतथागतबलानि । चत्वारिवैशारद्यानि । चतस्रः प्रतिसम्विदः । महामैत्री । महाकरुणा । अष्टादशावेणिकाबुद्धधर्म्माः । इमे उच्यन्ते असाधारणधर्म्माः ।

तत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायाञ्चरता स्वलक्षण-शून्यतासु सर्व्वधर्म्मेषु न सक्तिमत्त्वमकल्पनतया सर्व्वधर्म्माणामद्वययोगेन सर्व्वधर्म्मा अवबोद्धव्याः । अकल्पनाविकल्पनातामुपादाय । अथायुष्मान् सुभूतिर्भगवन्तमेतदवोचत् । यत् पुनरिदं भगवन्नुच्यते बोधिसत्त्वो महासत्त्व इति केन कारणेन भगवन् बोधिसत्त्वो महासत्त्व इत्युच्यते । भगवानाह । महतः सुभूते सत्त्वराशेर्नियतस्याग्रतां कारयिष्यति तेनार्थेन बोधिसत्त्वो महासत्त्वो इत्युच्यते । आह । कतमो भगवन् महासत्त्वराशेर्नियतः । यस्य बोधिसत्त्वो महासत्त्वोऽग्रतां कारयिष्यते । भगवानाह । महासत्त्वराशिरिति सुभूते गोत्रभूरष्टमकः स्रोत आपन्नः सकृदागाम्यर्हन् प्रत्येकबुद्धः प्रथमचित्तोत्पादिको बोधिसत्त्वो महासत्त्वो यावदवैवर्त्त्यभूमिस्थितो बोधिसत्त्वो महासत्त्वोऽयमुच्यते सुभूते महासत्त्वराशिर्नियतः । यस्य बोधिसत्त्वो महासत्त्वोऽग्रतां कारयिष्यति । अथ बोधिसत्त्वेन महासत्त्वेन वज्रोपमचित्तमुत्पाद्य महतः सत्त्वराशेर्नियतस्याऽग्रतां कारयितव्या । आह । कतमो भगवन् वज्रोपमश्चित्तोत्पादः । भगवानाह । इह सुभूते बोधिसत्त्वो महासत्त्वो एवं चित्तमुत्पादय । परिमिते मया संसारेसन्नाहः सन्नद्धव्यः । सर्व्व-

सत्त्वानां कृते सर्व्वसत्त्वापिनामया भवितव्यं। सर्व्वसत्त्वानामन्तिके मया समचित्तमुत्पादयितव्यं। सर्व्वसत्त्वा मया त्रिभिर्यानैः परिनिर्व्वापयितव्याः। सर्व्वसत्त्वानपि परिनिर्व्वाप्यनकश्चित्सत्त्वः परिनिर्व्वापितो भवत्यनुत्पादो निरोधो मया सर्व्वधर्म्माणामववोद्धव्यः। अव्यकीर्णेन मया सर्व्वाकारज्ञता चित्तेन षट्पारमितासुचरितव्यं। सर्व्वचाऽनुगतायाधर्म्मप्रतिवेधनिष्पत्त्यां मया शिक्षितव्यं। एकनियतनिर्द्धारोमयाधर्म्माणां प्रतिबोद्धव्यः। , यावदपरिमितनिर्द्धारप्रतिबोधाय मया धर्म्माणां शिक्षितव्यं। अयं सुभूते बोधिसत्त्वस्य महासत्त्वस्य वज्रोपमश्चित्तोत्पादः। यत्र स्थित्वा बोधिसत्त्वो महासत्त्वो महतः सत्त्वराशेर्भियतस्याग्रतां कारयिष्यति। तच्चाऽनुपलम्भयोगेन। पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः एकचित्तमुत्पादयति। यावन्तः सत्त्वानैरयिका वा तैर्य्यग्योनिका वा यामलौकिका वा दुःखवेदनां वेदयन्ति। तेषामर्थायाहं तां दुःखवेदना वेदयेयं। तत्र बोधिसत्त्वेन महासत्त्वेनात्तर्थवं*, चित्तमुत्पादयितव्यं। एकैकस्याहं सत्त्वस्य कृते कल्पकोटीनियुतशतसहस्राणि नरकैवयिकदुःखमनुभवेयं। यावत्सत्त्वोऽनुपरिशेषनिर्व्वाणधातौ परिनिर्व्वापितो भवेत्। एवमेवोपायेन सर्व्वसत्त्वानां कृते तन्नैरयिकं दुःखमनुभवेयं। यावत्स सर्व्वसत्त्वा अनुपधिशेषे निर्व्वाणधातौ परिनिर्व्वापयिताभवेयुः।, पश्चादहमात्मनः कृते कुशलमूलान्यवरोप्य कल्पकोटीनियुतशतसहस्रैरनेकान् बोधिसंस्कारान् सम्भृत्याऽनुत्तरां

---

* ह्यात्तार्थवमिति पाठोयुक्त प्रतिभाति।

सम्यक् सम्बोधिमभिसम्बुध्येयं। अयं सुभूते बोधिसत्त्वस्य महासत्त्वस्य वज्रोपमश्चित्तोत्पादः। यत्र स्थित्वा बोधिसत्त्वो महासत्त्वोऽसत्त्वतः सत्त्वराशेर्नियतस्थायतां कारयिष्यति।

तच्चाऽनुपलम्भयोगेन। पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन सततसमितमुदारचित्तेन भवितव्यं। येनोदारचित्तेन सर्व्वसत्त्वानामग्र्यतां कारयिष्यति। तत्रेयं बोधिसत्त्वस्य महासत्त्वस्योदारचित्तता। यत् पूर्वमचित्तोत्पादाय। न रागचित्तमुत्पादयति। न द्वेषचित्तमुत्पादयति। नमोहचित्तमुत्पादयति। न विहिंसाचित्तमुत्पादयति। न हिंसाचित्तमुत्पादयति। न श्रावकचित्तमुत्पादयति। न प्रत्येकबुद्धचित्तमुत्पादयति। इयं बोधिसत्त्वस्य महासत्त्वस्योदारचित्तता। यया सर्वसत्त्वानामग्र्यतां कारयिष्यितव्या। तयाचोदारचित्ततयाममन्तव्यं। पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेनाऽप्रकम्प्यचित्तेन भवितव्यं। तत्रेयं बोधिसत्त्वस्य महासत्त्वस्याप्रकम्प्यचित्तता। योऽयं सर्व्वाकारज्ञताप्रतिसंयुक्तमनसिकारसेनचामनता। इयं बोधिसत्त्वस्य महासत्त्वस्याप्रकम्प्यचित्तता। यया सर्वसत्त्वानामग्र्यतां कारयिष्यति। तच्चाऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वानामन्तिके हितसुखचित्ततोत्पादयितव्या। तत्रेयं बोधिसत्त्वस्य महासत्त्वस्य हितसुखचित्तता। या सर्वसत्त्वानाचाणता सर्व्वसत्त्वानां परित्यागिता तयाचामनता। इयं सुभूते बोधिसत्त्वस्य महासत्त्वस्य हितसुखचित्तता यया सर्व्वसत्त्वानामग्र्यतां कारयिष्यति। तच्चाऽनुपलम्भयोगेन। पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन सततस-

मितधर्म्मकामेन भवितव्यं। धर्म्मरतेन धर्म्मारामेण धर्म्मारामतायोगानुयुक्तेन भवितव्यं। तत्र कतमो धर्म्मो यः सर्व्वधर्म्माणाममकभदः। अयमुच्यते धर्म्मः। तत्र कतमाधर्म्मकामता या धर्म्मेच्छाऽभिलाषः। इय सुच्यते धर्म्मकामता। तत्र कतमाधर्म्मरतिः। याच धर्म्मे रतिरभिरतिरियमुच्यते धर्म्मरतिः। तत्र कतमाधर्म्मारामता। यद्धर्म्मगुणानुशंसादर्शनमियमुच्यते धर्म्मारामता। तत्र कतमाधर्म्मारामतायोगमनुयुक्तता। यश्चैव धर्म्मस्य भावनताबहुलीकरणता इयमुच्यते धर्म्मारामतायोगमनुयुक्तता। एवं खलु सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायाञ्चरता महतः सत्त्वराशेरग्रता कारयितव्या। तच्चाऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायाञ्चरताऽध्यात्मशून्यतायां स्थित्वा बहिर्द्धाशून्यतायां स्थित्वा अध्यात्मबहिर्द्धाशून्यतायां स्थित्वा शून्यताशून्यतायां स्थित्वा महाशून्यतायां स्थित्वा परमार्थशून्यतायां स्थित्वा संस्कृतशून्यतायां स्थित्वा असंस्कृतशून्यतायां स्थित्वा अत्यन्तशून्यतायां स्थित्वा अनवराग्रशून्यतायां स्थित्वा अनवकारशून्यतायां स्थित्वा प्रकृतिशून्यतायां स्थित्वा सर्व्वधर्म्मशून्यतायां स्थित्वा स्वलक्षणशून्यतायां स्थित्वा अनुपलम्भशून्यतायां स्थित्वा अभावशून्यतायां स्थित्वा स्वभावशून्यतायां स्थित्वा अभावस्वभावशून्यतायां स्थित्वा महतः सत्त्वराशेर्नियतस्याग्रतां कारयितव्या।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायाञ्चरता स्मृत्युपस्थानेषु स्थित्वा सम्यक् प्रहाणेषु स्थित्वा ऋद्धिपादेषु

खिला इन्द्रियेषु खिला बलेषु खिला बोध्यङ्गेषु खिला आर्याष्टाङ्गमार्गे खिला अन्यसत्येषु खिला ध्यानेषु खिला अप्रमाणेषु खिला आरूप्यसमापत्तिषु खिला विमोक्षेषु खिला अनुपूर्वविहारसमापत्तिषु खिला शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु खिला समाधिषु खिला धारणीमुखेषु खिला तथागतबलेषु खिला वैशारद्येषु खिला प्रतिसम्वित्सु खिला महामैत्र्यां खिला महाकरुणायां खिला अष्टादशावेणिकबुद्धधर्म्मेषु खिला महतः सत्त्वराशेर्नियतराश्यता कारयितव्या । तच्चाऽनुपलम्भयोगेन ।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायाञ्चरता शूरङ्गमसमाधौ खिला रत्नमुद्रायां समाधौ खिला सिंहविक्रीडिते समाधौ खिला सुचन्द्रसमाधौ खिला चन्द्रध्वजसमाधौ खिला सर्वधर्मोद्गतेसमाधौ खिला सर्वधर्मसुद्रायां समाधौ खिला विलोकितमूर्द्धिसमाधौ खिला धर्म्मधातुनियतेसमाधौ खिला नियतध्वजकेतौ समाधौ खिला वज्रोपमे समाधौ खिला सर्वधर्म्मप्रवेशमुद्रायां समाधौ खिला समाधिराजसुप्रतिष्ठिते समाधौ खिला बलव्यूहसमाधौ खिला समुद्गते समाधौ खिला निरुक्तिनियतप्रवेशे समाधौ खिला अधिवचनसं प्रवेशे समाधौ खिला दिग्विलोकिते समाधौ खिला आधारमुद्रायां समाधौ खिला असम्प्रमोषे समाधौ खिला सर्व्वधर्म्मसमवसरणसागरमुद्रायां समाधौ खिला आकाशस्फुरणे समाधौ खिला वज्रमण्डले समाधौ खिला ध्वजाग्रकेयूरे समाधौ खिला इन्द्रकेतुसमाधौ खिला स्रोतोऽनुगते समाधौ खिला सिंहविक्रीडिते समाधौ खिला व्याकृन्ते समाधौ खिला

रणंजहे समाधौ स्थित्वा वैरोचने समाधौ स्थित्वा अनिमेषसमाधौ स्थित्वा अनिकेतस्थिते समाधौ स्थित्वा निश्चिते समाधौ स्थित्वा विमलप्रदीपे समाधौ स्थित्वा अनन्तप्रभे समाधौ स्थित्वा प्रभाकरे समाधौ स्थित्वा समन्तावभासे समाधौ स्थित्वा शुद्धावभासे समाधौ स्थित्वा विमलप्रभे समाधौ स्थित्वा रतिकरे समाधौ स्थित्वा विद्युत्प्रदीपे समाधौ स्थित्वा अक्षये समाधौ स्थित्वा अजये समाधौ स्थित्वा तेजोवत्यां समाधौ स्थित्वा क्षयापगतसमाधौ स्थित्वा अनिञ्जसमाधौ स्थित्वा विवर्ते समाधौ स्थित्वा सूर्यप्रदीपे समाधौ स्थित्वा चन्द्रविमले समाधौ स्थित्वा प्रज्ञाप्रदीपे समाधौ स्थित्वा शुद्धप्रतिभासे समाधौ स्थित्वा आलोककरे समाधौ स्थित्वा कराकारे समाधौ स्थित्वा ज्ञानकेतुसमाधौ स्थित्वा वज्रोपमे समाधौ स्थित्वा चित्तस्थितिसमाधौ स्थित्वा समन्तालोके समाधौ स्थित्वा सुप्रतिष्ठिते समाधौ स्थित्वा रत्नकोटिसमाधौ स्थित्वा वरधर्ममुद्रायां समाधौ स्थित्वा सर्वधर्मसमतायां समाधौ स्थित्वा रतिजहेसमाधौ स्थित्वा धर्मोद्गते समाधौ स्थित्वा विकिरणे समाधौ स्थित्वा सर्वधर्मपदप्रभेदे समाधौ स्थित्वा समाक्षरावकारे समाधौ स्थित्वा अक्षरापगते समाधौ स्थित्वा आवरणच्छेदने समाधौ स्थित्वा अविकारे समाधौ स्थित्वा अप्रकारे समाधौ स्थित्वा नामनियतप्रवेशे समाधौ स्थित्वा अनिकेतचारिणि समाधौ स्थित्वा तिमिरापगते समाधौ स्थित्वा चारित्रवतिसमाधौ स्थित्वा अचले समाधौ स्थित्वा विषयतीर्णे समाधौ स्थित्वा सर्वगुणसञ्चयगते समाधौ स्थित्वा स्थितनिश्चित्तसमाधौ स्थित्वा शुभपुष्पितशुद्धिसमाधौ स्थित्वा बोध्यङ्गवत्यां समाधौ

स्थिला अनन्तप्रतिभानेसमाधौ स्थिला असमसमसमाधौ स्थिला सर्व्वधर्म्मातिक्रमणे समाधौ स्थिला परिच्छेदकरे समाधौ स्थिला विमतिविकरणे समाधौ स्थिला निरधिष्ठे समाधौ स्थिला एकव्यूहे समाधौ स्थिला आकाराभिनिर्हारे समाधौ स्थिला एकाकार समाधौ स्थिला आकारानवकारे समाधौ स्थिला नैर्व्वेधिसर्व्वभवतापगते समाधौ स्थिला सङ्केतरुतप्रवेशे समाधौ स्थिला गौर्घोषाचर समाधौ स्थिला ज्वलनोल्कासमाधौ स्थिला लक्षणपरिशोधन समाधौ स्थिला अनभिलक्षिते समाधौ स्थिला सर्व्वाकार वरोपेते समाधौ स्थिला सर्व्वसुखदुःखनिरभिनन्दिसमाधौ स्थिला अक्षकरण्डेसमाधौ स्थिला धारणीमतिसमाधौ स्थिला सम्यक्तमिथ्यात्वसंप्रमनसमाधौ स्थिला सर्व्वरोधनिरोधसंप्रशमनसमाधौ स्थिला अनुरोधाप्रतिरोधे समाधौ स्थिला सारवति समाधौ स्थिला परिपूर्णचन्द्रविमलप्रभे समाधौ स्थिला विद्युत्प्रभे समाधौ स्थिला महाव्यूहसमाधौ स्थिला सर्व्वाकारप्रभाकारसमाधौ स्थिला समाधिसमतासमाधौ स्थिला अरजोविरजोनययुक्तौ समाधौ स्थिला अरणसर्व्वसमरसरणे समाधौ स्थिला अनिलम्भनिकेतनिरते समाधौ स्थिला तथतास्थितनिश्चिन्ते समाधौ स्थिला कायकलिसम्प्रमथनसमाधौ स्थिला वाककलिविध्वंसनगगणकल्पे समाधौ स्थिला आकाशासङ्गविमुक्तिनिरुपलेपसमाधौ स्थिला महतः सत्त्वराशेर्नियतत्वाग्र्यतां कारयितव्या ।

तच्चानुपलम्भयोगेन । इह सुभूते धर्म्मेषु स्थिला बोधिसत्त्वो

रणंजहे समाधौ स्थित्वा वैरोचने समाधौ स्थित्वा अनिमेषसमाधौ स्थित्वा अनिकेतस्थिते समाधौ स्थित्वा निश्चिन्ते समाधौ स्थित्वा विमलप्रदीपे समाधौ स्थित्वा अनन्तप्रभे समाधौ स्थित्वा प्रभाकरे समाधौ स्थित्वा समन्तावभासे समाधौ स्थित्वा शुद्धावभासे समाधौ स्थित्वा विमलप्रभे समाधौ स्थित्वा रतिकरे समाधौ स्थित्वा विद्युत्प्रदीपे समाधौ स्थित्वा अक्षये समाधौ स्थित्वा अजये समाधौ स्थित्वा तेजोवत्यां समाधौ स्थित्वा क्षयापगतसमाधौ स्थित्वा अनिञ्ज्यसमाधौ स्थित्वा विवर्ते समाधौ स्थित्वा सूर्यप्रदीपे समाधौ स्थित्वा चन्द्रविमले समाधौ स्थित्वा प्रज्ञाप्रदीपे समाधौ स्थित्वा शुद्धप्रतिभासे समाधौ स्थित्वा आलोककरे समाधौ स्थित्वा काराकारे समाधौ स्थित्वा ज्ञानकेतुसमाधौ स्थित्वा वज्रोपमे समाधौ स्थित्वा चित्तस्थितिसमाधौ स्थित्वा समन्तालोके समाधौ स्थित्वा सुप्रतिष्ठिते समाधौ स्थित्वा रत्नकोटिसमाधौ स्थित्वा वरधर्ममुद्रायां समाधौ स्थित्वा सर्वधर्मसमतायां समाधौ स्थित्वा रतिजहेसमाधौ स्थित्वा धर्मोद्गते समाधौ स्थित्वा विकिरणे समाधौ स्थित्वा सर्वधर्मपदप्रभेदे समाधौ स्थित्वा समाक्षरावकारे समाधौ स्थित्वा अक्षरापगते समाधौ स्थित्वा आवरणच्छेदने समाधौ स्थित्वा अविकारे समाधौ स्थित्वा अप्रकारे समाधौ स्थित्वा नामनियतप्रवेशे समाधौ स्थित्वा अनिकेतचारिणि समाधौ स्थित्वा तिमिरापगते समाधौ स्थित्वा चारित्रवतिसमाधौ स्थित्वा अचले समाधौ स्थित्वा विषयतीर्णे समाधौ स्थित्वा सर्वगुणसञ्चयगते समाधौ स्थित्वा स्थितनिश्चित्तसमाधौ स्थित्वा शुभपुष्पितशुद्धिसमाधौ स्थित्वा बोध्यङ्गवत्यां समाधौ

स्थित्वा अनन्तप्रतिभानेसमाधौ स्थित्वा असमसमसमाधौ स्थित्वा सर्व्वधर्म्मातिक्रमणे समाधौ स्थित्वा परिच्छेदकरे समाधौ स्थित्वा विमतिविकरणे समाधौ स्थित्वा निरधिष्ठे समाधौ स्थित्वा एकव्यूहे समाधौ स्थित्वा आकाराभिनिर्हारे समाधौ स्थित्वा एकाकार समाधौ स्थित्वा आकारानवकारे समाधौ स्थित्वा नैर्व्वेधिसर्व्वभवव-त्नापगते समाधौ स्थित्वा सङ्केतरुतप्रवेशे समाधौ स्थित्वा गोघोषाचर समाधौ स्थित्वा ज्वलनोल्कासमाधौ स्थित्वा लक्षणपरिशोधन समाधौ स्थित्वा अनभिलक्षिते समाधौ स्थित्वा सर्व्वाकार वरोपेते समाधौ स्थित्वा सर्व्वसुखदुःखनिरभिनन्दिसमाधौ स्थित्वा अच-करण्डेसमाधौ स्थित्वा धारणीमतिसमाधौ स्थित्वा सम्य-क्त्वमिथ्यात्वसंपसनसमाधौ स्थित्वा सर्वरोधनिरोधसंप्रशमनसमाधौ स्थित्वा अनुरोधाप्रतिरोधे समाधौ स्थित्वा सारवति समाधौ स्थित्वा परिपूर्णचन्द्रविमलप्रभे समाधौ स्थित्वा विद्युत्प्रभे समाधौ स्थित्वा महाव्यूहसमाधौ स्थित्वा सर्व्वाकारप्रभा-कारसमाधौ स्थित्वा समाधिसमतासमाधौ स्थित्वा अरजो-विरजोनययुक्ते समाधौ स्थित्वा अरणसर्वसमरसरणे समाधौ स्थित्वा अनिलम्भनिकेतनिरते समाधौ स्थित्वा तथतास्थित-निश्छिन्ने समाधौ स्थित्वा कायकलिसम्प्रमथनसमाधौ स्थित्वा वाक्कलिविध्वंसनगगणकल्पे समाधौ स्थित्वा आकाशासङ्ग-विमुक्तिनिरुपलेपसमाधौ स्थित्वा महतः सत्त्वराशेर्नियतस्याग्रतां कारयितव्या।

तच्चानुपलम्भयोगेन। इह सुभूते धर्म्मेषु स्थित्वा बोधिसत्त्वो

महासत्त्वः प्रज्ञापारमितायाञ्चरन् महतः सत्त्वराशेर्निंयतस्याऽग्र्यतां कारयिष्यति । तेन बोधिसत्त्वो महासत्त्व इत्युच्यते ।

अथायुष्माञ्छारद्वतीपुत्रोभगवन्तमेतदवोचत् । ममाऽपि भगवन् प्रतिभाति । येनार्थेन बोधिसत्त्वो महासत्त्व इत्युच्यते । भगवानाह । प्रतिभातु ते शारद्वतीपुत्र येनार्थेन बोधिसत्त्वो महासत्त्व इत्युच्यते । शारद्वतीपुत्र आह । आत्मदृष्टेर्भगवन् प्रहाणाय सत्त्वेभ्यो-धर्मं देशयति । सत्त्वदृष्टेः प्रहाणाय । जीवदृष्टेः प्रहाणाय । पोष-दृष्टेः प्रहाणाय । पुद्गलदृष्टेः प्रहाणाय । पुरुषदृष्टेः प्रहाणाय । मनुजदृष्टेः प्रहाणाय । मानवदृष्टेः प्रहाणाय । कारकदृष्टेः प्रहा-णाय । कारापकदृष्टेः प्रहाणाय । उत्थापकदृष्टेः प्रहाणाय । समुत्थापकदृष्टेः प्रहाणाय । वेदकदृष्टेः प्रहाणाय । वेदयितृकदृष्टेः प्रहाणाय । जानकदृष्टेः प्रहाणाय । पश्यकदृष्टेः प्रहाणाय । उच्छेददृष्टेः प्रहाणाय । शाश्वतदृष्टेः प्रहाणाय । अस्तिदृष्टेः प्रहा-णाय । नास्तिदृष्टेः प्रहाणाय । स्कन्धदृष्टेः प्रहाणाय । धातुदृष्टेः प्रहाणाय । आयतनदृष्टेः प्रहाणाय । प्रतीत्यसमुत्पादनदृष्टेः प्रहाणाय । सत्यदृष्टेः प्रहाणाय । पारमितादृष्टेः प्रहाणाय । शून्यतादृष्टेः प्रहा-णाय । स्मृत्युपस्थानदृष्टेः प्रहाणाय । सम्यक्प्रहाणदृष्टेः प्रहाणाय । ऋद्धिपाददृष्टेः प्रहाणाय । इन्द्रियदृष्टे प्रहाणाय । बलदृष्टेः प्रहा-णाय । बोध्यङ्गदृष्टेः प्रहाणाय । आर्य्याष्टाङ्गमार्गदृष्टेः प्रहाणाय । आर्य्यसत्यदृष्टेः प्रहाणाय । ध्यानदृष्टेः प्रहाणाय । अप्रमाणदृष्टेः प्रहाणाय । आरूप्यसमापत्तिदृष्टेः प्रहाणाय । विमोक्षदृष्टेः प्रहा-णाय । अनुपूर्वविहारसमापत्तिदृष्टेः प्रहाणाय । शून्यतानिमित्ता-

प्रणिहितविमोक्षमुखदृष्टेः प्रहाणाय । समाधिदृष्टेः प्रहाणाय । धारणीमुखदृष्टेः प्रहाणाय । तथागतबलदृष्टेः प्रहाणाय । वैशारद्यदृष्टेः प्रहाणाय । प्रतिसम्विद्दृष्टेः प्रहाणाय । महामैत्रीदृष्टेः प्रहाणाय । महाकरुणादृष्टेः प्रहाणाय । आवेणिकबुद्धधर्म्मदृष्टेः प्रहाणाय । सत्त्वपरिपाकदृष्टेः प्रहाणाय । बुद्धक्षेत्रपरिशोधनदृष्टेः प्रहाणाय । बोधिदृष्टेः प्रहाणाय । बुद्धदृष्टेः प्रहाणाय । धर्म्मचक्रप्रवर्त्तनदृष्टेः प्रहाणाय । परिनिर्व्वाणदृष्टेः प्रहाणाय । सर्व्वेभ्योधर्म्मं देशयत्यनुपलम्भयोगेन । तेनार्थेन बोधिसत्त्वो महासत्त्व इत्युच्यते ।

अथायुष्मान् सुभूतिरायुष्मन्तं शारद्वतीपुत्रमेतदवोचत् । केन कारणेनायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य रूपदृष्टिर्भवति । वेदनादृष्टिर्भवति । सञ्ज्ञादृष्टिर्भवति । संस्कारदृष्टिर्भवति । विज्ञानदृष्टिर्भवति । चक्षुदृष्टिर्भवति । श्रोत्रदृष्टिर्भवति । घ्राणदृष्टिर्भवति । जिह्वादृष्टिर्भवति । कायदृष्टिर्भवति । मनोदृष्टिर्भवति । रूपदृष्टिर्भवति । शब्ददृष्टिर्भवति । गन्धदृष्टिर्भवति । रसदृष्टिर्भवति । स्पर्शदृष्टिर्भवति । धर्म्मदृष्टिर्भवति । चक्षुर्विज्ञानदृष्टिर्भवति । श्रोत्रविज्ञानदृष्टिर्भवति । घ्राणविज्ञानदृष्टिर्भवति । जिह्वाविज्ञानदृष्टिर्भवति । कायविज्ञानदृष्टिर्भवति । मनोविज्ञानदृष्टिर्भवति । चक्षुःसंस्पर्शदृष्टिर्भवति । श्रोत्रसंस्पर्शदृष्टिर्भवति । घ्राणसंस्पर्शदृष्टिर्भवति । जिह्वासंस्पर्शदृष्टिर्भवति । कायसंस्पर्शदृष्टिर्भवति । मनःसंस्पर्शदृष्टिर्भवति । चक्षुःसंस्पर्शप्रत्ययवेदनादृष्टिर्भवति । श्रोत्रसंस्पर्शप्रत्ययवेदनादृष्टिर्भवति । घ्राणसंस्पर्शप्रत्ययवेदनादृष्टिर्भवति । जिह्वासंस्पर्शप्रत्ययवेदनादृष्टिर्भवति । कायसंस्पर्शप्रत्यय-

वेदनादृष्टिर्भवति । मनःसंस्पर्शप्रत्ययवेदनादृष्टिर्भवति । पृथिवीधातुदृष्टिर्भवति । अब्धातुदृष्टिर्भवति । तेजोधातुदृष्टिर्भवति । वायुधातुदृष्टिर्भवति । आकाशधातुदृष्टिर्भवति । विज्ञानधातुदृष्टिर्भवति । अविद्यादृष्टिर्भवति । संस्कारदृष्टिर्भवति । विज्ञानदृष्टिर्भवति । नामरूपदृष्टिर्भवति । षडायतनदृष्टिर्भवति । स्पर्शदृष्टिर्भवति । वेदनादृष्टिर्भवति । तृष्णादृष्टिर्भवति । उपादानदृष्टिर्भवति । भवदृष्टिर्भवति । जातिदृष्टिर्भवति । जरामरणदृष्टिर्भवति ।

दानपारमितादृष्टिर्भवति । शीलपारमितादृष्टिर्भवति । चान्तिपारमितादृष्टिर्भवति । वीर्य्यपारमितादृष्टिर्भवति । ध्यानपारमितादृष्टिर्भवति । प्रज्ञापारमितादृष्टिर्भवति । अध्यात्मशून्यतादृष्टिर्भवति । बहिर्द्धाशून्यतादृष्टिर्भवति । अध्यात्मबहिर्द्धाशून्यतादृष्टिर्भवति । शून्यताशून्यतादृष्टिर्भवति । महाशून्यतादृष्टिर्भवति । परमार्थशून्यतादृष्टिर्भवति । संस्कृतशून्यतादृष्टिर्भवति । असंस्कृतशून्यतादृष्टिर्भवति । अत्यन्तशून्यतादृष्टिर्भवति । अनवराग्रशून्यतादृष्टिर्भवति । अनवकारशून्यतादृष्टिर्भवति । प्रकृतिशून्यतादृष्टिर्भवति । सर्व्वधर्मशून्यतादृष्टिर्भवति । स्वलक्षणशून्यतादृष्टिर्भवति । अभावशून्यतादृष्टिर्भवति । स्वभावशून्यतादृष्टिर्भवति । अभावस्वभावशून्यतादृष्टिर्भवति ।

स्मृत्युपस्थानदृष्टिर्भवति । सम्यक्प्रहाणदृष्टिर्भवति । ऋद्धिपाददृष्टिर्भवति । इन्द्रियदृष्टिर्भवति । बलदृष्टिर्भवति । बोध्यङ्गदृष्टिर्भवति । आर्य्याष्टाङ्गमार्गदृष्टिर्भवति । आर्य्यसत्यदृष्टिर्भवति ।

ध्यानदृष्टिर्भवति। अप्रमाणदृष्टिर्भवति। आरूप्यसमापत्तिदृष्टिर्भवति। विमोक्षदृष्टिर्भवति। अनुपूर्व्वविहारसमापत्तिदृष्टिर्भवति। शून्यतानिमित्ताप्रणिहितविमोक्षमुखदृष्टिर्भवति। अभिज्ञादृष्टिर्भवति। समाधिदृष्टिर्भवति। धारणीमुखदृष्टिर्भवति। तथागतबलदृष्टिर्भवति। वैशारद्यदृष्टिर्भवति। प्रतिसंवित्दृष्टिर्भवति। महामैत्रादृष्टिर्भवति। महाकरुणादृष्टिर्भवति। आवेणिकबुद्धधर्म्मदृष्टिर्भवति। बुद्धक्षेत्रशोधनदृष्टिर्भवति। बोधिदृष्टिर्भवति। बुद्धदृष्टिर्भवति। धर्मदृष्टिर्भवति। धर्मचक्रप्रवर्त्तनदृष्टिर्भवति। परिनिर्व्वाणदृष्टिर्भवति।

आह। इहायुष्मन् सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायाश्चरन्ननुपाय कौशल्येन रूपमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। वेदनामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। संज्ञामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। संस्कारानुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। विज्ञानमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। चक्षुरुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। श्रोत्रमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। घ्राणमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। जिह्वामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। कायमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। मन उपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। रूपमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। शब्दमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। गन्धमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। रसमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। स्पर्शमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। धर्मानुपलभ्यदृष्टिमुत्पादयत्युपलम्भ-

योगेन । चक्षुर्विज्ञानमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । श्रोत्र-विज्ञानमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । घ्राणविज्ञानमुपलभ्य-दृष्टिमुत्पादयत्युपलम्भयोगेन । जिह्वाविज्ञानमुपलभ्यदृष्टिमुत्पादय-त्युपलम्भयोगेन । कायविज्ञानमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । मनोविज्ञानमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । चक्षुःसंस्पर्शमुप-लभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । श्रोत्रसंस्पर्शमुपलभ्यदृष्टिमुत्पाद-यत्युपलम्भयोगेन । घ्राणसंस्पर्शमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । जिह्वासंस्पर्शमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । कायसंस्पर्शमुपल-भ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । मनःसंस्पर्शमुपलभ्यदृष्टिमुत्पादय-त्युपलम्भयोगेन । पृथिवीधातुमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । अब्धातुमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । तेजोधातुमुपलभ्य-दृष्टिमुत्पादयत्युपलम्भयोगेन । वायुधातुमुपलभ्यदृष्टिमुत्पादयत्युप-लम्भयोगेन । आकाशधातुमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । विज्ञानधातुमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । अविद्यामुपलभ्य-दृष्टिमुत्पादयत्युपलम्भयोगेन । संस्कारानुपलभ्यदृष्टिमुत्पादयत्युपल-म्भयोगेन । विज्ञानमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । नामरूप-मुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । षडायतनमुपलभ्यदृष्टिमुत्पा-दयत्युपलम्भयोगेन । स्पर्शमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । वेद-नामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । तृष्णामुपलभ्यदृष्टिमुत्पा-दयत्युपलम्भयोगेन । उपादानमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । भवमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन । जातिमुपलभ्यदृष्टिमुत्पा-दयत्युपलम्भयोगेन । जरामरणमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन ।

दानपारमितामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। शीलपारमितामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। क्षान्तिपारमितामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। वीर्य्यपारमितामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। ध्यानपारमितामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। प्रज्ञापारमितामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन।

अध्यात्मशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। बहिर्द्धाशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। अध्यात्मबहिर्द्धाशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। शून्यताशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। महाशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। परमार्थशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। संस्कृतशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। असंस्कृतशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। अत्यन्तशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। अनवराग्रशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। अनवकारशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। प्रकृतिशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। सर्व्वधर्मशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। स्वलक्षणशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। अनुपलम्भशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। अभावशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। स्वभावशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। अभावस्वभावशून्यतामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन।

स्मृत्युपस्थानान्युपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। सम्यक्प्रहाणान्युपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। ऋद्धिपादानुपलभ्यदृष्टि-

मुत्पादयत्युपलम्भयोगेन। इन्द्रियाण्युपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। बलान्युपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। बोध्यङ्गान्युपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। आर्य्याष्टाङ्गमार्गमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। आर्य्यसत्यान्युपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। ध्यानान्युपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। अप्रमाणान्युपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। आरूप्यसमापत्तीरुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। विमोक्षानुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। अनुपूर्व्वविहारसमापत्तीरुपलभ्यदृष्टिमुत्पादयति अनुपलम्भयोगेन। शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखान्युपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। अभिज्ञा उपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। समाधीनुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। धारणीमुखान्युपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। तथागतबलान्युपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। वैशारद्यान्युपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। प्रतिसम्विद उपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। महामैत्रीमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। महाकरुणामुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। आवेणिकबुद्धधर्म्मानुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। सत्त्वपरिपाकमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। बुद्धक्षेत्रपरिशोधनमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। बोधिमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। बुद्धमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। धर्म्ममुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन। धर्म्मचक्रप्रवर्त्तनमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन परिनिर्व्वाणमुपलभ्यदृष्टिमुत्पादयत्युपलम्भयोगेन।

अनेन कारणेनायुष्मन् सुभूते बोधिसत्त्वस्य महासत्त्वस्य रूपदृष्टिर्भवति। वेदनादृष्टिर्भवति। संज्ञादृष्टिर्भवति। संस्कारदृष्टिर्भवति। विज्ञानदृष्टिर्भवति। अनेन कारणेन चक्षुर्दृष्टिर्भवति। श्रोत्रदृष्टिर्भवति। घ्राणदृष्टिर्भवति। जिह्वादृष्टिर्भवति। कायदृष्टिर्भवति। मनोदृष्टिर्भवति। अनेन कारणेन सुरूपदृष्टिर्भवति। शब्ददृष्टिर्भवति। गन्धदृष्टिर्भवति। रसदृष्टिर्भवति। स्पर्शदृष्टिर्भवति। धर्मदृष्टिर्भवति। अनेन कारणेन चक्षुर्विज्ञानदृष्टिर्भवति। श्रोत्रविज्ञानदृष्टिर्भवति। घ्राणविज्ञानदृष्टिर्भवति। जिह्वाविज्ञानदृष्टिर्भवति। कायविज्ञानदृष्टिर्भवति। मनोविज्ञानदृष्टिर्भवति। अनेन कारणेन चक्षुःसंस्पर्शदृष्टिर्भवति। श्रोत्रसंस्पर्शदृष्टिर्घ्राणसंस्पर्शदृष्टिर्जिह्वासंस्पर्शदृष्टिः कायसंस्पर्शदृष्टिर्मनःसंस्पर्शदृष्टिर्भवति। अनेन कारणेन चक्षुःसंस्पर्शप्रत्ययवेदनादृष्टिर्भवति। श्रोत्रसंस्पर्शप्रत्ययवेदनादृष्टिर्घ्राणसंस्पर्शप्रत्ययवेदनादृष्टिर्जिह्वासंस्पर्शप्रत्ययवेदनादृष्टिः कायसंस्पर्शप्रत्ययवेदनादृष्टिर्मनःसंस्पर्शप्रत्ययवेदनादृष्टिर्भवति।

अनेन कारणेन पृथिवीधातुदृष्टिर्भवति। अब्धातुदृष्टिस्तेजोधातुदृष्टिर्वायुधातुदृष्टिराकाशधातुदृष्टिर्विज्ञानधातुदृष्टिर्भवति। अनेन कारणेनाऽविद्यादृष्टिर्भवति। संस्कारदृष्टिर्विज्ञानदृष्टिर्नामरूपदृष्टिः षडायतनदृष्टिः स्पर्शदृष्टिर्वेदनादृष्टिस्तृष्णादृष्टिरुपादानदृष्टिर्भवदृष्टिर्जातिदृष्टिर्जरामरणदृष्टिर्भवति। अनेन कारणेन दानपारमितादृष्टिर्भवति। शीलपारमितादृष्टिः क्षान्तिपारमितादृष्टिर्वीर्यपारमितादृष्टिर्ध्यानपारमितादृष्टिः प्रज्ञापारमितादृष्टिर्भवति।

अनेन कारणेनाध्यात्मशून्यतादृष्टिर्भवति। बहिर्धाशून्यतादृष्टि-

रध्यात्मबहिर्द्धाशून्यतादृष्टिः शून्यताशून्यतादृष्टिर्महाशून्यतादृष्टिः परमार्थशून्यतादृष्टिः संस्कृतशून्यतादृष्टिरसंस्कृतशून्यतादृष्टिरत्यन्तशून्यतादृष्टिरनवराग्रशून्यतादृष्टिरनवकारशून्यतादृष्टिः प्रकृतिशून्यतादृष्टिः सर्व्वधर्म्मशून्यतादृष्टिः स्वलक्षणशून्यतादृष्टिरनुपलम्भशून्यतादृष्टिरभावशून्यतादृष्टिः स्वभावशून्यतादृष्टिरभावस्वभावशून्यतादृष्टिर्भवति।

अनेन कारणेन स्मृत्युपस्थानदृष्टिर्भवति। सम्यक् प्रहाणदृष्टिर्ऋद्धिपाददृष्टिरिन्द्रियदृष्टिर्बलदृष्टिर्बोध्यङ्गदृष्टिरार्य्याष्टाङ्गमार्गदृष्टिरार्य्यसत्यदृष्टिर्ध्यानदृष्टिरप्रमाणदृष्टिरारूप्यसमापत्तिदृष्टिर्विमोक्षदृष्टिरनुपूर्व्वविहारदृष्टिः शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखदृष्टिरभिज्ञादृष्टिः समाधिदृष्टिर्धारणीमुखदृष्टिस्तथागतबलदृष्टिर्व्वैशारद्यदृष्टिः प्रतिसम्विदृष्टिः महामैत्रीदृष्टिर्महाकरुणादृष्टिरावेणिकबुद्धधर्म्मदृष्टिः सत्वपरिपाकदृष्टिर्बुद्धक्षेत्रपरिशोधनदृष्टिर्ब्बोधिदृष्टिर्बुद्धदृष्टिर्धर्म्मदृष्टिर्धर्म्मचक्रप्रवर्त्तनदृष्टिः परिनिर्व्वाणदृष्टिर्भवति।

तत्र बोधिसत्वोमहासत्वः प्रज्ञापारमितायां चरन्नुपायकौशल्येनैषां दृष्टिगतानां प्रहाणाय धर्म्मं देशयत्यनुपलम्भयोगेन। अथायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। ममापि भगवान् तत्प्रतिभाति येनार्थेन बोधिसत्वोमहासत्व इत्युच्यते। भगवानाह। प्रतिभातु ते सुभूते। सुभूतिराह। यदपि भगवान् बोधिचित्तमसमचित्तमसाधारणचित्तं सर्व्वश्रावकप्रत्येकबुद्धैस्तत्रापि चित्तेऽसक्तस्तेनार्थेन बोधिसत्वोमहासत्व इत्युच्यते। तत्कस्यहेतोः। तथा हि तत्सर्व्वज्ञताचित्तमनास्रवमपर्य्यापन्नं यदपि तत्सर्व्वज्ञताचित्तमनास्रवमपर्य्या-

पन्नं त्रैधातुके तत्रापि चित्तेऽसक्तः प्रकृतिशून्यतामुपादाय। तस्मा-द्बोधिसत्त्वोमहासत्त्व इति संख्यां गच्छति।

अथायुष्माञ्छारद्वतीपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्। कत-मत्तदायुष्मन् सुभूते बोधिसत्त्वस्य महासत्त्वस्यासमचित्तमसाधारण-चित्तं सर्व्वश्रावकप्रत्येकबुद्धैः। सुभूतिराह। इहायुष्माञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रथम चित्तोत्पादमुपादाय। न कस्यचि-द्धर्मस्योत्पादं न निरोधं समनुपश्यति। न हानिं न वृद्धिं न गतिं नागतिं न संक्लेशं न व्यवदानं। यत्र चायुष्मन् शारद्वतीपुत्र नोत्पादो न निरोधो न हानिर्नवृद्धिर्नगतिर्नागतिर्नसंक्लेशो न व्यवदानं तत्र न श्रावकचित्तं न प्रत्येकचित्तं न प्रत्येकबुद्धचित्तं न बोधिचित्तं न सम्यक्सम्बुद्धचित्तमिदमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्या-समचित्तमसाधारणचित्तं सर्व्वश्रावकप्रत्येकबुद्धैः। आह। यदायुष्मन् सुभूते एवं वदसि। यदपि तत्सर्व्वज्ञताचित्तमनास्रवमपर्यापन्नं तत्रापि चित्तेन सक्त इति। न ह्यायुष्मन् सुभूते रूपमप्यसक्तं वेद-नापि संज्ञापि संस्कारा अपि विज्ञानमप्यसक्तं चक्षुरप्यसक्तं श्रोत्र-मप्यसक्तं घ्राणमप्यसक्तं जिह्वाप्यसक्ता कायोऽप्यसक्तः मनोऽप्यसक्तं। रूपमप्यसक्तं शब्दोऽप्यसक्तो गन्धोऽप्यसक्तो रसोऽप्यसक्तः स्पर्शोऽप्यसक्तः धर्म्माऽप्यसक्ताः। चक्षुर्व्विज्ञानमप्यसक्तं श्रोत्रविज्ञानमप्यसक्तं घ्राण-विज्ञानमप्यसक्तं जिह्वाविज्ञानमप्यसक्तं कायविज्ञानमप्यसक्तं मनो-विज्ञानमप्यसक्तं। चक्षुःसंस्पर्शोऽप्यसक्तः श्रोत्रसंस्पर्शोऽप्यसक्तः घ्राणसंस्पर्शो-ऽप्यसक्तः जिह्वासंस्पर्शोऽप्यसक्तः। कायसंस्पर्शोऽप्यसक्तः मनःसंस्पर्शोऽप्य-सक्तः। चक्षुःसंस्पर्शप्रत्ययवेदनाऽप्यसक्ता श्रोत्रसंस्पर्शप्रत्ययवेदनाऽप्य-

सक्ता। घ्राणसंस्पर्शप्रत्ययवेदनाऽप्यसक्ता। जिह्वासंस्पर्शप्रत्ययवेदनाप्यसक्ता। कायसंस्पर्शप्रत्ययवेदनाऽप्यसक्ता। मनःसंस्पर्शप्रत्ययवेदनाऽप्यसक्ता।

पृथिवीधातुरप्यसक्तः। अब्धातुरप्यसक्तः। तेजोधातुरप्यसक्तः। वायुधातुरप्यसक्तः। आकाशधातुरप्यसक्तः। विज्ञानधातुरप्यसक्तः। अविद्याऽप्यसक्तासंस्काराऽप्यसक्ताः। विज्ञानमप्यसक्तं। नामरूपमप्यसक्तं। षडायतनमप्यसक्तं। स्पर्शोऽप्यसक्तः। वेदनाऽप्यसक्ता। तृष्णाऽप्यसक्ता। उपादानमप्यसक्तं। भावाऽप्यसक्तः। जातिरप्यसक्ता। जरामरणमप्यसक्तं।

दानपारमिताप्यसक्ता। शीलपारमिताप्यसक्ता। क्षान्तिपारमिताप्यसक्ता। वीर्यपारमिताप्यसक्ता। ध्यानपारमिताप्यसक्ता। प्रज्ञापारमिताप्यसक्ता।

अध्यात्मशून्यताप्यसक्ता। बहिर्द्धाशून्यताप्यसक्ता। अध्यात्मबहिर्द्धाशून्यताप्यसक्ता। शून्यताशून्यताप्यसक्ता। महाशून्यताप्यसक्ता। परमार्थशून्यताप्यसक्ता। संस्कृतशून्यताप्यसक्ता। असंस्कृतशून्यताप्यसक्ता। अत्यन्तशून्यताप्यसक्ता। अनवराग्रशून्यताप्यसक्ता। अनवकारशून्यताप्यसक्ता। प्रकृतिशून्यताप्यसक्ता। सर्व्वधर्म्मशून्यताप्यसक्ता। स्वलक्षणशून्यताप्यसक्ता। अनुपलम्भशून्यताप्यसक्ता। अभावशून्यताप्यसक्ता। स्वभावशून्यताप्यसक्ता। अभावस्वभावशून्यताप्यसक्ता।

स्मृत्युपस्थानान्यप्यसक्तानि। सम्यक्प्रहाणान्यप्यसक्तानि। ऋद्धिपादाप्यसक्ताः। इन्द्रियान्यप्यसक्तानि। बलान्यप्यसक्तानि। बोध्यङ्गान्यप्यसक्तानि। आर्य्याष्टाङ्गमार्गोऽप्यसक्तः। आर्य्यसत्यान्यप्यसक्तानि।

ध्यानान्यप्यसक्तानि। अप्रमाणान्यप्यसक्तानि। आरूप्यसमापत्तयोऽप्यसक्ताः। विमोक्षाप्यसक्ताः। अनुपूर्व्वविहारसमापत्तयोऽप्यसक्ताः। शून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यप्यसक्तानि। अभिज्ञाप्यसक्ताः। समाधयोऽप्यसक्ता। धारणीमुखान्यप्यसक्तानि। तथागतबलान्यप्यसक्तानि। वैशारद्यान्यप्यसक्तानि। प्रतिसम्विदोऽप्यसक्ताः। महामैत्र्यप्यसक्ता। महाकरुणाप्यसक्ता। आवेणिकबुद्धधर्म्मा अप्यसक्ताः। सर्व्वज्ञताप्यसक्ता। मार्गाकारज्ञताप्यसक्ता। सर्व्वाकारज्ञताप्यसक्ता।

सुभूतिराह। एवमेतदायुष्मञ्छारद्वतीपुत्र रूपमप्यसक्तं। वेदनाऽप्यसक्ता। संज्ञाप्यसक्ता। संस्काराप्यसक्ताः। विज्ञानमप्यसक्तं। चक्षुरप्यसक्तं। श्रोत्रमप्यसक्तं। घ्राणमप्यसक्तं। जिह्वाप्यसक्तं। कायोऽप्यसक्तः। मनोप्यसक्तं। रूपमप्यसक्तं। शब्दोऽप्यसक्तः। गन्धोऽप्यसक्तः। रसोऽप्यसक्तः। स्पर्शोप्यसक्तः। धर्म्मा अप्यसक्ताः। चक्षुर्व्विज्ञानमप्यसक्तं। श्रोत्रविज्ञानमप्यसक्तं। घ्राणविज्ञानमप्यसक्तं। जिह्वाविज्ञानमप्यसक्तं। कायविज्ञानमप्यसक्तं। मनोविज्ञानमप्यसक्तं। चक्षुःसंस्पर्शोऽप्यसक्तः। श्रोत्रसंस्पर्शोऽप्यसक्तः। घ्राणसंस्पर्शोऽप्यसक्तः। जिह्वासंस्पर्शोऽप्यसक्तः। कायसंस्पर्शोऽप्यसक्तः। मनःसंस्पर्शोऽप्यसक्तः। चक्षुःसंस्पर्शप्रत्ययवेदनाप्यसक्ता। श्रोत्रसंस्पर्शप्रत्ययवेदनाप्यसक्ता। घ्राणसंस्पर्शप्रत्ययवेदनाप्यसक्ता। जिह्वासंस्पर्शप्रत्ययवेदनाप्यसक्ता। कायसंस्पर्शप्रत्ययवेदनाप्यसक्ता। मनःसंस्पर्शप्रत्ययवेदनाप्यसक्ता।

पृथिवीधातुरप्यसक्तः। अब्धातुरप्यसक्तः। तेजोधातुरप्यसक्तः। वायुधातुरप्यसक्तः। आकाशधातुरप्यसक्तः। विज्ञानधातुरप्यसक्तः। अविद्याऽप्यसक्ता। संस्काराऽप्यसक्ताः। विज्ञानमप्यसक्तं। नामरूप-

मप्यसक्तं। षडायतनमप्यसक्तं। स्पर्शोऽप्यसक्तः। वेदनाप्यसक्ता। तृष्णाप्यसक्ता। उपादानमप्यसक्तं। भवोऽप्यसक्तः। जातिरप्यसक्ता। जरामरणमप्यसक्तं।

दानपारमिताप्यसक्ता। शीलपारमिताप्यसक्ता। क्षान्तिपारमिताप्यसक्ता। वीर्य्यपारमिताप्यसक्ता। ध्यानपारमिताप्यसक्ता। प्रज्ञापारमिताप्यसक्ता।

अध्यात्मशून्यताप्यसक्ता। बहिर्द्धाशून्यताप्यसक्ता। अध्यात्मबहिर्द्धाशून्यताप्यसक्ता। शून्यताशून्यताप्यसक्ता। महाशून्यताप्यसक्ता। परमार्थशून्यताप्यसक्ता। संस्कृतशून्यताप्यसक्ता। असंस्कृतशून्यताप्यसक्ता। अत्यन्तशून्यताप्यसक्ता। अनवराग्रशून्यताप्यसक्ता। अनवकारशून्यताप्यसक्ता। प्रकृतिशून्यताप्यसक्ता। सर्व्वधर्म्मशून्यताप्यसक्ता। स्वलक्षणशून्यताप्यसक्ता। अनुपलम्भशून्यताप्यसक्ता। अभावशून्यताप्यसक्ता। स्वभावशून्यताप्यसक्ता। अभावस्वभावशून्यताप्यसक्ता।

स्मृत्युपस्थानान्यप्यसक्तानि। सम्यक्प्रहाणान्यप्यसक्तानि। ऋद्धिपादाप्यसक्ताः। इन्द्रियाण्यप्यसक्तानि। बलान्यप्यसक्तानि। बोध्यङ्गान्यप्यसक्तानि। आर्य्याष्टाङ्गमार्गोप्यसक्तः। आर्य्यसत्यान्यप्यसक्तानि। ध्यानान्यप्यसक्तानि। अप्रमाणान्यप्यसक्तानि। आरूप्यसमापत्तयोऽप्यसक्तानि। विमोक्षाप्यसक्ताः। अनुपूर्व्वविहारसमापत्तयोऽप्यसक्ताः। शून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यप्यसक्तानि। अभिज्ञाप्यसक्ताः। समाधयोऽप्यसक्ताः। धारणीमुखान्यप्यसक्तानि। तथागतबलान्यप्यसक्तानि। वैशारद्यान्यप्यसक्तानि। प्रतिसम्विदोऽप्यसक्ताः। महामैत्र्यप्यसक्ता। महाकरुणाप्यसक्ता। आवेणिकबुद्ध-

ध्यानान्यप्रमक्षानि। अप्रमाणान्यप्रमक्षानि। आरूप्यसमापत्तयो-ऽप्रमक्षाः। विमोक्षाप्रमक्षाः। अनुपूर्व्वविहारसमापत्तयोऽप्रमक्षाः। शून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यप्रमक्षानि। अभिज्ञाप्र-मक्षाः। समाधयोऽप्रमक्षा। धारणीमुखान्यप्रमक्षानि। तथागत-बलान्यप्रमक्षानि। वैशारद्यान्यप्रमक्षानि। प्रतिसम्विदोऽप्रमक्षाः। महामैत्र्यप्रमक्षा। महाकरुणाप्रमक्षा। आवेणिकबुद्धधर्म्माप्रमक्षाः। सर्व्वज्ञताप्रमक्षा। मार्गाकारज्ञताप्रमक्षा। सर्व्वाकारज्ञताप्रमक्षा।

सुभूतिराह। एवमेतदायुष्मञ्छारद्वतीपुत्र रूपमप्रमक्षं। वेदना-ऽप्रमक्षा। संज्ञाप्रमक्षा। संस्कारप्रमक्षाः। विज्ञानप्रमक्षं। चक्षु-रप्रमक्षं। श्रोत्रमप्रमक्षं। घ्राणमप्रमक्षं। जिह्वाप्रमक्षं। कायोऽप्र-मक्षः। मनोप्रमक्षं। रूपमप्रमक्षं। शब्दोऽप्रमक्षः। गन्धोऽप्रमक्षः। रसोऽप्रमक्षः। स्पर्शोप्रमक्षः। धर्म्माप्रमक्षाः। चक्षुर्व्विज्ञानमप्र-मक्षं। श्रोत्रविज्ञानमप्रमक्षं। घ्राणविज्ञानमप्रमक्षं। जिह्वाविज्ञान-मप्रमक्षं। कायविज्ञानमप्रमक्षं। मनोविज्ञानमप्रमक्षं। चक्षुः-संस्पर्शोऽप्रमक्षः। श्रोत्रसंस्पर्शोऽप्रमक्षः। घ्राणसंस्पर्शोऽप्रमक्षः। जिह्वा-संस्पर्शोऽप्रमक्षः। कायसंस्पर्शोऽप्रमक्षः। मनःसंस्पर्शोऽप्रमक्षः। चक्षुः-संस्पर्शप्रत्ययवेदनाप्रमक्षा। श्रोत्रसंस्पर्शप्रत्ययवेदनाप्रमक्षा। घ्राण-संस्पर्शप्रत्ययवेदनाप्रमक्षा। जिह्वासंस्पर्शप्रत्ययवेदनाप्रमक्षा। काय-संस्पर्शप्रत्ययवेदनाप्रमक्षा। मनःसंस्पर्शप्रत्ययवेदनाप्रमक्षा।

पृथिवीधातुरप्रमक्षः। अब्धातुरप्रमक्षः। तेजोधातुरप्रमक्षः। वायुधातुरप्रमक्षः। आकाशधातुरप्रमक्षः। विज्ञानधातुरप्रमक्षः। अविद्याऽप्रमक्षा। संस्काराऽप्रमक्षाः। विज्ञानमप्रमक्षं। नामरूप-

मप्यसक्तं। षडायतनमप्यसक्तं। स्पर्शोऽप्यसक्तः। वेदनाप्यसक्ता। तृष्णाप्यसक्ता। उपादानमप्यसक्तं। भवोऽप्यसक्तः। जातिरप्यसक्ता। जरामरणमप्यसक्तं।

दानपारमिताप्यसक्ता। शीलपारमिताप्यसक्ता। क्षान्तिपारमिताप्यसक्ता। वीर्य्यपारमिताप्यसक्ता। ध्यानपारमिताप्यसक्ता। प्रज्ञापारमिताप्यसक्ता।

अध्यात्मशून्यताप्यसक्ता। बहिर्द्धाशून्यताप्यसक्ता। अध्यात्मबहिर्द्धाशून्यताप्यसक्ता। शून्यताशून्यताप्यसक्ता। महाशून्यताप्यसक्ता। परमार्थशून्यताप्यसक्ता। संस्कृतशून्यताप्यसक्ता। असंस्कृतशून्यताप्यसक्ता। अत्यन्तशून्यताप्यसक्ता। अनवराग्रशून्यताप्यसक्ता। अनवकारशून्यताप्यसक्ता। प्रकृतिशून्यताप्यसक्ता। सर्व्वधर्म्मशून्यताप्यसक्ता। स्वलक्षणशून्यताप्यसक्ता। अनुपलम्भशून्यताप्यसक्ता। अभावशून्यताप्यसक्ता। स्वभावशून्यताप्यसक्ता। अभावस्वभावशून्यताप्यसक्ता।

स्मृत्युपस्थानान्यप्यसक्तानि। सम्यक्प्रहाणान्यप्यसक्तानि। ऋद्धिपादाप्यसक्ताः। इन्द्रियान्यप्यसक्तानि। बलान्यप्यसक्तानि। बोध्यङ्गान्यप्यसक्तानि। आर्य्याष्टाङ्गमार्गोऽप्यसक्तः। आर्य्यसत्यान्यप्यसक्तानि। ध्यानान्यप्यसक्तानि। अप्रमाणान्यप्यसक्तानि। आरूप्यसमापत्तयोऽप्यसक्ताः। विमोक्षाप्यसक्ताः। अनुपूर्व्वविहारसमापत्तयोऽप्यसक्ताः। शून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यप्यसक्तानि। अभिज्ञाप्यसक्ताः। समाधयोऽप्यसक्ताः। धारणीमुखान्यप्यसक्तानि। तथागतबलान्यप्यसक्तानि। वैशारद्यान्यप्यसक्तानि। प्रतिसम्विदोऽप्यसक्ताः। महामैत्र्यप्यसक्ता। महाकरुणाप्यसक्ता। आवेणिकबुद्ध-

धर्म्माप्यसक्ताः। सर्व्वज्ञताप्यसक्ता। मार्गाकारज्ञताप्यसक्ता। सर्व्वाकारज्ञताप्यसक्ता।

आह। यदप्यायुष्मान् सुभूतिरेवमाह। तदपि सर्व्वज्ञताचित्तमनास्रवमपर्य्यापन्नमिति। तत्र आयुष्मन् सुभूते बालपृथग्जनानामपि चित्तमनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। श्रावकप्रत्येकबुद्धानामपि बुद्धानामपि भगवतामपि चित्तमनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। सुभूतिराह। आयुष्मन् शारद्वतीपुत्र बालपृथग्जनानामपि चित्तमनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। श्रावकानामपि चित्तमनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। प्रत्येकबुद्धानामपि चित्तमनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। बुद्धानामपि भगवतां चित्तमनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। ननायुष्मन् सुभूते रूपमप्यनास्रवाऽपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। वेदनाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। संज्ञाप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। संस्कारा अप्यनास्रवा अपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। विज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। चक्षुरप्यना-
५ स्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। श्रोत्रमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। घ्राणमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। जिह्वाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। कायोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। मनोऽप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। रूपमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। शब्दोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यता-

मुपादाय। गन्धोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। रसोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। स्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। धर्म्मा अप्यनास्रवा अपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। चक्षुर्व्विज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। श्रोत्रविज्ञानमप्यनास्रवमपर्य्यापन्न प्रकृतिशून्यतामुपादाय। घ्राणविज्ञानमप्यनास्रवमपर्य्यापन्न प्रकृतिशून्यतामुपादाय। जिह्वाविज्ञानमप्यनास्रवमपर्य्यापन्न प्रकृतिशून्यतामुपादाय। कायविज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। मनोविज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। चक्षुःसंस्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। श्रोत्रसंस्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। घ्राणसंस्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। जिह्वासंस्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। कायसंस्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। मनःसंस्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। चक्षुःसंस्पर्शजा वेदनाप्यनास्रवाऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। श्रोत्रसंस्पर्शजा वेदनाऽप्यनास्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। घ्राणसंस्पर्शजा वेदनाप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। जिह्वासंस्पर्शजा वेदनाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। कायसंस्पर्शजा वेदनाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। मनःसंस्पर्शजा वेदनाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय।

पृथिवीधातुरप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय।

अब्धातुरप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। तेजोधातुरप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। वायुधातुरप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। आकाशधातुरप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। विज्ञानधातुरप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। अविद्याऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। संस्कारा अप्यनास्रवाः अपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। विज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। नामरूपमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। षड़ायतनमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। स्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। वेदनाप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। तृष्णाप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। उपादानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। भावाऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। जातिरप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। जरामरणमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय।

दानपारमिताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। शीलपारमिताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। चान्तिपारमिताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। वीर्य्यपारमिताऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। ध्यानपारमिताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। प्रज्ञापारमिताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय।

अध्यात्मशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय।

बहिर्द्धाशून्यताऽध्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । अध्यात्मबहिर्द्धाशून्यताध्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । शून्यताशून्यताऽध्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । महा-शून्यताध्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । परमार्थ-शून्यताध्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । संस्कृतशून्यता-ध्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । असंस्कृतशून्यता-ध्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । अत्यन्तशून्यता-ध्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । अनवराग्रशून्यता-ध्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । अनवकारशून्यता-ध्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । प्रकृतिशून्यताध्यना-श्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । सर्व्वधर्म्मशून्यताध्यनाश्रवा-ऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । स्वलक्षणशून्यताध्यनाश्रवाऽपर्य्या-पन्ना प्रकृतिशून्यतामुपादाय । अनुपलम्भशून्यताध्यनाश्रवाऽपर्य्या-पन्ना प्रकृतिशून्यतामुपादाय । अभावशून्यताध्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । स्वभावशून्यताध्यनाश्रवाऽपर्य्यापन्ना प्रकृति-शून्यतामुपादाय । अभावस्वभावशून्यताध्यनाश्रवाऽपर्य्यापन्ना प्रकृति-शून्यतामुपादाय ।

स्मृत्युपस्थानान्यध्यनाश्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपा-दाय । सम्यक्प्रहाणान्यध्यनाश्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपा-दाय । ऋद्धिपादाध्यनाश्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय । इन्द्रियाण्यध्यनाश्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय । बला-न्यध्यनाश्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय । बोध्यङ्गान्य-

प्यनाश्रवान्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। मार्गोऽप्यनाश्रवो-ऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। आर्य्यसत्यान्यप्यनाश्रवाऽन्य-पर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। ध्यानान्यप्यनाश्रवाण्यपर्य्या-पन्नानि प्रकृतिशून्यतामुपादाय। अप्रमाणान्यप्यनाश्रवाण्यपर्य्या-पन्नानि प्रकृतिशून्यतामुपादाय। आरूप्यसमापत्तयोऽप्यनाश्रवा-ऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। विमोचाप्यनाश्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। अनुपूर्व्वविहारसमापत्तयोऽप्यनाश्रवा-ऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। शून्यतानिमित्ताप्रणिहित-विमोचमुखान्यप्यनाश्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। अभिज्ञाप्यनाश्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। समाधयो-ऽप्यनाश्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। धारणीमुखान्यना-श्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। तथागतबलान्यप्यना-श्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। वैशारद्यान्यप्यनाश्रवा-ण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। प्रतिसम्विदोऽप्यनाश्रवा-ऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। महामैत्र्यप्यनाश्रवाऽपर्य्या-पन्ना प्रकृतिशून्यतामुपादाय। महाकरुणाप्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। आवेणिकबुद्धधर्म्माऽप्यनाश्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। सर्व्वज्ञताऽप्यनाश्रवाऽपर्य्यापन्ना प्रकृति-शून्यतामुपादाय। मार्गाकारज्ञताऽप्यनाश्रवाऽपर्य्यापन्ना प्रकृति-शून्यतामुपादाय। सर्व्वाकारज्ञताऽप्यनाश्रवाऽपर्य्यापन्ना प्रकृति-शून्यतामुपादाय।

सुभूतिराह। एवमेतदायुष्मन् शारद्वतीपुत्र यथावदसि।

रूपमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय । वेदनाप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । संज्ञाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । संस्काराऽप्यनास्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय । विज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय ।

चक्षुरप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय । श्रोत्रमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय । घ्राणमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय । जिह्वाप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । कायोऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय । मनोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय । रूपमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय । शब्दोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय । गन्धोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय । रसोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय । स्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय । धर्माऽप्यनास्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय ।

चक्षुर्विज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय । श्रोत्रविज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय । घ्राणविज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय । जिह्वाविज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय । कायविज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय । मनोविज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय । चक्षुःसंस्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय । श्रोत्रसंस्पर्शोऽप्यनास्रवोऽपर्य्या-

पन्नः प्रकृतिशून्यतामुपादाय। घ्राणसंस्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। जिह्वासंस्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। कायसंस्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। मनःसंस्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। चक्षुःसंस्पर्शजावेदनाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। श्रोत्रसंस्पर्शजावेदनाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। घ्राणसंस्पर्शजावेदनाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। जिह्वासंस्पर्शजावेदनाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। कायसंस्पर्शजावेदनाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। मनःसंस्पर्शजावेदनाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय।

पृथिवीधातुरप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। अब्धातुरप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। तेजोधातुरप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। वायुधातुरप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। आकाशधातुरप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। अविद्याऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। संस्काराऽप्यनास्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। विज्ञानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। नामरूपमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। षडायतनमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय। स्पर्शोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। वेदनाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। तृष्णाप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। उपादानमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यता-

मुपादाय। भवोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। जातिरप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। जरामरणमप्यनास्रवमपर्य्यापन्नं प्रकृतिशून्यतामुपादाय।

दानपारमिताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। शीलपारमिताप्यनास्रवाऽर्य्यापन्ना प्रकृतिशून्यतामुपादाय। क्षान्तिपारमिताप्यनास्रवाऽर्य्यापन्ना प्रकृतिशून्यतामुपादाय। वीर्य्यपारमिताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। ध्यानपारमिताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। प्रज्ञापारमिताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय।

अध्यात्मशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। बहिर्द्धाशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। अध्यात्मबहिर्द्धाशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। शून्यताशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। महाशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। परमार्थशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। संस्कृतशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। असंस्कृतशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। अत्यन्तशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। अनवराग्रशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। अनवकारशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। प्रकृतिशून्यताऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। सर्व्वधर्म्मशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। स्वलक्षणशून्यताप्यनास्रवाऽपर्य्यापन्ना

प्रकृतिशून्यतामुपादाय। अनुपलम्भशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। अभावशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। स्वभावशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। अभावस्वभावशून्यताप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय।

स्मृत्युपस्थानान्यप्यनास्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। सम्यक्प्रहाणान्यप्यनास्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। ऋद्धिपादाऽप्यनास्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। इन्द्रियाण्यप्यनास्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। बलाण्यप्यनास्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। बोध्यङ्गाण्यनास्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। आर्य्याष्टाङ्गमार्गोऽप्यनास्रवोऽपर्य्यापन्नः प्रकृतिशून्यतामुपादाय। आर्य्यसत्यान्यप्यनास्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। ध्यानान्यप्यनास्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। अप्रमाणान्यप्यनास्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। आरूप्यसमापत्तयोऽप्यनास्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। विमोक्षाऽप्यनास्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। अनुपूर्व्वविहारसमापत्तयोऽप्यनास्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। शून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यप्यनास्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। अभिज्ञाऽप्यनास्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। समाधयोऽप्यनास्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। धारणीमुखान्यप्यनास्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। तथागतबलाण्य-

प्यनास्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। वैशारद्यान्यप्यना-स्रवाण्यपर्य्यापन्नानि प्रकृतिशून्यतामुपादाय। प्रतिसम्विदोऽप्यना-स्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। महामैत्र्यप्यनास्रवाऽपर्य्या-पन्ना प्रकृतिशून्यतामुपादाय। महाकरुणाऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय। आवेणिकबुद्धधर्म्मोऽप्यनास्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपादाय। सर्व्वज्ञताऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यता-मुपादाय। मार्गाकारज्ञताऽप्यनास्रवाऽपर्य्यापन्नाः प्रकृतिशून्यतामुपा-दाय। सर्व्वाकारज्ञताऽप्यनास्रवाऽपर्य्यापन्ना प्रकृतिशून्यतामुपादाय।

आह। यदप्यायुष्मान् सुभूतिरेवमाह। अचित्तत्वात्तथापि चित्तेऽसक्त इति। न त्वायुष्मन् सुभूते रूपमपि रूपेऽसक्तं। अवेद-नापि वेदनायामसक्ता। असंज्ञापि संज्ञायामसक्ता। असंस्कारोऽपि संस्कारेष्वसक्ताः। अविज्ञानमपि विज्ञानेऽसक्तं। अचक्षुरपि चक्षु-ष्यसक्तं। अश्रोत्रमपि श्रोत्रेऽसक्तं। अघ्राणमपि घ्राणेऽसक्तं। अजिह्वापि जिह्वायामसक्ता। अकायोऽपि कायेऽसक्तः। अमनोऽपि मनस्यसक्तं। अरूपमपि रूपेऽसक्तं। अशब्दोऽपि शब्देऽसक्तः। अगन्धोऽपि गन्धे-ऽसक्तः। अरसोऽपि रसेऽसक्तः। अस्पर्शोऽपि स्पर्शेऽसक्तः। अधर्म्मोऽपि धर्म्मेष्वसक्ताः। अचक्षुर्व्विज्ञानमपि चक्षुर्व्विज्ञानेऽसक्तं। अश्रोत्रविज्ञान-मपि श्रोत्रविज्ञानेऽसक्तं। अघ्राणविज्ञानमपि घ्राणविज्ञानेऽसक्तं। अजिह्वाविज्ञानमपि जिह्वाविज्ञानेऽसक्तं। अकायविज्ञानमपि कायविज्ञानेऽसक्तं। अमनोविज्ञानमपि मनोविज्ञानेऽसक्तं। अचक्षुः-संस्पर्शोऽपि चक्षुःसंस्पर्शेऽसक्तः। अश्रोत्रसंस्पर्शोऽपि श्रोत्रसंस्पर्शेऽसक्तः। अघ्राणसंस्पर्शोऽपि घ्राणसंस्पर्शेऽसक्तः। अजिह्वासंस्पर्शोऽपि जिह्वा-

संस्पर्शेऽसक्तः । अकायसंस्पर्शोऽपि कायसंस्पर्शेऽसक्तः । अमनःसंस्पर्शोऽपि मनःसंस्पर्शेऽसक्तः । अचक्षुःसंस्पर्शजावेदनापि चक्षुःसंस्पर्शजावेदनायामसक्ता । अश्रोत्रसंस्पर्शजापि वेदनाश्रोत्रसंस्पर्शजावेदनायामसक्ता । अघ्राणसंस्पर्शजापिवेदना घ्राणसंस्पर्शजावेदनायासक्ता । अजिह्वासंस्पर्शजापि वेदनाजिह्वासंस्पर्शजावेदनायामसक्ता । अकायसंस्पर्शजापि वेदनाकायसंस्पर्शजावेदनायामसक्ता । अमनःसंस्पर्शजापि वेदनामनःसंस्पर्शजावेदनायामसक्ता ।

अपृथिवीधातुरपि पृथिवीधातावसक्तः । अनब्धातुरपि अब्धातावसक्तः । अतेजोधातुरपि तेजोधातावसक्तः । अवायुधातुरपि वायुधातावसक्तः । अनाकाशधातुरपि आकाशधातावसक्तः । अविज्ञानधातुरपि विज्ञानधातावसक्तः । अनविद्याप्यविद्यायामसक्ता । असंस्कारा अपि संस्कारेष्वसक्ताः । अविज्ञानमपि विज्ञानेऽसक्तं । अनामरूपमपि नामरूपेऽसक्तं । अषडायतनमपि षडायतनेऽसक्तं । अस्पर्शोऽपि स्पर्शेऽसक्तः । अवेदनापि वेदनायामसक्ता । अतृष्णापि तृष्णायामसक्ता । अनुपादानमप्युपादानेऽसक्तं । अभवोऽपि भवेऽसक्तः । अजातिरपि जातावसक्ता । अजरामरणमपि जरामरणेऽसक्तं* ।

अदानपारमितापि दानपारमितायामसक्ता । अशीलपारमितापि शीलपारमितायामसक्ता । अक्षान्तिपारमितापि क्षान्तिपारमितायामसक्ता । अवीर्य्यपारमितापि वीर्य्यपारमितायामसक्ता । अध्यानपारमितापि ध्यानपारमितायामसक्ता । अप्रज्ञापारमितापि प्रज्ञापारमितायामसक्ता ।

---

* *Vide* p. 1296.

अनध्यात्मशून्यताप्यध्यात्मशून्यतायामसक्ता । अवहिर्द्धाशून्यतापि वहिर्द्धाशून्यतायामसक्ता । अनध्यात्मवहिर्द्धाशून्यतापि अध्यात्मवहिर्द्धाशून्यतायामसक्ता । अशून्यताशून्यतापि शून्यताशून्यतायामसक्ता । अमहाशून्यतापि महाशून्यतायामसक्ता । अपरमार्थशून्यतापि परमार्थशून्यतायामसक्ता । असंस्कृतशून्यतापि संस्कृतशून्यतायामसक्ता । अनसंस्कृतशून्यतापि असंस्कृतशून्यतायामसक्ता । अनत्यन्तशून्यताप्यत्यन्तशून्यतायामसक्ता । अननवराग्रशून्यताप्यनवराग्रशून्यतायामसक्ता । अननवकारशून्यताप्यनवकारशून्यतायामसक्ता । अप्रकृतिशून्यतापि प्रकृतिशून्यतायामसक्ता । असर्व्वधर्म्मशून्यतापि सर्व्वधर्म्मशून्यतायामसक्ता । अस्वलक्षणशून्यतापि स्वलक्षणशून्यतायामसक्ता । अननुपलम्भशून्यताप्यनुपलम्भशून्यतायामसक्ता । अनभावशून्यताप्यभावशून्यतायामसक्ता । अस्वभावशून्यतापि स्वभावशून्यतायामसक्ता । अनभावस्वभावशून्यताप्यभावस्वभावशून्यतायामसक्ता ।

अस्मृत्युपस्थानान्यपि स्मृत्युपस्थानेष्वसक्तानि । असम्यक्प्रहाणान्यपि सम्यक्प्रहाणेष्वसक्तं । अनृद्धिपादाऽपि ऋद्धिपादेष्वसक्ताः । अनिन्द्रियाण्यपीन्द्रियेष्वसक्तानि । अबलान्यपि बलेष्वसक्तानि । अबोध्यङ्गान्यपि बोध्यङ्गेष्वसक्तानि । अनार्य्याष्टाङ्गमार्गोऽप्यार्य्याष्टाङ्गमार्गेऽसक्तः । अनार्य्यसत्यान्यप्यार्य्यसत्येष्वसक्तानि । अध्यानान्यपि ध्यानेष्वसक्तानि । अनप्रमाणान्यप्यप्रमाणेष्वसक्तानि । अनारूप्यसमापत्तयोऽप्यारूप्यसमापत्तिष्वसक्ताः । अविमोक्षाऽपि विमोक्षेष्वसक्ताः । अननुपूर्व्वविहारसमापत्तयोऽप्यनुपूर्व्वविहारसमापत्तिष्वसक्ताः । अशू-

न्यतानिमित्ताप्रणिहितविमोक्षमुखान्यपि शून्यतानिमित्ताप्रणिहितविमोक्षमुखेष्वसक्तानि। अनभिज्ञाप्यभिज्ञास्वसक्ताः। असमाधयोऽपि समाधिष्वसक्ताः। अधारणीमुखान्यपि धारणीमुखेष्वसक्तानि। अतथागतबलान्यपि तथागतबलेष्वसक्तानि। अवैशारद्यान्यपि वैशारद्येष्वसक्तानि। अप्रतिसम्विदोऽपि प्रतिसम्वित्स्वसक्ताः। अमहामैत्र्यपि महामैत्र्यामसक्ता। अमहाकरुणापि महाकरुणायामसक्ता। अनावेणिकबुद्धधर्मा अप्यावेणिकबुद्धधर्मेष्वसक्ताः। असर्वज्ञतापि सर्वज्ञतायामसक्ता। अमार्गाकारज्ञतापि मार्गाकारज्ञतायामसक्ता। असर्व्वाकारज्ञतापि सर्व्वाकारज्ञतायामसक्ता।

आह। एवमेतदायुष्मञ्छारद्वतीपुत्र। अरूपमपि रूपेऽसक्तं। अवेदनापि वेदनायामसक्ता। असंज्ञापि संज्ञायामसक्ता। असंस्कारा अपि संस्कारेष्वसक्ताः। अविज्ञानमपि विज्ञानेऽसक्तं। अचक्षुरपि चक्षुष्यसक्तं। अश्रोत्रमपि श्रोत्रेऽसक्तं। अघ्राणमपि घ्राणेऽसक्तं। अजिह्वापि जिह्वायामसक्ता। अकायोऽपि कायेऽसक्तः। अमनोऽपि मनस्यसक्तं। अरूपमपि रूपेऽसक्तं। अशब्दोऽपि शब्देऽसक्तः। अगन्धोऽपि गन्धेऽसक्तः। अरसोऽपि रसेऽसक्तः। अस्पर्शोऽपि स्पर्शेऽसक्तः। अधर्मा अपि धर्मेष्वसक्ताः। अचक्षुर्व्विज्ञानमपि चक्षुर्व्विज्ञानेऽसक्तं। अश्रोत्रविज्ञानमपि श्रोत्रविज्ञानेऽसक्तं। अघ्राणविज्ञानमपि घ्राणविज्ञानेऽसक्तं। अजिह्वाविज्ञानमपि जिह्वाविज्ञानेऽसक्तं। अकायविज्ञानमपि कायविज्ञानेऽसक्तं। अमनोविज्ञानमपि मनोविज्ञानेऽसक्तं। अचक्षुःसंस्पर्शोऽपि चक्षुःसंस्पर्शेऽसक्तः। अश्रोत्रसंस्पर्शोऽपि श्रोत्रसंस्पर्शेऽसक्तः। अघ्राणसंस्पर्शोऽपि घ्राणसंस्पर्शेऽसक्तः।

अजिह्वासंस्पर्शोऽपि जिह्वासंस्पर्शेऽसक्तः। अकायसंस्पर्शोऽपि कायसंस्पर्शेऽसक्तः। अमनःसंस्पर्शोऽपि मनःसंस्पर्शेऽसक्तः। अचक्षुःसंस्पर्शजावेदनापि चक्षुःसंस्पर्शजावेदनायामसक्ता। अश्रोत्रसंस्पर्शजावेदनापि श्रोत्रसंस्पर्शजावेदनायामसक्ता। अघ्राणसंस्पर्शजावेदनापि घ्राणसंस्पर्शजावेदनायामसक्ता। अजिह्वासंस्पर्शजावेदनापि जिह्वासंस्पर्शजावेदनायामसक्ता। अकायसंस्पर्शजावेदनापि कायसंस्पर्शजावेदनायामसक्ता। अमनःसंस्पर्शजावेदनापि मनःसंस्पर्शजावेदनायामसक्ता।

अपृथिवीधातुरपि पृथिवीधातावसक्तः। अनब्धातुरप्यब्धातावसक्तः। अतेजोधातुरपि तेजोधातावसक्तः। अवायुधातुरपि वायुधातावसक्तः। अनाकाशधातुरप्याकाशधातावसक्तः। अविज्ञानधातुरपि विज्ञानधातावसक्तः। अनविद्याप्यविद्यायामसक्ता। असंस्कारा अपि संस्कारेष्वसक्ताः। अविज्ञानमपि विज्ञानेऽसक्तं। अनामरूपमपि नामरूपेऽसक्तं। अषडायतनमपि षडायतनेऽसक्तं। अस्पर्शोऽपि स्पर्शेऽसक्तः। अवेदनापि वेदनायामसक्ता। अतृष्णापि तृष्णायामसक्ता। अनुपादानमप्युपादानेऽसक्तं। अभवोऽपि भवेऽसक्तः। अजातिरपि जातावसक्तः। अजरामरणमपि जरामरणेऽसक्तं*।

अदानपारमितापि दानपारमितायामसक्ता। अशीलपारमिताऽपि शीलपारमितायामसक्ता। अक्षान्तिपारमिताऽपि क्षान्तिपारमितायामसक्ता। अवीर्य्यपारमिताऽपि वीर्य्यपारमितायामसक्ता। अध्यानपारमितापि ध्यानपारमितायामसक्ता। अप्रज्ञापारमिताऽपि प्रज्ञापारमितायामसक्ता। अनध्यात्मशून्यतापि अध्यात्म-

* सर्व्व आदर्शेषु एवं। *Vide* p 1293.

शून्यतायामसक्ता। अबहिर्द्धाशून्यतापि बहिर्द्धाशून्यतायामसक्ता। अनध्यात्मबहिर्द्धाशून्यतापि अध्यात्मबहिर्द्धाशून्यतायामसक्ता। अशून्यताशून्यतापि शून्यताशून्यतायामसक्ता। अमहाशून्यताऽपि महाशून्यतायामसक्ता। अपरमार्थशून्यतापि परमार्थशून्यतायामसक्ता। असंस्कृतशून्यताऽपि संस्कृतशून्यतायामसक्ता। अनसंस्कृतशून्यताऽपि असंस्कृतशून्यतायामसक्ता। अनत्यन्तशून्यताऽपि अत्यन्तशून्यतायामसक्ता। अननवराग्रशून्यताप्यनवराग्रशून्यतायामसक्ता। अननवकारशून्यताप्यनवकारशून्यतायामसक्ता। अप्रकृतिशून्यतापि प्रकृतिशून्यतायामसक्ता। असर्व्वधर्मशून्यतापि सर्व्वधर्मशून्यतायामसक्ता। अस्वलक्षणशून्यतापि स्वलक्षणशून्यतायामसक्ता। अननुपलम्भशून्यताप्यनुपलम्भशून्यतायामसक्ता। अनभावशून्यताप्यभावशून्यतायामसक्ता। अस्वभावशून्यतापि स्वभावशून्यतायामसक्ता। अनभावस्वभावशून्यताप्यभावस्वभावशून्यतायामसक्ता।

अस्मृत्युपस्थानान्यपि स्मृत्युपस्थानेष्वसक्तानि। असम्यक्प्रहाणान्यपि सम्यक्प्रहाणेष्वसक्तानि। अनृद्धिपादाऋद्धिपादेष्वसक्ताः। अनीन्द्रियानीन्द्रियेष्वसक्तानि। अबलान्यपि बलेष्वसक्तानि। अबोध्यङ्गान्यपि बोध्यङ्गेष्वसक्तानि। अनार्य्याष्टाङ्गमार्गोऽप्यार्य्याष्टाङ्गमार्गेऽसक्तः। अनार्यसत्यान्यप्यार्यसत्येष्वसक्तानि। अध्यानान्यपि ध्यानेष्वसक्तानि। अनप्रमाणान्यप्यप्रमाणेष्वसक्तानि। अनारूप्यसमापत्तयोऽप्यारूप्यसमापत्तिष्वसक्ताः। अविमोक्षाऽपि विमोक्षेष्वसक्ताः। अनानुपूर्व्वविहारसमापत्तयोऽनुपूर्व्वविहारसमापत्तिष्वसक्ताः। अशून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यपि शून्यतानिमित्ताप्रणिहितवि-

मोक्षसुखेष्वसक्तानि। अनभिज्ञाप्यनभिज्ञास्वसक्ताः। असमाधयोऽपि समाधिष्वसक्ताः। अधारणीमुखान्यपि धारणीमुखेष्वसक्तानि। अतथागतबलान्यपि तथागतबलेष्वसक्तानि। अवैशारद्यान्यपि वैशारद्येष्वसक्तानि। अप्रतिसम्विदोऽपि प्रतिसम्वित्स्वसक्ताः। अमहामैत्र्यपि महामैत्र्यामसक्ता। अमहाकरुणापि महाकरुणायामसक्ता। अनावेणिकबुद्धधर्म्माप्यावेणिकबुद्धधर्म्मेष्वसक्ताः। असर्व्वज्ञतापि सर्व्वज्ञतायामसक्ता। अमार्गाकारज्ञतापि मार्गाकारज्ञतायामसक्ता। असर्व्वाकारज्ञतापि सर्व्वाकारज्ञतायामसक्ता।

एवं खल्वायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायाञ्चरन् तेनापि बोधिचित्तेनासमसमचित्तेन सर्व्वश्रावकप्रत्येकबुद्धैर्न्नमन्यते नाभिनिविशते। अनुपलम्भयोगेन सर्व्वधर्म्माणां तेन बोधिसत्त्वोमहासत्त्व इत्युच्यते। अथायुष्मान् पूर्व्वो मैत्रायणीपुत्रो भगवन्तमेतदवोचत्। ममापि भगवन् प्रतिभाति येनार्थेन बोधिसत्त्वोमहासत्त्व इत्युच्यते। भगवानाह। प्रतिभा तु ते पूर्ण। पूर्ण आह। महासत्त्वानुसम्बन्धो वत भगवन् सुसत्त्वो महायानसम्प्रस्थितः सुसत्त्वो महायानसमारूढ़ो भगवन् सुसत्त्वः। तेन बोधिसत्त्वोमहासत्त्व इत्युच्यते। अथायुष्मान् शारद्वतीपुत्र आयुष्मन्तं पूर्णं मैत्रायणीपुत्रमवोचत्। कियतायुष्मन् पूर्ण बोधिसत्त्वोमहासत्त्वो महासत्त्वानुसम्बन्ध इत्युच्यते। पूर्ण आह। इहायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो न प्रादेशिकानां सत्त्वानां कृते दानपारमितायां स्थिला दानं ददात्यपि तु सर्व्वसत्त्वानां कृते दानपारमितायां चरन् दानं ददाति। न प्रादेशिकानां सत्त्वानां

कृते शीलपारमितायां स्थित्वा शीलं रक्षति। अपि तु सर्व्वसत्त्वानां कृते शीलपारमितायां चरन् शीलं रक्षति। न प्रादेशिकानां सत्त्वानां कृते क्षान्तिपारमितायां स्थित्वा क्षान्तिं भावयति। अपि तु सर्व्वसत्त्वानां कृते क्षान्तिपारमितायां चरन् क्षान्तिं भावयति। न प्रादेशिकानां सत्त्वानां कृते वीर्य्यपारमितायां स्थित्वा वीर्य्यमारभते। अपि तु सर्व्वसत्त्वानां कृते वीर्य्यपारमितायां चरन् वीर्य्यमारभते। न प्रादेशिकानां सत्त्वानां कृते ध्यानपारमितायां स्थित्वा ध्यानान्युत्पादयति। अपि तु सर्व्वसत्त्वानां कृते ध्यानपारमितायां चरन् ध्यानान्युत्पादयति। न प्रादेशिकानां सत्त्वानां कृते प्रज्ञापारमितायां स्थित्वा प्रज्ञाम्भावयति। अपि तु सर्व्वसत्त्वानां कृते प्रज्ञापारमितायां चरन् प्रज्ञाम्भावयति।

न सत्त्वपरिच्छेदेन बोधिसत्त्वो महासत्त्वः सन्नाहं सन्नह्यति। इयतः सत्त्वान् निरुपधिशेषे निर्व्वाणधातौ परिनिर्व्वापयिष्यामि। इयतः सत्त्वान्न परिनिर्व्वापयिष्यामि। इयतः सत्त्वान् बोधौ प्रतिष्ठापयिष्यामि। इयतः सत्त्वान्न प्रतिष्ठापयिष्यामि। अपि तु खलु पुनर्ब्बोधिसत्त्वोमहासत्त्वः सर्व्वसत्त्वानां कृते महासन्नाहं सन्नह्यति। एवञ्चास्य भवत्यात्मना च दानपारमितां परिपूरयिष्यामि। सर्व्वसत्त्वांश्च दानपारमितायां नियोजयिष्यामि। आत्मना च शीलपारमिताम्परिपूरयिष्यामि। सर्व्वसत्त्वांश्च शीलपारमितायां नियोजयिष्यामि। आत्मना च क्षान्तिपारमिताम्परिपूरयिष्यामि। सर्व्वसत्त्वांश्च क्षान्तिपारमितायां नियोजयिष्यामि। आत्मना च

वीर्यपारमितापरिपूरयिष्यामि। सर्वसत्त्वांश्च वीर्यपारमितायां नियोजयिष्यामि। आत्मना च ध्यानपारमितापरिपूरयिष्यामि। सर्वसत्त्वांश्च ध्यानपारमितायां नियोजयिष्यामि। आत्मना च प्रज्ञापारमितापरिपूरयिष्यामि। सर्वसत्त्वांश्च प्रज्ञापारमितायां नियोजयिष्यामि।

आत्मना चाध्यात्मशून्यतापरिपूरयिष्यामि। सर्वसत्त्वांश्चाध्यात्मशून्यतायां नियोजयिष्यामि। आत्मना च बहिर्द्धाशून्यता परिपूरयिष्यामि। सर्वसत्त्वांश्च बहिर्द्धाशून्यतायां नियोजयिष्यामि। आत्मना चाध्यात्मबहिर्द्धाशून्यतापरिपूरयिष्यामि। सर्वसत्त्वांश्चाध्यात्मबहिर्द्धाशून्यतायां नियोजयिष्यामि। आत्मना च शून्यताशून्यतापरिपूरयिष्यामि। सर्वसत्त्वांश्च शून्यताशून्यतायां नियोजयिष्यामि। आत्मना च महाशून्यतापरिपूरयिष्यामि। सर्वसत्त्वांश्च महाशून्यतायां नियोजयिष्यामि। आत्मना च परमार्थशून्यतापरिपूरयिष्यामि। सर्वसत्त्वांश्च परमार्थशून्यतायां नियोजयिष्यामि। आत्मना च संस्कृतशून्यतापरिपूरयिष्यामि। सर्वसत्त्वांश्च संस्कृतशून्यतायां नियोजयिष्यामि। आत्मना चासंस्कृतशून्यतापरिपूरयिष्यामि। सर्वसत्त्वांश्चासंस्कृतशून्यतायां नियोजयिष्यामि। आत्मना चाऽत्यन्तशून्यतापरिपूरयिष्यामि। सर्वसत्त्वांश्चाऽत्यन्तशून्यतायां नियोजयिष्यामि। आत्मना चाऽनवराग्रशून्यतापरिपूरयिष्यामि। सर्वसत्त्वांश्चानवराग्रशून्यतायां नियोजयिष्यामि। आत्मना चाऽनवकारशून्यतापरिपूरयिष्यामि। सर्वसत्त्वांश्चऽनवकारशून्यतायां नियोजयिष्यामि। आत्मना च प्रकृति-

शून्यताम्परिपूरयिष्यामि। सर्व्वसत्त्वांश्च प्रकृतिशून्यतायां नियोजयिष्यामि। आत्मना च सर्व्वधर्म्मशून्यताम्परिपूरयिष्यामि। सर्व्वसत्त्वांश्च सर्व्वधर्म्मशून्यतायां नियोजयिष्यामि। आत्मना च स्वलक्षणशून्यतायाम्परिपूरयिष्यामि। सर्व्वसत्त्वांश्च स्वलक्षणशून्यतायां नियोजयिष्यामि। आत्मना चाऽनुपलम्भशून्यताम्परिपूरयिष्यामि। सर्व्वसत्त्वांश्चानुपलम्भशून्यतायां नियोजयिष्यामि। आत्मना चाऽभावशून्यताम्परिपूरयिष्यामि। सर्व्वसत्त्वांश्चाभावशून्यतायां नियोजयिष्यामि। आत्मना च स्वभावशून्यताम्परिपूरयिष्यामि। सर्व्वसत्त्वांश्च स्वभावशून्यतायां नियोजयिष्यामि। आत्मना चाऽभावस्वभावशून्यताम्परिपूरयिष्यामि। सर्व्वसत्त्वांश्चाभावस्वभावशून्यतायां नियोजयिष्यामि।

आत्मना च चतुर्षु स्मृत्युपस्थानेषु स्थास्यामि। परांश्चचतुर्षु स्मृत्युपस्थानेषु नियोजयिष्यामि। आत्मना च चतुर्षु सम्यक्प्रहाणेषु स्थास्यामि। परांश्च चतुर्षु स्मृत्युपस्थानेषु नियोजयिष्यामि। आत्मना च चतुर्षु ऋद्धिपादेषु स्थास्यामि। परांश्च चतुर्षु ऋद्धिपादेषु नियोजयिष्यामि। आत्मना च पञ्चेन्द्रियेषु स्थास्यामि। परांश्च पञ्चेन्द्रियेषु नियोजयिष्यामि। आत्मना च पञ्चसु बलेषु स्थास्यामि। परांश्च पञ्चसु बलेषु नियोजयिष्यामि। आत्मना च सप्तसु बोध्यङ्गेषु स्थास्यामि। परांश्च सप्तसु बोध्यङ्गेषु नियोजयिष्यामि। आत्मना चार्य्याष्टाङ्गमार्गे स्थास्यामि। परांश्चार्य्याष्टाङ्गमार्गे नियोजयिष्यामि। आत्मना चार्य्यसत्येषु स्थास्यामि। परांश्चार्य्यसत्येषु नियोजयिष्यामि। आत्मना च ध्यानेषु स्थास्यामि। परांश्च ध्यानेषु

नियोजयिष्यामि । आत्मना चाऽप्रमाणेषु स्थास्यामि । परांश्चा-ऽप्रमाणेषु नियोजयिष्यामि । आत्मना चारूप्यसमापत्तिषु स्थास्यामि । परांश्चारूप्यसमापत्तिषु नियोजयिष्यामि । आत्मना चाष्टासु विमोक्षेषु स्थास्यामि । परांश्चाष्टासु विमोक्षेषु नियोजयिष्यामि । आत्मना च नवस्वनुपूर्व्वविहारसमापत्तिषु स्थास्यामि । परांश्च नवस्वनुपूर्व्वविहारसमापत्तिषु नियोजयिष्यामि । आत्मना च शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु स्थास्यामि । परांश्च शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु नियोजयिष्यामि । आत्मना चाभिज्ञासु स्थास्यामि । परांश्चाऽभिज्ञासु नियोजयिष्यामि । आत्मना च समाधिषु स्थास्यामि । परांश्च समाधिषु नियोजयिष्यामि । आत्मना च धारणीमुखेषु स्थास्यामि । परांश्च धारणीमुखेषु नियोजयिष्यामि । आत्मना च तथागतबलेषु स्थास्यामि । परांश्च तथागतबलेषु नियोजयिष्यामि । आत्मना च वैशारद्येषु स्थास्यामि । परांश्च वैशारद्येषु नियोजयिष्यामि । आत्मना च प्रतिसम्बित्सु स्थास्यामि । परांश्च प्रतिसम्बित्सु नियोजयिष्यामि । आत्मना च महामैत्र्यां स्थास्यामि । परांश्च महामैत्र्यां नियोजयिष्यामि । आत्मना च महाकरुणायां स्थास्यामि । परांश्च महाकरुणायां नियोजयिष्यामि । आत्मना चाष्टादशावेणिकबुद्धधर्म्मेषु स्थास्यामि । अष्टादशावेणिकबुद्धधर्म्मेषु नियोजयिष्यामि ।

इयतायुश्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते । पुनरपरमायुश्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायाञ्चरन् यद्दान ददाति । तत्सर्व्वाकारज्ञता प्रतिसंयुक्त-

मनसिकारैर्नश्रावक प्रत्येकबुद्धै प्रतिसंयुक्तैस्तच्च कुशलमूलं सर्व्वसत्त्व-साधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयत्ययं बोधि-सत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो दानपारमितासन्नाहः। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो दानं ददत् सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावक प्रत्येकबुद्धप्रतिसंयुक्तौ भूमौ परिणामयत्ययं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापरमितायां चरतो दानं ददतः शीलपारमितासन्नाहः। पुनरपरमायुष्मञ्छार-द्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य दानं ददतः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैर्यातेषां धर्म्माणां क्षमणता रोचनताऽधिवास-नता। अयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो दानं ददतः क्षान्तिपारमितासन्नाहः। पुनरपरमायुष्मञ्छारद्वती-पुत्र बोधिसत्त्वस्य महासत्त्वस्य दानं ददतः सर्व्वाकारज्ञताप्रति-संयुक्तैर्मनसिकारैर्वीर्य्यारम्भणता। अयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो दानं ददतो वीर्य्यपारमितासन्नाहः। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य दानं ददतो या चित्तैकाग्रता यदुतसर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारै श्रावक प्रत्येकबुद्धाप्रतिसंयुक्तानाञ्च चित्तोत्पादानामनवकाशदानं तदेका-लम्बनतामुपादाय। अयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमि-तायां चरतोदानं ददतो ध्यानपारमितासन्नाहः। पुनरपरमायुष्म-ञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो दानं ददतः *सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्मायावत्कृतसंज्ञेयता* भवति। स न च दानमुपलभते। न दायकं न प्रतिग्राहकमुप-

लभते । अयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो दानं ददतः प्रज्ञापारमितामयाशः । यदायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैस्ताः पारमिता न निमित्तीकरोति नोपलभते । एवं खलु बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् महासन्नाह सन्नद्धो बोधितव्यः ।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः शीलपारमितायां चरन् सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैर्दानं ददाति तच्च सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयत्ययमनुपलम्भयोगेन । अयं बोधिसत्त्वस्य महासत्त्वस्य शीलपारमितायां चरतो दानपारमिता । पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः शीलपारमितायां चरतो या श्रावकप्रत्येकबुद्धभूम्यस्पृहानताः प्रागेव पृथग्जनभूमयः । इयं बोधिसत्त्वस्य महासत्त्वस्य शीलपारमितायां चरतः शीलपारमिता । पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य शीलपारमितायां चरतः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैर्या तेषां धर्म्माणां क्षमणलरोचनताऽधिवासनता । इयं बोधिसत्त्वस्य महासत्त्वस्य शीलपारमितायां चरतः क्षान्तिपारमिता । पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य शीलपारमितायां चरतः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्यावीर्य्यासंसनता नवलीनवीर्य्यता । इयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो वीर्य्यपारमिता । पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य शीलपारयितायां चरतः सर्व्वा-

कारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्व्विहरतो *या श्रावकप्रत्येकबुद्ध-चित्तानामनवकाशदानं तस्य च कुशलमूलस्य सर्व्वसत्त्वसाधारणी-कृतस्याऽनुत्तरायां सम्यक्सम्बोधौ परिणामयति। इयं बोधि-सत्त्वस्य महासत्त्वस्य शीलपारमितायां चरतो ध्यानपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापार-मितायां चरतः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावक-प्रत्येकप्रतिसंयुक्तैर्या सर्व्वधर्म्मेषु मायाकृतसंज्ञा प्रत्युपस्थिता भवति। तेन च शीलेन न मन्यते न तच्छीलमुपलभते प्रकृतिशून्यता-मुपादाय। तच्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयति। इयं बोधिसत्त्वस्य महासत्त्वस्य शीलपारमितायां चरतः प्रज्ञापारमिता। एवं खल्वायुष्मन् शार-द्वतीपुत्र बोधिसत्त्वोमहासत्त्वः शीलपारमितायां चरन् षट्पार-मिताः परिगृह्णाति। तेन महासन्नाह सन्नद्ध इत्युच्यते।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः क्षान्तिपार-मितायां चरन् यद्दानं ददाति तत्सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसि-कारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैस्तच्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयति। इयं बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिपारमितायां चरतो दानपारमिता। पुनरपर-मायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः क्षान्तिपारमितायाश्चरन् यच्छीलं रक्षति तत्सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावक

---

* यदिति युक्त पाठः।

प्रत्येकबुद्धप्रतिसंयुक्तैश्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिपारमितायां चरतः शीलपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिपारमितायां चरतो या सर्व्वाकारज्ञताप्रतिसंयुक्तानां मनसिकाराणां क्षमणतारोचनताऽधिवासनता। इयं क्षान्तिपारमितायां चरतः क्षान्तिपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिपारमितायां चरतः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्या चित्तस्यैकाग्रता इयं क्षान्तिपारमितायां चरतो ध्यानपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिपारमितायां चरतः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैः सर्व्वसत्त्वेषु मायाकृतसंज्ञाप्रत्युपस्थिता भवति। तथा च क्षान्त्या न मन्यते। न च तां क्षान्तिमुपलभते। इयं क्षान्तिपारमितायां चरतः प्रज्ञापारमिता। एवं खल्वायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः क्षान्तिपारमितायां चरन् सर्व्वाः षट्पारमिताः परिगृह्णाति। तेन महासन्नाह सन्नद्ध इत्युच्यते।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो वीर्य्यपारमितायां चरन् यद्दानं ददाति। तत्सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैस्तच्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयति इयं बोधिसत्त्वस्य महासत्त्वस्य वीर्य्यपारमितायां चरतो दानपारमिता। पुन-

रपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो वीर्य्यपारमितायां चरन् शीलं रचति सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावक-प्रत्येकबुद्धप्रतिसंयुक्तैस्तच्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्त-रायां सम्यक्सम्बोधौ परिणामयतीयं वीर्य्यपारमितायां चरतः शीलपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महा-सत्त्वस्य वीर्य्यपारमितायां चरतः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मन-सिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्या तेषां धर्म्माणां क्षमणता रोचनताऽधिवासनता। इयं वीर्य्यपारमितायां चरतः चान्तिपार-मिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य वीर्य्यपारमितायां चरतः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैः सर्व्वसत्त्वार्थं या वीर्य्याखं समताऽपच-णता, इयं वीर्य्यपारमितायां चरतो वीर्य्यपारमिता। पुनरपर-मायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य वीर्य्यपारमितायां चरतः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रति-संयुक्तैरियं वीर्य्यपारमितायां चरतो ध्यानपारमिता। पुनरपरमा-युष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य वीर्य्यप्रज्ञापारमितायां चरतो या चित्तस्यैकाग्रता सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्या सर्व्वधर्म्मेषु मायाकृतसंज्ञाप्रत्युपस्थिता भवति। तेन च वीर्य्येण न मन्यते न तद्वीर्य्यमुपलभते। तच्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परि-णामयतीयं वीर्य्यपारमितायां चरतः प्रज्ञापारमिता। एवं खल्वा-युष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो वीर्य्यपारमितायां चरन्

सर्व्वाः षट्पारमिताः परिगृह्णाति। तेन महासन्नाह सन्नद्ध इत्युच्यते।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो ध्यानपारमितायां चरन् यद्दानं ददाति तत्सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैस्तच्च सर्व्वकुशलम् सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं बोधिसत्त्वस्य महासत्त्वस्य ध्यानपारमितायां चरतो दानपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो ध्यानपारमितायां चरन् यच्छीलं रक्षति तत्सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैस्तच्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं ध्यानपारमितायां चरतः शीलपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो ध्यानपारमितायां चरन् क्षान्तिं भावयति। सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैस्तच्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं ध्यानपारमितायां चरतः क्षान्तिपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य ध्यानपारमितायां चरतः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्या वीर्य्यसंजनता तच्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं ध्यानपारमितायां चरतो वीर्य्यपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य ध्यानपारमितायां चरतो या सर्व्वाकारज्ञता

प्रतिसंयुक्तेषु मनसिकारेषु चित्तस्यैकायतताश्रावकप्रत्येकबुद्धप्रति-संयुक्तानां मनसिकाराणामवकाशप्रदानं तदेकालम्बनतामुपादाय। तच्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं ध्यानपारयितायां चरतो ध्यानपारमिता। पुनर-परमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य ध्यानपारमितायां चरतः सर्व्वधर्म्मेषु मायाकृतसंज्ञा प्रत्युपस्थिता भवति। तेन च ध्यानेन न मन्यते। न च ध्यानमुपलभते। तच्च कुशलमूलं सर्व्व-सत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं ध्यानपारमितायां चरतः प्रज्ञापारमिता। एवं खल्वायुष्मञ्छारद्वती-पुत्र बोधिसत्त्वोमहासत्त्वो ध्यानपारमितायां चरन् सर्व्वाः षट्पार-मिताः परिगृह्णाति तेन महासत्त्वाय सन्नद्ध इत्युच्यते।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापार-मितायां चरतस्त्रिमण्डलपरिशुद्धं दानं ददाति सर्व्वाकारज्ञता प्रतिसंयुक्तैर्म्मनसिकारैर्न्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैस्तच्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो दानपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधितसत्त्वस्य महासत्त्वस्य प्रज्ञापार-मितायां चरतः शीलं रक्षतः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्म्मनसि-कारैर्न्न श्रावक प्रत्येकबुद्धप्रतिसंयुक्तैस्तस्य च कुशलमूलं सर्व्वसत्त्व-साधारणं कृत्वा तस्याऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं प्रज्ञापारमितायां चरतः शीलपारमिता। पुनरपरमायुष्मञ्छार-द्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो या

तेषां धर्माणां क्षमणता रोचनताऽधिवासनता। सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैस्तस्य च कुशलमूलस्य सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं प्रज्ञापारमितायां चरतः क्षान्तिपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्या वीर्य्यासंसनता। तस्य च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं प्रज्ञापारमितायां चरतो वीर्य्यपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो या चित्तस्यैकाग्रतासर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैस्तच्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं प्रज्ञापारमितायां चरतो ध्यानपारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः सर्व्वधर्म्मेषु मायाकृतसंज्ञा प्रत्युपस्थिता भवति। सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैस्तच्च कुशलमूलं सर्व्वसत्त्वसाधारणं कृत्वाऽनुत्तरायां सम्यक्सम्बोधौ परिणामयतीयं प्रज्ञापारमितायां चरतः प्रज्ञापारमिता। यदायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः सर्व्वाकारज्ञता प्रतिसंयुक्तेन चित्तेनैताः पारमिता न सत्त्वाश्च बोधिं निमित्तीकरोति। नोपलभते। अयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः षट्पारमिता महासन्नाहः।

एवं खल्वायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्व एकैकस्यां पारमितायां स्थित्वा सर्व्वाः षट्पारमिताः परिपूरयति।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो ध्यानानि चाऽप्रमाणानि चारूप्यं समापत्तीश्च समापद्यते। न च ध्यानाऽप्रमाणारूप्यसमापत्तीराच्छादयति। न च तैर्ध्यानैरप्रमाणैरारूप्यसमापत्तिभिश्च संह्रियते। न च ध्यानाप्रमाणारूप्यसमापत्तिवशेनोपपद्यते। इयमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्योपाय कौशलसहगताप्रज्ञापारमिता। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो ध्यानानि चाप्रमाणानि चारूप्यसमापत्तीश्च विवेकदर्शनेन च शून्यतानिमित्ताप्रणिहितदर्शनेन च समापद्यते। न च तेषां वशेनोपपद्यते। न च भूतकोटिं साक्षात्करोति। सर्व्वश्रावकप्रत्येकबुद्धांश्च। भवत्ययं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशलमहासन्नाहः। एवं खल्वायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोमहासन्नाह सन्नद्ध इत्युच्यते। एवं सन्नाह सन्नद्धस्यायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य पूर्व्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्त उदानमुदानयन्ति। नामधेयञ्च कीर्त्तयन्ति शब्दमुदीरयन्ति। घोषमनुश्रावयन्ति। एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वोमहासत्त्वो महासन्नाह सन्नद्धः सत्त्वांश्च पाचयति बुद्धक्षेत्रञ्च परिशोधयति। क्रीडा च विक्रीडति। दक्षिणस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्त उदानमुदानयन्ति नामधेयञ्च परिकीर्त्तयन्ति। शब्दमुदीरयन्ति। घोषमनुश्रावयन्ति। एषोऽमुष्मिन्

लोकधातौ बोधिसत्त्वोमहासत्त्वो महासन्नाह सन्नद्धः। सत्त्वांश्च परिपाचयति। बुद्धक्षेत्रञ्च परिशोधयति। स्वेच्छया च विक्रीड़ति। पश्चिमायां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्त उदानमुदानयन्ति। नामधेयञ्च परिकीर्त्तयन्ति। शब्दमुदीरयन्ति। घोषमनुश्रावयति। एषोऽसुभिन् लोकधातौ बोधिसत्त्वो-महासत्त्वो महासन्नाह सन्नद्धः सत्त्वांश्च परिपाचयति। बुद्धक्षेत्रञ्च परिशोधयति। स्वेच्छया च विक्रीड़ति। उत्तरस्यां दिशि गङ्गानदी-वालुकोपमेषु लोकधातुषु बुद्धाभगवन्त उदानमुदानयन्ति। नाम-धेयञ्च परिकीर्त्तयन्ति। शब्दमुदीरयन्ति। घोषमनुश्रावयन्ति। एषोऽसुभिन् लोकधातौ बोधिसत्त्वोमहासत्त्वो महासन्नाह सन्नद्धः सत्त्वांश्च परिपाचयति। बुद्धक्षेत्रञ्च परिशोधयति। स्वेच्छया च विक्रीड़ति। पूर्व्वदक्षिणस्यां दिशि गङ्गानदीवालुकोपमेषु लोक-धातुषु बुद्धाभगवन्त उदानमुदानयन्ति। नामधेयञ्च परिकीर्त्त-यन्ति। शब्दमुदीरयन्ति। घोषमनुश्रावयन्ति। एषोऽसुभिन् लोकधातौ बोधिसत्त्वोमहासत्त्वो महासन्नाह सन्नद्धः सत्त्वांश्च परिपाचयति। बुद्धक्षेत्रञ्च परिशोधयति। स्वेच्छया च विक्रीड़ति। दक्षिणपश्चिमायां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धा-भगवन्त उदानमुदानयन्ति। नामधेयञ्च परिकीर्त्तयन्ति। शब्द-मुदीरयन्ति। घोषमनुश्रावयन्ति। एषोऽसुभिन् लोकधातौ बोधिसत्त्वोमहासत्त्वो महासन्नाह सन्नद्धः सत्त्वांश्च परिपाचयति। बुद्धक्षेत्रञ्च परिशोधयति। स्वेच्छया च विक्रीड़ति। पश्चिमोत्तरस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्त उदान

मुदारयन्ति। नामधेयञ्च परिकीर्त्तयन्ति। शब्दमुदीरयन्ति। घोषमनुश्रावयन्ति। एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वोमहासत्त्वो महासन्नाह सन्नद्धः सत्त्वांश्च परिपाचयति। बुद्धक्षेत्रञ्च परिशोधयति। स्वच्छा च विक्रीडति। उत्तरपूर्व्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्त उदानमुदानयन्ति। नामधेयञ्च परिकीर्त्तयन्ति। शब्दमुदीरयन्ति। घोषमनुश्रावयन्ति। एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वोमहासत्त्वो महासन्नाह सन्नद्धः सत्त्वांश्च परिपाचयति। बुद्धक्षेत्रञ्च परिशोधयति। स्वच्छा च विक्रीडति। अधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्त उदानमुदानयन्ति। नामधेयञ्च परिकीर्त्तयन्ति। शब्दमुदीरयन्ति। घोषमनुश्रावयन्ति। एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वोमहासत्त्वो महासन्नाह सन्नद्धः सत्त्वांश्च परिपाचयति। बुद्धक्षेत्रञ्च परिशोधयति। स्वच्छा च विक्रीडति। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्त उदानमुदानयन्ति। नामधेयञ्च परिकीर्त्तयन्ति। शब्दमुदीरयन्ति। घोषमनुश्रावयन्ति। एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वोमहासत्त्वो महासन्नाह सन्नद्धः सत्त्वांश्च परिपाचयति। बुद्धक्षेत्रञ्च परिशोधयति। स्वच्छा च विक्रीडति।

आह। कियतायुष्मन् पूर्ण बोधिसत्त्वोमहासत्त्वो महायानसंप्रस्थित इत्युच्यते। कतमच बोधिसत्त्वस्य महासत्त्वस्य महायानं। पूर्ण आह। इहायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः षट्पारमितानुचरति। स दानपारमितायां चरन् विविक्तैः कामै-

र्विविक्तं पापकैरकुशलैर्धर्म्मैः सवितर्कं सविचारं विवेकजं प्रीति-
सुखं प्रथमध्यानमुपसम्पद्यविहरति। सवितर्कसविचाराणां व्युप-
शमादध्यात्मसम्प्रसादाच्चेतस एकोतिभावादवितर्कमविचारं समा-
धिजं प्रीतिसुखं द्वितीयं ध्यानमुपसम्पद्यविहरति। स प्रीतेर्व्विरा-
गादुपेक्षको विहरति। स्मृतिमान् संजानन् सुखञ्च कायेन प्रति-
वेदयति। यत्तदार्य्या आचक्षते उपेक्षकः स्मृतिमान् सुखविहारी
निष्प्रीतिकं तृतीयं ध्यानमुपसम्पद्यविहरति। स सुखस्य च प्रहा-
णात् दुःखस्य च प्रहाणात् पूर्व्वमेव च सौमनस्य दौर्मनस्य
योरस्तङ्गमाददुःखासुखमुपेक्षस्मृतिपरिशुद्धिं चतुर्थध्यानमुपसम्पद्य-
विहरति। स मैत्रीसहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेना-
प्रमाणेनाऽवैरेणाऽव्याबध्येनाऽसपत्नेन परिपूर्णेन सुभावितेन धर्म्म-
धातुपरमे लोके आकाशधातुपर्य्यवसाने दशदिशः ,स्फुरित्वाऽधि-
मुच्य विहरति। स करुणासहगतेन चित्तेन विपुलेन महद्गतेना-
द्वयेनाऽप्रमाणेनाऽवैरेणाव्याबध्येनाऽसपत्नेन परिपूर्णेन सुभावितेन
धर्म्मधातुपरमे लोके आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वा-
ऽधिमुच्यविहरति। स मुदितासहगतेन चित्तेन विपुलेन महद्गते-
नाद्वयेनाऽप्रमाणेनाऽवैरेणाव्याबध्येनासपत्नेन परिपूर्णेन सुभावितेन
धर्म्मधातुपरमे लोके आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वा
ऽधिमुच्यविहरति। स उपेक्षासहगतेन चित्तेन विपुलेन महद्गते-
नाद्वयेनाऽप्रमाणेनाऽवैरेणाव्याबध्येनाऽसपत्नेन परिपूर्णेन सुभावितेन
धर्म्मधातुपरमे लोके आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वा
विहरति। अनुपलम्भयोगेन। स सर्व्वशोरूपसंज्ञानामतिक्रमात्

प्रतिपद्यसंज्ञानामसङ्गमानानानात्वसंज्ञानाम् मनसिकारादनन्तमाकाशानन्त्यायतनमुपसम्पद्य विहरति। स सर्व्वशः आकाशानन्त्यायतनसमतिक्रमादनन्तविज्ञानमिति विज्ञानानन्त्यायतनमुपसम्पद्य विहरति। स सर्व्वशो विज्ञानानन्त्यायतनसमतिक्रमान्नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसम्पद्य विहरति। स सर्व्वश आकिञ्चन्यायतनसमतिक्रमान्नैव संज्ञाना संज्ञायतनमुपसम्पद्य विहरति। अनुपलम्भयोगेन। इदं बोधिसत्त्वस्य महासत्त्वस्य ध्यानं। यदा बोधिसत्त्वोमहासत्त्व एतानि ध्यानान्येतान्यप्रमाणान्येतानि चारूप्याण्याकाराकारलिङ्गनिमित्तैः समापद्यमानो व्युत्तिष्ठं स सर्व्वाकारज्ञतायां परिणामयतीयं बोधिसत्त्वस्य महासत्त्वस्य दानपारमिता।

सशीलपारमितायां चरन् विविक्तं कामैर्व्विविक्तं पापकैरकुशलैर्धर्म्मैः सवितर्कसविचारजं प्रीतिसुखं प्रथमं ध्यानमुपसम्पद्यविहरति। स सवितर्कं सविचाराणां व्युपशमादध्यात्मसम्प्रसादाच्चेतसं एकोतिभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसम्पद्य विहरति। सप्रीतेर्व्विरागादुपेक्षको विहरति। स्मृतिमान् संप्रजानन् सुखञ्च कायेन प्रतिसंवेदयति। यत्तदार्य्या आचक्षते उपेक्षकः स्मृतिमान् सुखविहारीनिष्प्रीतिकं तृतीयं ध्यानमुपसम्पद्य विहरति। ससुखस्य च प्रहाणात् दुःखस्य च प्रहाणात् पूर्व्वमेव च सौमनस्य दौर्म्मनस्ययो रस्तङ्गमाददुःखासुखमुपेक्षा स्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसम्पद्य विहरति। समैत्रीसहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाप्रमाणेनावैरेणाव्यावध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोके आकाश-

धातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। सकरुणा-सहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाप्रमाणेनाऽवैरेणाऽव्यावध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोके आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। समुदितासहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाऽप्रमाणेनाऽवैरेणाऽव्यावध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोके आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। स उपेक्षासहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाप्रमाणेनाऽवैरेणाव्यावध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोके आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। अनुपलम्भयोगेन। ससर्व्वशो रूपसंज्ञानां समतिक्रमात् प्रतिघसंज्ञानामस्तं गमानानात्वसंज्ञानाम मनसिकारादनन्तमाकाशमित्याकाशानन्त्यायतनमुपसम्पद्यविहरति। ससर्व्वशः आकाशानन्त्यायतनसमतिक्रमादनन्तं विज्ञानमिति विज्ञानानन्त्यायतनमुपसम्पद्यविहरति। ससर्व्वशो रूपविज्ञानानन्त्यायतनसमतिक्रमान्नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसम्पद्यविहरति। ससर्व्वशः आकिञ्चन्यायतनसमतिक्रमान्नैव संज्ञानासंज्ञायतनमुपसम्पद्यविहरति। इदं बोधिसत्त्वस्य महासत्त्वस्य ध्यानं।

यदा बोधिसत्त्वोमहासत्त्व एतानि च ध्यानान्येतानि चाऽप्रमाणान्येतानि चारूप्यान्याकाशाकार लिङ्गनिमित्तैः समापद्यमानो युञ्जितेदं सर्व्वाकारज्ञतायां परिणामयतीयं बोधिसत्त्वस्य महासत्त्वस्य ध्यानपारमिता।

स क्षान्तिपारमितायां चरन् विविक्तं कामैर्व्विविक्तं पापकैरकुशलैर्धर्म्मैः सवितर्कं सविचारं विवेकजं प्रीतसुखं प्रथमं ध्यानमुपसम्पद्य विहरति। सवितर्कं सविचाराणां व्युपशमादध्यात्मसम्प्रसादाच्चेतस एकोति भावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसम्पद्य विहरति। सप्रीतेर्व्विरागादुपेक्षकोविहरति। स्मृतिमान् संजानन् सुखञ्च कायेन प्रतिसंवेदयति। यत्तदार्य्या आचक्षते उपेक्षकः स्मृतिमान् सुखविहारा। निष्प्रीतिकं तृतीयं ध्यानमुपसम्पद्य विहरति। ससुखस्य च प्रहाणात् दुःखस्य च प्रहाणात् पूर्व्वमेव च सौमनस्य दौर्म्मनस्ययोरस्तं गमाददुःखासुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसम्पद्य विहरति। समैत्रीसहगतेन चित्तेन विपुलेन महद्गतेनाऽद्वयेनाप्रमाणेनाऽवैरेणाऽव्याबध्येनासपत्नेण परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोके आकाशधातुपर्य्यमाणे दशदिशः स्फुरित्वाऽधिमुच्यविहरति। सकरुणासहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाऽप्रमाणेनाऽवैरेणाऽव्याबध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोके आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। समुदितासहगतेन चित्तेन विपुलेन महद्गतेनाऽद्वयेनाऽप्रमाणेनाऽवैरेणाऽव्याबध्येनाऽसपत्नेण परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोके आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। स उपेक्षासहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाऽप्रमाणेनाऽवैरेणाऽव्याबध्येनासपत्नेण परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोके आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधि-

मुपसम्पद्यविहरति। उपलम्भयोगेन। सर्वशो रूपसंज्ञानां समतिक्रमात् प्रतिघसंज्ञानामस्तङ्गमान्नानात्वसंज्ञानाम मनसिकारादनन्तमाकाशमित्याकाशानन्त्यायतनमुपसम्पद्यविहरति। सर्वशः आकाशानन्त्यायतनसमतिक्रमादनन्तं विज्ञानमिति विज्ञानानन्त्यायतनमुपसम्पद्यविहरति। सर्वशो विज्ञानानन्त्यायतनसमतिक्रमान्नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसम्पद्यविहरति। सर्वशः आकिञ्चन्यायतनसमतिक्रमान्नैव संज्ञानासंज्ञायतनमुपसम्पद्यविहरति। इदं बोधिसत्त्वस्य महासत्त्वस्य ध्यानं।

यदा बोधिसत्त्वोमहासत्त्व एतानि च ध्यानान्येतानि चाऽप्रमाणान्येतानि चारूप्याण्याकाराकारलिङ्गनिमित्तैः समापद्यमानो युक्तिश्चैव सर्व्वाकारज्ञतायां परिणामयतीयं बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिपारमिता।

सवीर्य्यपारमितायां चरन् विविक्तं कामैर्व्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसम्पद्यविहरति। सवितर्कसविचाराणां व्युपशमादध्यात्मसंप्रसादाच्चेतस एकोतिभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसम्पद्यविहरति। सप्रीतेर्व्विरागादुपेक्षको विहरति। स्मृतिमान् संप्रजानम् सुखञ्च कायेन प्रतिसंवेदयति। यत्तदार्य्या आचक्षते उपेक्षकः स्मृतिमान् सुखविहारीनिष्प्रीतिकं तृतीयं ध्यानमुपसम्पद्य विहरति। ससुखस्य च प्रहाणात् दुःखस्य च प्रहाणात् पूर्व्वमेव सौमनस्यदौर्मनस्ययोरस्तङ्गमाददुःखासुखमुपेक्षा स्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसम्पद्यविहरति। स मैत्रीसहगतेन चित्तेन विपुलेन

महद्गतेनाद्वयेनाप्रमाणेनाऽवैरेणाऽव्यावध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोक आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। सकरुणासहगतेन विपुलेन महद्गतेनाद्वयेनाप्रमाणेनावैरेणाव्यावध्येनासपत्नेण परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोक आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। समुदिता सहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाप्रमाणेनावैरेणाव्यावध्येनासपत्नेण परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोक आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। स उपेक्षासहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाऽप्रमाणेनाऽवैरेणाव्यावध्येनासपत्नेण परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोक आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। उपलम्भयोगेन। ससर्व्वशो रूपसंज्ञानां समतिक्रमात् प्रतिसम्यसंज्ञानामस्तङ्गमाचानात्वसंज्ञानाम मनसिकारादनन्तमाकाशमित्याकाशानन्त्यायतनमुपसम्पद्यविहरति। ससर्व्वशः आकाशानन्त्यायतनसमतिक्रमादनन्तं विज्ञानमिति विज्ञानानन्त्यायतनमुपसम्पद्यविहरति। ससर्व्वशो विज्ञानानन्त्यायतनसमतिक्रमान्नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसम्पद्यविहरति। ससर्व्वशः आकिञ्चन्यायतनसमतिक्रमान्नैव संज्ञानासंज्ञायतनमुपसम्पद्यविहरति। इदं बोधिसत्त्वस्य महासत्त्वस्य ध्यानं।

यदा बोधिसत्त्वोमहासत्त्व एतानि च ध्यानान्येतानि चाप्रमाणान्येतानि चारूप्याणाकाशकार लिङ्गनिमित्तैः समापद्यमानो

व्युत्तिष्ठन् सर्व्वाकारज्ञतायां परिणामयतीयं बोधिसत्त्वस्य महासत्त्वस्य वीर्य्यपारमिता ।

स ध्यानपारमितायां चरन् विविक्तं कामैर्व्विविक्तं पापकैरकुशलैर्धर्म्मैः सवितर्कसविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसम्पद्यविहरति । सवितर्कसविचाराणां व्युपशमादध्यात्मसम्प्रसादाच्चेतस एकोतिभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसम्पद्यविहरति । सप्रीतेर्व्विरागादुपेक्षको विहरति स्मृतिमान् संप्रजानन् सुखञ्च कायेन प्रतिसम्वेदयति । यत्तदार्य्या आचक्षते उपेक्षकः स्मृतिमान् सुखविहारीनिष्प्रीतिकं तृतीयं ध्यानमुपसम्पद्यविहरति । ससुखस्य प्रहाणात् दुःखस्य च प्रहाणात् पूर्व्वमेव सौमनस्य दौर्मनस्ययोरस्तगमाददुःखाऽसुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसम्पद्यविहरति । मैत्रीसहगतेन चित्तेन विपुलेन महद्गतेनादयेनाऽप्रमाणेनाऽवैरेणाऽव्यावध्येनाऽसपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोक आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति । स करुणासहगतेन चित्तेन विपुलेन महद्गतेनादयेनाप्रमाणेनाऽवैरेणाव्यावध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोक आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति । स मुदितासहगतेन चित्तेन विपुलेन महद्गतेनाऽदयेनाऽप्रमाणेनाऽवैरेणाऽव्यावध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोके आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति । स उपेक्षासहगतेन चित्तेन विपुलेन महद्गतेनाऽदयेनाप्रमाणेना-

वैरेणाऽव्यावध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्मधातु परमे लोक आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। अनुपलम्भयोगेन। स सर्व्वशोरूपसंज्ञानां समतिक्रमात् प्रतिघसंज्ञानामस्तङ्गमानानात्वसंज्ञानामनमिकारादनन्तमाकाशमित्याकाशानन्त्यायतनमुपसम्पद्य विहरति। स सर्व्वश आकाशानन्त्यायतनसमतिक्रमादनन्तं विज्ञानमिति विज्ञानानन्त्यायतनमुपसम्पद्यविहरति। स सर्व्वशो विज्ञानानन्त्यायतनसमतिक्रमान्नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसम्पद्यविहरति। स सर्व्वश आकिञ्चन्यायतनसमतिक्रमानैव संज्ञानासंज्ञायतनमुपसम्पद्यविहरति। इदं बोधिसत्त्वस्य महासत्त्वस्य ध्यानम्।

यदा बोधिसत्त्वोमहासत्त्व एतानि ध्यानान्येतानि चाऽप्रमाणान्येतानि चारूप्याण्याकाशाकारलिङ्गानिमित्तैः समापद्यमानोव्युत्तिष्ठंश्च सर्व्वाकारज्ञतायां परिणामयतीयं बोधिसत्त्वस्य महासत्त्वस्य ध्यानपारमिता।

स प्रज्ञापारमितायां चरन् विविक्तं कामैर्व्विविक्तं पापकैरकुशलैर्धर्म्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुख प्रथमं ध्यानमुपसम्पद्यविहरति। सवितर्कं सविचाराणां व्युपशमादध्यात्मसम्प्रसादाच्चेतस एकोतीभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीय ध्यानमुपसम्पद्यविहरति। स प्रीतेर्व्विरागादुपेक्षकोविहरति। स्मृतिमान् सम्प्रजानन् सुखञ्च कायेन प्रतिवेदयति। यत्तदार्य्या आचक्षते उपेक्षकः स्मृतिमान् सुखविहारीति निष्प्रीतिकं तृतीयं ध्यानमुपसम्पद्यविहरति। स सुखस्य चापहाणात् दुःखस्य च

प्रहाणात् पूर्व्वमेव सौमनस्य दौर्मनस्ययोरस्तङ्गमाददुःखासुखमुपेक्षा-स्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसम्पद्य विहरति । स मैत्रीसहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाऽप्रमाणेनाऽवैरेणाऽव्याबध्येनाऽसपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोक आकाशधातु-पर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति । स करुणासहगतेन चित्तेन विपुलेन महद्गतेनाऽद्वयेनाऽप्रमाणेनाऽवैरेणाऽव्याबध्येनाऽस-पत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोक आकाशधातु-पर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति । समुदितासहगतेन चित्तेन विपुलेन महद्गतेनाऽद्वयेनाऽप्रमाणेनाऽवैरेणाऽव्याबध्येनाऽस-पत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोक आकाशधातु-पर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। स उपेक्षासहगतेन चित्तेन विपुलेन महद्गतेनाऽद्वयेनाऽप्रमाणेनाऽवैरेणाऽव्यबध्येनाऽसपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमे लोक आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। अनुपलम्भयोगेन। स सर्व्वशो रूपसंज्ञानां समतिक्रमात् प्रतिघसंज्ञानामस्तङ्गमान्नानात्वसंज्ञानाम् मनसिकारादनन्तमाकाशमित्याकाशानन्त्यायतनमुपसम्पद्यविहरति । स सर्व्वश आकाशानन्त्यायतनसमतिक्रमादनन्तं विज्ञानमिति विज्ञा-नानन्त्यायतनमुपसम्पद्यविहरति । स सर्व्वशो विज्ञानानन्त्यायतन-समतिमान्नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसम्पद्यविहरति । स सर्व्वशआकिञ्चन्यायतनसमतिक्रमान्नैव संज्ञानासंज्ञायतनमुपसम्पद्य-विहरति । इदं बोधिसत्वस्य महासत्वस्य ध्यानं । यदा बोधिसत्वो महासत्व एतानि च ध्यानान्येतानि चाप्रमाणान्येतानि चारूप्याण्या-

काशाकारलिङ्गानिमित्तैः समापद्यमानोव्युत्तिष्ठस्य सर्व्वाकारज्ञतायां परिणामयतीयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिता। एवं खल्वा-युष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोमहायानसंप्रस्थित इत्युच्यते।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो मैत्रीसहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाप्रमाणेनावैरेणाव्यावध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमेलोक आकाशधातुपर्य्यवसाने-दशदिशः स्फुरित्वाऽधिमुच्यविहरति। स महाकरुणासहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाप्रमाणेनावैरेणाव्यावध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमेलोक आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। समुदितासहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाप्रमाणेनावैरेणाव्यावध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमेलोक आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वाऽधिमुच्यविहरति। स उपेक्षासहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेनाप्रमाणेनावैरेणाव्यावध्येनासपत्नेन परिपूर्णेन सुभावितेन धर्म्मधातुपरमेलोक आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वा ऽधिमुच्यविहरति। स विविक्तं कामैर्व्विविक्तं पापकैरकुशलैर्धर्म्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसम्पद्य-विहरति। सवितर्क सविचाराणां व्युपशमादध्यात्मसम्प्रसादाच्चेतस एकोतिभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यान-मुपसम्पद्यविहरति। स प्रीतेर्व्विरागादुपेक्षकोविहरति। स्मृतिमान् सम्प्रजानन् सुखञ्चकायेन प्रतिसंवेदयति। यत्तदार्य्या आचक्षते उपेक्षकः स्मृतिमान् सुखविहारति निष्प्रीतिकं तृतीयं ध्यानमुप-

सम्पद्यविहरति । ससुखस्य च प्रहाणात् दुःखस्य च प्रहाणात् पूर्व्वमेव सौमनस्य दौर्म्मणस्ययोरस्तङ्गमाद् दुःखसुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसम्पद्यविहरति । स सर्व्वशोरूपसं ज्ञानां समतिक्रमात् प्रतिपद्यसंज्ञानामस्तङ्गमानानत्वे संज्ञानाम् मनसिकारादनन्तमाकाशमित्याकाशानन्त्यायतनमुपसम्पद्यविहरति । स सर्व्वशय्याकाशानन्त्यायतनसमतिक्रमादनन्तं विज्ञानमिति विज्ञानानन्त्यायतनमुपसम्पद्यविहरति । ससर्व्वशो विज्ञानानन्त्यायतनसमतिक्रमान्नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसम्पद्यविहरति । ससर्व्वशश्चाकिञ्चन्यायतनसमतिक्रमान्नैव संज्ञायतनमुपसम्पद्यविहरति । अयं बोधिसत्त्वस्य महासत्त्वस्य समाधिः ।

स खलु पुनर्व्वोधिसत्त्वोमहासत्त्वः सर्व्वाकारज्ञता प्रतिसंयुक्तेन चित्तेन महाकरुणापूर्व्वङ्गमेन क्लेशप्रहाणाय ध्यानाऽप्रमाणारूप्य समापत्तीः परेभ्य आचष्टे देशयति । प्रकाशयति । विसर्जयति । उत्तानीकरोति । विवृता समास्वादश्चादीनवश्च निःसरणञ्चोपदिशति । इयं बोधिसत्त्वस्य महासत्त्वस्य दानपारमिता । यद्बोधिसत्त्वोमहासत्त्वस्तैरेव सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैर्ध्यानाप्रमाणारूप्यसमापत्तीः समापद्यमानो व्युत्तिष्ठश्च नान्येषां चित्तोत्पादानामवकाशं ददाति । यदुत श्रावकचित्तानां वा प्रत्येकबुद्धचित्तानां वा । इयं बोधिसत्त्वस्य महासत्त्वस्य परास्पृष्टा शीलपारपारमिता । यद्बोधिसत्त्वोमहासत्त्वः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैर्ध्यानाप्रमाणारूप्यसमापत्तिभिर्व्विहरत* एवं भवति ।

* विहरन्निति पाठो युक्तः ।

सर्व्वसत्त्वानां क्लेशक्षयाय धर्मं देशयिष्यामीति। या तेषां मनसिकाराणां क्षमता, रोचनता, व्युपपरीक्षणताऽवबोधनता। उपनिध्यायतनता। इयं बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिपारमिता। यदा बोधिसत्त्वोमहासत्त्वः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैर्ध्यानाप्रमाणारूप्यसमापत्तिभिर्व्विहरति। सर्व्वसत्त्वार्थञ्च सर्व्वाकारज्ञतायां वीर्य्यं नम्रं समतीयं बोधिसत्त्वस्य महासत्त्वस्य वीर्य्यपारमिता। यदा बोधिसत्त्वोमहासत्त्वः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः सर्व्वज्ञता ध्यानविमोक्षसमापत्तीः समापद्यते च व्युत्तिष्ठते च न च श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयतीयं बोधिसत्त्वस्य महासत्त्वस्य ध्यानपारमिता। यदा बोधिसत्त्वोमहासत्त्वः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैस्तानि प्रथमध्यानाङ्गानि द्वितीयध्यानाङ्गानि तृतीयध्यानाङ्गानि चतुर्थध्यानाङ्गानि। मैत्रीकरुणामुदितोपेक्षाकाशानन्त्यायतनं विज्ञानानन्त्यायतनमाकिञ्च न्यायतनं नैव संज्ञानासंज्ञायतनमनित्याकारेण दुःखाकारेणानात्माकारेणाशान्ताकारेण शून्यताकारेणानिमित्ताकारेणाप्रणिहिताकारेणाप्रत्यवेक्षमाणस्ता ध्यानाप्रमाणरूप्यसमापत्तीर्नोपलभते। ताभिश्च न मन्यते। इयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिता।

इदमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो महायानं।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य महायानं। यत् सर्व्वाकारैः चत्वारि स्मृत्युपस्थानानि भावयति। सर्व्वाकारैश्चत्वारि सम्यक्प्रहाणानि भावयति। सर्व्वाकारैश्चतुर

ऋद्धिपादान् भावयति। सर्व्वाकारैः पञ्चेन्द्रियाणि भावयति। सर्व्वाकारैः पञ्चबलानि भावयति। सर्व्वाकारैः सप्तबोध्यङ्गानि भावयति। सर्व्वाकारैरार्य्याष्टाङ्गमार्गं भावयति। सर्व्वाकारैरार्य्यसत्यानि भावयति। सर्व्वाकारैर्ध्यानानिभावयति। सर्व्वाकारैरप्रमाणानि भावयति। सर्व्वाकारैरारूप्यसमापत्तीर्भावयति। सर्व्वाकारैर्व्विमोक्षान् भावयति। सर्व्वाकारैरनुपूर्व्वविहारसमापत्तीर्भावयति। सर्व्वाकारैः शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि भावयति। सर्व्वाकारैरभिज्ञा भावयति। सर्व्वाकारैः समाधिं भावयति। सर्व्वाकारैर्धारणीमुखानि भावयति। सर्व्वाकारैस्तथागतबलानि भावयति। सर्व्वाकारैर्व्वैशारद्यानि भावयति। सर्व्वाकारै प्रतिसम्भिदो भावयति। सर्व्वाकारैर्म्महामैत्रीं भावयति। सर्व्वाकारैर्म्महाकरुणां भावयति। सर्व्वाकारैरावेणिकबुद्धधर्म्मान् भावयति। सर्व्वाकारैः सर्व्वज्ञतां भावयति। सर्व्वाकारैर्मार्गाकारज्ञतां भावयति। सर्व्वाकारैः सर्व्वाकारज्ञतां भावयति। इदमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य महायानं।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो मैत्रीं समाधिं समापद्यते। मया सर्व्वसत्त्वास्तातव्याः इत्यति नामयति करुणाञ्च समाधिं समपद्यते। कृपाकरुणताञ्च सत्त्वेषु निर्णमयति। मुदिताञ्च समाधि समापद्यते। अहमेवं समाधायिष्यामीति सत्त्वेषु निर्णमयति। उपेक्षाञ्च समाधि समापद्यते। आस्रवक्षयणताञ्च सत्त्वेषु निर्णयतीयं बोधिसत्त्वस्य महासत्त्वस्य प्रमाणेषु

चरतो दानपारमिता। यदा बोधिसत्त्वो महासत्त्वो ध्यानाप्रमाणाकारलिङ्गनिमित्तानि समापद्यते च व्युत्तिष्ठते च। न च श्रावकप्रत्येकबुद्धभूमौ परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः। इयं बोधिसत्त्वस्य महासत्त्वस्याप्रमाणेषु चरतोऽपरामृष्टा शीलपारमिता। यदा बोधिसत्त्वो महासत्त्वस्ताभिर्ध्यानाऽप्रमाणारूप्यसमापत्तिभिरव्यवकीर्णो विहरति। आभ्यांच द्वाभ्यां भूमिभ्यां श्रावकभूमये वा प्रत्येकबुद्धभूमये वा नस्पृहेत्। सर्व्वाकारज्ञतैवास्य क्षमते रोचते चेयं बोधिसत्त्वस्य महासत्त्वस्य प्रमाणेषु चरतः क्षान्तिपारमिता।

यदा बोधिसत्त्वो महासत्त्वः सर्व्वाकारज्ञताप्रतिसंयुक्तैश्चित्तोत्पादैरनिक्षिप्तधुरो विहरत्यकुशलधर्म्मप्रहाणाय कुशलधर्म्माय सम्पदेरियं बोधिसत्त्वस्य महासत्त्वस्याप्रमाणेषु चरतो वीर्य्यपारमिता। यदा बोधिसत्त्वो महासत्त्व एतानि च ध्यानान्येताश्चाऽप्रमाणारूप्यसमापत्तीश्च समापद्यते। न च ध्यानाप्रमाणारूप्यसमापत्तिवशेनोपपद्यते। न च ता आस्वादयति। न च ताभिः संक्लिश्यते। इयं बोधिसत्त्वस्य महासत्त्वस्याप्रमाणेषु चरतो वीर्य्यपारमिता। यदा बोधिसत्त्वो महासत्त्वः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैस्ताध्यानाप्रमाणारूप्यसमापत्तीः समापद्यते च व्युत्तिष्ठते च तास्ताऽनित्याकारेण दुःखाकारेणानात्माकारेणाशान्ताकारेणाऽशून्यताकारेणाऽनिमित्ताकारेणाऽप्रणिहिताकारेण प्रत्यवेक्षते। न च श्रावकाणाम्वा प्रत्येकबुद्धानाम्वाऽवक्रामति। इयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिता। इदमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य महायानम्।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदध्यात्मशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यद्बहिर्द्धाशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यदध्यात्मबहिर्द्धाशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यच्छून्यताशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यन्महाशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यत्परमार्थशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यत् संस्कृतशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यदसंस्कृतशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यदत्यन्तशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यदनवराग्रशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यदनवकारशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यत्प्रकृतिशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यत्सर्व्वधर्म्मशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यत् स्वलक्षणशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यदनुपलम्भशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यदभावशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यत् स्वभावशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। यदभावस्वभावशून्यतायां ज्ञानं न चाऽनुपलम्भयोगेन। इदं बोधिसत्त्वस्य महासत्त्वस्य महायानम्।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य महायानं। यत् सर्व्वधर्म्मेषु न विक्षिप्यते चित्तं समाहितमिति ज्ञानमिदं बोधिसत्त्वस्य महासत्त्वस्य महयानं।

यन्नित्यमिति ज्ञानं प्रवर्त्तते। नानित्यमिति ज्ञानं प्रवर्त्तते। न सुखमिति ज्ञानं प्रवर्त्तते। न दुःखमिति ज्ञानं प्रवर्त्तते। नात्मेति ज्ञानं प्रवर्त्तते। नाऽनात्मेति ज्ञानं प्रवर्त्तते। न शुभमिति

ज्ञानं प्रवर्त्तते। नाऽशुभमिति ज्ञानं प्रवर्त्तते। इदं बोधिसत्त्वस्य महासत्त्वस्य महायानं। तथाऽनुपलम्भयोगेन।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदतीतेऽध्वनिज्ञानं प्रवर्त्तते। अनागतेऽध्वनिप्रवर्त्तते। प्रत्युत्पन्नेऽध्वनिप्रवर्त्तते। न चास्य त्रिष्वध्वसुज्ञानमिदं बोधिसत्त्वस्य महासत्त्वस्य महायानं। तथानुपलम्भयोगेन। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य महायानं। यत्कामधातौ ज्ञानं प्रवर्त्तते। न रूपधातौ। नारूप्यधातौ ज्ञानं प्रवर्त्तते। न चाऽस्य कामरूपारूप्यधातुषु ज्ञानमिदमपि बोधिसत्त्वस्य महासत्त्वस्य महायानं। तथाऽनुपलम्भयोगेन। पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य महायानं। यत्नैव लौकिकेषु ज्ञानं प्रवर्त्तते। न लोकोत्तरेषु न सास्रवेषु नानास्रवेषु न संस्कृतेषु धर्म्मेषु ज्ञानं प्रवर्त्तते। नाऽसंस्कृतेषु। न चास्य लौकिक लोकोत्तरेषु धर्म्मेषु न सास्रवानास्रवेषु न संस्कृतासंस्कृतेषु धर्म्मेषु ज्ञानमिदमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वस्य महासत्त्वस्य महायानं तथाऽनुपलम्भयोगेन। आह।

कियतायुष्मन् पूर्ण बोधिसत्त्वो महासत्त्वो महायानसमारूढ इत्युच्यते। पूर्ण आह। इहमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् दानपारमितां समारोहति। स नैव दानमुपलभते। न दानपारमितां न बोधिसत्त्वं न प्रतिग्राहकं न तान् मनसिकारानुपलभते। एवं खलु बोधिसत्त्वो महासत्त्वो महायानसमारूढ इत्युच्यते। अनुपलम्भयोगेन। इहायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् शीलपारमितां

समारोहति। स नैव शीलमुपलभते न शीलपारमितां न बोधिसत्त्वं न तान् मनसिकारानुपलभते। एवं खलु बोधिसत्त्वो महासत्त्वः शीलपारमितासमारूढ इत्युच्यते। अनुपलम्भयोगेन। इहायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् क्षान्तिपारमितां समारोहति। स नैव क्षान्तिमुपलभते न क्षान्तिपारमितां न बोधिसत्त्वं न तान् मनसिकारानुपलभते। एवं खलु बोधिसत्त्वोमहासत्त्वः क्षान्तिपारमिता समारूढ इत्युच्यते। अनुपलम्भयोगेन। इहायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायां चरन् वीर्य्यपारमितां समारोहति। स नैव वीर्य्यमुपलभते न वीर्य्यपारमितां न बोधिसत्त्वं न तान् मनसिकारानुपलभते। एवं खलु बोधिसत्त्वोमहासत्त्वो वीर्य्यपारमिता समारूढ इत्युच्यते। अनुपलम्भयोगेन। इहायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् ध्यानपारमितां समारोहति। स नैव ध्यानमुपलभते न ध्यानपारमितां न बोधिसत्त्वं न तान् मनसिकारानुपलभते। एवं खलु बोधिसत्त्वोमहासत्त्वो ध्यानपारमिता समारूढ इत्युच्यतेऽनुपलम्भयोगेन। इहायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमितायाश्चरन् प्रज्ञापारमितां समारोहति। स नैव कुशलधर्ममुपलभते। नाऽकुशलं न लौकिकं न लोकोत्तरं न संस्कृतं नाऽसंस्कृतं न सास्रवं नाऽनास्रवं धर्म्ममुपलभते। नापि प्रज्ञां न प्रज्ञापारमितामुपलभते न बोधिसत्त्वं न तान् मनसिकारानुपलभते। एवं खलु बोधिसत्त्वोमहासत्त्वः प्रज्ञापारमिता समारूढ इत्युच्यते। अनुपलम्भयोगेन।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वोऽव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैरध्यात्मशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैर्बहिर्द्धाशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैरध्यात्मबहिर्द्धाशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैः शून्यताशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैर्महाशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैः परमार्थशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैः संस्कृतशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैरसंस्कृतशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैरत्यन्तशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैरनवराग्रशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैरनवकारशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वा-

कारज्ञता प्रतिसंयुक्तैर्मनसिकारैः प्रकृतिशून्यतां भावयति। भावना-विभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैः सर्व्वधर्म्मशून्यतां भावयति। भवनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैः स्वलक्षणशून्यतां भावयति। भावनाविभावनार्थेन तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैरनुपलम्भशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरभावशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैः स्वभावशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैरभावस्वभावशून्यतां भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वोऽव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैः चत्वारिस्मृत्युपस्थानानि भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैः चत्वारिसम्यक्प्रहाणानि भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैश्चतुर ऋद्धिपादान् भावयति। भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैः पञ्चेन्द्रियाणि भावयति। भावना-

विभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैः पञ्चबलानि भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैः सप्तबोध्याङ्गानि भावयति। भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैरार्य्याष्टाङ्गमार्गं भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैरार्य्यसत्यानि भावयति । भावनाविभावनार्थेन। तच्चाऽनुपलम्भयोगेन। अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैश्चत्वारि ध्यानानि भावयति । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैश्चत्वार्य्यप्रमाणानि भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैश्चतस्र आरूप्यसमापत्तीर्भावयति । भावनाविभावनार्थेन । तच्चाऽनुलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरष्टौ विमोक्षान् भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्णवानुपूर्व्वविहारसमापत्ति भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखानि भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरभिज्ञाभावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः

समाधीन् भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्धारणीमुखानिभावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैस्तथागतबलानि भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैस्त्तारिवैशारद्यानि भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैस्तस्रः प्रतिसम्विदो भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्महामैत्रीं भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्महाकरुणां भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । अव्यवकीर्णैः सर्व्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरष्टादशावेणिकबुद्धधर्म्मान् भावयति । भावनाविभावनार्थेन । तच्चाऽनुपलम्भयोगेन । एवं खल्वायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्वो-महायानसमारूढ़ इत्युच्यते ।

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वोमहासत्त्व एवं जानाति । व्यवहारमात्र मेतद्यदुत बोधिसत्त्व इति बोधिसत्त्वाऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतरूपं रूपाऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतवेदनावेदनाऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतसञ्ज्ञासंज्ञानुपलब्धितामुपादाय । नाममात्रमेतद्यदुतसंस्काराः संस्काराऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतविज्ञानं विज्ञाना-

ऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतचक्षुश्चक्षुरणुपलब्धिता-मुपादाय। नाममात्रमेतद्यदुतश्रोत्रं श्रोत्राऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतघ्राणं घ्राणाऽनुपलब्धितामुपादाय। नाममात्र-मेतद्यदुतजिह्वाजिह्वाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतकायः कायाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतमनः मनोऽनुपलब्धि-तामुपादाय। नाममात्रमेतद्यदुतरूपं रूपाऽनुपलब्धितामुपादाय। नाममत्रमेतद्यदुतशब्दः शब्दाऽनुपलब्धितामुपादाय। नाममत्रमेत-द्यदुतगन्धो गन्धाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतरसो-रसाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतस्पर्शः स्पर्शाऽनुप-लब्धितामुपादाय। नाममात्रमेतद्यदुतधर्माः धर्माऽनुपलब्धिता-मुपादाय।

नाममात्रमेतद्यदुतचक्षुर्विज्ञानं चक्षुर्विज्ञानाऽनुपलब्धितामुपा-दाय। नाममात्रमेतद्यदुतश्रोत्रविज्ञनं श्रोत्रविज्ञानाऽनुपलब्धिता-मुपादाय। नाममात्रमेतद्यदुतघ्राणविज्ञान घ्राणविज्ञानाऽनुप-लब्धितामुपादाय। नाममात्रमेतद्यदुतजिह्वाविज्ञानं जिह्वाविज्ञाना-ऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतकायविज्ञानं कायविज्ञा-नाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतमनोविज्ञानं मनो-विज्ञानाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतचक्षुःसंस्पर्शश्चक्षुः-संस्पर्शाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतश्रोत्रसंस्पर्शः श्रोत्रसंस्पर्शाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतघ्राणसंस्पर्शः घ्राणसंस्पर्शाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतजिह्वासंस्पर्शः जिह्वासंस्पर्शाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतकायसंस्पर्शः

कायसंस्पर्शोऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतमनःसंस्पर्शः मनःसंस्पर्शोऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतचक्षुःसंस्पर्शजावेदना चक्षुःसंस्पर्शजावेदनाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतश्रोत्रसंस्पर्शजावेदनाश्रोत्रसंस्पर्शजावेदनाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतघ्राणसंस्पर्शजावेदनाघ्राणसंस्पर्शजावेदनाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतजिह्वासंस्पर्शजावेदना जिह्वासंस्पर्शजावेदनाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतकायसंस्पर्शजावेदनाकायसंस्पर्शजावेदनाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतमनःसंस्पर्शजावेदनामनःसंस्पर्शजावेदनाऽनुपलब्धितामुपादाय।

नाममात्रमेतद्यदुतपृथिवीधातुः पृथिवीधात्वनुपलब्धितामुपादाय। नाममात्रमेतद्यदुताऽब्धातुरब्धात्वनुपलब्धितामुपादाय। नाममात्रमेतद्यदुततेजोधातुतेजोधात्वनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतवायुधातुर्वायुधात्वनुपलब्धितामुपादाय। नाममात्रमेतद्यदुताकाशधातुराकाशधात्वनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतविज्ञानधातुर्विज्ञानधात्वनुपलब्धितामुपादाय। नाममात्रमेतद्यदुताविद्या अविद्याऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतसंस्काराः संस्काराऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतविज्ञानं विज्ञानाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतनामरूपं नामरूपाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतषडायतनं षडायतनाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतस्पर्शः स्पर्शोऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतवेदनावेदनाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुततृष्णातृष्णाऽनुपलब्धितामुपादाय।

नाममात्रमेतद्यदुतोपादानमुपादानाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतभवोभवाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतजातिर्जात्यनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतजरामरणं जरामरणाऽनुपलब्धितामुपादाय।

नाममात्रमेतद्यदुतदानपारमितादानपारमिताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतशीलपारमिताशीलपारमिताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतक्षान्तिपारमिताक्षान्तिपारमिताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतवीर्य्यपारमितावीर्य्यपारमिताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतध्यानपारमिताध्यानपारमिताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतप्रज्ञापारमिताप्रज्ञापारमिताऽनुपलब्धितामुपादाय।

नाममात्रमेतद्यदुताऽध्यात्मशून्यताऽध्यात्मशून्यताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतबहिर्द्धाशून्यताबहिर्द्धाशून्यताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुताऽध्यात्मबहिर्द्धाशून्यताऽध्यात्मबहिर्द्धाशून्यताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतशून्यताशून्यताशून्यताशून्यताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतमहाशून्यतामहाशून्यताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतपरमार्थशून्यतापरमार्थशून्यताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतसंस्कृतशून्यतासंस्कृतशून्यताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुताऽसंस्कृतशून्यताऽसंस्कृतशून्यताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुताऽत्यन्तशून्यताऽत्यन्तशून्यताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुताऽनवराग्रशून्यताऽनवराग्रशून्यताऽनुपलब्धितामु-

पादाय । नाममात्रमेतद्यदुतानवकारशून्यताऽनवकारशून्यताऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतप्रकृतिशून्यताप्रकृतिशून्यताऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतसर्व्वधर्म्मशून्यतासर्व्वधर्म्मशून्यताऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतस्वलक्षणशून्यतास्वलक्षणशून्यताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुताऽनुपलम्भशून्यताऽनुपलम्भशून्यताऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुताभावशून्यताऽभावशून्यताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतस्वभावशून्यतास्वभावशून्यताऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुताऽभावस्वभावशून्यताऽभावस्वभावशून्यताऽनुपलब्धितामुपादाय ।

नाममात्रमेतद्यदुतचत्वारिस्मृत्युपस्थानानि चत्वारिस्मृत्युपस्थानाऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतचत्वारिसम्यक्प्रहाणानिचत्वारिसम्यक्प्रहाणाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतचत्वारऋद्धिपादाः चत्वारिऋद्धिपादाऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतपञ्चेन्द्रियाणीन्द्रियाऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतपञ्चबलानिबलाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतसप्तबोध्यङ्गानिबोध्यङ्गाऽनुपलब्धितामुपादाय । नामामात्रमेतद्यदुतार्य्याष्टाङ्गमार्गं आर्य्याष्टाङ्गमार्गाऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतार्य्यसत्यानि आर्य्यसत्याऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतध्यानानि ध्यानाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुताऽप्रमाणान्यप्रमाणाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतारूप्यसमापत्तय आरूप्यसमापत्त्यनुपलब्धितामुपादाय। नाममात्रमेतद्यदुताष्टौ विमोक्षाःविमोक्षाऽनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतानु-

पूर्व्वविहारसमापत्तयोऽनुपूर्व्वविहारसमापत्त्यनुपलब्धितामुपादाय । नाममात्रमेतद्यदुतशून्यतानिमित्ताप्रणिहितविमोक्षमुखानिशून्यतानिमित्ताप्रणिहितविमोक्षमुखाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुताऽभिज्ञाभिज्ञाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतसमाधयः समाध्यनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतधारणीमुखानिधारणीमुखानुपलब्धितामुपादाय। नाममात्रमेतद्यदुतदशतथागतबलानि तथागतबलाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतचत्वारिवैशारद्यानि वैशारद्यानुपलब्धितामुपादाय। नाममात्रमेतद्यदुतचतस्रः प्रतिसम्विदः प्रतिसम्विदनुपलब्धितामुपादायः। नाममात्रमेतद्यदुतमहामैत्रीमहामैत्र्यनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतमहाकरुणामहाकरुणाऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुताष्टादशावेणिकाबुद्धधर्म्माः आवेणिकबुद्धधर्म्मानुपलब्धितामुपादाय। नाममात्रमेतद्यदुततथतातथतानुपलब्धितामुपादाय। नाममात्रमेतद्यदुताऽवितथताऽवितथतानुपलब्धितामुपादाय। नाममात्रमेतद्यदुतधर्म्मताधर्म्मताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतधर्म्मधातुधर्म्मधात्वनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतधर्म्मस्थितिताधर्म्मस्थितिताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतधर्म्मनियामताधर्म्मनियामताऽनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतभूतकोटिर्भूतकोट्यनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतबोधिर्व्बोध्यनुपलब्धितामुपादाय। नाममात्रमेतद्यदुतबुद्धो बुद्धानुपलब्धितामुपादाय। एवं खल्वायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वो महायानसमारूढ इत्युच्यते ।॥

पुनरपरमायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वः प्रथमचित्तोत्पादमुपादाय बोधिसत्त्व सर्व्वाभिज्ञां परिपूर्य्य सत्त्वान् परिपाचयति। बुद्धक्षेत्रेण बुद्धक्षेत्रं संक्रामति। बुद्धानां भगवतां सत्कारेणतायै गुरुकरणतायै माननतायै पूजनतायै योऽयं जापयिकस्तेषां बुद्धानां भगवतां पूजासत्कारणविधिस्तेषां बुद्धानां भगवतामन्तिकाद्धर्मं शृणोति। यदुत एवमेव बोधिसत्त्वयानं। स तद्बोधिसत्त्वयानमभिरुह्य बुद्धक्षेत्रेण बुद्धक्षेत्रं संक्रामन् बुद्धक्षेत्रञ्च परिशोधयति। सत्त्वांश्च परिपाचयति। न चाऽस्य बुद्धक्षेत्रसंज्ञा प्रवर्त्तते। सोऽद्वयभूमौ स्थितायादृशेनात्मभावेन शक्नोति सत्त्वानामर्थं कर्त्तुं तादृशमात्मभावं सञ्चिन्त्य परिगृह्णाति। स न जातु तेन यानेन विरहितो भवति। यावत् सर्व्वाकारज्ञतामनुप्राप्नोति। स सर्व्वाकारज्ञतामनुप्राप्य धर्मचक्रं प्रवर्त्तयति अप्रवर्त्तनीयं श्रावकप्रत्येकबुद्धैः। सदेवनागयक्षगन्धर्व्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्येण लोकेन। तस्याऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धस्य पूर्व्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तोवर्णं भाषन्ते यश उद्दीरयन्ति। घोषमनुश्रावयन्ति। एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वो महासत्त्वो महायानमनुत्तरयानं प्रवरयानमभिरुह्य सर्व्वाकारज्ञतामनुप्राप्तः सर्व्वाकारज्ञतामनुप्राप्य धर्मचक्रं प्रवर्त्तयति। दक्षिणस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तो वर्णं भाषन्ते यश उद्दीरयन्ति। घोषमनुश्रावयन्ति। एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वो महासत्त्वो महायानमनुत्तरयानं प्रवरयानमभिरुह्य सर्व्वाकारज्ञतामनुप्राप्तः सर्व्वाकारज्ञतामनुप्राप्य धर्मचक्रं

प्रवर्त्तयति । पश्चिमायां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तो वर्णाभाषन्ते यश उद्दीरयन्ति घोषमनुश्रावयन्ति । एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वो महासत्त्वो महायानमनुत्तरयानं प्रवरयानमभिरुह्य सर्व्वाकारज्ञतामनुप्राप्तः सर्व्वाकारज्ञतामनुप्राप्यधर्म्मचक्रं प्रवर्त्तयति । उत्तरस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तो वर्णं भाषन्ते यश उद्दीरयन्ति घोषमनुश्रावयन्ति । एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वो महासत्त्वो महायानमनुत्तरयानं प्रवरयानमभिरुह्य सर्व्वाकारज्ञतामनुप्राप्तः सर्व्वाकारज्ञतामनुप्राप्यधर्म्मचक्रं प्रवर्त्तयति । पूर्व्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तो वर्णं भाषन्ते यश उद्दीरयन्ति घोषमनुश्रावयन्ति । एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वो महासत्त्वो महायानमनुत्तरयानं प्रवरयानमभिरुह्य सर्व्वाकारज्ञतामनुप्राप्तः सर्व्वाकारज्ञतामनुप्राप्यधर्म्मचक्रं प्रवर्त्तयति । दक्षिणपश्चिमायां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तो वर्णं भाषन्ते यश उद्दीरयन्ति घोषमनुश्रावयन्ति । एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वो महासत्त्वो महायानमनुत्तरयानं प्रवरयानमभिरुह्य सर्व्वाकारज्ञतामनुप्राप्तः सर्व्वाकारज्ञतामनुप्राप्यधर्म्मचक्रं प्रवर्त्तयन्ति । पश्चिमोत्तरस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तो वर्णं भाषन्ते यश उद्दीरयन्ति घोषमनुश्रावयन्ति । एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वो महासत्त्वो महायानमनुत्तरयानं प्रवरयानमभिरुह्य सर्व्वाकारज्ञतामनुप्राप्तः सर्व्वाकारज्ञतामनुप्राप्यधर्म्मचक्रं प्रवर्त्तयति । उत्तरपूर्व्वस्यां दिशि गङ्गानदी-

वालुकोपमेषु लोकधातुषु बुद्धाभगवन्तो वर्णं भाषन्ते यश उद्दीरयन्ति। घोषमनुश्रावयन्ति। एषोऽमुष्मिन् लोकधातौ बुद्धाभगवन्तो वर्णं भाषन्ते यश उद्दीरयन्ति घोषमनुश्रावयन्ति। एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वो महासत्त्वो महायानमनुत्तरयानं प्रवरयानमभिरुह्य सर्व्वाकारज्ञतामनुप्राप्तः। सर्व्वाकारज्ञतामनुप्राप्य धर्म्मचक्रं प्रवर्त्तयति। अधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तो वर्णं भाषन्ते यश उद्दीरयन्ति। घोषमनुश्रावयन्ति। एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वो महासत्त्वो महायानमनुत्तरयानं प्रवरयानमभिरुह्य सर्व्वाकारज्ञतामनुप्राप्तः सर्व्वाकारज्ञतामनुप्राप्य धर्म्मचक्रं प्रवर्त्तयति। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धाभगवन्तो वर्णं भाषन्ते यश उद्दीरयन्ति। घोषमनुश्रावयन्ति। एषोऽमुष्मिन् लोकधातौ बोधिसत्त्वो महासत्त्वो महायानमनुत्तरयानं प्रवरयानमभिरुह्य सर्व्वाकारज्ञतामनुप्राप्तः सर्व्वाकारज्ञतामनुप्राप्य धर्म्मचक्रं प्रवर्त्तयति। एवं खल्वायुष्मञ्छारद्वतीपुत्र बोधिसत्त्वो महासत्त्वो महायानसमारूढ़ इत्युच्यते।

अथायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। महासन्नाह सन्नद्धो महासन्नाह सन्नद्ध इति भगवन्नुच्यते। कियता भगवन् बोधिसत्त्वोमहासत्त्वो महासन्नाह सन्नद्ध इत्युच्यते। एवमुक्ते भगवानायुष्मन्तं सुभूति मेतदवोचत्। इह सुभूते बोधिसत्त्वोमहासत्त्वो महायानसन्नाह सन्नद्धः। यदुत दानपारमितासन्नाहं सन्नह्य शीलपारमितासन्नाहं सन्नह्य क्षान्तिपारमितासन्नाहं सन्नह्य वीर्य्यपारमितासन्नाहं सन्नह्य ध्यानपारमितासन्नाहं सन्नह्य प्रज्ञापारमितासन्नाहं

सम्पन्न। अध्यात्मशून्यतासन्नाहं सन्नह्य बहिर्द्धाशून्यतासन्नाहं सन्नह्य। अध्यात्मबहिर्द्धाशून्यतासन्नाहं सन्नह्य शून्यताशून्यतासन्नाहं सन्नह्य महाशून्यतासन्नाहं सन्नह्य परमार्थशून्यतासन्नाहं सन्नह्य संस्कृत-शून्यतासन्नाहं सन्नह्य असंस्कृतशून्यतासन्नाहं सन्नह्य अत्यन्तशून्यता-सन्नाहं सन्नह्य अनवराग्रशून्यतासन्नाहं सन्नह्य अनवकारशून्यता-सन्नाहं सन्नह्य प्रकृतिशून्यतासन्नाहं सन्नह्य सर्व्वधर्म्मशून्यतासन्नाहं सन्नह्य स्वलक्षणशून्यतासन्नाहं सन्नह्य अनुपलम्भशून्यतासन्नाहं सन्नह्य अभावशून्यतासन्नाहं सन्नह्य स्वभावशून्यतासन्नाहं सन्नह्य अभाव-स्वभावशून्यतासन्नाहं सन्नह्य। स्मृत्युपस्थानसन्नाहं सन्नह्य सम्यक्-प्रहाणसन्नाहं सन्नह्य ऋद्धिपादसन्नाहं सन्नह्य इन्द्रियसन्नाहं सन्नह्य बलसन्नाहं सन्नह्य बोध्यङ्गसन्नाहं सन्नह्य आर्य्याष्टाङ्गमार्गसन्नाहं सन्नह्य आर्य्यसत्यसन्नाहं सन्नह्य ध्यानसन्नाहं सन्नह्य अप्रमाणसन्नाहं सन्नह्य आरूप्यसमापत्तिसन्नाहं सन्नह्य विमोक्षसन्नाहं सन्नह्य अनु-पूर्व्वविहारसमापत्तिसन्नाहं सन्नह्य शून्यतानिमित्ताप्रणिहितवि-मोक्षमुखसन्नाहं सन्नह्य समाधिसन्नाहं सन्नह्य अभिज्ञासन्नाहं सन्नह्य धारणीमुखसन्नाहं सन्नह्य तथागतबलसन्नाहं सन्नह्य वैशारद्यसन्नाहं सन्नह्य प्रतिसम्विद्सन्नाहं सन्नह्य महामैत्रीसन्नाहं सन्नह्य महाकरुणा-सन्नाहं सन्नह्य अष्टादशावेणिकबुद्धधर्म्मसन्नाहं सन्नह्य सर्व्वाकार-ज्ञतासन्नाहं सन्नह्य बुद्धविषयसन्नाहं सन्नह्य। इयं त्रिसाहस्रं लोकधातुमाभयास्फुरित्वा। पूर्व्वस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातूनाभयास्फुरति। दक्षिणस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातूनाभयास्फुरति। पश्चिमायां दिशि गङ्गानदीवालुकोपमान

लोकधातूनाभयास्फुरति। उत्तरस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातूनाभयास्फुरति। पूर्व्वदक्षिणस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातूनाभयास्फुरति। दक्षिणपश्चिमायां दिशि गङ्गानदीवालुकोपमान् लोकधातूनाभयास्फुरति। पश्चिमोत्तरस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातूनाभयास्फुरति। उत्तरपूर्व्वस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातूनाभयास्फुरति। अधस्ताद्दिशि गङ्गानदीवालुकोपमान् लोकधातूनाभयास्फुरति। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमान् लोकधातूनाभयास्फुरति। इमं त्रिसाहस्रमहासाहस्रलोकधातुं षड्विकारं प्रकम्प्य पूर्व्वस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् षड्विकारान् प्रकम्पयति। दक्षिणस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् षड्विकारान् प्रकम्पयति। पश्चिमायां दिशि गङ्गानदीवालुकोपमान् लोकधातून् षड्विकारान् प्रकम्पयति। उत्तरस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् षड्विकारान् प्रकम्पयति। पूर्व्वदक्षिणस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् षड्विकारान् प्रकम्पयति। दक्षिणपश्चिमायां दिशि गङ्गानदीवालुकोपमान् लोकधातून् षड्विकारान् प्रकम्पयति। पश्चिमोत्तरस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् षड्विकारान् प्रकम्पयति। उत्तरपूर्व्वस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् षड्विकारान् प्रकम्पयति। अधस्ताद्दिशि गङ्गानदीवालुकोपमान् लोकधातून् षड्विकारान् प्रकम्पयति। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमान् लोकधातून् षड्विकारान् प्रकम्पयति।

सोऽस्मिन् त्रिसाहस्रमहासाहस्रे लोकधातौ यो नैरयिकोऽग्नि-स्कन्धस्तं सर्वं निर्वाप्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा नैरयिकाः सत्त्वास्तं बुद्धशब्दसुखसौमनस्यं प्रतिलभन्ते। ते तेन सुखसौमनस्येन ततो निरयेभ्यो व्युत्तिष्ठन्तो। ते च ततो निरयेभ्यो व्युत्थाय यत्र यत्र लोकधातुषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मञ्च देशयन्ति। ते तत्र तत्रोपपद्यन्ते। सोऽस्मिंस्त्रिसाहस्रमहासाहस्रे लोकधातौ तिर्यग्योनिकानां सत्त्वानां तिर्यग्योनिदुःखं प्रशमय्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते तैर्यग्योनिकाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। ते तेन सुखसौमनस्येन ततस्तिर्यग्योनिभ्यो व्युत्तिष्ठन्ते। ते ततस्तिर्यग्योनेर्व्युत्थाय यत्र यत्र बुद्धक्षेत्रे बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। ततोऽस्मिंस्त्रिसाहस्रमहासाहस्रे लोकधातौ यामलौकिकानां सत्त्वानां यमलोकदुःखं प्रशमय्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति। शब्दमुदीरयति। घोषमनुश्रावयति। ततो यामलौकिकाः सत्त्वास्तच्च बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। ते तेन सुखसौमनस्येन ततो यमलोकाद्व्युत्तिष्ठन्ते। ततो यमलोकाद्व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। स पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु यो नैरयिकोऽग्निस्कन्धस्तं सर्वं

निर्व्वाप्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति घोषमनुश्रावयति । तदा ते नैरयिकाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते । ते तेन सुखसौमनस्येन ततो नरकेभ्यो व्युत्तिष्ठन्ते । ततो नरकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्म्मंश्च देशयन्ति तत्र तत्रोपपद्यन्ते । स दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु नैरयिकोऽग्निस्कन्धस्तं सर्व्वं निर्व्वाप्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति । घोषमनुश्रावयति । तदा ते नैरयिकाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते । तेन सुखसौमनस्येन ततो नरकेभ्यो व्युत्तिष्ठन्ते । ते ततो नरकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति । धर्म्मंश्च देशयन्ति । तत्र तत्रोपपद्यन्ते । सपश्चिमायां दिशिगङ्गानदीवालुकोपमेषु लोकधातुषु यो नैरयिकोऽग्निस्कन्धस्तं सर्व्वं निर्व्वाप्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति । घोषमनुश्रावयति । तदा ते नैरयिकाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते । तेन सुखसौमनस्येन ततो नरकेभ्यो व्युत्तिष्ठन्ते । ततो नरकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्म्मंश्च देशयन्ति । तत्र तत्रोपपद्यन्ते । स उत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु यो नैरयिकोऽग्निस्कन्धस्तं सर्व्वं निर्व्वाप्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति घोषमनुश्रावयति । तदा ते नैरयिकाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं

प्रतिलभन्ते। तेन सुखसौमनस्येन ततो नरकेभ्यो व्युत्तिष्ठन्ते। ततो नरकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। एवं दक्षिणं पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु यो नैरयिकोऽग्निस्कन्धस्तं सर्व्वं निर्व्वाप्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति घोषमनुश्रावयति। तदा ते नैरयिकाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन सुखसौमनस्येन ततो नरकेभ्यो व्युत्तिष्ठन्ते। ततो नरकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति। धर्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। एवं दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु यो नैरयिकोऽग्निस्कन्धस्तं सर्व्वं निर्व्वाप्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते नैरयिकाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन च सुखसौमनस्येन ततो नरकेभ्यो व्युत्तिष्ठन्ते। ततो नरकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति। धर्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। एवं पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु यो नैरयिकोऽग्निस्कन्धस्तं सर्व्वं निर्व्वाप्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते नैरयिकाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते तेन च सुखसौमनस्येन ततो नरकेभ्यो व्युत्तिष्ठन्ते। ततो नरकेभ्यो व्युत्थाय यत्र यत्र बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति। धर्मञ्च

देशयन्ति तत्र तत्रोपपद्यन्ते। स पूर्वोत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु यो नैरयिकोऽग्निस्कन्धस्तं सर्व्वं निर्व्वाप्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते नैरयिकाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन च सुखसौमनस्येन ततो नरकेभ्यो व्युत्तिष्ठन्ते। ततो नरकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्म्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। सोऽधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु यो नैरयिकोऽग्निस्कन्धस्तं सर्व्वं निर्व्वाप्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते नैरयिकाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन च सुखसौमनस्येन ततो नरकेभ्यो व्युत्तिष्ठन्ते। ततो नरकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्म्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। स उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु यो नैरयिकोऽग्निस्कन्धस्तं सर्व्वं निर्व्वाप्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते नैरयिकाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन च सुखसौमनस्येन ततो नरकेभ्यो व्युत्तिष्ठन्ते। ततो नरकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्म्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते।

स पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु

तिर्य्यग्योनियमलोकोपपन्नानां सत्त्वानां तिर्य्यग्योनि यमलोकदुःखं प्रशमय्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते तिर्य्यग्योनि यमलोकोपपन्नाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन च सुखसौमनस्येन तेभ्यस्तिर्य्यग्योनि यमलोकेभ्यो व्युत्तिष्ठन्ते। ते तेभ्यस्तिर्य्यग्योनि यमलोकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्म्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। स दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तिर्य्यग्योनि यमलोकोपपन्नानां सत्त्वानां तिर्य्यग्योनियमलोकदुःखं प्रशमय्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते तिर्य्यग्योनि यमलोकोपपन्नाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन सुखसौमनस्येन तेभ्यस्तिर्य्यग्योनि यमलोकेभ्यो व्युत्तिष्ठन्ते। तेभ्यस्तिर्य्यग्योनि यमलोकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रे बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्म्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। स पश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तिर्य्यग्योनियमलोकोपपन्नानां सत्त्वानां तिर्य्यग्योनियमलोकदुःखं प्रशमय्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते तिर्य्यग्योनियमलोकोपपन्नाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन च सुखसौमनस्येन तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो व्युत्तिष्ठन्ते। ते तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो। व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते याप-

यन्ति धर्म्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। स उत्तरस्या-न्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तिर्य्यग्योनि लोकोपपन्नानां सत्त्वानां तिर्य्यग्योनियमलोकदुःखं प्रशमय्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते तिर्य्यग्योनियमलोकोपपन्नाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन च सुखसौमनस्येन तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो च्युत्तिष्ठन्ते। ते तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्म्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। स पूर्व्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तिर्य्यग्योनियमलोकोपपन्नानां सत्त्वानां तिर्य्यग्योनियमलोकदुःखं प्रशमय्य नमस्तस्मै-तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते तिर्य्यग्योनियमलोकोपपन्नानां सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन सुखसौमनस्येन तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो च्युत्तिष्ठन्ते। ते तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्म्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। स दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तिर्य्यग्योनियमलोकोपपन्नानां सत्त्वानां तिर्य्यग्योनियमलोकदुःखं प्रशमय्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते तिर्य्यग्योनियमलोकोपपन्ना सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते तेन सुखसौमनस्येन तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो

व्युत्तिष्ठन्ते ते तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो व्युत्थाय यत्र यत्र बुद्धा-भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मंञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोक-धातुषु तिर्य्यग्योनियमलोकोपपन्नानां सत्त्वानां तिर्य्यग्योनियम-लोकदुःखं प्रशमय्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयति। तदा ते तिर्य्यग्योनियमलो-कोपपन्नाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन सुखसौमनस्येन तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो व्युत्तिष्ठन्ते। तेभ्य-स्तिर्य्यग्योनियमलोकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्त-स्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मंञ्च देशयन्ति। तत्र तत्रोप-पद्यन्ते। स उत्तरपूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तिर्य्यग्योनियमलोकोपपन्नानां सत्त्वानां तिर्य्यग्योनियमलोकदुःखं प्रशमय्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदी-रयति। घोषमनुश्रावयति। तदा ते तिर्य्यग्योनियमलोकोपपन्नाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन सुखसौ-मनस्येन तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो व्युत्तिष्ठन्ते। ते तेभ्यस्तिर्य्य-ग्योनियमलोकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मंञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। सोऽधस्तादिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तिर्य्यग्योनिय-मलोकोपपन्नानां सत्त्वानां तिर्य्यग्योनियमलोकदुःखं प्रशमय्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनुश्रावयंति। तदा ते तिर्य्यग्योनियमलोकोपपन्नाः सत्त्वास्तं

बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन सुखसौमनस्येन तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो व्युत्तिष्ठन्ते। तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो व्युत्थाय यत्र यत्र बुद्धक्षेत्रेषु बुद्धाभगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मञ्च देशयन्ति। तत्र तत्रोपपद्यन्ते। स उपरिष्टा-द्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तिर्य्यग्योनियमलोको-पपन्नानां सत्त्वानां तिर्य्यग्योनियमलोकदुःखं प्रशमय्य नमस्तस्मै तथागतायार्हते सम्यक् सम्बुद्धायेति शब्दमुदीरयति। घोषमनु-श्रावयति। तदा ते तिर्य्यग्योनियमलोकोपपन्नाः सत्त्वास्तं बुद्धशब्दं श्रुत्वा सुखसौमनस्यं प्रतिलभन्ते। तेन सुखसौमनस्येन तेभ्यस्ति-र्य्यग्योनियमलोकेभ्यो व्युत्तिष्ठन्ते। तेभ्यस्तिर्य्यग्योनियमलोकेभ्यो व्युत्थाय यत्र यत्र बुद्धाभगवन्तस्तिष्ठन्ते ध्रियन्ते यापयन्ति। तत्र तत्रोपपद्यन्ते।

तद्यथापि नाम सुभूते दक्षोमायाकारोमायाकारान्तेवासी वा चतुर्महापथे महतोजननिकायस्य पुरतो नरकास्तिर्य्यग्योनियम-लोकांश्चाभिनिर्माय तेषां मायिकानां सत्त्वानां बुद्धशब्दमुद्घोषये-द्धर्म्मशब्दमुद्घोषयेत्संघशब्दमुद्घोषयेद्दच तेऽभिनिर्मितास्तेन बुद्धशब्देन धर्म्मशब्देन संघशब्देन ततो नरकेभ्यस्तिर्य्यग्योनियमलोकेभ्योव्युत्ति-ष्ठेरं स्तत्किं मन्यसे सुभूतेऽपि पुतेन मायाकारेण मायाकारान्ते-वासिना वा कश्चित्सत्त्वो नरकेभ्यस्तिर्य्यग्योनियमलोकाद्व्युत्थितो भवेत्। आह नोहीदं भगवन्। भगवानाह। एवमेव सुभूते बोधि-सत्त्वेन महासत्त्वेन दशसु दिक्षु अप्रमेयासंख्येयेषु लोकधातुषु सत्त्वा-स्तिर्य्यग्योनिभ्यो दुर्गतिभ्यः परिमोचेरन् नरकादिसत्त्वः परिमोचितो

भवति। तत्कस्य हेतोः। धर्मतैषा सुभूते धर्माणामाया धर्मतामुपादाय। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वो महासन्नाह सन्नद्ध इत्युच्यते।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वो दानपारमितायां स्थित्वा महासत्त्वाह सदङ्गुलिसाहस्र महासाहस्र लोकधातुं वैदूर्यमयमभिनिर्मिमीते वैदूर्यमयमभिनिर्माय चक्रवर्त्तिव्यूहमभिनिर्मिमीते। चक्रवर्त्तिव्यूहमभिनिर्माय अन्नमन्नार्थिकेभ्यो ददाति। पानं पानार्थिकेभ्यो ददाति। यानं यानार्थिकेभ्यो ददाति। वस्त्रं वस्त्रार्थिकेभ्यो ददाति। पुष्पं पुष्पार्थिकेभ्यो ददाति। माल्यं माल्यार्थिकेभ्यो ददाति। गन्धं गन्धार्थिकेभ्यो ददाति। विलेपनं विलेपनार्थिकेभ्यो ददाति। शयनमासनं शयनासनार्थिकेभ्यो ददाति। उपाश्रयमुपाश्रयार्थिकेभ्यो ददाति। प्राजीविकं प्राजीविकार्थिकेभ्यो ददाति। उपकरनमुपकरनार्थिकेभ्यो ददाति। ग्लानप्रत्ययभैषज्यपरिष्कारं ग्लानप्रत्ययभैषज्यपरिष्कारार्थिकेभ्यो ददाति। मणिमुक्तावैदूर्यशङ्खशिलाप्रवालरजतजातरूपार्थिकेभ्यो मणिमुक्तावैदूर्यशङ्खशिलाप्रवालरजतजातरूपाणि ददाति। यावदन्यतरान्यतरान् मानुष्यकान् परिष्कारान् ददाति। सोऽन्नमन्नार्थिकेभ्यो दत्त्वा पानं पानार्थिकेभ्यो दत्त्वा यानं यानार्थिकेभ्यो दत्त्वा वस्त्रं वस्त्रार्थिकेभ्यः पुष्पं पुष्पार्थिकेभ्यः। माल्यं माल्यार्थिकेभ्यः गन्धं गन्धार्थिकेभ्यः विलेपनं विलेपनार्थिकेभ्यः शयनमासनं शयनासनार्थिकेभ्यः उपाश्रयमुपाश्रयार्थिकेभ्यः प्राजीविकं प्राजीविकार्थिकेभ्यः उपकरनमुपकरनार्थिकेभ्यः ग्लानप्रत्ययभैषज्यपरिष्कारं

ग्लानप्रत्ययभैषज्यपरिष्कारार्थिकेभ्यः मणिमुक्तावैदूर्य्यशङ्खशिला-प्रवालरजतजातरूपाणि मुक्तावैदूर्य्यशङ्खशिलाप्रवालरजतजातरू-पार्थिकेभ्यः दत्वा यावदन्यतराऽन्यतरान् मानुष्यकान् परिष्कारान् दत्वातेभ्यः सत्त्वेभ्योधर्म्मं देशयति। यदुतेमामेव षट् पारमिताप्रति-संयुक्तं धर्म्मदेशनां। ते च खलु पुनः सत्त्वास्तां धर्म्मदेशनां श्रुत्वा न जातुषड्भिः पारमिताभिर्व्विरहितो भवति। यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते।

तद्यथापि नाम सुभूते दक्षोमायाकारोमायाकारान्तेवासीवा चतुर्म्महापथे महतोजननिकायस्याग्रेमहान्तं जननिकायमभिनिर्मा-यान्नमन्नार्थिकेभ्यो दद्यात्पानं पानार्थिकेभ्यो दद्यात् वस्त्रं वस्त्रार्थि-केभ्यो दद्यात् पुष्पं पुष्पार्थिकेभ्यो दद्यात् माल्यं माल्यार्थिकेभ्यो दद्यात् गन्धं गन्धार्थिकेभ्यो दद्यात् विलेपनं विलेपनार्थिकेभ्यो दद्यात् शयनमासनं शयनासनार्थिकेभ्यो दद्यात् उपाश्रयमुपा-श्रयार्थिकेभ्यो दद्यात् आजीविकं आजीविकार्थिकेभ्यो दद्यात् उप-करणमुपकरणार्थिकेभ्यो दद्यात् ग्लानप्रत्ययभैषज्यपरिष्कारान् ग्लानप्रत्ययभैषज्यपरिष्कारार्थिकेभ्यो दद्यात् मणिमुक्तावैदूर्य्यशङ्ख-शिलाप्रवाडरजतजातरूपाणि मणिमुक्तावैदूर्य्यशङ्खशिलाप्रवालरजत-जातरूपार्थिकेभ्यो दद्यात् यावदन्यतरान्यतरान् मानुष्यकान् परि-ष्कारान् दद्यात्। तत् किं मन्यसे सुभूतेऽपि नु तेन मायाकारेण मायाकारान्तेवासिनावाकश्चिित्सत्त्वाय किञ्चिद्दत्तं भवेत्। आह नो हीदं भगवन्। भगवानाह। एवमेव सुभूते बोधिसत्त्वेन महा-सत्त्वेन यावच्चक्रवर्त्तिव्यूहमभिनिर्म्मायान्नमन्नार्थिकेभ्यो ददता पानं

पानार्थिकेभ्यो ददता यानं यानार्थिकेभ्यो ददता वस्त्रं वस्त्रार्थिकेभ्यो ददता पुष्पं पुष्पार्थिकेभ्यो ददता माल्यं माल्यार्थिकेभ्यो ददता गन्धं गन्धार्थिकेभ्यो ददता विलेपनं विलेपनार्थिकेभ्यो ददता शयनासनं शयनासनार्थिकेभ्यो ददता उपाश्रयमुपाश्रयार्थिकेभ्यो ददता प्राजीविकं प्राजीविकार्थिकेभ्यो ददता उपकरणमुपकरणार्थिकेभ्यो ददता ग्लानप्रत्ययभैषज्यपरिष्कारान् ग्लानप्रत्ययभैषज्यपरिष्कारार्थिकेभ्यो ददता मणिमुक्तावैदूर्यशङ्खशिलाप्रवालरजतजातरूपाणि मणिमुक्तावैदूर्यशङ्खशिलाप्रवालरजतजातरूपार्थिकेभ्यो ददता यावदन्यतरान्यतराम् मानुष्यकाम् परिष्कारान् ददता न कस्मैचिद्बलाय किञ्चिद्दत्तं भवति। तत्कस्य हेतोः धर्म्मतैषा सुभूते धर्म्माणां मायाधर्म्मतामुपादाय। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः शीलपारमितायां स्थित्वा सञ्चिन्त्योपपत्तिपरिग्रहेण चक्रवर्त्तिकुले प्रत्याजायते। स तत्र चक्रवर्त्तिश्वर्य्ये स्थित्वा सत्त्वान् दशकुशलेषु कर्म्मपथेषु प्रतिष्ठापयति। स चतुर्षु ध्यानेष्वप्रमाणेषु चतसृष्वारूप्यसमापत्तिषु पञ्चस्वभिज्ञासु चतुर्षु स्मृत्युपस्थानेषु चतुर्षु सम्यक् प्रहाणेषु चतुर्षु ऋद्धिपादेषु पञ्चस्विन्द्रियेषु पञ्चसु बलेषु सप्तसु बोध्यङ्गेषु। आर्य्याष्टाङ्गमार्गे शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु नवस्वनुपूर्व्वविहारसमापत्तिषु चतुर्ष्वार्य्यसत्येषु सर्व्वसमाधिषु सर्व्वधारणीमुखेषु दशसु तथागतबलेषु चतुर्षु वैशारद्येषु चतसृषु प्रतिसम्विल्सु महामैत्र्यां महाकरुणायां अष्टादशस्वावेणिकबुद्धधर्म्मेषु प्रतिष्ठापयति। ते

सत्त्वा न जातु विरहितो भवति तथा धर्मदेशनया यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते।

तद्यथापिनाम सुभूते दक्षोमायाकारोमायाकारान्तेवासीवा-चतुःपथे महतो जननिकायस्य पुरतोमहान्तं जननिकायमभिनिर्माय सत्त्वान् दशकुशलेषु कर्मपथेषु प्रतिष्ठापयेत्। चतुर्षुध्यानेषु चतुर्ष्वप्रमाणेषु चतसृष्वारूप्यसमापत्तिषु। पञ्चस्वभिज्ञासु चतुर्षु स्मृत्युपस्थानेषु चतुर्षु सम्यक् प्रहाणेषु चतुर्ष्वृद्धिपादेषु पञ्चेन्द्रियेषु पञ्चसु बलेषु सप्तसु बोध्यङ्गेषु आर्य्याष्टाङ्गमार्गे शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु नवस्वनुपूर्व्वविहारसमापत्तिषु चतुर्ष्वार्य्यसत्येषु सर्व्वसमाधिषु सर्व्वधारणीमुखेषु दशसु तथागतबलेषु चतुर्षु वैशारद्येषु चतसृषु प्रतिसम्वित्सु महामैत्र्यां महाकरुणायां अष्टादशस्वावेणिकबुद्धधर्म्मेषु प्रतिष्ठापयेत्। तत् किं मन्यसे सुभूतेऽपि गतेन मायाकारेण मायाकारान्तेवासिनाकश्चित्सत्त्वोदशकुशलेषु कर्मपथेषु प्रतिष्ठापितोभवेत्। चतुर्षुध्यानेषु चतुर्ष्वप्रमाणेषु चतसृष्वारूप्यसमापत्तिषु पञ्चस्वभिज्ञासु चतुर्षुस्मृत्युपस्थानेषु चतुर्षु सम्यक् प्रहाणेषु चतुर्ष्वृद्धिपादेषु पञ्चस्विन्द्रियेषु पञ्चसुबलेषु सप्तबोध्यङ्गेषु आर्य्याष्टाङ्गमार्गे शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु। नवस्वनुपूर्व्वविहारसमापत्तिषु चतुर्ष्वार्य्यसत्येषु सर्व्वसमाधिषु सर्व्वधारणीमुखेषु दशतथागतबलेषु चतुर्षु वैशारद्येषु चतसृषु प्रतिसम्वित्सु महामैत्र्यां महाकरुणायां अष्टादशावेणिकबुद्धधर्म्मेषु प्रतिष्ठापितो भवति। आह। नोहीदं भगवन्। एवमेव सुभूते बोधिसत्त्वेन महासत्त्वेनाप्रमेयासंख्येयानपि सत्त्वान् दशकुशलेषु कर्म्मपथेषु प्रति-

छाय चतुर्षु ध्यानेषु चतुर्ष्वप्रमाणेषु चतसृष्वारूप्य समापत्तिषु पञ्चस्वभिज्ञासु चतुर्षु स्मृत्युपस्थानेषु चतुर्षु सम्यक् प्रहाणेषु चतुर्ष्वृद्धिपादेषु पञ्चस्विन्द्रियेषु पञ्चसु बलेषु सप्तसु बोध्यङ्गेषु आर्य्याष्टाङ्गमार्गे शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखेषु अष्टासु विमोक्षेषु नवस्वनुपूर्व्वविहारसमापत्तिषु चतुर्व्वार्य्यसत्येषु सर्व्वसमाधिषु सर्व्वधारणीमुखेषु दशसु तथागतबलेषु चतुर्षु वैशारद्येषु चतसृषु प्रतिसम्वित्सु महामैत्र्यां महाकरुणायां अष्टादशावेणिकबुद्धधर्म्मेषु न कश्चित् सत्त्वः प्रतिष्ठापितो भवति । तत्कस्य हेतोः । धर्म्मतेयासुभूते धर्म्माणां मायाधर्म्मतामुपादाय । एवं खलु सुभूते बोधिसत्त्वो महासत्त्वो महासन्नाहं सन्नह्य इत्युच्यते ।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः क्षान्तिपारमितायां स्थित्वा सर्व्वसत्त्वान् क्षान्तिपारमितायां नियोजयति प्रतिष्ठापयति । कथञ्च सुभूते बोधिसत्त्वो महासत्त्वः क्षान्तिपारमितायां स्थित्वा सर्व्वसत्त्वान् क्षान्तिपारमितायां नियोजयति प्रतिष्ठापयति । इह सुभूते बोधिसत्त्वो महासत्त्वः प्रथमचित्तोत्पादमुपादायैव सन्नाहं सन्नह्यति । स चेत् सर्व्वसत्त्वा मे लोष्टदण्डशस्त्रप्रहारान् दद्युस्तत्र मयैकमपि क्षोभसहगतं चित्तं नोत्पादयितव्यं । सर्व्वसत्त्वांश्चैवं रूपायां क्षान्तौ प्रतिष्ठापयति ।

तद्यथापि नाम सुभूते दक्षोमायाकारो मायाकारान्तेवासी वा चतुर्महापथे महतो जनकायस्य पुरतो महान्तं जनकायमभिनिर्माय क्षान्तिपारमितायां नियोजयेत् प्रतिष्ठापयेत् किं मन्यसे सुभूतेऽपि नु तेन मायाकारेण मायाकारान्तेवासिना वा

कश्चित् सत्त्वः क्षान्तिपारमितायां प्रतिष्ठापितो भवेत् आह । नो हीदं भगवन् । भगवानाह । एवमेव सुभूते बोधिसत्त्वेन महासत्त्वेनाप्रमेयाऽसंख्येयान् सत्त्वान् क्षान्तिपारमितायां प्रतिष्ठाप्य न कश्चित्सत्त्वः क्षान्तिपारमितायां प्रतिष्ठापितो भवति । तत्कस्य हेतोः । धर्मतैषा सुभूते धर्माणां मायाधर्मतामुपादाय ।

एवं खलु सुभूते बोधिसत्त्वो महासत्त्वो महासंनाहसंनद्ध इत्युच्यते । पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वो वीर्यपारमितायां स्थित्वा सत्त्वान् वीर्यपारमितायां समादापयति निवेशयति प्रतिष्ठापयति । कथञ्च सुभूते बोधिसत्त्वो महासत्त्वो वीर्यपारमितायां स्थित्वा सर्वसत्त्वान् वीर्यपारमितायां समादापयति । निवेशयति प्रतिष्ठापयति । इह सुभूते बोधिसत्त्वो महासत्त्वः सर्वाकारज्ञता प्रतिसंयुक्तेन चित्तोत्पादेन सर्वसत्त्वान् कायिकचैतसिकं वीर्यं समादापयति निवेशयति प्रतिष्ठापयति । तद्यथापि नाम सुभूते दक्षोमायाकारो मायाकारान्तेवासी वा चतुर्महापथे महतो जनकायस्य पुरतो महान्तं जनकायमभिनिर्माय कायिकचैतसिकवीर्ये प्रतिष्ठापयेत् तत् किं मन्यसे सुभूतेऽपि नु तेन मायाकारेण वा मायाकारान्ते वासिना वा चतुर्महापथे महतोजनकायस्य पुरतो महान्तं जनकायमभिनिर्माय कायिकचैतसिकवीर्यप्रतिष्ठापयेत् । तत् किं मन्यसे सुभूतेऽपि नु तेन मायाकारेण वा मायाकारान्तेवासिना वा कश्चित् सत्त्वः कायिकचैतसिकवीर्यप्रतिष्ठापितो भवेत् । आह । नो हीदं भगवन् । एवमेव सुभूते बोधिसत्त्वेन महासत्त्वेनाऽप्रमेयाऽसंख्येयान्

सत्त्वान् कायिकचैतसिकवीर्य्ये प्रतिष्ठाप्य न कश्चित् सत्त्वः कायिकचैतसिकवीर्य्ये प्रतिष्ठापितो भवति । तत्कस्य हेतोः धर्म्मतैषा सुभूते धर्म्माणां मायाधर्म्मतामुपादाय । एवं खलु बोधिसत्त्वो महासत्त्वो महासन्नाह सन्नद्ध इत्युच्यते ।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वो ध्यानपारमितायां स्थित्वा सर्व्वसत्त्वान् ध्यानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति । कथञ्च सुभूते बोधिसत्त्वो महासत्त्वो ध्यानपारमितायां स्थित्वा सर्व्वसत्त्वान् ध्यानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति । इह सुभूते बोधिसत्त्वो महासत्त्वः सर्व्वधर्म्मसमतायां स्थित्वा यत्र कस्यचिद्धर्म्मस्य विक्षेपं वा समनुपश्यत्येवं ध्यानपारमितायां स्थितो भवति । स तथैव सत्त्वान् ध्यानपारमितायां समादापयति । निवेशयति । प्रतिष्ठापयति । ते च समादापिता न जातुविरहिता भवन्ति ध्यानपारमितायाः यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यते । तद्यथापि नाम सुभूते दक्षोमायाकारोमायाकारान्तेवासी वा चतुर्महापथे महतोजननिकायस्य पुरतो महान्तं जननिकायमभिनिर्म्माय ध्यानपारमितायां प्रतिष्ठापयति । तत् किं मन्यसे सुभूतेऽपि नु तेन मायाकारेण वा मायाकारान्तेवासिना वा कश्चित्सत्त्वो ध्यानपारमितायां प्रतिष्ठापितो भवेत् । आह । नोहीदं भगवन् । भगवानाह । एवमेव सुभूते बोधिसत्त्वेन महासत्त्वेन सर्व्वसत्त्वान् ध्यानपारमितायां प्रतिष्ठाप्य न कश्चित्सत्त्वो ध्यानपारमितायां प्रतिष्ठापितो भवति । तत्कस्य हेतोः । धर्म्मतैषा सुभूते धर्म्माणां माया धर्म्मतामुपा-

दाय। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वो महासन्नाह सन्नद्ध इत्युच्यते।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां स्थित्वा सर्व्वसत्त्वान् प्रज्ञापारमितायां समादापयति निवेशयति प्रतिष्ठापयति। कथञ्च सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां स्थित्वा सर्व्वसत्त्वान् प्रज्ञापारमितायां समादापयति निवेशयति प्रतिष्ठापयति। आह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायाञ्चरन् यत् कस्यचिद्धर्म्मस्योत्पादं वा निरोधं वा संक्लेशं वा व्यवदानं वा आरं वा पारं वोपलभते। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां स्थितो भवति। स तथैव सर्व्वसत्त्वान् प्रज्ञापारमितायां समादापयति निवेशयति प्रतिष्ठापयति। तद्यथापि नाम सुभूते दक्षोमायाकारो मायाकारान्तेवासी वा चतुर्महापथे महतोजननिकायस्य पुरतो महान्तं जननिकायमभिनिर्माय प्रज्ञापारमितायां समादापयेत् निवेशयेत् प्रतिष्ठापयेत्। तत् किं मन्यसे सुभूतेऽपि नु तेन मायाकारेण वा मायाकारान्तेवासिना वा कश्चित् सत्त्वः प्रज्ञापारमितायां समादापितो निवेशितः प्रतिष्ठापितो भवेत्। आह। नोहीदं भगवन्। भगवानाह। एवमेव सुभूते बोधिसत्त्वेन महासत्त्वेन सर्व्वसत्त्वान् प्रज्ञापारमितायां प्रतिष्ठाप्य न कश्चित् सत्त्वः प्रज्ञापारमितायां प्रतिष्ठापितो भवेत्। तत्कस्य हेतोः धर्म्मतैषासुभूते धर्म्माणां मायाधर्म्मतामुपादाय। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वो महासन्नाह सन्नद्ध इत्युच्यते।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वो महासन्नाहं सन्नह्य पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा यथैवात्मनादानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् दानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना शीलपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् शीलपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना क्षान्तिपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् क्षान्तिपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना वीर्य्यपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् वीर्य्यपारमितायां समादापयति। निवेशयति प्रतिष्ठापयति। यथैवात्मना ध्यानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् ध्यानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना प्रज्ञापारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् प्रज्ञापारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यदुत या एव षट्पारमितास्ते सत्त्वास्तं धर्म्मं श्रुत्वा न जातुविरहितो भवति षड्भिः पारमिताभिर्यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते।

दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु गत्वा यथैवात्मनादानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् दानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना शीलपारमितायां तिष्ठति। तथैव तत्र

लोकधातुषु ये सत्त्वास्तान् सर्व्वान् शीलपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मनाक्षान्तिपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् क्षान्तिपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना वीर्य्यपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् वीर्य्यपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना ध्यानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् ध्यानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना प्रज्ञापारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् प्रज्ञापारमितायां समादापयति निवेशयति प्रतिष्ठापयति। धर्म्मं देशयति यदुत या एव षट्पारमिता.। ते सत्त्वास्तं धर्म्मं श्रुत्वा न जातुविरहिता भवन्ति षड्भिः पारमिताभिर्यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते।

पश्चिमायान्दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा यथैवात्मनादानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् दानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना शीलपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् शीलपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना क्षान्तिपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् क्षान्तिपारमितायां समादापयति। यथैवात्मना वीर्य्यपारमितायां तिष्ठति तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् वीर्य्यपार-

मितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना ध्यानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् ध्यानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना प्रज्ञापारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् प्रज्ञापारमितायां समादापयति निवेशयति प्रतिष्ठापयति। धर्म्मं देशयति यदुत या एव षट्पारमिताः। ते सत्त्वास्तं धर्म्मं श्रुत्वा न जातुविरहिता भवन्ति षड्भिः पारमिताभिर्यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ति।

उत्तरस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा यथैवात्मना दानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् दानपारमितायां समादापयति। यथैवात्मना शीलपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् शीलपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना क्षान्तिपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् शीलपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना वीर्य्यपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् वीर्य्यपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना ध्यानपारमितायां तिष्ठति तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् ध्यानपारमितायां समादापयति। यथैवात्मना प्रज्ञापारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् प्रज्ञापारमितायां समादापयति। निवेशयति प्रतिष्ठापयति। धर्म्मञ्च देशयति

यदुत या एव षट्पारमिताः । ते सत्त्वास्तं धर्मं श्रुत्वा नजातु-विरहिता भवन्ति । षड्भिः पारमिताभिर्यावदनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यन्ते ।

पूर्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा यथैवात्मनादानपारमितायां तिष्ठति । तथैव तत्र लोकधातुषु ये सत्त्वास्ताम् सर्व्वान् दानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति । यथैवात्मना शीलपारमितायां तिष्ठति । तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् शीलपारमितायां समादापयति निवेशयति प्रतिष्ठापयति । यथैवात्मना क्षान्तिपारमितायां तिष्ठति । तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् क्षान्तिपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना वीर्य्यपारमितायां तिष्ठति । तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् वीर्य्यपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना ध्यानपारमितायां तिष्ठति । तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् ध्यानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना प्रज्ञापारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् प्रज्ञापारमितायां समादापयति निवेशयति प्रतिष्ठापयति । धर्म्मञ्च देशयति यदुत या एव षट्-पारमिताः । ते सत्त्वास्तं धर्म्मं श्रुत्वा न जातुविरहिता भवन्ति षड्भिपारमिताभिर्यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते ।

दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा यथैवात्मना दानपारमितायां तिष्ठति । तथैव तत्र लोक-

धातुषु ये सत्त्वास्तान् सर्व्वान् दानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना शीलपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् शीलपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना चान्तिपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् चान्तिपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना वीर्य्यपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् वीर्य्यपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना ध्यानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् ध्यानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना प्रज्ञापारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् प्रज्ञापारमितायां समादापयति निवेशयति प्रतिष्ठापयति। धर्म्मञ्च देशयति। यदुत या एव षट्पारमिताः। ते सत्त्वास्तं धर्म्मं श्रुत्वा न जातुविरहिता भवन्ति षड्भिः पारमिताभि यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते।

पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा यथैवात्मना दानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् दानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना शीलपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् शीलपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना चान्तिपारमितायां तिष्ठति।

तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् चान्तिपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना वीर्य्यपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् वीर्य्यपारमितायां समादापति निवेशयति प्रतिष्ठापयति। यथैवात्मना ध्यानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् ध्यानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति यथैवात्मना प्रज्ञापारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् प्रज्ञापारमितायां समादापयति निवेशयति प्रतिष्ठापयति। धर्म्मञ्च देशयति यदुत या एव षट्पारमिताः। ते सत्त्वास्तं धर्म्मं श्रुत्वा न जातु विरहिता भवन्ति षड्भिः पारमिताभिर्य्यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते।

उत्तरपूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा यथैवात्मना दानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् दानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना शीलपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् शीलपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना चान्तिपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् चान्तिपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना वीर्य्यपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् वीर्य्यपारमितायां समादापयति। यथैवात्मना ध्यानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान्

ध्यानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथै-वात्मना प्रज्ञापारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्वान् सर्व्वान् प्रज्ञापारमितायां समादापयति। निवेशयति प्रतिष्ठापयति। धर्म्मञ्च देशयति यदुत या एव षट्पारमिताः ते सत्वास्तान् धर्म्मं श्रुत्वा न जातुविरहिता भवन्ति षड्भिः पार-मिताभिर्यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते।

अधस्ताद्दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा यथै-वात्मना दानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्वास्तान् सर्व्वान् दानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना शीलपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्वास्तान् सर्व्वान् शीलपारमितायां समादा-पयति निवेशयति प्रतिष्ठापयति। यथैवात्मना क्षान्तिपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्वास्तान् सर्व्वान् क्षान्ति-पारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना वीर्य्यपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्वास्तान् सर्व्वान् वीर्य्यपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना ध्यानपारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्वास्तान् सर्व्वान् ध्यानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। यथैवात्मना प्रज्ञापारमितायां तिष्ठति। तथैव तत्र लोकधातुषु ये सत्वास्तान् सर्व्वान् प्रज्ञापारमितायां समादापयति निवेशयति प्रतिष्ठापयति। धर्म्मञ्च देशयति यदुत या एव षट्-पारमिताः। ते सत्वास्तान् धर्म्मं श्रुत्वा न जातुविरहिता भवन्ति

षड्भिः पारमिताभिः । यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते ।

उपरिष्टाद्दिशि गङ्गानदीवालुकोपमान् लोकधातून् गत्वा यथैवात्मना दानपारमितायां तिष्ठति । तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् दानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति । यथैवात्मना शीलपारमितायां तिष्ठति । तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् शीलपारमितायां समादापयति निवेशयति प्रतिष्ठापयति । यथैवात्मना क्षान्तिपारमितायां तिष्ठति । तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् क्षान्तिपारमितायां समादापयति निवेशयति प्रतिष्ठापयति यथैवात्मना वीर्य्यपारमितायां तिष्ठति । तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् वीर्य्यपारमितायां समादापयति निवेशयति प्रतिष्ठापयति । यथैवात्मना ध्यानपारमितायां तिष्ठति । तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् ध्यानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति । यथैवात्मना प्रज्ञापारमितायां तिष्ठति । तथैव तत्र लोकधातुषु ये सत्त्वास्तान् सर्व्वान् प्रज्ञापारमितायां समादापयति निवेशयति प्रतिष्ठापयति । धर्म्मञ्च देशयति यदुत या एव षट्पारमिताः । ते सत्त्वास्तं धर्म्मं श्रुत्वा न जातुविरहिता भवन्ति षड्भिः पारमिताभिः । यावदनुत्तरां सम्यक् सम्बोधिमभिसम्बुध्यन्ते ।

तद्यथापि नाम सुभूते दक्षो मायाकारो वा मायाकारान्तेवासी वा चतुर्महापथे महतोजनकायस्यापुरतो महान्तं जनकाय-

मभिनिर्माय षट्सु पारमितासु समादापयेन्निवेशयेत् प्रतिष्ठापयेत्। तत् किं मन्यसे सुभूतेऽपि नु तेन मायाकारेण वा मायाकारान्तेवासिना वा कश्चित् सत्त्वः षट्सु पारमितासु समादापितो निवेशितः प्रतिष्ठापितो वा भवेत्। आह नो हीदं भगवन्। भगवानाह। एवमेव बोधिसत्त्वेन महासत्त्वेन पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु। दक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु। पश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु। उत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु उत्तर पूर्व्वस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु। पूर्व्वदक्षिणस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु। दक्षिणपश्चिमायान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु। पश्चिमोत्तरस्यान्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु। अधस्ताद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु। उपरिष्टाद्दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये सत्त्वास्ते सर्व्वे षट्सु पारमितासु प्रतिष्ठापिता भवन्ति। तत् कस्य हेतोः। धर्मतैषा सुभूते धर्म्माणां मायाधर्म्मता मुपादाय। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते ॥

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वो महासन्नाहं सन्नह्य सर्व्वाकारज्ञता प्रतिसंयुक्तेन चित्तेन विहरन्नान्येषां चित्तोत्पादानामवकाशं ददाति। इयन्तो मया सत्त्वाः दानपारमितायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया शीलपारमितायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः।

इयन्तो मया सत्त्वाः क्षान्तिपारमितायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः वीर्य्यपारमितायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः ध्यानपारमितायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः प्रज्ञापारमितायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः।

इयन्तो मया सत्त्वाः अध्यात्मशून्यतायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः वहिर्द्धाशून्यतायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः अध्यात्मवहिर्द्धाशून्यतायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः शून्यताशून्यतायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः महाशून्यतायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः परमार्थशून्यतायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः संस्कृतशून्यतायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः असंस्कृतशून्यतायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्या। इयन्तो मया सत्त्वाः अत्यन्तशून्यतायां प्रतिष्ठापयितव्याः। इयन्तो मया न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः अनवराग्रशून्यतायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः अनवकारशून्यतायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः प्रकृति

शून्यतायां प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः सर्व्वधर्म्मशून्यतायां प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः स्वलक्षण-शून्यतायां प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः अनुपलम्भशून्यतायां प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः अभावशून्यतायां प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः स्वभावशून्यतायां प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठा-पयितव्याः । इयन्तो मया सत्त्वाः अभावस्वभावशून्यतायां प्रतिष्ठा-पयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः ।

इयन्तो मया सत्त्वाश्चतुर्षुस्मृत्युपस्थानेषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाश्चतुर्षु सम्यक्-प्रहाणेषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाश्चतुर्षुऋद्धिपादेषु प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठा-पयितव्याः। इयन्तो मया सत्त्वाः पञ्चस्विन्द्रियेषु प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः पञ्चसु बलेषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः सप्तसु बोध्यङ्गेषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठा-पयितव्याः। इयन्तो मया सत्त्वाः आर्य्याष्टाङ्गमार्गे प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः आर्य्यसत्येषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाश्चतुर्षु ध्यानेषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयि-

तव्याः । इयन्तो मया सत्त्वाश्चतुर्ष्वप्रमाणेषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः विमोक्षेषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः नवस्वनुपूर्व्वविहारसमापत्तिषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः शून्यतानिमित्ताप्रणिहित-विमोक्षेषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः पञ्चस्वभिज्ञासु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठा-पयितव्याः । इयन्तो मया सत्त्वाः सर्व्वसमाधिषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः सर्व्वधारणी-मुखेषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः दशसु तथागतबलेषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाश्चतुर्षु वैशारद्येषु प्रतिष्ठा-पयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाश्चतसृषु प्रतिसम्वित्सु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठा-पयितव्याः । इयन्तो मया सत्त्वा महामैत्र्यां प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः महाकरुणायां प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः अष्टादशस्वावेणिक बुद्धधर्म्मेषु प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः स्रोत आपत्ति फले प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठापयितव्याः । इयन्तो मया सत्त्वाः सकृदागामिफले प्रतिष्ठापयितव्याः । इयन्तो न प्रतिष्ठा-पयितव्याः । इयन्तो मया सत्त्वाः अनागामिफले प्रतिष्ठापयितव्याः ।

इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः अर्हत्त्वे प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः प्रत्येकबोधौ प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः मार्गाकारज्ञतायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः। इयन्तो मया सत्त्वाः सर्व्वाकारज्ञतायां प्रतिष्ठापयितव्याः। इयन्तो न प्रतिष्ठापयितव्याः।

अपि तु पुनरस्त्वेवं भवत्यप्रमेयाऽसंख्येया मया सत्त्वाः दानपारमितायां प्रतिष्ठापयितव्याः। शीलपारमितायां प्रतिष्ठापयितव्याः। क्षान्तिपारमितायां प्रतिष्ठापयितव्याः। वीर्य्यपारमितायां प्रतिष्ठापयितव्याः। ध्यानपारमितायां प्रतिष्ठापयितव्याः। प्रज्ञापारमितायां प्रतिष्ठापयितव्याः। अध्यात्मशून्यतायां प्रतिष्ठापयितव्याः। बहिर्द्धाशून्यतायां प्रतिष्ठापयितव्याः। अध्यात्मबहिर्द्धाशून्यतायां प्रतिष्ठापयितव्याः। शून्यताशून्यतायां प्रतिष्ठापयितव्याः। महाशून्यतायां प्रतिष्ठापयितव्याः। परमार्थशून्यतायां प्रतिष्ठापयितव्याः। संस्कृतशून्यतायां प्रतिष्ठापयितव्याः। असंस्कृतशून्यतायां प्रतिष्ठापयितव्याः। अत्यन्तशून्यतायां प्रतिष्ठापयितव्याः। अनवराग्रशून्यतायां प्रतिष्ठापयितव्याः। अनवकारशून्यतायां प्रतिष्ठापयितव्याः। प्रकृतिशून्यतायां प्रतिष्ठापयितव्याः। सर्व्वधर्म्मशून्यतायां प्रतिष्ठापयितव्याः। स्वलक्षणशून्यतायां प्रतिष्ठापयितव्या। अनुपलम्भशून्यतायां प्रतिष्ठापयितव्याः। अभावशून्यतायां प्रतिष्ठापयितव्याः। स्वभावशून्यतायां प्रतिष्ठापयितव्याः। अभावस्वभावशून्यतायां प्रतिष्ठापयितव्याः। चतुर्षुस्मृत्युपस्थानेषु प्रतिष्ठापयितव्याः। चतुर्षु

सम्यक् प्रहाणेषु प्रतिष्ठापयितव्याः। चतुर्षु ऋद्धिपादेषु प्रतिष्ठापयितव्याः। पञ्चस्विन्द्रियेषु प्रतिष्ठापयितव्याः। पञ्चसु बलेषु प्रतिष्ठापयितव्याः। सप्तसु बोध्यङ्गेषु प्रतिष्ठापयितव्याः। आर्य्याष्टाङ्गमार्गे प्रतिष्ठापयितव्याः। चतुर्ष्वार्य्यसत्येषु प्रतिष्ठापयितव्याः। चतुर्षु ध्यानेषु प्रतिष्ठापयितव्याः। चतसृष्वप्रमाणेषु प्रतिष्ठापयितव्याः। चतसृष्वारूप्यसमापत्तिषु प्रतिष्ठापयितव्याः। अष्टासु विमोक्षेषु प्रतिष्ठापयितव्याः। नवस्वनुपूर्व्वविहारसमापत्तिषु प्रतिष्ठापयितव्याः। शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु प्रतिष्ठापयितव्याः। पञ्चस्वभिज्ञासु प्रतिष्ठापयितव्याः। सर्व्वसमाधिषु प्रतिष्ठापयितव्याः। सर्व्वधारणीमुखेषु प्रतिष्ठापयितव्याः। दशसु तथागतबलेषु प्रतिष्ठापयितव्याः। चतुर्षु वैशारद्येषु प्रतिष्ठापयितव्याः। चतसृषु प्रतिसम्वित्सु प्रतिष्ठापयितव्याः। महामैत्र्यां प्रतिष्ठापयितव्याः। महाकरुणायां प्रतिष्ठापयितव्याः। अष्टादशावेणिकबुद्धधर्म्मेषु प्रतिष्ठापयितव्याः। स्रोत आपत्तिफले प्रतिष्ठापयितव्याः। सकृदागामिफले प्रतिष्ठापयितव्याः। अनागामिफले प्रतिष्ठापयितव्याः। अर्हत्त्वे प्रतिष्ठापयितव्याः। प्रत्येकबोधौ प्रतिष्ठापयितव्याः। मार्गाकारज्ञतायां प्रतिष्ठापयितव्याः। सर्व्वाकारज्ञतायां प्रतिष्ठापयितव्याः।

तद्यथापि नाम सुभूते दक्षो मायाकारो वा मायाकारान्तेवासी वा चतुर्महापथे महतो जनकायस्य पुरतो महान्तं जनकायमभिनिर्मायैवं चित्तमुत्पादयेत् एते मया अप्रमेयासंख्येयाः सत्त्वाः षट्सु पारमितासु प्रतिष्ठापयितव्याः। अष्टादशसु शून्यतासु प्रतिष्ठाप-

यितव्याः । चतुर्षु स्मृत्युपस्थानेषु प्रतिष्ठापयितव्याः । चतुर्षु सम्यक् प्रहाणेषु प्रतिष्ठापयितव्याः । चतुर्षु ऋद्धिपादेषु प्रतिष्ठापयितव्याः । पञ्चस्विन्द्रियेषु प्रतिष्ठापयितव्याः । पञ्चसु बलेषु प्रतिष्ठापयितव्याः । सप्तसु बोध्यङ्गेषु प्रतिष्ठापयितव्याः । आर्य्याष्टाङ्गमार्गे प्रतिष्ठापयितव्याः । चतुर्ष्वार्य्यसत्येषु प्रतिष्ठापयितव्याः । चतुर्षु ध्यानेषु प्रतिष्ठापयितव्याः । चतुर्ष्वप्रमाणेषु प्रतिष्ठापयितव्याः । चतसृष्वारूप्यसमापत्तिषु प्रतिष्ठापयितव्याः । अष्टासु विमोक्षेषु प्रतिष्ठापयितव्याः । नवस्वनुपूर्व्वविहारसमापत्तिषु प्रतिष्ठापयितव्याः । शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु प्रतिष्ठापयितव्याः । पञ्चस्वभिज्ञासु प्रतिष्ठापयितव्याः । सर्व्वसमाधिषु प्रतिष्ठापयितव्याः । सर्व्वधारणीमुखेषु प्रतिष्ठापयितव्याः । दशसु तथागतबलेषु प्रतिष्ठापयितव्याः । चतुर्षु वैशारद्येषु प्रतिष्ठापयितव्याः । चतसृषु प्रतिसम्बित्सु प्रतिष्ठापयितव्याः । महामैत्र्यां प्रतिष्ठापयितव्याः । महाकरुणायां प्रतिष्ठापयितव्याः । अष्टादशस्वावेणिकबुद्धधर्मेषु प्रतिष्ठापयितव्याः । स्रोत आपत्तिफले प्रतिष्ठापयितव्याः । सकृदागामि फले प्रतिष्ठापयितव्याः । अनागामिफले प्रतिष्ठापयितव्याः । अर्हत्त्वे प्रतिष्ठापयितव्याः । प्रत्येकबोधौ प्रतिष्ठापयितव्याः । मार्गाकारज्ञतायां प्रतिष्ठापयितव्याः । सर्व्वाकारज्ञतायां प्रतिष्ठापयितव्याः ।

तत् किं मन्यसे सुभूतेऽपि नु तेन मायाकारेण वा मायाकारान्तेवासिना वा कश्चित्सत्वः षट्सु पारमितासु प्रतिष्ठापितो भवेत् । अष्टादशसु शून्यतासु प्रतिष्ठापितो भवेत् । चतुर्षु स्मृत्युप-

स्थानेषु प्रतिष्ठापितो भवेत्। चतुर्षु सम्यक् प्रहाणेषु प्रतिष्ठापितो भवेत्। चतुर्षु ऋद्धिपादेषु प्रतिष्ठापितो भवेत्। पञ्चस्विन्द्रियेषु प्रतिष्ठापितो भवेत्। पञ्चसु बलेषु प्रतिष्ठापितो भवेत्। सप्तसु बोध्यङ्गेषु प्रतिष्ठापितो भवेत्। आर्य्याष्टाङ्गमार्गे प्रतिष्ठापितो भवेत्। चतुर्ष्वार्य्यसत्येषु प्रतिष्ठापितो भवेत्। चतुर्षु ध्यानेषु प्रतिष्ठापितो भवेत्। चतुर्ष्वप्रमाणेषु प्रतिष्ठापितो भवेत्। चतसृष्वारूप्यसमापत्तिषु प्रतिष्ठापितो भवेत्। अष्टासु विमोक्षेषु प्रतिष्ठापितो भवेत्। नवस्वनुपूर्व्वविहारसमापत्तिषु प्रतिष्ठापितो भवेत्। शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु प्रतिष्ठापितो भवेत्। पञ्चस्वभिज्ञासु प्रतिष्ठापितो भवेत्। सर्व्वसमाधिषु प्रतिष्ठापितो भवेत्। सर्व्वधारणीमुखेषु प्रतिष्ठापितो भवेत्। दशतथागतबलेषु प्रतिष्ठापितो भवेत्। चतुर्षु वैशारद्येषु प्रतिष्ठापितो भवेत्। चतसृषु प्रतिसम्वित्सु प्रतिष्ठापितो भवेत्। महामैत्र्यां प्रतिष्ठापितो भवेत्। महाकरुणायां प्रतिष्ठापितो भवेत्। अष्टादशस्वावेणिकबुद्धधर्म्मेषु प्रतिष्ठापितो भवेत्। स्रोत आपत्तिफले प्रतिष्ठापितो भवेत्। सकृदागामिफले प्रतिष्ठापितो भवेत्। अनागामिफले प्रतिष्ठापितो भवेत्। अर्हत्त्वे प्रतिष्ठापितो भवेत्। प्रत्येकबोधौ प्रतिष्ठापितो भवेत्। मार्गाकारज्ञतायां प्रतिष्ठापितो भवेत्। सर्व्वाकारज्ञतायां प्रतिष्ठापितो भवेत्।

आह। नो हीदं भगवन्। भगवानाह। एव मेव सुभूते बोधिसत्त्वेन महासत्त्वेनाऽप्रमेयाऽसङ्ख्येयानां सत्त्वानां षट्सु पारमितासु प्रतिष्ठापनाय चित्तमुत्पाद्य। अष्टादशसु शून्यतासु प्रतिष्ठापनाय

चित्तमुत्पाद्य। चतुर्षु स्मृत्युपस्थानेषु प्रतिष्ठापनाय चित्तमुत्पाद्य। चतुर्षु सम्यक् प्रहाणेषु प्रतिष्ठापनाय चित्तमुत्पाद्य। चतुर्ष्वृद्धिपादेषु प्रतिष्ठापनाय चित्तमुत्पाद्य। पञ्चस्विन्द्रियेषु प्रतिष्ठापनाय चित्तमुत्पाद्य। पञ्चसु बलेषु प्रतिष्ठापनाय चित्तमुत्पाद्य। सप्तसु बोध्यङ्गेषु प्रतिष्ठापनाय चित्तमुत्पाद्य। आर्य्याष्टाङ्गमार्गे प्रतिष्ठापनाय चित्तमुत्पाद्य। आर्य्यसत्येषु प्रतिष्ठापनाय चित्तमुत्पाद्य। चतुर्षु ध्यानेषु प्रतिष्ठापनाय चित्तमुत्पाद्य। चतुर्ष्वप्रमाणेषु प्रतिष्ठा नाम चित्तमुत्पाद्य। आरूप्यसमापत्तिषु प्रतिष्ठापनाय चित्तमुत्पाद्य। अष्टासु विमोक्षेषु प्रतिष्ठापनाय चित्तमुत्पाद्य। नवस्वनुपूर्व्वविहारसमापत्तिषु प्रतिष्ठापनाय चित्तमुत्पाद्य। शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखेषु प्रतिष्ठापनाय चित्तमुत्पाद्य। पञ्चस्वभिज्ञासु प्रतिष्ठापनाय चित्तमुत्पाद्य। सर्व्वसमाधिषु प्रतिष्ठापनाय चित्तमुत्पाद्य। सर्व्वधारणीमुखेषु प्रतिष्ठापनाय चित्तमुत्पाद्य। दशतथागतबलेषु प्रतिष्ठापनाय चित्तमुत्पाद्य। चतुर्षु वैशारद्येषु प्रतिष्ठापनाय चित्तमुत्पाद्य। चतसृषु प्रतिसम्भित्सु प्रतिष्ठापनाय चित्तमुत्पाद्य। महामैत्र्यां प्रतिष्ठापनाय चित्तमुत्पाद्य। महाकरुणायां प्रतिष्ठापनाय चित्तमुत्पाद्य। अष्टादशस्वावेणिकेषु बुद्धधर्म्मेषु प्रतिष्ठापनाय चित्तमुत्पाद्य। स्रोत आपत्तिफले प्रतिष्ठापनाय चित्तमुत्पाद्य। सकृदागामिफले प्रतिष्ठापनाय चित्तमुत्पाद्य। अनागामिफले प्रतिष्ठापनाय चित्तमुत्पाद्य। अर्हत्त्वे प्रतिष्ठापनाय चित्तमुत्पाद्य। प्रत्येकबोधौ प्रतिष्ठापनाय चित्तमुत्पाद्य। मार्गाकारज्ञतायां प्रतिष्ठापनाय चित्तमुत्पाद्य। सर्व्वाकारज्ञतायां प्रतिष्ठापनाय चित्तमुत्पाद्य।

न कस्य चित्सत्त्वस्यार्थाय चित्तमुत्पादित भवति। तत्कस्य हेतो। धर्मतैषा सुभूते धर्माणा मायाधर्मतामुपादाय। एव खलु सुभूते बोधिसत्त्वो महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते।

सुभूतिराह। यथाह भगवन् भवतो भाषितस्यार्थमाजानामि। असन्नाह सन्नद्धोवताऽय बोधिसत्त्वो महासत्त्वो वेदितव्य। स्वलक्षण शून्यतामुपादाय। तत्कस्य हेतोस्तथाहि। रूप भगवन् रूपेण शून्य। वेदना वेदनया शून्या। सज्ञासज्ञया शून्या। सस्कार सस्कारै शून्या। विज्ञान विज्ञानेन शून्य। चक्षुश्चक्षुषाशून्य। श्रोत्र श्रोत्रेण शून्य। घ्राण घ्राणेन शून्य। जिह्वाजिह्वयाशून्या। काय कायेन शून्य। मनो मनसाशून्य। रूप रूपेणशून्य। शब्द शब्देन शून्य। गन्धो गन्धेन शून्य। रसो रसेन शून्य। स्पर्श स्पर्शेन शून्य। धर्म धर्मै शून्या। चक्षुर्विज्ञान चक्षुर्विज्ञानेनशून्य। श्रोत्र विज्ञान श्रोत्रविज्ञानेन शून्य। घ्राणविज्ञान घ्राणविज्ञानेन शून्य। जिह्वाविज्ञान जिह्वाविज्ञानेन शून्य। कायविज्ञान कायविज्ञानेन शून्य। मनोविज्ञान मनोविज्ञानेन शून्य। चक्षु सस्पर्शश्चक्षु सस्पर्शेन शून्य। श्रोत्रसस्पर्श श्रोत्रसस्पर्शेन शून्य। घ्राणसस्पर्श घ्राणसस्पर्शेन शून्य। जिह्वासस्पर्श जिह्वासस्पर्शेन शून्य। कायसस्पर्श कायसस्पर्शेन शून्य। मन सस्पर्श मन सस्पर्शेन शून्य। चक्षु सस्पर्शप्रत्ययवेदना चक्षु-सस्पर्शप्रत्ययवेदनया शून्या। श्रोत्रसस्पर्शप्रत्ययवेदना श्रोत्रसस्पर्शप्रत्ययवेदनया शून्या। घ्राणसस्पर्शप्रत्ययवेदना घ्राणसस्पर्शप्रत्यय वेदनया शून्या। कायसस्पर्शप्रत्ययवेदना कायसस्पर्शप्रत्ययवेदनया शून्या। मन सस्पर्शप्रत्ययवेदना मन सस्पर्शप्रत्ययवेदनया शून्या।

पृथिवीधातुः पृथिवीधातुना शून्या। अब्धातुरब्धातुना शून्या। तेजोधातुस्तेजोधातुना शून्या। वायुधातुर्वायुधातुना शून्या। आकाशधातुराकाशधातुना शून्या। विज्ञानधातुर्विज्ञानधातुना शून्या। अविद्या अविद्यया शून्या। संस्काराः संस्कारैः शून्याः। विज्ञानं विज्ञानेन शून्यं। नामरूपं नामरूपेण शून्यं। षडायतनं षडायतनेन शून्यं। स्पर्शः स्पर्शेन शून्यः। वेदना वेदनया शून्या। तृष्णा तृष्णया शून्याः। उपादानमुपादानेन शून्यं। भवो भवेन शून्यः। जातिर्जात्याशून्या। जरामरण जरामरणेन शून्यं।

दानपारमिता दानपारमितया शून्या। शीलपारमिता शीलपारमितया शून्या। क्षान्तिपारमिता क्षान्तिपारमितया शून्या। वीर्य्यपारमिता वीर्य्यपारमितया शून्या। ध्यानपारमिता ध्यानपारमितया शून्या। प्रज्ञापारमिता प्रज्ञापारमितया शून्या।

अध्यात्मशून्यता अध्यात्मशून्यतया शून्या। वहिर्द्धाशून्यता वहिर्द्धाशून्यतया शून्या। अध्यात्मवहिर्द्धाशून्यता अध्यात्मवहिर्द्धाशून्यतया शून्या। शून्यताशून्यता शून्यताशून्यतयाशून्या। महाशून्यता महाशून्यतया शून्या। परमार्थशून्यता परमार्थशून्यतया शून्या। संस्कृतशून्यता संस्कृतशून्यतया शून्या। असंस्कृतशून्यता असंस्कृतशून्यतया शून्या। अत्यन्तशून्यता अत्यन्तशून्यतया शून्या। अनवराग्रशून्यता अनवराग्रशून्यतया शून्या। अनवकारशून्यता अनवकारशून्यतयाशून्या। प्रकृतिशून्यता प्रकृतिशून्यतया शून्या। सर्व्वधर्म्मशून्यता सर्व्वधर्म्मशून्यतया शून्या। स्वलक्षणशून्यता स्वलक्षणशून्यतया शून्या। अनुपलम्भशून्यता अनुपलम्भशून्यतया शून्या। अभावशून्यता अभा-

वशून्यतया शून्या । स्वभावशून्यता स्वभावशून्यतया शून्या । अभावस्वभावशून्यता अभावस्वभावशून्यतया शून्या ।

स्मृत्युपस्थानानि स्मृत्युपस्थाने शून्यानि । सम्यक् प्रहाणानि सम्यक्प्रहाणे शून्यानि । ऋद्धिपादा ऋद्धिपादे शून्या । इन्द्रियाणीन्द्रिये शून्यानि । बलानिबले शून्यानि । बोध्यङ्गानि बोध्यङ्गे शून्यानि । आर्य्याष्टाङ्गमार्गे आर्य्याष्टाङ्गमार्गे शून्य । आर्य्यसत्यानि आर्य्यसत्ये शून्यानि । ध्यानानि ध्याने शून्यानि । अप्रमाणानि अप्रमाणे शून्यानि । आरूप्यसमापत्तय आरूप्यसमापत्तिभि शून्या । विमोक्षाविमोक्षे शून्या । अणुपूर्व्वविहारसमापत्तयोऽणुपूर्व्वविहारसमापत्तिभि शून्या । शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखानि शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखे शून्यानि । अभिज्ञा अभिज्ञाभि शून्या । समाधय समाधिभि शून्या । धारणीमुखानि धारणीमुखे शून्यानि । तथागतबलानि तथागतबले शून्यानि । वैशारद्यानि वैशारद्ये शून्यानि । प्रतिसम्विद प्रतिसम्विद्भि शून्यानि । महामैत्री महामैत्र्या शून्या । महाकरुणा महाकरुणया शून्या । आवेणिकबुद्धधर्म्मा आवेणिकबुद्धधर्म्मे शून्या । बोधिसत्वो बोधिसत्वेन शून्या । महासन्नाहो महासन्नाहेन शून्य । अनेन भगवन् पर्य्यायेन सन्नाह सन्नद्धो बोधिसत्वो महासत्वो वेदितव्य । भगवानाह । एवमेव सुभूते एवमेतत् तथायथावदसि । तत्कस्य हेतो । अकृताहि सुभूते सर्व्वाकारज्ञता । अविकृता अनभिसंस्कृता । येषा कृते बोधिसत्वेन महासत्वेन महासन्नाह सन्नद्ध । आह केन कारणेन भगवन् सर्व्वाकारज्ञता अकृता अविकृता अनभिसंस्कृता

येषां कृते बोधिसत्त्वेन महासत्त्वेन महासन्नाहः सन्नद्धः। भगवानाह। कारकानुपलब्धितामुपादाय सुभूते सर्व्वाकारज्ञता अकृता अविकृता अनभिसंस्कृता। तेपि सत्त्वा अकृता अविकृता अनभिसंस्कृताः येषां कृते बोधिसत्त्वेन महासत्त्वेन महासन्नाहः सन्नद्धः। तत्कस्य हेतोः। तथाहि सुभूते रूपं न करोति न विकरोति। नाऽभिसंस्करोति। वेदना न करोति न विकरोति नाभिसंस्करोति। संज्ञा न करोति न विकरोति नाऽभिसंस्करोति। संस्कारा न कुर्व्वन्ति न विकुर्व्वन्ति नाऽभिसंस्कुर्व्वन्ति। विज्ञानं न करोति न विकरोति नाऽभिसंस्करोति। चक्षुः सुभूते न करोति न विकरोति नाऽभिसंस्करोति। श्रोत्रं न करोति न विकरोति नाभिसंस्करोति। घ्राणं न करोति न विकरोति नाऽभिसंस्करोति। जिह्वा न करोति न विकरोति नाऽभिसंस्करोति। कायो न करोति न विकरोति नाभिसंस्करोति। मनो न करोति न विकरोति नाऽभिसंस्करोति। रूपं सुभूते न करोति न विकरोति नाभिसंस्करोति। शब्दो न करोति न विकरोति नाऽभिसंस्करोति। गन्धो न करोति न विकरोति नाऽभिसंस्करोति। रसो न करोति न विकरोति नाभिसंस्करोति। स्पर्शो न करोति न विकरोति नाऽभिसंस्करोति। धर्म्मा न कुर्व्वन्ति न विकुर्व्वन्ति नाऽभिसंस्कुर्व्वन्ति। चक्षुर्व्विज्ञानं सुभूते न करोति न विकरोति नाऽभिसंस्करोति। श्रोत्रविज्ञानं न करोति न विकरोति नाऽभिसंस्करोति। घ्राणविज्ञानं न करोति न विकरोति नाभिसंस्करोति। जिह्वाविज्ञानं न

करोति न विकरोति नाऽभिसंस्करोति। कायविज्ञानं न करोति न विकरोति नाऽभिसंस्करोति। मनोविज्ञानं न करोति न विकरोति नाऽभिसंस्करोति। चक्षुःसंस्पर्शो न करोति न विकरोति नाऽभिसंस्करोति। श्रोत्रसंस्पर्शो न करोति न विकरोति नाऽभिसंस्करोति। घ्राणसंस्पर्शो न करोति न विकरोति नाऽभिसंस्करोति। जिह्वासंस्पर्शो न करोति न विकरोति नाऽभिसंस्करोति। कायसंस्पर्शो न करोति न विकरोति नाऽभिसंस्करोति। मनःसंस्पर्शो न करोति न विकरोति नाऽभिसंस्करोति। चक्षुःसंस्पर्शप्रत्ययवेदना न करोति न विकरोति नाभिसंस्करोति। श्रोत्रसंस्पर्शप्रत्ययवेदना न करोति न विकरोति नाऽभिसंस्करोति। घ्राणसंस्पर्शप्रत्ययवेदना न करोति न विकरोति नाऽभिसंस्करोति। जिह्वासंस्पर्शप्रत्ययवेदना न करोति न विकरोति नाऽभिसंस्करोति। कायसंस्पर्शप्रत्ययवेदना न करोति न विकरोति नाऽभिसंस्करोति। मनःसंस्पर्शप्रत्ययवेदना न करोति न विकरोति नाऽभिसंस्करोति।

आत्मा सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते। जीवः सत्त्वः सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोः। तथाहि सोऽत्यन्ततया नोपलभ्यते। जीवः सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोः। तथाहि सोऽत्यन्ततयां नोपलभ्यते। जन्तुः सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोः। तथाहि सोऽत्यन्ततया

नोपलभ्यते । पोषः सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते । पुरुषः सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते । पुद्गलः सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोः । तथाहि सोऽत्यन्ततया नोपलभ्यते । मनुजः सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते । मानवः सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते । कारकः सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते । वेदकः सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते। जानकः सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते । पश्यकः सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते। स्वप्नः सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्यहेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते। माया सुभूते न करोति न विकरोति नाभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । प्रतिश्रुत्का सुभूते न न करोति न विकरोति नाभिसंस्कारोति । तत्कस्य हेतोस्तथा हि साऽत्यन्ततया नोपलभ्यते। प्रतिभासः सुभूते न करोति न विकरोति नाभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया

नोपलभ्यते। प्रतिविम्ब सुभूते न करोति न विकरोति नाभिसंस्करोति। तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते। मरीचिका सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। निर्मितः सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते। अविद्या सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। संस्कारा सुभूते न कुर्व्वन्ति न विकुर्व्वन्ति नाऽभिसंस्कुर्व्वन्ति। तत्कस्य हेतस्तथा हि *सोऽत्यन्ततया नोपलभ्यन्ते। विज्ञानं सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथा हि †सोऽत्यन्ततया नोपलभ्यते। नामरूपं सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्यहेतोस्तथा हि सोऽत्यन्ततया नोपलभ्यते। षड़ायतनं सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्यहेतोस्तथा हि सोऽत्यन्ततया नोपलभ्यते। स्पर्शः सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते। वेदना सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। तृष्णा सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्यहेतोस्तथा हि। साऽत्यन्त-

* तेऽत्यन्ततया नोपलभ्यन्ते-इति पाठो युक्तः।

† तदत्यन्ततया नोपलभ्यते-इति युक्तं एवं परत्रापि क्लीवलिङ्गार्थपरामर्शस्थले।

तथा नोपलभ्यते । उपादानं सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते । भवः सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि । सोऽत्यन्ततया नोपलभ्यते । जातिः सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते । जरामरणं सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते ।

दानपारमिता* न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । शीलपारमिता न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । क्षान्तिपारमिता न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । वीर्यपारमिता न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । ध्यानपारमिता न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्यहेतोस्तथा हि साऽत्यन्ततया नोपलभ्यते । प्रज्ञापारमिता न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते ।

---

* पारमिताशब्दात् परं सुभूते—इति पदं षट्पारमितास्थलेऽस्तीति प्रतीयते पूर्वापरस्थलेषु तत्प्रयोगदर्शनात् ।

अध्यात्मशून्यता सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । बहिर्द्धाशून्यता न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । अध्यात्मबहिर्द्धाशून्यता न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । शून्यताशून्यता न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । महाशून्यता न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । परमार्थशून्यता न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । संस्कृतशून्यता न करोति न विकरोति नाभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । असंस्कृतशून्यता न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । अत्यन्तशून्यता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । अनवराग्रशून्यता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । अनवकारशून्यता सुभूते न करोति न विकरोति नाऽभिसंस्करोति । तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । प्रकृतिशून्यता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते । सर्व्वधर्म्मशून्यता सुभूते न करोति न विकरोति

नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। स्वलक्षणशून्यता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। अनुपलम्भशून्यता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। अभावशून्यता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। स्वभावशून्यता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। अभावस्वभावशून्यता सुभूते न करोति न विकरोति नाऽभिसंस्करोति तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते।

स्मृत्युपस्थानानि सुभूते न कुर्व्वन्ति न विकुर्व्वन्ति नाऽभिसंस्कुर्व्वन्ति। तत्कस्य हेतोस्तथाहि तान्यत्यन्ततया नोपलभ्यन्ते। सम्यक्प्रहानानि सुभूते न कुर्व्वन्ति न विकुर्व्वन्ति नाभिसंस्कुर्व्वन्ति। तत्कस्य हेतोस्तथाहि तान्यत्यन्ततया नोपलभ्यन्ते। ऋद्धिपादानकुर्व्वन्ति न विकुर्व्वन्ति नाऽभिसंस्कुर्व्वन्ति। तत्कस्य हेतोस्तथाहि तेऽत्यन्ततया नोपलभ्यन्ते। इन्द्रियाणि सुभूते न कुर्व्वन्ति न विकुर्व्वन्ति नाभिसंस्कुर्व्वन्ति। तत्कस्य हेतोस्तथाहि तान्यत्यन्ततया नोपलभ्यन्ते। बलानि सुभूते न कुर्व्वन्ति न विकुर्व्वन्ति नाऽभिसंस्कुर्व्वन्ति। तत्कस्य हेतोस्तथाहि तान्यत्यन्ततया नोपलभ्यन्ते। बोध्यङ्गानि न कुर्व्वन्ति न विकुर्व्वन्ति नाऽभिसंस्कुर्व्वन्ति। तत्कस्य हेतोस्तथाहि तान्यत्यन्ततया नोपलभ्यन्ते। आर्य्याष्टाङ्गमार्गः सुभूते

न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया न विद्यते। आर्यसत्यानि सुभूते न कुर्वन्ति न विकुर्वन्ति नाऽभिसंस्कुर्वन्ति। तत्कस्य हेतोस्तथाहि तान्यत्यन्ततया-नोपलभ्यन्ते। ध्यानानि सुभूते न कुर्वन्ति न विकुर्वन्ति, नाऽभिसंस्कुर्वन्ति। तत्कस्य हेतोस्तथाहि तान्यत्यन्ततया नोपलभ्यन्ते। अप्रमाणानि सुभूते न कुर्वन्ति न विकुर्वन्ति नाऽभिसंस्कुर्वन्ति। तत्कस्य हेतोस्तथाहि तान्यत्यन्ततया नोपलभ्यन्ते। आरूप्यसमापत्तय सुभूते न कुर्वन्ति न विकुर्वन्ति नाऽभिसंस्कुर्वन्ति। तत्कस्य हेतोस्तथाहि ता अत्यन्ततया नोपलभ्यन्ते। विमोक्षा सुभूते न कुर्वन्ति न विकुर्वन्ति नाऽभिसंस्कुर्वन्ति। तत्कस्य हेतोस्तथाहि तेऽत्यन्ततया नोपलभ्यन्ते। अनुपूर्व्वविहारसमापत्तय· सुभूते न कुर्वन्ति न विकुर्वन्ति नाऽभिसंस्कुर्वन्ति। तत्कस्य हेतोस्तथाहि ता अत्यन्ततया नोपलभ्यन्ते। शून्यतानिमित्ताप्रणिहित विमोक्षमुखानि न कुर्वन्ति न विकुर्वन्ति नाऽभिसंस्कुर्वन्ति। तत्कस्य हेतोस्तथाहि तान्यन्ततया नोपलभ्यन्ते। अभिज्ञाः सुभूते न कुर्व्वन्ति न विकुर्वन्ति नाऽभिसंस्कुर्वन्ति। तत्कस्य हेतोस्तथाहि ता अत्यन्ततया नोपलभ्यन्ते। सर्वसमाधय सुभूते न कुर्वन्ति न विकुर्वन्ति नाऽभिसंस्कुर्वन्ति। तत्कस्य हेतोस्तथाहि तेऽत्यन्ततया नोपलभ्यन्ते। सर्वधारणीमुखानि न कुर्वन्ति न विकुर्वन्ति नाऽभिसंस्कुर्वन्ति। तत्कस्य हेतोस्तथाहि तान्यत्यन्ततया नोपलभ्यन्ते। तथागतबलानि सुभूते न कुर्वन्ति न विकुर्वन्ति नाऽभिसंस्कुर्वन्ति। तत्कस्य हेतोस्तथाहि तान्यत्यन्ततया नोपलभ्यन्ते।

वैशारद्यानि सुभूते न कुर्वन्ति न विकुर्व्वन्ति नाऽभिसंस्कुर्व्वन्ति। तत्कस्य हेतोस्तथाहि तान्यत्यन्ततया नोपलभ्यन्ते। प्रतिसम्विदः सुभूते न कुर्व्वन्ति न विकुर्व्वन्ति नाऽभिसंस्कुर्व्वन्ति। तत्कस्य हेतोस्तथाहि ता अत्यन्ततया नोपलभ्यन्ते। महामैत्री सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। महाकरुणा सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। आवेणिकबुद्धधर्म्माः सुभूते न कुर्व्वन्ति नविकुर्व्वन्ति नाऽभिसंस्कुर्वन्ति। तत्कस्य हेतोस्तथाहि तेऽत्यन्ततया नोपलभ्यन्ते। तथता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। अवितथता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यन्ते। अनन्यतथता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। धर्म्मता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। धर्म्मधातुः सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते। धर्म्मस्थिता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। धर्म्मनियामता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। भूतकोटिः सुभूते न करोति न विकरोति नाऽ-

मरीच्युपमासंज्ञाऽबद्धाऽमुक्ता। य इमे मरीच्युपमाः संस्कारास्तेऽबद्धा अमुक्ता। यदेतन्मरीच्युपमं विज्ञानं तदबद्धममुक्तं। यदेतन्निर्मितोपमं रूपं तदबद्धममुक्तं। येयं निर्मितोपमा वेदना न साऽबद्धाऽमुक्ता। येयं निर्मितोपमासंज्ञासाऽबद्धाऽमुक्ता। य इमे निर्मितोपमाः संस्कारास्तेऽबद्धा अमुक्ताः। यदेतन्निर्मितोपमं विज्ञानं तदबद्धममुक्तं।

अतीतमायुष्मन् पूर्णरूपमबद्धममुक्तं। अतीतावेदनाऽबद्धाऽमुक्ता। अतीतासंज्ञाऽबद्धाऽमुक्ता। अतीताः संस्काराः अबद्धा अमुक्ताः। अतीतं विज्ञानमबद्धममुक्तं। प्रत्युत्पन्नमायुष्मन् पूर्णरूपमबद्धममुक्तं। प्रत्युत्पन्नावेदनाऽबद्धाऽमुक्ता। प्रत्युत्पन्नासंज्ञाऽबद्धाऽमुक्ता। प्रत्युत्पन्नाः संस्कारा अबद्धा अमुक्ताः। प्रत्युत्पन्नं विज्ञानमबद्धममुक्तं॥ तत्कस्य हेतोस्तथाहि। असत्त्वादायुष्मन् पूर्णरूपस्य रूपमबद्धममुक्तं। असत्त्वाद्वेदनायावेदनाऽबद्धाऽमुक्ता। असत्त्वात्संज्ञायाः संज्ञाऽबद्धाऽमुक्ता। असत्त्वात् संस्काराणां संस्कारा अबद्धा अमुक्ताः। असत्त्वाद्विज्ञानस्य विज्ञानमबद्धममुक्तं। विविक्तत्वाद्रूपस्य रूपमबद्धममुक्तं। विविक्तत्वात्संज्ञायाः संज्ञाऽबद्धाऽमुक्ता। विविक्तत्वात्संस्काराणां संस्कारा अबद्धा अमुक्ताः। विविक्तत्वाद्विज्ञानस्य विज्ञानमबद्धममुक्तं। अनुत्पन्नत्वाद्रूपस्य रूपमबद्धममुक्तं। अनुत्पन्नत्वाद्वेदनाया वेदनाऽबद्धाऽमुक्ता। अनुत्पन्नत्वात्संज्ञायाः संज्ञाऽबद्धाऽमुक्ता। अनुत्पन्नत्वात्संस्कारानां संस्कारा अबद्धा अमुक्ताः। अनुत्पन्नत्वाद्विज्ञानस्य विज्ञानमबद्धममुक्तं।

कुशलमायुष्मन् पूर्णरूपमबद्धममुक्तं। कुशलावेदनाऽबद्धाऽमुक्ता।

कुशलासंज्ञाऽबद्धाऽमुक्ता। कुशलाः संस्कारा अबद्धा अमुक्ता। कुशलं विज्ञानमबद्धममुक्तं। अकुशलमायुष्मन् पूर्णरूपमबद्धममुक्तं। अकुशलं वेदनाऽबद्धाऽमुक्ता। अकुशलासंज्ञा अबद्धा अमुक्ता। अकुशलाः संस्कारा अबद्धा अमुक्ताः। अकुशलं विज्ञानमबद्धममुक्तं। अव्याकृतमायुष्मन् पूर्णरूपमबद्धममुक्तं। अव्याकृतावेदनाऽबद्धाऽमुक्ता। अव्याकृतासंज्ञाऽबद्धाऽमुक्ता। अव्याकृताः संस्काराः अबद्धा अमुक्ताः। अव्याकृतं विज्ञानमबद्धममुक्तं। लौकिकमायुष्मन् पूर्णरूपमबद्धममुक्तं। लौकिका वेदनाऽबद्धाऽमुक्ता। लौकिकासंज्ञा अबद्धा अमुक्ता। लौकिकाः संस्कारा अबद्धा अमुक्ताः। लौकिकं विज्ञानमबद्धममुक्तं। लोकोत्तरमायुष्मन् पूर्णरूपमबद्धममुक्तं। लोकोत्तरा वेदनाबद्धाऽमुक्ता। लोकोत्तरासंज्ञाऽबद्धाऽमुक्ता। लोकोत्तराः संस्कारा अबद्धा अमुक्ताः। लोकोत्तरं विज्ञानमबद्धममुक्तं। सास्रवमायुष्मन् पूर्णरूपमबद्धममुक्तं। सास्रवा वेदनाऽबद्धाऽमुक्ता। सास्रवासंज्ञाऽबद्धाऽमुक्ता। सास्रवाः संस्काराः अबद्धा अमुक्ताः। सास्रवं विज्ञानमबद्धममुक्तं। अनास्रवमायुष्मन् पूर्णरूपमबद्धममुक्तं। अनास्रवा वेदनाऽबद्धाऽमुक्ता। अनास्रवासंज्ञाऽबद्धाऽमुक्ता। अनास्रवाः संस्कारा अबद्धाऽमुक्ताः। अनास्रवं विज्ञानमबद्धममुक्तं। तत्कस्य हेतोः। असत्त्वाद्रूपस्य रूपमबद्धममुक्तं। असत्त्वाद्वेदनायाः वेदनाऽबद्धाऽमुक्ता। असत्त्वात् संज्ञायाः संज्ञाऽबद्धाऽमुक्ता। असत्त्वात् संस्काराणां संस्कारा अबद्धा अमुक्ताः। असत्त्वाद्विज्ञानस्य विज्ञानमबद्धममुक्तं। विविक्तत्वाद्रूपस्य रूपमबद्धममुक्तं। विविक्तत्वाद्वेदनायाः वेदनाऽबद्धाऽमुक्ता। विविक्तत्वात् संज्ञाया

मरीच्युपमासंज्ञाऽबद्धाऽमुक्ता। य इमे मरीच्युपमाः संस्कारास्तेऽबद्धा अमुक्ता। यदेतन्मरीच्युपमं विज्ञानं तदबद्धममुक्तं। यदेतन्निर्मितोपमं रूपं तदबद्धममुक्तं। येयं निर्मितोपमा वेदना न साऽबद्धाऽमुक्ता। येयं निर्मितोपमासंज्ञासाऽबद्धाऽमुक्ता। य इमे निर्मितोपमाः संस्कारास्तेऽबद्धा अमुक्ताः। यदेतन्निर्मितोपमं विज्ञानं तदबद्धममुक्तं।

अतीतमायुष्मन् पूर्णरूपमबद्धममुक्तं। अतीतावेदनाऽबद्धाऽमुक्ता। अतीतासंज्ञाऽबद्धाऽमुक्ता। अतीताः संस्काराः अबद्धा अमुक्ताः। अतीतं विज्ञानमबद्धममुक्तं। प्रत्युत्पन्नमायुष्मन् पूर्णरूपमबद्धममुक्त। प्रत्युत्पन्नावेदनाऽबद्धाऽमुक्ता। प्रत्युत्पन्नासंज्ञाऽबद्धाऽमुक्ता। प्रत्युत्पन्नाः संस्कारा अबद्धा अमुक्ताः। प्रत्युत्पन्नं विज्ञानमबद्धममुक्तं ।। तत्कस्य हेतोस्तथाहि। असत्वादायुष्मन् पूर्णरूपस्य रूपमबद्धममुक्तं। असत्वाद्वेदनायावेदनाऽबद्धाऽमुक्ता। असत्वात्संज्ञायाः संज्ञाऽबद्धाऽमुक्ता। असत्वात् संस्काराणां संस्कारा अबद्धा अमुक्ताः। असत्वाद्विज्ञानस्य विज्ञानमबद्धममुक्तं। विविक्तत्वाद्रूपस्य रूपमबद्धममुक्तं। विविक्तत्वात्संज्ञायाः संज्ञाऽबद्धाऽमुक्ता। विविक्तत्वात्संस्काराणां संस्कारा अबद्धा अमुक्ताः। विविक्तत्वाद्विज्ञानस्य विज्ञानमबद्धममुक्तं। अनुत्पन्नत्वाद्रूपस्य रूपमबद्धममुक्तं। अनुत्पन्नत्वाद्वेदनाया वेदनाऽबद्धाऽमुक्ता। अनुत्पन्नत्वात्संज्ञाया. संज्ञाऽबद्धाऽमुक्ता। अनुत्पन्नत्वात्संस्काराणां संस्कारा अबद्धा अमुक्ताः। अनुत्पन्नत्वाद्विज्ञानस्य विज्ञानमबद्धममुक्तं।

कुशलमायुष्मन् पूर्णरूपमबद्धममुक्तं। कुशलावेदनाऽबद्धाऽमुक्ता।

कतमत्तावदायुष्मन् सुभूते यदबद्धममुक्तं। कतमामावेदनायाऽब-द्धाऽमुक्ता। कतमामासंज्ञायाऽबद्धाऽमुक्ता। कतमेते संस्कारा ये अबद्धाऽमुक्ताः। कतमत्तद्विज्ञानं यदबद्धममुक्तं। आह यदेतदायु-ष्मन् पूर्णस्वप्नोपमं रूपं तदबद्धममुक्तं। येयं स्वप्नोपमावेदनाभाऽब-द्धाऽमुक्ता। येयं स्वप्नोपमासंज्ञाभाऽबद्धाऽमुक्ता। य इमे स्वप्नोपमाः संस्काराः ते ऽबद्धा अमुक्ताः। यदेतत् स्वप्नोपमं विज्ञानं तदब-द्धममुक्तं। यदेतन्मायोपमं रूपं तदबद्धममुक्तं। येयं मायोपमा वेदनाभाऽबद्धाऽमुक्ता। येयं मायोपमासंज्ञाभाऽबद्धाऽमुक्ता। य इमे मायोपमाः संस्काराः तेऽबद्धा अमुक्ताः। यदिदं मायोपमं विज्ञानं तदबद्धममुक्तं।

यदेतत् प्रतिश्रुत्कोपमं रूपं तदबद्धममुक्तं। येयं प्रतिश्रुत्-कोपमावेदनाभाऽबद्धाऽमुक्ता। येयं प्रतिश्रुत्कोपमासंज्ञाभाऽब-द्धाऽमुक्ता। य इमे प्रतिश्रुत्कोपमोः संस्कारास्तेऽबद्धा अमुक्ताः। यदेतत्प्रतिश्रुत्कोपमं विज्ञानं तदबद्धममुक्तं। यदेतत्प्रतिभासोपमं रूपं तदबद्धममुक्तं। येयं प्रतिभासोपमावेदनाभाऽबद्धाऽमुक्ता। येयं प्रतिभासोपमासंज्ञाभाऽबद्धाऽमुक्ता। य इमे प्रतिभासोपमाः संस्कारास्तेऽबद्धा अमुक्ताः। यदेतत्प्रतिभासोपमं विज्ञानं तदबद्ध-ममुक्तं। यदेतत्प्रतिबिम्बोपमं रूपं तदबद्धममुक्तं। येयं प्रतिबि-म्बोपमा वेदनाभाऽबद्धाऽमुक्ता। येयं प्रतिबिम्बोपमासंज्ञाभाऽबद्धा-ऽमुक्ता। य इमे प्रतिबिम्बोपमाः संस्कारास्तेऽबद्धा अमुक्ताः। यदेतत्प्रतिबिम्बोपमं विज्ञानं तदबद्धममुक्तं। यदेतन्मरीच्युपमं रूपं तदबद्धममुक्तं। येयं मरीच्युपमावेदनाभाऽबद्धाऽमुक्ता। येयं

भिसंस्करोति। तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते। अचिन्त्यधातुः सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि सोऽत्यन्ततया नोपलभ्यते। बोधिः सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। सर्व्वज्ञता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। सर्व्वाकारज्ञता सुभूते न करोति न विकरोति नाऽभिसंस्करोति। तत्कस्य हेतोस्तथाहि साऽत्यन्ततया नोपलभ्यते। तदनेन सुभूते पर्य्यायेणैवं वेदितव्यं यथा अकृता सर्व्वकारज्ञता अविकृता अनभिसंस्कृता। तेऽपि सत्त्वा अकृता अविकृता अनभिसंस्कृता। येषां कृते बोधिसत्त्वेन महासत्त्वेन महासन्नाहः सन्नद्धः। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते।

आह। यथाहं भगवन् भगवताभाषितस्यार्थमाजानामि। रूपं भगवन्नबद्धममुक्तं। वेदना अबद्धा अमुक्ता। संज्ञा अबद्धा अमुक्ता। संस्कारा अबद्धा अमुक्ताः। विज्ञानमबद्धममुक्तं।

अथायुष्मान् पूर्णोमैत्रायणीपुत्रो आयुष्मन्तं सुभूतिमेतदवोचत्। रूपमायुष्मन् सुभूते अबद्धममुक्तं। वेदना अबद्धा अमुक्ता। संज्ञा अबद्धा अमुक्ता। संस्कारा अबद्धा अमुक्ताः। विज्ञानमबद्धममुक्तं। आहैवमेतदायुष्मन् पूर्णैवमेतत्। रूपमायुष्मन् पूर्णाबद्धममुक्तं। वेदनाऽबद्धाऽमुक्ता। संज्ञाऽबद्धाऽमुक्ता। संस्कारा अबद्धा अमुक्ताः। विज्ञानमबद्धममुक्तं। पूर्ण आह।

अध्यात्मशून्यताप्यबद्धाऽमुक्ता । बहिर्द्धाशून्यताप्यबद्धाऽमुक्ता । अध्यात्मबहिर्द्धाशून्यताप्यबद्धाऽमुक्ता । शून्यताशून्यताप्यबद्धाऽमुक्ता । महाशून्यताप्यबद्धाऽमुक्ता । परमार्थशून्यताप्यबद्धाऽमुक्ता । संस्कृतशून्यताप्यबद्धाऽमुक्ता । असंस्कृतशून्यताप्यबद्धाऽमुक्ता । अत्यन्तशून्यताप्यबद्धाऽमुक्ता । अनवराग्रशून्यताप्यबद्धाऽमुक्ता । अनवकारशून्यताप्यबद्धाऽमुक्ता । प्रकृतिशून्यताप्यबद्धाऽमुक्ता । सर्व्वधर्म्मशून्यताप्यबद्धाऽमुक्ता । स्वलक्षणशून्यताप्यबद्धाऽमुक्ता । अनुपलम्भशून्यताप्यबद्धाऽमुक्ता । अभावशून्यताप्यबद्धाऽमुक्ता । स्वभावशून्यताप्यबद्धाऽमुक्ता । अभावस्वभावशून्यताप्यबद्धाऽमुक्ता ।

असत्त्वादध्यात्मशून्यताऽबद्धाऽमुक्ता । विविक्तत्वादध्यात्मशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वादध्यात्मशून्यताऽबद्धाऽमुक्ता । असत्त्वाद्बहिर्द्धाशून्यताऽबद्धाऽमुक्ता । विविक्तत्वाद्बहिर्द्धाशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वाद्बहिर्द्धाशून्यताऽबद्धाऽमुक्ता । असत्त्वादध्यात्मबहिर्द्धाशून्यताऽबद्धाऽमुक्ता । विविक्तत्वादध्यात्मबहिर्द्धाशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वादध्यात्मबहिर्द्धाशून्यताऽबद्धाऽमुक्ता । असत्त्वाच्छून्यताशून्यताऽबद्धाऽमुक्ता । विविक्तत्वाच्छून्यताशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वाच्छून्यताशून्यताऽबद्धाऽमुक्ता । असत्त्वान्महाशून्यताऽबद्धाऽमुक्ता । विविक्तत्वान्महाशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वान्महाशून्यताऽबद्धाऽमुक्ता । असत्त्वात्परमार्थशून्यताऽबद्धाऽमुक्ता । विविक्तत्वात्परमार्थशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वात्परमार्थशून्यताऽबद्धाऽमुक्ता । असत्त्वात् संस्कृतशून्यताऽबद्धाऽमुक्ता । विविक्तत्वात् संस्कृतशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वात् संस्कृतशून्यताऽबद्धाऽमुक्ता । असत्त्वाद्-

संज्ञाऽबद्धाऽमुक्ता। विविक्तत्वात् संस्काराणां संस्कारा अबद्धा अमुक्ताः। विविक्तत्वाद्विज्ञानस्य विज्ञानमबद्धममुक्तं। अनुत्पन्नत्वाद्रूपस्य रूपमबद्धममुक्तं। अनुत्पन्नत्वाद्वेदनाया: वेदनाऽबद्धाऽमुक्ता। अनुत्पन्नत्वात् संज्ञायाः संज्ञाऽबद्धाऽमुक्ता। अनुत्पन्नत्वात् संस्काराणां संस्कारा अबद्धा अमुक्ताः। अनुत्पन्नत्वाद्विज्ञानस्य विज्ञानमबद्धममुक्तं।

सर्वधर्मा आयुष्मन् पूर्ण अबद्धा अमुक्ताः। असत्त्वादबद्धा अमुक्ताः। विविक्तत्वादबद्धा अमुक्ताः। अनुत्पन्नत्वादबद्धा अमुक्ताः। दानपारमिताप्यायुष्मन् पूर्ण अबद्धाऽमुक्ताः। शीलपारमिताऽबद्धा अमुक्ता। क्षान्तिपारमिताऽबद्धाऽमुक्ता। वीर्य्यपारमिताऽबद्धाऽमुक्ता। ध्यानपारमिताऽबद्धाऽमुक्ता। प्रज्ञापारमिताऽबद्धाऽमुक्ता। असत्त्वाद्दानपारमिताऽबद्धाऽमुक्ता। विविक्तत्वाद्दानपारमिताऽबद्धाऽमुक्ता। अनुत्पन्नत्वाद्दानपारमिताऽबद्धाऽमुक्ता। असत्त्वाच्छीलपारमिताऽबद्धाऽमुक्ता। विविक्तत्वाच्छीलपारमिताऽबद्धाऽमुक्ता। अनुत्पन्नत्वाच्छीलपारमिताऽबद्धाऽमुक्ता। असत्त्वात् क्षान्तिपारमिताऽबद्धाऽमुक्ता। विविक्तत्वात् क्षान्तिपारमिताऽबद्धाऽमुक्ता। अनुत्पन्नत्वात् क्षान्तिपारमिताऽबद्धाऽमुक्ता। असत्त्वाद्वीर्य्यपारमिताऽबद्धाऽमुक्ता। विविक्तत्वात् वीर्य्यपारमिताऽबद्धाऽमुक्ता। अनुत्पन्नत्वात् वीर्य्यपारमिताऽबद्धाऽमुक्ता। असत्त्वात् ध्यानपारमिताऽबद्धाऽमुक्ता। विविक्तत्वात् ध्यानपारमिताऽबद्धाऽमुक्ता। अनुत्पन्नत्वात् ध्यानपारमिताऽबद्धाऽमुक्ता। असत्त्वात् प्रज्ञापारमिताऽबद्धाऽमुक्ता। विविक्तत्वात् प्रज्ञापारमिताऽबद्धाऽमुक्ता। अनुत्पन्नत्वात् प्रज्ञापारमिताऽबद्धाऽमुक्ता।

अध्यात्मशून्यताप्यबद्धाऽमुक्ता । बहिर्द्धाशून्यताप्यबद्धाऽमुक्ता । अध्यात्मबहिर्द्धाशून्यताप्यबद्धाऽमुक्ता । शून्यताशून्यताप्यबद्धाऽमुक्ता । महाशून्यताप्यबद्धाऽमुक्ता । परमार्थशून्यताप्यबद्धाऽमुक्ता । संस्कृतशून्यताप्यबद्धाऽमुक्ता । असंस्कृतशून्यताप्यबद्धाऽमुक्ता । अत्यन्तशून्यताप्यबद्धाऽमुक्ता । अनवराग्रशून्यताप्यबद्धाऽमुक्ता । अनवकारशून्यताप्यबद्धाऽमुक्ता । प्रकृतिशून्यताप्यबद्धाऽमुक्ता । सर्व्वधर्म्मशून्यताप्यबद्धाऽमुक्ता । स्वलक्षणशून्यताप्यबद्धाऽमुक्ता । अनुपलम्भशून्यताप्यबद्धाऽमुक्ता । अभावशून्यताप्यबद्धाऽमुक्ता । स्वभावशून्यताप्यबद्धाऽमुक्ता । अभावस्वभावशून्यताप्यबद्धाऽमुक्ता ।

असत्त्वादध्यात्मशून्यताऽबद्धाऽमुक्ता । विविक्तत्वादध्यात्मशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वादध्यात्मशून्यताऽबद्धाऽमुक्ता । असत्त्वाद्बहिर्द्धाशून्यताऽबद्धाऽमुक्ता । विविक्तत्वाद्बहिर्द्धाशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वाद्बहिर्द्धाशून्यताऽबद्धाऽमुक्ता । असत्त्वादध्यात्मबहिर्द्धाशून्यताऽबद्धाऽमुक्ता । विविक्तत्वादध्यात्मबहिर्द्धाशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वादध्यात्मबहिर्द्धाशून्यताऽबद्धाऽमुक्ता । असत्त्वाच्छून्यताशून्यताऽबद्धाऽमुक्ता । विविक्तत्वाच्छून्यताशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वाच्छून्यताशून्यताऽबद्धाऽमुक्ता । असत्त्वान्महाशून्यताऽबद्धाऽमुक्ता । विविक्तत्वान्महाशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वान्महाशून्यताऽबद्धाऽमुक्ता । असत्त्वात्परमार्थशून्यताऽबद्धाऽमुक्ता । विविक्तत्वात्परमार्थशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वात्परमार्थशून्यताऽबद्धाऽमुक्ता । असत्त्वात् संस्कृतशून्यताऽबद्धाऽमुक्ता । विविक्तत्वात् संस्कृतशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वात् संस्कृतशून्यताऽबद्धाऽमुक्ता । असत्त्वाद्-

संस्कृतशून्यताऽबद्धाऽमुक्ता । विविक्तत्वादसंस्कृतशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वादसंस्कृतशून्यताऽबद्धाऽमुक्ता । असत्त्वादत्यन्तशून्यताऽबद्धाऽमुक्ता । विविक्तत्वादत्यन्तशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वादत्यन्तशून्यताऽबद्धाऽमुक्ता । असत्त्वादनवराग्रशून्यताऽबद्धाऽमुक्ता । विविक्तत्वादनवराग्रशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वादनवराग्रशून्यताऽबद्धाऽमुक्ता । असत्त्वादनवकारशून्यताऽबद्धाऽमुक्ता । विविक्तत्वादनवकारशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वादनवकारशून्यताऽबद्धाऽमुक्ता । असत्त्वात्प्रकृतिशून्यताऽबद्धाऽमुक्ता । विविक्तत्वात्प्रकृतिशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वात्प्रकृतिशून्यताऽबद्धाऽमुक्ता । असत्त्वात् सर्व्वधर्म्मशून्यताऽबद्धाऽमुक्ता । विविक्तत्वात् सर्व्वधर्म्मशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वात् सर्व्वधर्म्मशून्यताऽबद्धाऽमुक्ता । असत्त्वात् स्वलक्षणशून्यताऽबद्धाऽमुक्ता । विविक्तत्वात् स्वलक्षणशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वात् स्वलक्षणशून्यताऽबद्धाऽमुक्ता । असत्त्वादनुपलम्भशून्यताऽबद्धाऽमुक्ता । विविक्तत्वादनुपलम्भशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वादनुपलम्भशून्यताऽबद्धाऽमुक्ता । असत्त्वादभावशून्यताऽबद्धाऽमुक्ता । विविक्तत्वादभावशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वादभावशून्यताऽबद्धाऽमुक्ता । असत्त्वात् स्वभावशून्यताऽबद्धाऽमुक्ता । विविक्तत्वात् स्वभावशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वात् स्वभावशून्यताऽबद्धाऽमुक्ता । असत्त्वादभावस्वभावशून्यताऽबद्धाऽमुक्ता । विविक्तत्वादभावस्वभावशून्यताऽबद्धाऽमुक्ता । अनुत्पन्नत्वादभावस्वभावशून्यताऽबद्धाऽमुक्ता ।

सत्यपस्थानान्यायुष्मन् पूर्णाऽबद्धान्यमुक्तानि । सम्यक्प्रहाणान्य-

प्यायुष्मन् पूर्णाबद्धान्यमुक्तानि। ऋद्धिपादा अप्यायुष्मन् पूर्णाबद्धा अमुक्ताः। इन्द्रियाण्यप्यायुष्मन् पूर्णाबद्धान्यमुक्तानि। बलान्यप्यायुष्मन् पूर्णाबद्धान्यमुक्तानि। बोध्यङ्गान्यप्यायुष्मन् पूर्णाबद्धान्यमुक्तानि। आर्य्याष्टाङ्गमार्गोऽप्यायुष्मन् पूर्णाऽबद्धोऽमुक्तः।

असत्त्वात् स्मृत्युपस्थानान्यबद्धान्यमुक्तानि। विविक्तत्वात् स्मृत्युपस्थानान्यबद्धान्यमुक्तानि। अनुत्पन्नत्वात् स्मृत्युपस्थानान्यबद्धान्यमुक्तानि। असत्त्वात् सम्यक्प्रहाणान्यबद्धान्यमुक्तानि। विविक्तत्वात् सम्यक् प्रहाणान्यबद्धान्यमुक्तानि। अनुत्पन्नत्वात् सम्यक् प्रहाणान्यबद्धान्यमुक्तानि। असत्त्वादृद्धिपादा अबद्धा अमुक्ताः। विविक्तत्वादृद्धिपादा अबद्धा अमुक्ताः। अनुत्पन्नत्वादृद्धिपादा अबद्धा अमुक्ताः। असत्त्वादिन्द्रियान्यबद्धान्यमुक्तानि। विविक्तत्वादिन्द्रियाण्यबद्धान्यमुक्तानि। अनुत्पन्नत्वादिन्द्रियाण्यबद्धान्यमुक्तानि। असत्त्वाद्बलान्यबद्धान्यमुक्तानि। विविक्तत्वाद्बलान्यबद्धान्यमुक्तानि। अनुत्पन्नत्वाद्बलान्यबद्धान्यमुक्तानि। असत्त्वाद्बोध्यङ्गान्यबद्धान्यमुक्तानि। विविक्तत्वाद्बोध्यङ्गान्यबद्धान्यमुक्तानि। अनुत्पन्नत्वाद्बोध्यङ्गान्यबद्धान्यमुक्तानि। असत्त्वादार्य्याष्टाङ्गमार्गोऽबद्धोऽमुक्तः। विविक्तत्वादार्य्याष्टाङ्गमार्गोऽबद्धोऽमुक्तः। अनुत्पन्नत्वादार्य्याष्टाङ्गमार्गोऽबद्धोऽमुक्तः।

आर्य्यसत्यान्याप्यायुष्मन् पूर्णाबद्धान्यमुक्तानि। ध्यानान्यप्यायुष्मन् पूर्णाऽबद्धान्यमुक्तानि। अप्रमाणान्यायुष्मन् पूर्णाबद्धान्यमुक्तानि। आरूप्यसमापत्तयोऽप्यायुष्मन् पूर्णाबद्धा अमुक्ताः। विमोक्षा अप्यायुष्मन् पूर्णाऽबद्धा अमुक्ताः। अनुपूर्व्वविहारसमापत्तयोऽप्यायुष्मन् पूर्णाऽबद्धा अमुक्ताः। शून्यतानिमित्ताप्रणिहितविमोक्षमुखान्या-

असत्तामुपादाय सर्व्वज्ञताऽबद्धाऽमुक्ता। विविक्ततामुपादाय सर्व्वज्ञताऽबद्धाऽमुक्ता। अनुत्पन्नतामुपादाय सर्व्वज्ञताऽबद्धाऽमुक्ता। असत्तामुपादाय मार्गाकारज्ञताऽबद्धाऽमुक्ता। विविक्ततामुपादाय मार्गाकारज्ञताऽबद्धाऽमुक्ता। अनुत्पन्नतामुपादाय मार्गाकारज्ञताऽबद्धाऽमुक्ता। असत्तामुपादाय सर्व्वाकारज्ञताऽबद्धाऽमुक्ता। विविक्ततामुपादाय सर्व्वाकारज्ञताऽबद्धाऽमुक्ता। अनुत्पन्नतामुपादाय सर्व्वाकारज्ञताऽबद्धाऽमुक्ता। बोधिसत्त्वोऽप्यायुष्मन् पूर्णाऽबद्धोऽमुक्तः। बुद्धोऽप्यबद्धोऽमुक्तः। असत्तामुपादाय बोधिसत्त्वोऽबद्धोऽमुक्तः। विविक्ततामुपादाय बोधिसत्त्वोऽबद्धोऽमुक्तः। अनुत्पन्नतामुपादाय बोधिसत्त्वोऽबद्धोऽमुक्तः। असत्तामुपादाय बुद्धोऽबद्धोऽमुक्तः। विविक्ततामुपादाय बुद्धोऽबद्धोऽमुक्तः। अनुत्पन्नतामुपादाय बुद्धोऽबद्धोऽमुक्तः। तथताप्यायुष्मन् पूर्णाऽबद्धाऽमुक्ता। अवितथताप्यबद्धाऽमुक्ता। अनन्यतथताप्यबद्धाऽमुक्ता। धर्म्मताप्यबद्धाऽमुक्ता। धर्म्मधातुरप्यबद्धोऽमुक्तः। धर्म्मनियामताप्यबद्धाऽमुक्तः। भूतकोटिरप्यबद्धाऽमुक्तः। असत्तामुपादाय तथताऽबद्धाऽमुक्ता। विविक्ततामुपादाय तथताऽबद्धाऽमुक्ता। अनुत्पन्नतामुपादाय तथताऽबद्धाऽमुक्ता। असत्तामुपादाय अवितथताऽबद्धाऽमुक्ता। विविक्ततामुपादायाऽवितथताऽबद्धाऽमुक्ता। अनुत्पन्नतामुपादायाऽवितथताऽबद्धाऽमुक्ता। असत्तामुपादायाऽनन्यतथताऽबद्धाऽमुक्ता। विविक्ततामुपादायाऽनन्यतथताऽबद्धाऽमुक्ता। अनुत्पन्नतामुपादायाऽनन्यतथताऽबद्धाऽमुक्ता। असत्तामुपादाय धर्म्मताऽबद्धाऽमुक्ता। विविक्ततामुपादाय धर्म्मताऽबद्धाऽमुक्ता। अनुत्पन्नतामुपादाय धर्म्मताऽबद्धाऽमुक्ता।

असत्तामुपादाय धर्मधातुरबद्धोऽमुक्तः । विविक्ततामुपादाय धर्मधातुरबद्धोऽमुक्तः । अनुत्पन्नतामुपादाय धर्मधातुरबद्धोऽमुक्तः । असत्तामुपादाय धर्मस्थितिताऽबद्धाऽमुक्ता । विविक्ततामुपादाय धर्मस्थितिताऽबद्धाऽमुक्ता । अनुत्पन्नतामुपादाय धर्मस्थितिताऽबद्धाऽमुक्ता । असत्तामुपादाय धर्मनियामताऽबद्धाऽमुक्ता । विविक्तताऽमुपादाय धर्मनियामताऽबद्धाऽमुक्ता । अनुत्पन्नतामुपादाय धर्मनियामताऽबद्धाऽमुक्ता । असत्तामुपादाय भूतकोटिरबद्धोऽमुक्तः । विविक्ततामुपादाय भूतकोटिरबद्धोऽमुक्तः अनुत्पन्नतामुपादाय भूतकोटिरबद्धोऽमुक्तः । असंस्कृतमप्यायुष्मन् पूर्णाबद्धममुक्तः । असत्तामुपादायाऽसंस्कृतमबद्धममुक्तः । विविक्ततामुपादायाऽसंस्कृतमबद्धममुक्तः अनुत्पन्नतामुपादायाऽसंस्कृतमबद्धममुक्तं इदमायुष्मन् पूर्वबोधिसत्त्वानां महासत्त्वानामामः । अबद्धममुक्तं नामधर्ममुखं ।

दानपारमिताऽबद्धामुक्ता । शीलपारमिताऽबद्धाऽमुक्ता । क्षान्तिपारमिताऽबद्धाऽमुक्ता । वीर्यपारमिताऽबद्धाऽमुक्ता । ध्यानपारमिताऽबद्धाऽमुक्ता । प्रज्ञापारमिताऽबद्धाऽमुक्ता । अध्यात्मशून्यताऽबद्धाऽमुक्ता । बहिर्द्धाशून्यताऽबद्धाऽमुक्ता । अध्यात्मबहिर्द्धाशून्यताऽबद्धाऽमुक्ता । शून्यताशून्यताऽबद्धाऽमुक्ता । महाशून्यताऽबद्धाऽमुक्ता । परमार्थशून्यताऽबद्धाऽमुक्ता । संस्कृतशून्यताऽबद्धाऽमुक्ता । असंस्कृतन्यताऽबद्धाऽमुक्ता । अत्यन्तशून्यताऽबद्धाऽमुक्ता । अनवराग्रशून्यताऽबद्धाऽमुक्ता । अनवकारशून्यताऽबद्धाऽमुक्ता । प्रकृतिशून्यताऽबद्धाऽमुक्ता । सर्व्वधर्मशून्यताऽबद्धाऽमुक्ता । स्वलक्षणशून्यताऽबद्धा-

युष्मन् पूर्णाऽबद्धान्यमुक्तानि। अभिज्ञा अप्यायुष्मन् पूर्णाऽबद्धा अमुक्ताः। सर्व्वसमाधयोऽप्यायुष्मन् पूर्णाऽबद्धा अमुक्ताः। सर्व्वधारणीमुखान्यप्यायुष्मन् पूर्णाऽबद्धान्यमुक्तानि।

तत्कस्य हेतोः। असत्त्वादायुष्मन् पूर्णार्य्यसत्यान्यबद्धान्यमुक्तानि। विविक्तत्वादार्य्यसत्यान्यबद्धान्यमुक्तानि। अनुत्पन्नत्वादार्य्यसत्यान्यबद्धान्यमुक्तानि। असत्त्वादायुष्मन् पूर्णध्यानान्यबद्धान्यमुक्तानि। विविक्तत्वात् ध्यानान्यबद्धान्यमुक्तानि। अनुत्पन्नत्वात् ध्यानान्यबद्धान्यमुक्तानि। असत्त्वादायुष्मन् पूर्णाऽप्रमाणान्यबद्धान्यमुक्तानि। विविक्तत्वादप्रमाणान्यबद्धान्यमुक्तानि। अनुत्पन्नत्वादप्रमाणान्यबद्धान्यमुक्तानि। असत्त्वादायुष्मन् पूर्णारूप्यसमापत्तयोऽबद्धा अमुक्ताः। विविक्तत्वादारूप्यसमापत्तयोऽबद्धा अमुक्ताः। अनुत्पन्नत्वादारूप्यसमापत्तयोऽबद्धा अमुक्ताः। असत्त्वादायुष्मन् पूर्णविमोक्षा अबद्धा अमुक्ताः। विविक्तत्वाद्विमोक्षा अबद्धा अमुक्ताः। अनुत्पन्नत्वाद्विमोक्षा अबद्धा अमुक्ताः। असत्त्वादायुष्मन् पूर्णनवानुपूर्व्वविहारसमापत्तयोऽबद्धा अमुक्ता। विविक्तत्वान्नवानुपूर्व्वविहारसमापत्तयोबद्धा अमुक्ताः। अनुत्पन्नत्वान्नवानुपूर्व्वविहारसमापत्तयोऽबद्धा अमुक्ताः। असत्त्वादायुष्मन् पूर्णशून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यबद्धान्यमुक्तानि। विविक्तत्वाच्छून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यबद्धान्यमुक्तानि। अनुत्पन्नत्वाच्छून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यबद्धान्यमुक्तानि। असत्त्वादायुष्मन् पूर्णाऽभिज्ञा अबद्धा अमुक्ताः। विविक्तत्वादभिज्ञा अबद्धा अमुक्ताः। अनुत्पन्नत्वादभिज्ञा अबद्धा अमुक्ताः। असत्त्वदायुष्मन् पूर्णसमाधयोऽबद्धा अमुक्ताः। विविक्तत्वात्

समाधयोऽबद्धा अमुक्ताः। अनुत्पन्नत्वात् समाधयोऽबद्धा अमुक्ताः असत्त्वादायुष्मन् पूर्णधारणीमुखान्यबद्धान्यमुक्तानि। विविक्तत्वाद्धारणीमुखान्यबद्धान्यमुक्तानि। अनुत्पन्नत्वाद्धारणीमुखान्यबद्धान्यमुक्तानि।

तथागतबलान्यप्यायुष्मन् पूर्णाऽबद्धान्यमुक्तानि। वैशारद्यान्यप्यायुष्मन् पूर्णाऽबद्धान्यमुक्तानि। प्रतिसम्विदोऽप्यायुष्मन् पूर्णाऽबद्धा अमुक्ताः। महामैत्र्यप्यायुष्मन् पूर्णाबद्धाऽमुक्ता। महाकरुणाऽप्यायुष्मन् पूर्णाबद्धाऽमुक्ता। आवेणिकबुद्धधर्मा अप्यायुष्मन् पूर्णाऽबद्धा अमुक्ताः। तत्कस्य हेतोः। असत्त्वादायुष्मन् पूर्णतथागतबलान्यबद्धान्यमुक्तानि। विविक्तत्वात्तथागतबलान्यबद्धान्यमुक्तानि। अनुत्पन्नत्वात्तथागतबलान्यबद्धान्यमुक्तानि। असत्त्वाद्वैशारद्यान्यबद्धान्यमुक्तानि। विविक्तत्वाद्वैशारद्यान्यबद्धान्यमुक्तानि। असत्त्वाद्वैशारद्यान्यबद्धान्यमुक्तानि। असत्त्वात् प्रतिसम्विदोऽबद्धा अमुक्ताः। विविक्तत्वात् प्रतिसम्विदोऽबद्धा अमुक्ताः। अनुत्पन्नत्वात् प्रतिसम्विदोऽबद्धा अमुक्ताः। असत्त्वान्महामैत्री अबद्धाऽमुक्ता। विविक्तत्वान्महामैत्री अबद्धाऽमुक्ता। अनुत्पन्नत्वान्महामैत्री अबद्धाऽमुक्ता। असत्त्वान्महाकरुणाऽबद्धाऽमुक्ता। विविक्तत्वान्महाकरुणाऽबद्धाऽमुक्ता। अनुत्पन्नत्वान्महाकरुणाऽबद्धाऽमुक्ता। असत्त्वादावेणिकबुद्धधर्मा अबद्धा अमुक्ताः। विविक्तत्वादावेणिकबुद्धधर्मा अबद्धा अमुक्ताः। अनुत्पन्नत्वादावेणिकबुद्धधर्मा अबद्धा अमुक्ताः।

सर्व्वज्ञताऽप्यायुष्मन् पूर्णाऽबद्धाऽमुक्ता। मार्गाकारज्ञताप्यायुष्मन् पूर्णाबद्धाऽमुक्ता। सर्व्वाकारज्ञताऽप्यायुष्मन् पूर्णाऽबद्धाऽमुक्ता।

ऽमुक्ता। अनुपलम्भशून्यताऽबद्धाऽमुक्ता। अभावशून्यताऽबद्धाऽमुक्ता। स्वभावशून्यताऽबद्धाऽमुक्ता। अभावस्वभावशून्यताऽबद्धाऽमुक्ता।

स्मृत्युपस्थानान्यबद्धान्यमुक्तानि। सम्यक्प्रहाणान्यबद्धान्यमुक्तानि। ऋद्धिपादा अबद्धा अमुक्ताः। इन्द्रियाण्यबद्धान्यमुक्तानि। बलान्यबद्धान्यमुक्तानि। बोध्यङ्गान्यबद्धान्यमुक्तानि। आर्य्याष्टाङ्गमार्गोऽबद्धोऽमुक्तः। आर्य्यसत्यान्यबद्धान्यमुक्तानि। ध्यानान्यबद्धान्यमुक्तानि। अप्रमाणान्यबद्धान्यमुक्तानि। आरूप्यसमापत्तयोऽबद्धा अमुक्ताः। विमोक्षा अबद्धा अमुक्ताः। अनुपूर्व्वविहारसमापत्तयोऽबद्धा अमुक्ताः। शून्यतानिमित्ताप्रणिहितविमोक्षमुखान्यबद्धान्यमुक्तानि। अभिज्ञा अबद्धाऽमुक्ता। समाधयोऽबद्धा अमुक्ताः। धारणीमुखान्यबद्धान्यमुक्तानि। तथागतबलान्यबद्धान्यमुक्तानि। वैशारद्यान्यबद्धान्यमुक्तानि। प्रतिसम्विदोऽबद्धा अमुक्ताः। महामैत्र्यबद्धाऽमुक्ता। महाकरुणाऽबद्धाऽमुक्ता। आवेणिकबुद्धधर्मा अबद्धा अमुक्ताः। बोधिरबद्धाऽमुक्ता। सर्व्वज्ञताऽबद्धाऽमुक्ता। मार्गाकारज्ञताऽबद्धाऽमुक्ता। सर्व्वाकारज्ञताऽबद्धाऽमुक्ता। बोधिसत्त्वोऽबद्धोऽमुक्तः। बुद्धोऽबद्धोऽमुक्तः। तथताऽबद्धाऽमुक्ता। अवितथताऽबद्धाऽमुक्ता। अनन्यतथताऽबद्धाऽमुक्ता। धर्म्मताऽबद्धाऽमुक्ता। धर्म्मधातुरबद्धोऽमुक्तः। धर्म्मस्थितिताऽबद्धाऽमुक्ता। धर्म्मनियामताऽबद्धाऽमुक्ता। भूतकोटिरबद्धोऽमुक्तः। असंस्कृतताऽबद्धाऽमुक्ता।

योऽबद्धाऽमुक्तायां दानपारमितायां स्थिता। अबद्धाऽमुक्तायां शीलपारमितायां स्थिता। अबद्धाऽमुक्तायां क्षान्तिपारमितायां स्थिता। अबद्धाऽमुक्तायां वीर्य्यपारमितायां स्थिता। अबद्धाऽमुक्तायां

ध्यानपारमितायां स्थिता। अवद्धाऽमुक्तायां प्रज्ञापारमितायां स्थिता। अवद्धाऽमुक्तायामध्यात्मशून्यतायां स्थिता। अवद्धाऽमुक्तायां बहिर्द्धाशून्यतायां। स्थिता अवद्धाऽमुक्तायामध्यात्मबहिर्द्धाशून्यतायां स्थिता। अवद्धाऽमुक्तायां शून्यताशून्यतायां स्थिता। अवद्धाऽमुक्तायां महाशून्यतायां स्थिता। अवद्धाऽमुक्तायां परमार्थशून्यतायां स्थिता। अवद्धाऽमुक्तायां संस्कृतशून्यतायां स्थिता। अवद्धाऽमुक्तायामसंस्कृतशून्यतायां स्थिता। अवद्धाऽमुक्तायामत्यन्तशून्यतायां स्थिता। अवद्धाऽमुक्तायामनवराग्रशून्यतायां स्थिता। अवद्धाऽमुक्तायामनवकारशून्यतायां स्थिता। अवद्धाऽमुक्तायां प्रकृतिशून्यतायां स्थिता। अवद्धाऽमुक्तायां सर्व्वधर्म्मशून्यतायां स्थिता। अवद्धाऽमुक्तायां स्वलक्षणशून्यतायां स्थिता। अवद्धाऽमुक्तायामनुपलम्भशून्यतायां स्थिता। अवद्धाऽमुक्तायामभावशून्यतायां स्थिता। अवद्धाऽमुक्तायां स्वभावशून्यतायां स्थिता। अवद्धाऽमुक्तायामभावस्वभावशून्यतायां स्थिता। अवद्धाऽमुक्तेषु चतुर्षु स्मृत्युपस्थानेषु स्थिता। अवद्धाऽमुक्तेषु चतुर्षु सम्यक् प्रहाणेषु स्थिता। अवद्धाऽमुक्तेषु चतुर्षु ऋद्धिपादेषु स्थिता। अवद्धाऽमुक्तेषु पञ्चस्विन्द्रियेषु स्थिता। अवद्धाऽमुक्तेषु पञ्चसु वलेषु स्थिता। अवद्धाऽमुक्तेषु सप्तसु वोध्यङ्गेषु स्थिता। अवद्धाऽमुक्ते आर्य्याष्टाङ्गमार्गे स्थिता। अवद्धाऽमुक्तेष्वार्य्यसत्येषु स्थिता। अवद्धाऽमुक्तेषु चतुर्षु ध्यानेषु स्थिता। अवद्धाऽमुक्तेषु चतुर्ष्वप्रमाणेषु स्थिता। अवद्धाऽमुक्तासु चतुर्ष्वारूप्यसमापत्तिषु स्थिता। अवद्धाऽमुक्तेषु अष्टासु विमोक्षेषु स्थिता। अवद्धाऽमुक्तासु नवस्वनुपूर्व्वविहारसमापत्तिषु स्थिता। अवद्धाऽमुक्तेषु शून्यतानिमित्ताप्रणिहितविमोक्षमुखेषु स्थिता। अवद्धाऽमुक्तास्वभि-

कारज्ञतामभिसम्भोत्स्यते। अबद्धामुक्तोऽबद्धामुक्तं धर्म्मचक्रं प्रवर्त्तयिष्यति। अबद्धामुक्तोऽबद्धामुक्तान् सत्त्वां स्त्रिषु यानेषु नियोजयिष्यति। एवं खल्वायुष्मन् पूर्णं बोधिसत्त्वो महासत्त्वोऽबद्धामुक्तो ऽबद्धामुक्ताभिः षड्भिः पारमिताभिः सर्व्वधर्म्मा ननु भोत्स्यते। असत्तायु पादाय विविक्ततामुपादाय। अनुत्पादतामुपादाय।

एवं खल्वायुष्मन् पूर्णं बोधिसत्त्वो महासत्त्वोऽबद्धामुक्तो महायान सन्नाह सन्नद्ध इति वेदितव्यः।

अथायुष्मन् सुभूतिर्भगवन्तमेतदवोचत्। कतमद्भगवन् बोधिसत्त्वस्य महासत्त्वस्य महायानं। कियन्तो भगवन् बोधिसत्त्वो महासत्त्वो महायानसंप्रस्थिता वेदितव्याः। कुतस्तद्यानं निर्यास्यति। क्वातद्यानं स्थास्यति। को वा तेन यानेन निर्यास्यति। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्। यत्सुभूते एवं वदसि। कतमद्बोधिसत्त्वस्य महासत्त्वस्य महायानं। षट्पारमिता सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। कतमे षट्। दानपारमिता, शीलपारमिता, क्षान्तिपारमिता, वीर्य्यपारमिता, ध्यानपारमिता, प्रज्ञापारमिता।

इह सुभूते बोधिसत्त्वो महासत्त्वः सर्व्वाकारज्ञता प्रतिसंयुक्तैर्मनसिकारैर्दानमर्थिभ्यो ददाति यदुताऽध्यात्मिकबाह्यानि वस्तूनि तच्च सर्व्वसत्त्वैः सार्द्धं साधारणं कृत्वा अनुत्तरायां सम्यक् सम्बोधौ परिणामयत्यनुपलम्भयोगेन। इयं बोधिसत्त्वस्य महासत्त्वस्य दानपारमिता। आह। कतमा भगवन् बोधिसत्त्वस्य महासत्त्वस्य शीलपारमिता। भगवानाह। इह सुभूते बोधिसत्त्वो महासत्त्वः

सर्व्वाकारज्ञता प्रतिसंयुक्तैश्चित्तोत्पादैरात्मना च दशकुशलान् कर्म्मपथान् समादाय वर्त्तते। परांश्च दशकुशलेषु कर्म्मपथेषु समादापयति निवेशयति प्रतिष्ठापयति अनुपलम्भयोगेन। इयं बोधिसत्त्वस्य महासत्त्वस्य परामृष्टा शीलपारमिता। आह। कतमा भगवन् बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिपारमिता। भगवानाह। इह सुभूते बोधिसत्त्वो महासत्त्वः सर्व्वाकारज्ञता प्रतिसंयुक्तैः मनसिकारैरात्मनाचक्षान्तिसम्पन्नो भवति। परांश्च क्षान्तौ समादापयत्यनुपलम्भयोगेन। इयं बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिपारमिता। आह। कतमा भगवन् बोधिसत्त्वस्य महासत्त्वस्य वीर्य्यपारमिता। भगवानाह। इह सुभूते बोधिसत्त्वो महासत्त्वः सर्व्वाकारज्ञतामतिसंयुक्तैः मनसिकारैरात्मना च पञ्चसु पारमितास्वनिक्षिप्तधुरो भवति। परांश्च पञ्चसु पारमितासु नियोजयत्यनुपलम्भयोगेन। इयं बोधिसत्त्वस्य महासत्त्वस्य वीर्य्यपारमिता। आह। कतमा भगवन् बोधिसत्त्वस्य महासत्त्वस्य ध्यानपारमिता। भगवानाह। इह सुभूते बोधिसत्त्वो महासत्त्वः सर्व्वाकारज्ञता प्रतिसंयुक्तैः मनसिकारैरुपाय कौशलेन ध्यानानि समापद्यते। परांश्च ध्यानेषु समादापयत्यनुपलम्भयोगेन। इयं बोधिसत्त्वस्य महासत्त्वस्य ध्यानपारमिता। आह। कतमा भगवन् बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिता। भगवानाह। इह सुभूते बोधिसत्त्वस्य महासत्त्वस्य सर्व्वाकारज्ञता प्रतिसंयुक्तैश्चित्तोत्पादैरात्मना च सर्व्वधर्म्मांश्चाऽभिनिविशते। सर्व्वधर्म्मानाञ्च प्रकृतिं प्रत्यवेक्षते अनुपलम्भयोगेन। सर्व्वधर्म्मानभिनिविश्य सर्व्वधर्म्मप्रकृतिप्रत्यवे-

लक्षणतायां सत्त्वान् समादापयति निवेशयति प्रतिष्ठापयति अनुपलम्भयोगेन । इयं बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमिता । इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं । यदुताऽध्यात्मशून्यता, वहिर्द्धाशून्यता, अध्यात्मवहिर्द्धाशून्यता, शून्यताशून्यता महाशून्यता, परमार्थशून्यता, संस्कृतशून्यता, असंस्कृतशून्यता । अत्यन्तशून्यता, अनवराग्रशून्यता, अनवकारशून्यता, प्रकृतिशून्यता, सर्व्वधर्म्मशून्यता, स्वलक्षणशून्यता, अनुपलम्भशून्यता, अभावशून्यता, स्वभावशून्यता, अभावस्वभावशून्यता ।

तत्र कतमाऽध्यात्मशून्यता, आध्यात्मिकाधर्म्मा उच्यन्ते । चक्षुः श्रोत्रं घ्राणं जिह्वाकायोमनः । तत्र चक्षुश्चक्षुषाशून्यमकूटस्थाऽविनाशितामुपादाय। तत्कस्य हेतोः प्रकृतिरस्यैषा । श्रोत्रं श्रोत्रेण शून्यमकूटस्थाऽविनाशितामुपादाय । तत्कस्य हेतोः प्रकृतिरस्यैषा । घ्राणं घ्राणेन शून्यमकूटस्थाविनाशितामुपादाय । तत्कस्य हेतोः प्रकृतिरस्यैषा । जिह्वा जिह्वया शून्याऽकूटस्थाऽविनाशितामुपादाय । तत्कस्य हेतोः प्रकृतिरस्यैषा । कायः कायेन शून्योऽकूटस्थाऽविनाशितामुपादाय । तत्कस्य हेतोः प्रकृतिरस्यैषा । मनोमनसा शून्यमकूटस्थाविनाशितामुपादाय । तत्कस्य हेतोः प्रकृतिरस्यैषा । इयमुच्यतेऽध्यात्मशून्यता ।

तत्र कतमा वहिर्द्धाशून्यता, वाह्याधर्म्मा उच्यन्ते रूपशब्दगन्धरसस्पर्श्नधर्म्मा। तत्र रूपं रूपेण शून्यमकूटस्थाऽविनाशितामुपादाय । तत्कस्य हेतोः प्रकृतिरस्यैषा। शब्दः शब्देन शून्योऽकूटस्थाऽविना-

ग्रितामुपादाय। तत्कस्य हेतोः प्रकृतिरस्यैषा। गन्धो गन्धेन शून्यो-ऽकूटस्थाऽविनाशितामुपादाय। तत्कस्य हेतोः प्रकृतिरस्यैषा। रसो-रसेन शून्योऽकूटस्थाऽविनाशितामुपादाय। तत्कस्य हेतोः प्रकृति-रस्यैषा। स्पर्शः स्पर्शेन शून्योऽकूटस्थाऽविनाशितामुपादाय। तत्कस्य हेतोः प्रकृतिरस्यैषा। धर्माधर्मैः शून्या अकूटस्थाऽविनाशितामुपा-दाय। तत्कस्य हेतोः प्रकृतिरस्यैषा। इयमुच्यते बहिर्द्धाशून्यता।

तत्र कतमाऽध्यात्मबहिर्द्धाशून्यता, षडाध्यात्मिकान्यायतनानि, इमे उच्यन्ते आध्यात्मिकबाह्यधर्माः। तत्राध्यात्मिकाधर्मा बाह्य-धर्मैः शून्याः अकूटस्थाऽविनाशितामुपादाय। तत्कस्य हेतोः प्रकृतिरस्यैषा। इमे बाह्याधर्माः आध्यात्मिकैधर्मैः शून्याः अकूटस्था-ऽविनाशितामुपादाय। तत्कस्य हेतोः प्रकृतिरस्यैषा। इयमुच्यते अध्यात्मबहिर्द्धाशून्यता। तत्र कतमाशून्यताशून्यता। या सर्व्व-धर्माणां शून्यता तया शून्यतया शून्या शून्यताऽकूटस्थाऽविनाशिता-मुपादाय। तत्कस्य हेतोः प्रकृतिरस्यैषा। इयमुच्यते शून्यता-शून्यता। तत्र कतमामहाशून्यता, पूर्व्वादिक् पूर्व्वयादिशा शून्या, दक्षिणादिग्दक्षिणयादिशाशून्या। पश्चिमादिक् पश्चिमयादिशा शून्या। उत्तरादिगुत्तरयादिशा शून्या। अधस्ताद्दिगधस्ताद्दिशा शून्या। उपरिष्टाद्दिगुपरिष्टाद्दिशा शून्या। एवं विदिशोविदिग्भिः शून्या। अकूटस्थाऽविनाशितामुपादाय। तत्कस्य हेतोः प्रकृतिरा-षामियं। इयमुच्यते महाशून्यता। तत्र कतमा परमार्थशून्यता। परमार्था उच्यन्ते ये निर्व्वान्ति। तत्र निर्व्वाणं निर्व्वाणेन शून्य मकूटस्थाविनाशितामुपादाय। तत्कस्य हेतोः प्रकृतिरेषामियं।

इयमुच्यते परमार्थशून्यता । तत्र कतमा संस्कृतशून्यता । संस्कृतमुच्यते । कामधातुः रूपधातुः आरूप्यधातुः तत्र कामधातुः कामधातुना शून्यः । रूपधातूरूपधातुना शून्यः । आरूप्यधातुराख्प्यधातुना शून्यः अकूटस्थाऽविनाशितामुपादाय । तत्कस्य हेतोः प्रकृतिरेषामियं । इयमुच्यते संस्कृतशून्यता । तत्र कतमाऽसंस्कृतशून्यता । असंस्कृतमुच्यते यस्य नोत्पादो न निरोधो न स्थितेरन्यथात्वमिदमुच्यते । संस्कृतं । तत्राऽसंस्कृतमसंस्कृतेन शून्यमकूटस्थाऽविनाशितामुपादाय । तत्कस्य हेतोः प्रकृतिरस्यैषा । इयमुच्यतेऽसंस्कृतशून्यता । तत्र कतमाऽत्यन्तशून्यता यस्यान्तोनोपलभ्यते तदत्यन्तं । अत्यन्तमत्यन्तेन शून्यमकूटस्थाविनाशितामुपादाय । तत्कस्य हेतोः प्रकृतिरस्यैषा इयमुच्यतेऽत्यन्तशून्यता । तत्र कतमाऽनवराग्रशून्यता । यस्याऽवरं नोपलभ्यते । नाग्रं तस्यागतिर्नोपलभ्यते नोगतिः । अनवराग्रमनवराग्रेण शून्यमकूटस्थाविनाशितामुपादाय । तत्कस्य हेतोः प्रकृतिरस्यैषा । इयमुच्यतेऽनवराग्रशून्यता । तत्र कतमाऽनवकारशून्यता । यत्र न कस्यचिद्धर्मस्य च्छोरणमस्ति, अनवकारोऽनवकारेण शून्योऽकूटस्थाऽविनाशितामुपादाय । तत्कस्य हेतोः प्रकृतिरस्यैषा । इयमुच्यतेऽनवकारशून्यता । तत्र कतमाप्रकृतिशून्यता, या सर्व्वधर्म्माणां प्रकृतिः संस्कृतानां वाऽसंस्कृतानां वा, सा न श्रावकैः कृता न प्रत्येकबुद्धैः न बोधिसत्त्वैर्महासत्त्वैः न तथागतैरर्हद्भिः सम्यक् सम्बुद्धैः कृता प्रकृतिः प्रकृत्याशून्याऽकूटस्थाऽविनाशितामुपादाय । तत्कस्य हेतोः प्रकृतिरस्या इयं । इयमुच्यते प्रकृतिशून्यता । तत्र कतमासर्व्वधर्म्मशून्यता ।

सर्व्वधर्मा उच्यन्ते। रूपं वेदनासंज्ञासंस्कारा विज्ञानं चक्षुःश्रोत्र घ्राणं जिह्वा कायमनः। रूपं शब्दो गन्धो रसः स्पर्शो धर्माः। चक्षु-र्विज्ञानं श्रोत्रविज्ञानं घ्राणविज्ञानं जिह्वाविज्ञानं कायविज्ञानं मनोविज्ञानं। चक्षुःसंस्पर्शः श्रोत्रसंस्पर्शः घ्राणसंस्पर्शः जिह्वासंस्पर्शः कायसंस्पर्श मनःसंस्पर्शः। चक्षुःसंस्पर्शजावेदना, श्रोत्रसंस्पर्शजावेदना, घ्राणसंस्पर्शजावेदना, जिह्वासंस्पर्शजावेदना, कायसंस्पर्शजावेदना, मनः संस्पर्शजावेदना। रूपिणोधर्माः। अरूपिणोधर्माः। संस्कृताधर्मा, असंस्कृताधर्माः। इमे उच्यन्ते सर्व्वधर्माः। सर्व्वधर्माः सर्व्वधर्मैः शून्याः अकूटस्थाऽविनाशितामुपादाय। तत्कस्य हेतोः प्रकृतिरे-षामियं। इयमुच्यते सर्व्वधर्मशून्यता। तत्र कतमा स्वलक्षणशून्यता। रूपलक्षणं रूपमनुपलम्भनामलक्षणा वेदना। उद्ग्रहणलक्षणा संज्ञा। अभिसंस्कारलक्षणाः संस्काराः। विज्ञानलक्षणं विज्ञानं। दुःख-लक्षणाः स्कन्धाः। आशीविषलक्षणाधातवः। आयद्वारलक्षणान्या-यतनानि। सामग्रीलक्षणः। प्रतीत्यसमुत्पादः। परित्यागलक्षणा दानपारमिताः। अनुदाहलक्षणा शीलपारमिता। अकोपनालक्षणा क्षान्तिपारमिताः। अनवमर्दलक्षणा वीर्य्यपारमिता। संग्रहलक्षणा ध्यानपारमिता। असङ्गलक्षणा प्रज्ञापारमिता। अक्षोपनालक्षणानि चत्वारि ध्यानानि, चत्वार्य्यप्रमाणानि चतस्र आरूप्यसमापत्तयः। नैर्य्यानिकलक्षणाः सप्तत्रिंशद्बोधिपक्षाधर्माः। विविक्तलक्षणं शून्यता-विमोक्षमुखं। शान्तलक्षणमानिमित्तविमोक्षमुखं। दुःखामोहलक्षण-मप्रणिहितविमोक्षमुखं। विमोचनालक्षणा विमोक्षाः। सुनिश्चित-लक्षणानि बलानि। सुप्रतिष्ठितलक्षणानि वैशारद्यानि। अना-

च्छेदलक्षणाः प्रतिसम्विदः। हितोपसंहारलक्षणा महामैत्री। त्राणलक्षणा महाकरुणा। प्रामोद्यलक्षणा महामुदिता। असंकीर्णलक्षणा महोपेक्षा। असंहार्य्यलक्षणा अष्टादशावेणिका बुद्धधर्म्माः। प्रत्यक्षलक्षणा सर्व्वाकारज्ञताज्ञानं। यच्च संस्कृतानां धर्म्माणां लक्षणं यच्चाऽसंस्कृतानां धर्म्माणां लक्षणं। स्वेनस्वेनलक्षणेन सर्व्वं एते धर्म्माः शून्याः अकूटस्थाऽविनाशितामुपादाय। तत्कस्य हेतोः प्रकृतिरेषामियं। इयमुच्यते स्वलक्षणशून्यता। तत्र कतमा अनुपलम्भशून्यता। यत्राऽतीतं नोपलभ्यते। अनागतं नोपलभ्यते। प्रत्युत्पन्नस्य स्थितिर्नोपलभ्यते। अनुपलम्भोऽनुपलम्भेन शून्योऽकूटस्थाविनाशितामुपादाय। तत्कस्य हेतोः प्रकृतिरस्यैषा। इयमुच्यतेऽनुपलम्भशून्यता। तत्र कतमा। *भावस्वभावशून्यता। नास्ति सांयोगिकः स्वभावः प्रतीत्यसमुत्पन्नत्वात् सर्व्वधर्म्माणां। संयोगः संयोगेन शून्योऽकूटस्थाविनाशितामुपादाय। तत्कस्य हेतोः प्रकृतिरस्यैषा। इयमुच्यतेऽभावस्वभावशून्यता। पुनरपरं सुभूते भावोभावेन शून्यः। अभावोऽभावेनशून्यः। स्वभावः स्वभावेन शून्यः। परभावः परभावेन शून्यः। तत्र कतमाभावः। भाव उच्यते पञ्चस्कन्धाः। पञ्चस्कन्धाः पञ्चस्कन्धैः शून्याः। एवं भावोभावेन शून्यः। कतमभावः स्वभावेन शून्यः। अभाव उच्यतेऽसंस्कृतं। तत्राऽसंस्कृतमसंस्कृतेन शून्यः। अभावोऽभावेन शून्यः। स्वभावः स्वभावेन शून्यः। परभावः परभावेन शून्यः। स्वभाव उच्यते प्रकृतिरविपरीतं। तत्र या शून्यता

---

* आदर्शपुस्तके ऽभावशून्यता स्वभावशून्यतयोरभिर्देशोनास्ति किन्तु पश्चात्तयोर्व्विवरणं दृश्यते।

मानज्ञानेन ज्ञाता न दर्शनेन। इयमुच्यते स्वभावशून्यता। तत्र कतमापरभावः शून्यता। या उत्पादाद्वा तथागतानामनुत्पादाद्वा तथागतानां स्थितैरेव धर्म्मस्थितिता, धर्म्मता धर्म्मधातु धर्म्मनियामता। तथता अवितथता, अनन्य तथता, भूतकोटिः। इति धि येषां धर्म्माणां परेण शून्यता। इयमुच्यते परभावशून्यता। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं॥

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदूत-शूरङ्गमोनाम समाधिः। रत्नमुद्रानाम समाधिः। सिंहविक्रीडितोनाम समाधिः। सुचन्द्रोनाम समाधिः। चन्द्रध्वजकेतुर्नाम समाधिः। सर्व्वधर्म्मोद्गतोनाम समाधिः। अधिवचनसंप्रवेशोनाम समाधिः। विलोकितमूर्द्धोनाम समाधिः। धर्म्मधातुनियतोनाम समाधिः। नियतध्वजकेतुर्नाम समाधिः। वज्रोनाम समाधिः। सर्व्वधर्म्मप्रवेशमुद्रानाम समाधिः। समाधिराजसुप्रतिष्ठितोनाम समाधिः। रश्मिप्रमुक्तोनाम समाधिः। बलव्यूहोनाम समाधिः। समुद्गतोनाम समाधिः। निरुक्तनियतप्रवेशोनाम समाधिः। अधिवचनसंप्रवेशोनाम समाधिः। दिग्विलोकितोनाम समाधिः। आधारमुद्रानाम समाधिः। असम्प्रमोषोनाम समाधिः। सर्व्वधर्म्मसमवसरणसागरमुद्रानाम समाधिः। आकाशस्फुरणोनाम समाधिः। वज्रमण्डलोनाम समाधिः। ध्वजाग्रकेयूरोनाम समाधिः। इन्द्रकेतुर्नाम समाधिः। स्रोतोऽनुगतोनाम समाधिः। सिंहविजृम्भितोनाम समाधिः। व्यस्तलोनामसमाधिः। रणञ्जहोनाम समाधिः। वैरोचनोनाम समाधिः। अनघोनाम समाधिः।

अनिकेतस्थितोनाम समाधिः । निस्थित्तोनाम समाधिः । विमल-प्रदीपोनाम समाधिः । अनन्तप्रभोनाम समाधिः । प्रभाकरोनाम समाधिः । समन्तात्रभासोनाम समाधिः । शुद्धसारोनाम समाधिः । विमलप्रभोनाम समाधिः । रतिङ्करोनाम समाधिः । विद्युत्प्रदीपो-नाम समाधिः । अक्षयोनाम समाधिः । अजेयोनाम समाधिः । तेजोवतीनाम समाधिः । क्षयापगतोनाम समाधिः । अनिञ्जोनाम समाधिः । अविवर्त्तोनाम समाधिः । सूर्य्यप्रदीपोनाम समाधिः । चन्द्रविमलोनाम समाधिः । प्रज्ञाप्रदीपोनाम समाधिः । शुद्ध-प्रतिभासोनाम समाधिः । आलोककरोनाम समाधिः । कारा-कारोनाम समाधिः । ज्ञानकेतुर्नाम समाधिः । वज्रोपमोनाम समाधिः । चित्तस्थितिर्नाम समाधिः । समन्तालोकोनाम समाधिः । सुप्रतिष्ठितोनाम समाधिः । रत्नकोटिर्नाम समाधिः । वरधर्म-मुद्रानाम समाधिः । सर्व्वधर्म्मसमतानाम समाधिः । रतिजहोनाम समाधिः । धर्म्मोद्गतोनाम समाधिः । विकिरणोनाम समाधिः । सर्वधर्म्मपदप्रभेदोनाम समाधि । समाक्षरावकारोनाम समाधिः । अक्षरापगतोनाम समाधिः । आरम्बणच्छेदणोनाम समाधिः । अविकारोनाम समाधिः । प्रभाकरोनाम समाधिः । नामनियत-प्रवेशोनामसमाधिः । अनिकेतचारीनाम समाधिः । तिमिरापगतो-नाम समाधिः । चारित्रवतीनाम समाधिः । अचलानाम समाधिः । विषयतीर्णोनाम समाधिः । सर्वगुणसञ्चयोनाम समाधिः । स्थित-निस्थित्तोनाम समाधिः । शुभपुष्पितशुद्धिर्नाम समाधिः । बोध्यङ्ग-वतीनाम समाधिः । अनन्तप्रतिभावोनाम समाधिः । असमसमो-

नाम समाधिः। सर्वधर्मातिक्रमणोनाम समाधिः। परिच्छेदकरो-नाम समाधिः। विमतिविकिरणोनाम समाधिः। निरधिष्ठानो-नाम समाधिः। एकव्यूहोनाम समाधिः। आकाराभिनिर्हारो-नाम समाधिः। एकाकारोनाम समाधिः। सर्वसुखदुःखनिरभि-नन्दीनाम समाधिः। सर्व्वाकारवरोपेतोनाम समाधिः। आकारा-नवकारोनाम समाधिः। नैर्वेधिकसर्वभवतलापगतोनाम समाधिः। संकेतरुतप्रवेशोनाम समाधिः। गोचोर्यायाक्षरविमुक्तोनाम समाधिः। ज्वलनोल्कानाम समाधिः। लक्षणपरिशोधनोनाम समाधिः। अनभिलक्षितोनाम समाधिः। सर्व्वाकारवरोपेतोनाम समाधिः। सर्व्वसुखदुःखनिरभिनन्दीनाम समाधिः। अक्षयकरण्डोनाम समाधिः। धारणीमतिर्नाम समाधिः। सम्यक्त्वमिथ्यात्वसंप्रशमनोनाम समाधिः। सर्वरोधविरोधसंप्रशमनोनाम समाधिः। अनुरोधा-प्रतिरोधोनाम समाधिः। विमलप्रभोनाम समाधिः। सारवतीनाम समाधिः। परिपूर्णचन्द्रविमलोनाम समाधिः। विद्युत्प्रभोनाम समाधिः। महाव्यूहोनाम समाधिः। सर्वलोकप्रभाकरोनाम समाधिः। समाधिसमतानाम समाधिः। अरजोविरजोनययुक्तोनाम समाधिः। अरणसरणसमवसरणोनाम समाधिः। अरणसरणसर्वं-समवसरणोनामसमाधिः। अनिलयानिकेतनिरतोनाम समाधिः। तथतास्थितनिश्चित्तोनाम समाधिः। कायकलिसंप्रमथनोनाम समाधिः। वक्कलिविध्वंसनगगणकल्पोनाम समाधिः। आकाशा-सङ्गविमुक्तिनिरुपलेपोनाम समाधिः॥ ० ॥

शतसाहस्र्याः प्रज्ञापारमितायाः सप्तमः परिवर्त्तः॥

# अथ अष्टमः परिवर्त्तः।



तत्र कतमः शूरङ्गमोनाम समाधिः। यः समाधिः सर्व्वसमाधीनां गोचरमनुभवत्ययमुच्यते शूरङ्गमोनाम समाधिः। तत्र कतमा रत्नमुद्रानाम समाधिः। येन समाधिना सर्व्वसमाधयो-मुद्रिता भवन्ति। अयमुच्यते रत्नमुद्रानाम समाधिः। तत्र कतमः सिंहविक्रीडितोनाम समाधिः। यत्र समाधौ स्थिला सर्व्वसमाधिभिर्व्विक्रीड़यत्ययमुच्यते सिंहविक्रीडितोनाम समाधिः।

तत्र कतमः सुचन्द्रोनाम समाधि। यत्र समाधौ स्थिला सर्व्वसमाधीनवभासयति। अयमुच्यते सुचन्द्रनाम समाधिः। तत्र कतमश्चन्द्रध्वजकेतुर्नाम समधिः। यः समाधिः सर्व्वसमाधीनां ध्वजं धारयति। अयमुच्यते चन्द्रध्वजकेतुर्नाम समाधिः। तत्र कतमः सर्व्वधर्म्मोद्गतोनाम समाधिः। यत्र समाधौ स्थिला सर्व्वसमाधिभिरभ्युद्गच्छति। अयमुच्यते सर्वधर्म्मोद्गतोनाम समाधिः। तत्र कतमो विलोकितमूर्द्धोनाम समाधिः। यत्र समाधौ स्थिला सर्व्वसमाधीनां मूर्द्धानं विलोकयति। अयमुच्यते विलोकितमूर्द्धोनाम समाधिः। तत्र कतमो धर्म्मधातुनियतोनाम समाधिः। यत्र समाधौ स्थिला धर्म्मधातौ नियतं गच्छति। अयमुच्यते धर्म्मधातुनियतोनाम समाधिः। तत्र कतमोनियत ध्वजकेतुर्नाम समाधिः। यत्र समाधौ स्थिला सर्व्वसमाधीनां नियतं ध्वजं धारयति। अयमुच्यते नियतध्वजकेतुर्नाम समाधिः। तत्र कतमो

वज्रोनाम समाधिः। यत्र समाधौ स्थिता न भिद्यते। अयमुच्यते वज्रोनाम समाधिः। तत्र कतमः सर्व्वधर्म्मप्रवेशमुद्रानाम समाधिः। यत्र समाधौ स्थिता सर्व्वधर्म्माणां मुद्रां प्रविशत्ययमुच्यते सर्व्वधर्म्मप्रवेशमुद्रानाम समाधिः। तत्र कतमः समाधिराजसु प्रतिष्ठितोनाम समाधिः। यत्र समाधौ स्थिता सर्व्वसमाधिषु राजसु प्रतिष्ठानेन प्रतितिष्ठति। अयमुच्यते समाधिराजसु प्रतिष्ठितोनाम समाधिः। तत्र कतमोरश्मिप्रमुक्तोनाम समाधिः। यत्र समाधौ स्थिता सर्व्वसमाधीनां रश्मीनवसृजति। अयमुच्यते रश्मिप्रमुक्तोनाम समाधिः। तत्र कतमोबलव्यूहोनाम समाधिः। यत्र समाधौ स्थिता सर्व्वसमाधीनां बलव्यूहतां कारयति। अयमुच्यते बलव्यूहोनाम समाधिः। तत्र कतमः समुद्गतोनाम समाधिः। यत्र समाधौ स्थितस्य सर्व्वे समाधयः समुद्गच्छन्ति। अयमुच्यते समुद्गतोनाम समाधिः। तत्र कतमोनिरुक्तिनियतप्रवेशोनाम समाधिः। यत्र समाधौ स्थिता सर्व्वसमाधीनां निरुक्तिनिर्द्देशान् प्रवेशयति। अयमुच्यते निरुक्तिनियतप्रवेशोनाम समाधिः। तत्र कतमोवचनसंप्रवेशोनाम समाधिः। यत्र समाधौ स्थिता सर्व्वसमाधीनामधिवचनानि प्रवेशयति। अयमुच्यते ऽधिवचनसंप्रवेशोनाम समाधिः। तत्र कतमोदिग्विलोकितोनाम समाधिः। यत्र समाधौ स्थिता सर्व्वसमाधीनं दिशो विलोकयति अयमुच्यते दिग्विलोकितोनाम समाधिः। तत्र कतम आधारमुद्रानाम समाधिः। यत्र समाधौ स्थिता सर्व्वसमाधीनां मुद्राधारयति। अयमुच्यते आधारमुद्रानाम समाधि। तत्र कतमोऽसंप्रमोषोनाम

समाधिः। यत्र समाधौ स्थित्वा तस्य समाधयो न मुष्यन्ति।
अयमुच्यते ऽसंप्रमोषोनाम समाधिः। तत्र कतमः सर्वधर्मसमवशरण
सागरमुद्रा नामसमाधिः। यत्र समाधौ स्थितस्य सर्वे समाधयः
संग्रहं समवशरणं गच्छन्ति। अयमुच्यते सर्वधर्मसमवशरण
सागरमुद्रा नामसमाधिः। तत्र कतम आकाशस्फुरणोनाम
समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनामाकाशस्फुरणतया
स्फुरति। अयमुच्यते आकाशस्फुरणोनाम समाधिः। तत्र कतमो
वज्रमण्डलोनाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां
मण्डलानि धारयति। अयमुच्यते वज्रमण्डलोनाम समाधिः। तत्र
कतमो रणञ्जहोनाम समाधिः। यत्र समाधौ स्थित्वा सर्वक्लेशरणान्
शोषयति। अयमुच्यते रणञ्जहोनाम समाधिः। तत्र कतमो-
वैरोचनोनाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीन-
वभासयति तपति विरोचते। अयमुच्यते वैरोचनोनाम समाधिः।
तत्र कतमो ऽनेयोनाम समाधिः। यत्र समाधौ स्थित्वा न
कञ्चिद्धर्ममेषते। अयमुच्यते ऽनेयोनाम समाधिः। तत्र कतमो-
ऽनिकेतस्थितोनाम समाधिः। यत्र समाधौ स्थित्वा न कञ्चिद्धर्मं
निकेतस्थितं समनुपश्यति। अयमुच्यते ऽनिकेतस्थितोनाम समाधिः।
तत्र कतमोनिश्चित्तोनाम समाधिः। यत्र समाधौ स्थितस्य न
चित्तं न चेतसिकाधर्माप्रवर्त्तन्ते। अयमुच्यते निश्चित्तोनाम
समाधिः। तत्र कतमो विमलप्रदीपोनाम समाधिः। यत्र समाधौ
स्थित्वा सर्वसमाधीनां विमलप्रदीपं करोति। अयमुच्यते विमल-
प्रदीपोनाम समाधिः। तत्र कतमोऽनन्तप्रभोनाम समाधिः।

यत्र समाधौ स्थित्वा ऽनन्तां प्रभां करोति । अयमुच्यते ऽनन्तप्रभोनाम समाधिः । तत्र कतमः प्रभाकरोनाम समाधिः । यस्य समाधेः सहप्रतिलम्भात् सर्वसमाधीनां प्रभां करोति । अयमुच्यते प्रभाकरोनाम समाधिः। तत्र कतमः समन्तावभासोनाम समाधिः। यस्य समाधेः सहप्रतिलम्भात् सर्वसमाधिमुखान्यवभासयति । अयमुच्यते समन्तावभासोनाम समाधिः । तत्र कतमः शुद्धसारोनाम समाधिः । यत्र समाधौ स्थित्वा समाधीनां शुद्धसमन्तामनुप्राप्नोति । अयमुच्यते शुद्धसारोनाम समाधिः । तत्र कतमो विमलप्रभोनाम समाधिः । यत्र समाधौ स्थित्वा सर्वसमाधीनां मलमपकर्षति । सर्वसमाधींश्च प्रतिभासयति । अयमुच्यते विमलप्रभोनाम समाधिः । तत्र कतमोरतिकरोनाम समाधिः । यत्र समाधौ स्थित्वा सर्वसमाधीनां रतिमनुभवति । अयमुच्यते रतिकरोनाम समाधिः। तत्र कतमो विद्युत् प्रदीपोनाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां प्रदीपं करोति । अयमुच्यते विद्युत्प्रदीपोनाम समाधिः । तत्र कतमो ऽक्षयोनाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां नैव क्षयं नाक्षयं समनुपश्यति । अयमुच्यते ऽक्षयोनाम समाधिः । तत्र कतम स्तेजोवतीनाम समाधिः । यत्र समाधौ स्थित्वा सर्वसमाधीं स्तेजसाश्रिया च ज्वलयति । अयमुच्यते तेजोवतीनाम समाधिः । तत्र कतमः क्षयापगतोनाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधी न क्षयाननुपश्यति । तथा च पश्यति यथाण्वपि न समनुपश्यति । अयमुच्यते क्षयापगतोनाम समाधिः । तत्र कतमो ऽनिञ्जोनाम

समाधिः । यत्र समाधौ स्थित्वा सर्वसमाधीनश्चति न मन्यते न स्यन्दते न प्रपञ्चयति ते नोच्यते ऽनिञ्जोनाम समाधिः। तत्र कतमो ऽविवर्त्तोनाम समाधिः । यत्र समाधौ स्थित्वा सर्वसमाधीनां विवर्त्तनं न समनुपश्यति । अयमुच्यते ऽविवर्त्तोनाम समाधिः । तत्र कतमः सूर्य्यप्रदीपोनाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां सुखमवभासयति । अयमुच्यते सूर्य्यप्रदीपोनाम समाधिः। तत्र कतमश्चन्द्रविमलोनाम समाधिः । यत्र समाधौ स्थित्वा सर्वसमाधीनामनन्धाकारं करोति। अयमुच्यते चन्द्रविमलोनाम समाधिः । तत्र कतमः शुद्धप्रतिभासोनाम समाधिः । यत्र समाधौ स्थित्वा सर्वसमाधीनां चतस्रः प्रतिसम्विदः प्रतिलभते ऽयमुच्यते शुद्धप्रतिभासोनाम समाधिः। तत्र कतम आलोककरोनाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधिसुखानामालोकं करोति । अयमुच्यते आलोककरोनाम समाधिः । तत्र कतमः काराकारोनाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधीनां कारगतां क्रियां करोति। अयमुच्यते काराकारोनाम समाधिः । तत्र कतमो ज्ञानकेतुर्नाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधीनां ज्ञानकेतुं समनुपश्यति । अयमुच्यते ज्ञानकेतुर्नाम समाधिः । तत्र कतमो वज्रोपमोनाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधीनां निर्व्वेधिकं करोति । यत् समाधिमपि न समनुपश्यति । अयमुच्यते वज्रोपमोनाम समाधिः । तत्र कतमश्चित्तस्थितिर्नाम समाधिः । यत्र समाधौ स्थित्वा ऽस्य चित्तं न विचलति । न विवर्त्तते न परिचस्यति न

विघातमापद्यते । न वा ऽस्यैवं भवति चित्तमिदमिति । अयमुच्यते चित्तस्थितिर्नाम समाधिः । तत्र कतमः समन्तालोकोनाम समाधिः । यत्र समाधौ स्थित्वा समन्तादालोकं समनुपश्यति । अयमुच्यते समन्तालोकोनाम समाधिः । तत्र कतमः सुप्रतिष्ठितोनाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधिषु सुप्रतिष्ठितो भवति । अयमुच्यते सुप्रतिष्ठितो नाम समाधिः । तत्र कतमो रत्नकोटिर्नाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधयः समन्ताद्रत्नकोटिरिव संदृश्यते । अयमुच्यते रत्नकोटिर्नाम समाधिः । तत्र कतमो वरधर्म्ममुद्रानाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधयोमुद्रिता भवन्ति । असुद्राकोटिमुद्रिततामुपादाय । अयमुच्यते वरधर्म्ममुद्रानाम समाधिः । तत्र कतमा सर्व्वधर्म्मसमतानाम समाधिः । यत्र समाधौ स्थित्वा न कश्चिद्धर्म्मं समतानिर्मुक्तं समनुपश्यति । अयमुच्यते सर्व्वधर्म्म समतानाम समाधिः । तत्र कतमो रतिञ्जहोनाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधीनां सर्व्वधर्म्मानाञ्च रतिञ्जहाति । अयमुच्यते रतिञ्जहोनाम समाधिः । तत्र कतमो धर्म्मोद्गतोनाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वधर्म्माणां तमोविधर्म्मात् सर्व्वसमाधिभिर्योद्गच्छति । अयमुचते धर्म्मोद्गतोनाम समधिः ।। तत्र कतमो विकिरणोनाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधिभिः सर्व्वधर्म्मान् विकिरयति । अयमुच्यते विकिरणोनाम समाधिः । तत्र कतमः सर्व्वधर्म्मपदप्रभेदोनाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधीनां सर्व्वधर्म्मानाञ्च पदानि प्रभिनत्ति । अयमुच्यते सर्व्वधर्म्मपद-

प्रभेदोनाम समाधिः। तत्र कतमः समाचराकारोनाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वसमाधीनां समाचरतां प्रतिलभते। अयमुच्यते समाचराकारोनाम समाधिः। तत्र कतमो ऽचरापगतोनाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनामेकाचरमपि नोपलभते। अयमुच्यते ऽचरापगतो नाम समाधिः। तत्र कतम आरम्बणच्छेदनो नाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वसमाधीनामारम्बणच्छेदो भवति। अयमुच्यते आरम्बणच्छेदनो नाम समाधिः। तत्र कतमः अविकारो नाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वधर्म्माणां विकारान् नोपलभते। अयमुच्यते अविकारो नाम समाधिः। तत्र कतमो ऽप्रकारो नाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वधर्म्माणां प्रकारमपि नोपलभते। अयमुच्यते ऽप्रकारो नाम समाधिः। तत्र कतमः अनिकेतचारी नाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वसमाधीनां निकेतं नोपलभते। अयमुच्यते अनिकेतचारी नाम समाधिः। तत्र कतमस्तिमिरापगतो नाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वधर्म्माणां तिमिरं विशोधयति। अयमुच्यते तिमिरापगतो नाम समाधिः। तत्र कतमश्चारित्रवती नाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वसमाधीनाश्चरन्तं समनुपश्यति। अयमुच्यते चारित्रवती नाम समाधिः। तत्र कतमः अचलो नाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वसमाधीनचलान् समनुपश्यति। अयमुच्यते अचलो नाम समाधिः। तत्र कतमो विषयतीर्णो नाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वसमाधीनां विषयं समतिक्रामति। अयमुच्यते

विषयतीर्णो नाम समाधिः । तत्र कतमः सर्व्वगुणसञ्चयगतो नाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वधर्म्माणां सर्व्वसमाधीनाञ्च गुणसञ्चयमनुप्राप्नोति । अयमुच्यते सर्व्वगुणसञ्चयगतो नाम समाधिः । तत्र कतमः स्थितनिश्चित्तो नाम समाधिः । यत्र समाधौ स्थितस्य सर्व्वसमाधिषु चित्तं न प्रवर्त्तते । अयमुच्यते स्थितनिश्चित्तो नाम समाधिः । तत्र कतमः शुभपुष्पितशुद्धिर्नाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधीनां शुभपुष्पित शुद्धिं प्रतिलभते ऽयमुच्यते शुभपुष्पितशुद्धिर्नाम समाधिः । तत्र कतमो बोध्यङ्गवती नाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधीनां सप्तबोध्यङ्गानि प्रतिलभते । अयमुच्यते बोध्यङ्गवती नाम समाधिः । तत्र कतमो ऽनन्तप्रतिभानो नाम समाधिः । यत्र समाधौ स्थित्वा समाधिष्वनन्तं प्रतिलभते । अयमुच्यते अनन्तप्रतिभानो नाम समाधिः । तत्र कतमो ऽसमसमो नाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधिष्वसमसमतां प्रतिलभते । अयमुच्यते असमसमो नाम समाधिः । तत्र कतमः सर्व्वधर्म्मातिक्रमणो नाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वत्रैधातुकं समतिक्रामति । अयमुच्यते सर्व्वधर्म्मातिक्रमणो नाम समाधिः । तत्र कतमः परिच्छेदकरो नाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वधर्म्माणां सर्व्वसमाधीनाञ्च परिच्छेदं पश्यति । अयमुच्यते परिच्छेदकरो नाम समाधिः । तत्र कतमोविमतिविकिरणो नाम समाधिः । यत्र समाधौ स्थित्वा सर्व्वसमाधीनां सर्व्वधर्म्माणाञ्च विमतिविकिरणतामनुप्राप्नोति । अयमुच्यते विमतिविकिरणो

नाम समाधिः। तत्र कतमो निरधिष्ठानो नाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वधर्म्माणां स्थानं न समनुपश्यति। अयमुच्यते निरधिष्ठानो नाम समाधिः। तत्र कतम एकव्यूहो नाम समाधिः। यत्र समाधौ स्थित्वा न कस्यचिद्धर्म्मस्य द्वयतां समनुपश्यति। अयमुच्यते एकव्यूहोनाम समाधिः। तत्र कतम आकाराऽभिनिर्हारो नाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वधर्म्माणां सर्वं समधीनाञ्चाकाराऽभिनिर्हारं समनुपश्यति। अयमुच्यते आकाराभिनिर्हारो नाम समाधिः। तत्र कतम एकाकारो नाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वसमाधीनामाकारं न समनुपश्यति। अयमुच्यते एकाकारो नाम समाधिः। तत्र कतम आकारानवकारो नाम समाधिः। यत्र समाधौ स्थित्वा सर्व्वसमाधीनामद्वयतां समनुपश्यति। अयमुच्यते आकारानवकारो नाम समाधिः। तत्र कतमो नैर्वेधिकसर्वभवतलविगतो नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां नैर्वेधिकज्ञानमनुप्रविशति। यस्याऽनुप्रवेशाच्च किञ्चिन्न प्रतिविध्यति। अयमुच्यते नैर्वेधिकसर्वभवतलविगतो नाम समाधिः। तत्र कतमः सङ्केतरुतप्रवेशो नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां सङ्केतरुतानि प्रवेशयति। अयमुच्यते सङ्केतरुतप्रवेशो नाम समाधिः। तत्र कतमो गोघोषाचरविमुक्तो नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां गोघोषाचरविमुक्तान् समनुपश्यति। अयमुच्यते गोघोषाऽचरविमुक्तो नाम समाधिः। तत्र कतमो ज्वलनोल्का नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधींस्तेजसाऽवभास-

यति। अयमुच्यते ज्वलनोल्का नाम समाधिः। तत्र कतमो लक्षण परिशोधनो नाम समाधिः। यत्र समाधौ स्थितस्य सर्वसमाधीनां लक्षणानि परिशुध्यन्ते। अयमुच्यते लक्षणपरिशोधनो नाम समाधिः। तत्र कतमो ऽनभिलक्षितो नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनभिलक्षितान् समनुपश्यति। अयमुच्यते अनभिलक्षितो नाम समाधिः। तत्र कतमः सर्वाकारवरोपेतो नाम समाधिः। यत्र समाधौ स्थितस्य सर्वसमाधयः सर्वाकारवरोपेता भवन्ति। अयमुच्यते सर्वाकारवरपेतो नाम समाधिः। तत्र कतमः सर्वसुखदुःखनिरभिनन्दी नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां सुखदुःखानिनानुपश्यति। अयमुच्यते सर्वसुखदुःखनिरभिनन्दी नाम समाधिः। तत्र कतमो ऽक्षयकरण्डो नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां क्षयं न समनुपश्यति। अयमुच्यते ऽक्षयकरण्डो नाम समाधिः। तत्र कतमाधारणीमतिर्नाम समाधिः। यत्र समाधौ स्थित्वा सर्वधारणी र्धारयति। अयमुच्यते धारणीमतिर्नाम समाधिः। तत्र कतमः सम्यक्त्वमिथ्यात्व सर्वसंप्रशमनो नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां सम्यक्त्वमिथ्यात्वं न समनुपश्यति। अयमुच्यते सम्यक्त्वमिथ्यात्व सर्वसंप्रशमनो नाम समाधिः। तत्र कतमः सर्वरोधप्रतिरोध प्रशमनो नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां रोधं विरोधं समनुपश्यति। अयमुच्यते सर्वरोधविरोधप्रशमनो नाम समाधिः। तत्र कतमो ऽनुरोधाप्रतिरोधो नाम समाधिः। यत्र समाधौ स्थित्वा सर्वधर्म्माणां सर्वस-

माधीनाम्नानुरोधाप्रतिरोधं न समनुपश्यति। अयमुच्यते ऽनुरोधाप्रतिरोधो नाम समाधिः। तत्र कतमो विमलप्रभो नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां प्रभामण्डलं नोपलभते। अयमुच्यते विमलप्रभो नाम समाधिः। तत्र कतमः सारवती नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनां सारं समनुपश्यति। अयमुच्यते सारवती नाम समाधिः। तत्र कतमः परिपूर्णचन्द्राभविमलो नाम समाधिः। यत्र समाधौ स्थितस्य सर्वसमाधयः परिपूर्णा भवन्ति। तद्यथापि नाम पौर्णमास्यां चन्द्रमण्डलं। अयमुच्यते परिपूर्णचन्द्राभविमलो नाम समाधिः। तत्र कतमो महाव्यूहो नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधि महाव्यूहसमन्वागतो भवति। अयमुच्यते महाव्यूहो नाम समाधिः। तत्र कतमः सर्व्वाकारप्रभाकरो नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीन् सर्वधर्म्मांश्चावभासयति। अयमुच्यते सर्व्वाकारप्रभाकरो नाम समाधिः। तत्र कतमः समाधिसमता नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनामनुविक्षेपमेकाग्रतामुपलभते। अयमुच्यते समाधिसमतानाम समाधिः। तत्र कतमो ऽरणसरणसमवसरणो नाम समाधिः। यत्र समाधौ स्थितस्य सर्वसमाधयो नरणन्ति। अयमुच्यते ऽरणसरणसमवसरणो नाम समाधिः। तत्र कतमो ऽरणसरण सर्वसमवसरणो नाम समाधिः। यत्र समाधौ स्थित्वा अरणसरण सर्वसमवसरणतामनुप्राप्नोति। अयमुच्यते अरणसरण सर्वसमवसरणो नाम समाधिः। तत्र कतमो ऽनिलयनिकेतनिरतो नाम समाधिः

यत्र समाधौ स्थित्वा सर्वसमाधीनामास्वयं नोपैति । अयमुच्यते अनिलयनिकेतनिरतो नाम समाधिः । तत्र कतमः तथतास्थितनिश्चित्तो नाम समाधिः । यत्र समाधौ स्थित्वा सर्वसमाधितथताया न विवर्द्धते । अयमुच्यते तथतास्थितनिश्चित्तो नाम समाधिः । तत्र कतमः कायकलिसंप्रमथनो नाम समाधिः । यत्र समाधौ स्थित्वा सर्वसमाधिकायं नोपलभते । अयमुच्यते कायकलिसंप्रमथनो नाम समाधिः । तत्र कतमो वाक्कलिविध्वंसनगगणकल्पो नाम समाधिः । यत्र समाधौ स्थित्वा सर्वसमाधीनां वाक्कर्मनोपलभते । अयमुच्यते वाक्कलिविध्वंसनगगणकल्पो नाम समाधिः । तत्र कतम आकाशा ऽसङ्गविमुक्तिनिरुपलेपो नाम समाधिः । यत्र समाधौ स्थित्वा सर्वधर्माणां माकाशाऽसङ्गनिरुपलेपतामनुप्राप्नोति । अयमुच्यते आकाशा ऽसङ्गविमुक्तिनिरुपलेपो नाम समाधिः ।' इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो महायानं ॥

शतसाहस्र्याः प्रज्ञापारमिताया अष्टमः परिवर्त्तः ॥ ० ॥

# अथ नवमः परिवर्त्तः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं । चत्वारि-स्मृत्युपस्थानानि । कतमानि चत्वारि । कायस्मृत्युपस्थानं । वेदना-स्मृत्युपस्थानं । चित्तस्मृत्युपस्थानं । धर्मस्मृत्युपस्थानं । तत्र कतमं कायस्मृत्युपस्थानं । इह सुभूते बोधिसत्त्वो महासत्त्वो ऽध्यात्मकाये-काया ऽनुदर्शी विहरति । न च काय सहगतान् वितर्कान् वितर्कयत्यातापी संप्रजानन् स्मृतिमान् विनीय लोकेऽभि-ध्यादौर्म्मनस्ये तत्त्वाऽनुपलम्भयोगेन । बहिर्द्धाकायेकायानुदर्शी-विहरति । न च कायसहगतान् वितर्कान् वितर्कयत्यातापी-संप्रजानन् स्मृतिमान् विनीयलोकेऽभिध्यादौर्म्मनस्ये तत्त्वाऽनुपलम्भ-योगेन । अध्यात्मबहिर्द्धाकायेकायाऽनुदर्शी विहरति । न च कायसहगतान् वितर्कान् वितर्कयत्यातापी संप्रजानन् स्मृतिमान् विनीयलोकेऽभिध्यादौर्म्मनस्ये तत्त्वाऽनुपलम्भयोगेन ।

अध्यात्मवेदनासुवेदनाऽनुदर्शी विहरति । न च वेदनासहग-तान् वितर्कान् वितर्कयत्यातापी संप्रजानन् स्मृतिमान् विनीयलो-केऽभिध्यादौर्म्मनस्ये तत्त्वाऽनुपलम्भयोगेन । बहिर्द्धावेदनासुवेदना-नुदर्शी विहरति । न च वेदना सहगतान् वितर्कान् वितर्कयत्या-तापी संप्रजानन् स्मृतिमान् विनीयलोकेऽभिध्यादौर्म्मनस्ये तत्त्वाऽनु-पलम्भयोगेन । अध्यात्मबहिर्द्धावेदनासु वेदनाऽनुदर्शी विहरति । न च वेदना सहगतान् वितर्कान् वितर्कयत्यातापी संप्रजानन्

स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन। अध्यात्मचित्ते चित्ताऽनुदर्शी विहरति। न च चित्तसहगतान् वितर्कान् वितर्कयत्यातापी संप्रजानान् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन। बहिर्द्धा चित्तेचित्ताऽनुदर्शी विहरति। न च चित्तसहगतान् वितर्कान् वितर्कयत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन। अध्यात्मबहिर्द्धा चित्तेचित्ताऽनुदर्शी विहरति। न च चित्तसहगतान् वितर्कान् वितर्कयत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन।

अध्यात्मधर्मेषु धर्मानुदर्शी विहरति। न च धर्मसहगतान् वितर्कान् वितर्कयत्यातापी संप्रजानन् स्मृतिमान् विनीयलोकेऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन।

कथं सुभूते बोधिसत्त्वो महासत्त्वो ऽध्यात्मकाये कायानुदर्शी विहरति। इह सुभूते बोधिसत्त्वो महासत्त्वश्चरंश्चरामीति प्रजानातिस्थितः स्थितोऽस्मीति प्रजानाति। निषण्णो निषण्णोऽस्मीति प्रजानाति। शयानः शयितोऽस्मीति प्रजानाति। यथा यथा खलु पुनरस्य कायः स्थितो भवति प्रणीत वा ऽप्रणीतं वा तथा-गतस्तं स प्रजानाति। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वो ऽध्यात्मकाये कायानुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन। पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वो ऽध्यात्मकाये कायाऽनुदर्शीविहरति। सोऽभिक्राम न वा प्रतिक्राम न वा संप्रजानचारी भवत्या

लोकित विलोके संप्रजानचारी च भवति। संमिञ्जिते प्रसारिते संप्रजानचारी भवति। संघाटीयात्रचीवरधारणे संप्रजानचारी भवति। अशितपीतखादितास्वादितान् संप्रजानचारी भवति। प्रथितनिद्राक्लमप्रतिविनोदिते संप्रजानचारी भवति। आगत-गत संप्रजानचारी भवति। स्थिते निषद्यायां संप्रजानचारी भवति। सुप्तजागरिते संप्रजानचारी भवति। भाषिते तूष्णीभावे संप्र-जानचारी भवति। प्रतिसंलयने संप्रजानचारी भवति। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्नध्यात्मकाये कायानुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन। पुनरपरं सुभूते बोधि-सत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् स्मृत आश्वसन् स्मृत आश्वसिमीति प्रजानाति। स्मृत प्रश्वसन् स्मृतः प्रश्वसिमीति प्रजानाति। दीर्घमाश्वसन् दीर्घमाश्वसिमीति प्रजानाति। दीर्घं प्रश्वसन् दीर्घं प्रश्वसिमीति प्रजानाति। ह्रस्वमाश्वसन् ह्रस्वमाश्वसिमीति प्रजानाति। ह्रस्वं प्रश्वसन् ह्रस्वं प्रश्वसिमीति प्रजानाति। तद्यथापि नाम सुभूते दक्षोभ्रमचक्रवर्त्ती भ्रमचक्र-वर्त्तान्तेवासी वा दीर्घमाविध्यामीति प्रजानाति। ह्रस्वं प्रविध्या-मीति प्रजानाति। एवमेव सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञा-पारमितायां चरन् स्मृत आश्वसन् स्मृत आश्वसिमीति प्रजानाति। स्मृतः प्रश्वसन् स्मृतः प्रश्वसिमीति प्रजानाति। दीर्घमाश्वसन् दीर्घमाश्वसिमीति प्रजानाति। दीर्घं प्रश्वसन् दीर्घं प्रश्वसिमीति प्रजानाति। • ह्रस्वमाश्वसन् ह्रस्वमाश्वसिमीति प्रजानामिति।

ह्रस्वं प्रश्वसन् ह्रस्वं प्रश्वसिमीति प्रजानाति। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्नध्यात्मकायाऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तद्याऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्निममेव कायधातुं यथाभूतं प्रत्यवेक्षते। सन्त्यस्मिन् काये पृथिवी धातुरब्धातु स्तेजोधातु र्वायुधातु। तद्यथापि नाम सुभूते दक्षो गो घातको वा गोघातकान्तेवासी वा तीक्ष्णेन शस्त्रेण गां हत्वा चत्वारि फलकानि कुर्यात् चत्वारि फलकानि हत्वा प्रत्यवेक्षते स्थितो वा ऽथनिषण्ण। एवमेव सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्निममेव कायधातु स यथाभूत प्रत्यवेक्षते। सन्त्यस्मिन् काये पृथिवीधातुरब्धातु स्तेजोधातु र्वायुधातु। एव खलु सुभूते बोधिसत्त्वो महासत्त्व प्रज्ञापारमितायां चरन् स्थितो वा निषण्णो ऽध्यात्मकाये काया ऽनुपश्यी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये। तच्चाऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्व प्रज्ञापारमितायां चरन्निममेव कायं ऽमूर्द्धपादतलादध केशमस्तकाचखलोमत्वक्पर्यन्तं पूर्णं नानाविधस्या ऽशुचे र्यथाभूतं प्रत्यवेक्षते। सन्त्यस्मिन् काये केशालोमानि नखादन्तास्त्वक् चर्ममांसस्नायुरुधिरमस्थिमज्जावृक्क हृदय यकृत् क्लोमक प्लीहा फुप्फुसमाचा मान्त्रागुणा उदरयन्त्र मूत्र पुरीष मश्रुस्वेदामद खट सिंहाणक पूय पित्त श्लेष्मावसा-

सीकामला मस्तकं मस्तक गन्धामचि पृथकं। तद्यथापि नाम सुभूते कार्पकस्य मृतोचिः पूर्णा नानाधान्यजातानां तिलानां सर्पपाणां मुद्गानां माषाणां मसूराणां यवानां गोधूमानां शालीनां व्रीहीणां, तानेनां चक्षुष्मान् पुरुषामुक्का प्रत्यवेक्षमाणः एवं जानीयादिमेतिलाः इमे सर्पपाः इमे मुद्गाः इमे माषाः इमे मसूराः इमे यवाः इमे गोधूमाः इमे शालयः इमे व्रीहयः। एवमेव सुभूते बोधिसत्वो महासत्त्वः इममेव कायमूर्द्धं पादतला-दधः केशमस्तकानखलोमत्वक्पर्य्यन्तं पूर्णं नानाविधस्याऽशुचे। सन्त्यस्मिन् काये केशा लोमानि नखादन्तास्त्वक्चर्ममांसस्नायु रुधिरमस्थिमज्जावुक्कं हृदयं यकृत् क्लोमकं प्लीहा फुप्फुस मात्र मान्त्रगुना उदरीयकं मूत्रं पुरीषमश्रुस्वेदोमदः खेटः सिंघाणकं पूयं पित्तं श्लेष्मा वसालसीकामलामस्तक मस्तक गन्धमचि गूथकं कर्णं गूथकं। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमि-तायां चरन्नध्यात्मकाये कायानुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोकेऽभिध्यादौर्मनस्ये। तच्चाऽनुपलम्भयोगेन। पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यदाश्मशानगतः पश्यति। नानारूपाणि शिवपथिकायामपविद्धानि शवशयन उद्धीतान्येकाहमृतानि वा द्व्यहमृतानि वा त्र्यहमृतानि वा चतुरहमृतानि वा पञ्चाहमृतानि वा व्याध्मातकानि वा विनीलकानि वा विपूतिकानि वा विखादितकानि वा विलोहि-तकानि वा विक्षिप्तकानि वा। स इम मेव कायंनात्रोपसंहर-त्ययमपि काय एवं धर्मा एवं स्वभाव एतां धर्मतामध्यति वृत्तः।

एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् बहिर्द्धाकाये कायानुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये, तच्चानुपलम्भयोगेन। पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यदा पश्यति शिवपथिकाया मुद्रीतानि मृतशरीराणि षड्रात्रमृतानि वा सप्त रात्रमृतानि वा काकै र्वाखाद्यमानानि कङ्कै र्वा कुररै र्वा गृध्रै र्वा वास्तावै र्वा शृगालै र्वा श्वभि र्वा तदन्यै र्वा नानाविधैः प्राणकजातैः खाद्यमानानि। स इम मेव कायं तत्रोपसंहरत्ययमपि काय एवं धर्मा एवं स्वभाव एतां धर्मतामध्यतिवृत्तः। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् बहिर्द्धाकाये कायानुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान्, विनीय लोकेऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यदा पश्यति शिवपथिकायामुद्रीतानि मृतशरीराणि विखादितान्य शुचीनि पूतीनि दुर्गन्धानि। स इममेव कायं तत्रोपसंहरत्ययमपि काय एवं धर्मा एवं स्वभाव एतां धर्मतामध्यतिवृत्तः। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् बहिर्द्धाकाये काया ऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोकेऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन। पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यदा पश्यति शिवपथिकायामस्थिशकलान् मांसरुधिरचितान् स्नायु विनिबद्धान् स इममेव कायं तत्रोपसंहरत्ययमपि काय एवं धर्मा एवं

स्वभाव एतां धर्मतामनतिवृत्तः। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् बहिर्धाकाये कायाऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यथा शिवपथिकायामस्थिसङ्कलानपगतमांस रुधिरस्नायु बन्धमानं शङ्खनिभान् पश्यति। स इममेव कायं तत्रोपसंहरत्ययमपि कायं एवं धर्मा एवं स्वभाव एतां धर्मतामनतिवृत्तः। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् बहिर्धाकाये कायानुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके अभिध्यादौर्मनस्ये। तच्चाऽनुपलम्भयोगेन। पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यदा पश्यति। शिवपथिकायामस्थि सङ्कलानन्यत्र विप्रमुक्ता यथाशङ्खाः पृथिव्यां विक्षिप्ताः। स इममेव कायं तत्रोपसंहरत्ययमपि काय एवं धर्मा एवं स्वभाव एतां धर्मतामनतिवृत्तः। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् बहिर्धाकाये काया ऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोकेऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यदा पश्यति शिवपथिकायामस्थीनि पृथिव्यां दिग्विदिशो विक्षिप्तान्येव पादास्थीन्यन्येन जङ्घास्थीन्यन्येन नोर्वस्थीन्यन्येन श्रोणीकटाहमन्येन पृष्ठवंशान्यन्येन पार्श्वकास्थीन्यन्येन बाह्वस्थीन्यन्येन ग्रीवा-

स्थीन्यन्येन शिर कपालास्थीनि । स इममेव कायं तत्रोपसंहर-त्ययमपि काय एव धर्मा एव स्वभाव एता धर्मतामनतिवृत्त' । एव खलु सुभूते बोधिसत्त्वो महासत्त्व प्रज्ञापारमितायां चरन् बहिर्द्धाकाये कायानुदर्शी विहरत्यातापी सम्प्रजानन् स्मृतिमान् विनीयलोकेऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन । पुनरपरं सुभूते बोधिसत्त्वो महासत्त्व प्रज्ञापारमितायां चरन् यदा पश्यति शिवपथिकायामस्थीन्यनेक वार्षिकानि चातपपरितापितानि श्वेतानि शङ्खनिभानि । स इममेव काय तत्रोपसंहरत्ययमपि काय एव धर्मा एव स्वभाव एता धर्मतामनतिवृत्त । एव खलु सुभूते बोधिसत्त्वो महासत्त्व प्रज्ञापारमितायां चरन् बहिर्द्धाकाये कायानुदर्शी विहरत्यातापी सम्प्रजानन् स्मृतिमान् विनीयलोके-ऽभिध्यादौर्मनस्ये तच्चानुपलम्भयोगेन ।

पुनरपर सुभूते बोधिसत्त्वो महासत्त्व प्रज्ञापारमिताया चरन् यदा पश्यति शिवपथिकायामस्थीन्यनेक वार्षिकानि तिरोभूतानि नीलानि कपोतवर्णानि पूतीनि चूर्णजातानि पृथिव्यां पांशुनासमसमीभूतानि । स इममेव काय तत्रोपसंहरतित्यय-मपि काय एव धर्मा एव स्वभाव एता धर्मतामनतिवृत्त । एव खलु सुभूते बोधिसत्त्वो महासत्त्व प्रज्ञापारमिताया चरन्न-ध्यात्मकाये कायाऽनुदर्शी विहरत्यातापी सम्प्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन ।

बहिर्द्धाकाये काया ऽनुदर्शी विहरत्यातापी सम्प्रजानन् स्मृतिमान विनीयलोके ऽभिध्यादौर्मनस्ये तच्चाऽनुपलम्भयोगेन ।

अध्यात्मबहिर्द्धाकाये कायाऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तथाऽनुपलम्भयोगेन।

अध्यात्मवेदनासुवेदनाऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तथानुपलम्भयोगेन। बहिर्द्धावेदना सुवेदना ऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तथाऽनुपलम्भयोगेन। अध्यात्मबहिर्द्धावेदना सुवेदना ऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तथाऽनुपलम्भयोगेन। अध्यात्मचित्ते चित्ताऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तथाऽनुपलम्भयोगेन। बहिर्द्धाचित्ते चित्ताऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तथाऽनुपलम्भयोगेन। अध्यात्मबहिर्द्धा चित्ते चित्ताऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तथाऽनुपलम्भयोगेन। अध्यात्मधर्मेषु धर्माऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोकेऽभिध्यादौर्मनस्ये तथाऽनुपलम्भयोगेन। बहिर्द्धाधर्मेषु धर्मानुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तथाऽनुपलम्भयोगेन। अध्यात्मबहिर्द्धाधर्मेषु धर्माऽनुदर्शी विहरत्यातापी संप्रजानन् स्मृतिमान् विनीयलोके ऽभिध्यादौर्मनस्ये तथाऽनुपलम्भयोगेन। इदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदुत चत्वारि सम्यक् प्रहाणानि। कतमानि। इदं सुभूते बोधिसत्त्वो

महासत्त्वः प्रज्ञापारमितायां चरन्ननुत्पन्नानां पापकानामकुशल-
धर्म्माणामनुत्पादाय छन्दं जनयति। व्यायच्छते। वीर्य्यमारभते।
चित्तं प्रगृह्णाति। सम्यक् प्रदधाति। उत्पन्नानां पापकानाम-
कुशलधर्म्माणां प्रहाणाय छन्दं जनयति। व्यायच्छते वीर्य्यमारभते
चित्तं प्रगृह्णाति। सम्यक् प्रदधाति। अनुत्पन्नानां कुशलधर्म्माणा-
मुत्पादाय छन्दं जनयति, व्यायच्छते वीर्य्यमारभते चित्तं प्रगृह्णाति
सम्यक् प्रदधाति। उत्पन्नानामकुशलानां धर्म्माणां स्थितये भूयोभा-
वनतायै असंमोषाय परिपूरये छन्दं जनयति। व्यायच्छते
वीर्य्यमारभते चित्तं प्रगृह्णाति सम्यक् प्रदधाति। तच्चाऽनुपलम्भ-
योगेन। इदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदुत-
चत्वार ऋद्धिपादाः। कतमे चत्वारः इह सुभूते बोधिसत्त्वो
महासत्त्वः प्रज्ञापारमितायां चरन् छन्दसमाधि प्रहाणाऽसंस्कारस-
मन्वागतं ऋद्धिपादान् भावयति। विवेकनिःश्रितं विरागनिःश्रितं
निरोधनिःश्रितं व्यवसर्गपरिणतं। वीर्य्यसमाधिप्रहाणां समन्वागत
ऋद्धिपादान् भावयति। विवेकनिःश्रितं विरागनिःश्रितं निरोध-
निःश्रितं व्यवसर्गपरिणतं चित्तं समाधिप्रहाणाऽसंस्कारसमन्वागत-
मृद्धिपादान् भावयति। विवेकनिःश्रितं विरागनिःश्रितं। निरोध-
निःश्रितं व्यवसर्गपरिणतं। समाधिप्रहाणसंस्कारं समन्वागतमृद्धि-
पादान् भावयति। विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं
व्यवसर्गपरिर्णतं। तच्चाऽनुपलम्भयोगेन। इदमपि सुभूते बोधि-
सत्त्वस्य महासत्त्वस्य महायानं।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदुत पञ्चेन्द्रियाणि। कतमानि पञ्च। श्रद्धेन्द्रियं वीर्य्येन्द्रियं स्मृतीन्द्रियं समाधीन्द्रियं प्रज्ञेन्द्रियमिदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। तच्चाऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदुत पञ्चबलानि। कतमानि पञ्च। श्रद्धाबलं वीर्य्यबलं स्मृतिबलं समाधिबलं प्रज्ञाबलमिदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं तच्चाऽनुपलम्भयोगेन। पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदुत सप्तबोध्यङ्गानि। कतमानि सप्तस्मृतिसम्बोध्यङ्गं धर्म्मप्रविचयसम्बोध्यङ्गं वीर्य्यसम्बोध्यङ्गं प्रीतिसम्बोध्यङ्गं प्रश्रब्धिसम्बोध्यङ्गं समाधिसम्बोध्यङ्गं उपेक्षासम्बोध्यङ्गं। तत्र कतमत् स्मृतिसम्बोध्यङ्गं। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् स्मृतिसम्बोध्यङ्गं भावयति विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं। तच्चाऽनुपलम्भयोगेन। कतमद्धर्म्मप्रविचय सम्बोध्यङ्गं। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् धर्म्मप्रविचयसम्बोध्यङ्गं भावयति। विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं। तच्चाऽनुपलम्भयोगेन। कतमद्वीर्य्यसम्बोध्यङ्गं। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् वीर्य्यसम्बोध्यङ्गं भावयति। विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं। तच्चाऽनुपलम्भयोगेन। तत्र कतमत्प्रीतिसम्बोध्यङ्गं। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां प्रीतिसम्बोध्यङ्गं भावयति।

विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं। तच्चाऽनुपलम्भयोगेन। तत्र कतमत्प्रस्रब्धि सम्बोध्यङ्गं।

इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् प्रस्रब्धिसम्बोध्यङ्गं भावयति। विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं। तच्चाऽनुपलम्भयोगेन। तत्र कतमत्समाधिसम्बोध्यङ्गं। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् समाधि सम्बोध्यङ्गं भावयति। विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणत तच्चाऽनुपलम्भयोगेन। तत्र कतमदुपेक्षासम्बोध्यङ्गं। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्नुपेक्षासम्बोध्यङ्गं भावयति विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं तच्चाऽनुपलम्भयोगेन। इदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं यदुतार्य्याष्टाङ्गोमार्गः। सम्यग्दृष्टिः। सम्यक् सङ्कल्पः। सम्यक् वाक्। सम्यक् कर्मान्तः। सम्यगाजीवः। सम्यग्व्यायामः। सम्यक् स्मृतिः। सम्यक् समाधिः। तत्र कतमा सम्यग्दृष्टिः। इद सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सम्यग्दृष्टिं भावयति। विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं तच्चाऽनुपलम्भयोगेन। तत्र कतमः सम्यक् सङ्कल्पः। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सम्यक् सङ्कल्पं भावयति। विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं। तच्चाऽनुपलम्भयोगेन। कतमा सम्यग्वाक्। इह

सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सम्यग्वाचं भावयति विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं। तच्चाऽनुपलम्भयोगेन। कतमः सम्यक् कर्मान्तः। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सम्यक् कर्मान्तं भावयति। विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं। तच्चाऽनुपलम्भयोगेन। कतमः सम्यगाजीवः इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सम्यगाजीवं भावयति। विवेकनिःश्रितं विरागनिःश्रितं निरोध-निश्रितं व्यवसर्गपरिणतं। तच्चानुपलम्भयोगेन। कतमः सम्यग् व्यायामः। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सम्यग् व्यायामं भावयति। विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं। तच्चाऽनुपलम्भयोगेन। कतमा सम्यक् स्मृतिः। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सम्यक् स्मृतिं भावयति। विवेकनिःश्रितं विरागनिःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं। तच्चाऽनुपलम्भयोगेन। कतमः सम्यक् समाधिः। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमि-तायां चरन् सम्यक् समाधिं भावयति। विवेकनिःश्रितं विराग-निःश्रितं निरोधनिःश्रितं व्यवसर्गपरिणतं। तच्चाऽनुपलम्भयोगेन। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदुत त्रयः समाधयः। कतमे समाधयस्त्रयः। शून्यता समाधिरानिमित्त समाधिरप्रणिहितसमाधिः। तत्र कतमः शून्यता समाधिः

स्वलक्षणशून्यान् सर्व्वधर्म्मान् प्रत्यवेक्षमाणस्य या चित्तस्य स्थितिः शून्यता विमोक्षमुखमयमुच्यते शून्यता समाधिः। तत्र कतम आनिमित्तसमाधिः। आनिमित्तान् सर्व्वधर्म्मान् प्रत्यवेक्षमाणस्य या चित्तस्य स्थितिरानिमित्त विमोक्षमुखमयमुच्यते आनिमित्तः समाधिः। तत्र कतमोऽप्रणिहित समाधिः। सर्व्वधर्म्मा अनभिसंस्कारा इत्यनभिसंस्कुर्व्वतोयाचित्तस्य स्थितिरप्रणिहितविमोक्षमयमुच्यते ऽप्रणिहितः समाधिः। इमा विमोक्षमुखेषु कृतयः कर्त्तव्याः। अजह्रीयमाणेन। इदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। तत्राऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदुतैकादशज्ञानानि। कतमान्येकादश। दुःखज्ञानं समुदयज्ञानं निरोधज्ञानं मार्गज्ञानं क्षयज्ञानमनुत्पादज्ञानं धर्म्मज्ञानमन्वयज्ञानं संवृत्तिज्ञानं परिचयज्ञानं यथारुतज्ञानं। तत्र कतम दुःखज्ञानं यद्दुःखस्याऽनुत्पादज्ञानं। तत्र कतमत्समुदयज्ञानं यत्समुदयस्य प्रहाणज्ञानं। तत्र कतमन्निरोधज्ञानं यद्दुःखनिरोधज्ञानं। तत्र कतमत् मार्गज्ञानं यदार्य्याष्टाङ्गमार्गज्ञानं। तत्र कतमत् क्षयज्ञानं यद्रागद्वेषमोहक्षयज्ञानं। तत्र कतमदनुत्पादज्ञानं यद्भवत्यनुत्पादज्ञानं। तत्र कतमद्धर्म्मज्ञानं यत्पञ्चानां स्कन्धानामपरिचितिमपरिच्छेदज्ञानं। तत्र कतमदन्वयज्ञानं यच्चक्षुरनित्यमितिज्ञानं श्रोत्रमनित्यमिति ज्ञानं घ्राणमनित्यमिति ज्ञानं जिह्वाऽनित्येति ज्ञानं कायोऽनित्य इति ज्ञानं मनोऽनित्यमिति ज्ञानं। रूपमनित्यमिति ज्ञानं शब्दोऽनित्य इति ज्ञानं गन्धोऽनित्य इति ज्ञानं

रसोऽनित्य इति ज्ञान स्पर्शोऽनित्य इति ज्ञानं धर्म्मा अनित्या इति ज्ञानं। चक्षुर्धातुरनित्यं इति ज्ञानं। रूपधातुरनित्य इति ज्ञानं चक्षुर्विज्ञानधातुरनित्य इति ज्ञानं। श्रोत्र धातुरनित्य इति ज्ञानं। शब्दधातुरनित्य इति ज्ञानं। श्रोत्र विज्ञानधातुरनित्य इति ज्ञानं। घ्राणधातुरनित्य इति ज्ञानं। गन्धधातुरनित्य इति ज्ञानं। घ्राणविज्ञानधातुरनित्य इति ज्ञानं। जिह्वाधातुरनित्य इति ज्ञानं। रसधातुरनित्य इति ज्ञानं। जिह्वाविज्ञानधातुरनित्य इति ज्ञानं। कायधातुरनित्य इति ज्ञानं। स्पर्शधातुरनित्य इति ज्ञानं। कायविज्ञानधातुरनित्य इति ज्ञानं। मनोधातुरनित्य इति ज्ञानं। धर्म्मधातुरनित्य इति ज्ञानं। मनोविज्ञानधातुरनित्य इति ज्ञानं। पृथिवीधातुरनित्य इति ज्ञानं। अब्धातुरनित्य इति ज्ञानं। तेजोधातुरनित्य इति ज्ञानं। वायुधातुरनित्य इति ज्ञानं। आकाशधातुरनित्य इति ज्ञानं। विज्ञानधातुरनित्य इति ज्ञानं। अविद्याऽनित्येति ज्ञानं। संस्कारा अनित्या इति ज्ञानं। विज्ञानमनित्यमिति ज्ञानं। नामरूपमनित्यमिति ज्ञानं। षडायतनमनित्यमिति ज्ञानं। स्पर्शोऽनित्य इति ज्ञानं। वेदनाऽनित्येतिज्ञानं। तृष्णाऽनित्येतिज्ञानं। उपादानमनित्यमिति ज्ञानं। भवोऽनित्य इति ज्ञानं। जातिरनित्येति ज्ञानं। जरामरणमनित्यमिति ज्ञानं।

तत्र कतमत्समवृत्तिज्ञानं यत्परसत्वानां परपुद्गलानां चेतसैव चेतोज्ञानं। तत्र कतमत्परिचयज्ञानं। यत्प्रतिपच्चज्ञानं। तच कतमद्यथाकतज्ञानं। यत्तथागतस्य सर्व्वाकारज्ञताज्ञानं। इदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। तद्यथाऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं । यदुत-त्रीणीन्द्रियाणि । कतमानि त्रीणि । अज्ञातमाज्ञास्यामीतीन्द्रिय-माज्ञेन्द्रियमाज्ञातावीन्द्रियं । तत्र कतमदज्ञातमाज्ञास्यामीतीन्द्रियं । यच्छैक्षाणां पुद्गलानामनभिसमिता विनामिता सम्पदविनयं श्रद्धे-न्द्रियं वीर्येन्द्रियं स्मृतीन्द्रियं समाधीन्द्रियं प्रज्ञेन्द्रियमिदमुच्यते-नाज्ञातमाज्ञास्यामीतीन्द्रियं । तत्र कतमदाज्ञेन्द्रियं । यच्छैक्षाणां पुद्गलानामाज्ञातवता श्रद्धेन्द्रियं वीर्येन्द्रियं स्मृतीन्द्रियं समाधीन्द्रियं प्रज्ञेन्द्रियमिदमुच्यते आज्ञेन्द्रियं । तत्र कतमदाज्ञातावीन्द्रियं । यच्छैक्षाणां पुद्गलानामर्हतां प्रत्येकबुद्धानां बोधिसत्त्वानां तथा-गतानां श्रद्धेन्द्रियं वीर्येन्द्रियं स्मृतीन्द्रियं समाधीन्द्रियं प्रज्ञेन्द्रियमिदमुच्यते आज्ञातावीन्द्रियं । इदमपि सुभूते बोधि-सत्त्वस्य महासत्त्वस्य महायानं । तच्चाऽनुपलम्भयोगेन ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं । यदुत-त्रयः समाधयः । कतमे त्रयः सवितर्कः सविचारः समाधिरवितर्को-ऽविचारमात्रः समाधिरवितर्कोऽविचारः समाधिः । तत्र कतमः सवितर्कः सविचारः समाधिः । इह सुभूते बोधिसत्त्वो महासत्त्वो विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवे-कजप्रीतिसुखं प्रथमं ध्यानमुपसम्पद्यविहरति । अयमुच्यते सवितर्कः सविचारः समाधिः । तत्र कतमोऽवितर्कोऽविचारमात्र समाधिः । या प्रथमस्य ध्यानस्य द्वितीयस्य ध्यानस्यान्तरिका । अयमुच्यतेऽवितर्को-ऽविचारमात्रः, समाधिः । तत्र कतमोऽविचारः समाधिः । यत् द्वितीयं ध्यानं तृतीयं ध्यानं चतुर्थं ध्यानं आकाशानन्त्यायतन

समापत्तिः। विज्ञानाऽनन्त्यायतनसमापत्तिराकिञ्चन्यायतनसमापत्ति नैव संज्ञानासंज्ञायतनसमापत्तिः संज्ञावेदयितनिरोधसमापत्तिरयमुच्यते अवितर्कः अविचारः समाधिः। इदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं । तच्चाऽनुपलम्भयोगेन ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं । यदुत दशानुस्मृतयः। कतमादश, बुद्धाऽनुस्मृति धर्माऽनुस्मृतिः संघाऽनुस्मृतिः शीलाऽनुस्मृतिः त्यागाऽनुस्मृतिः देवताऽनुस्मृतिः। आनापाऽनुस्मृतिरुद्वेगाऽनुस्मृतिर्मरणाऽनुस्मृति कायगताऽनुस्मृतिः। इदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं । तच्चाऽनुपलम्भयोगेन ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं । यदुत चत्वारि ध्यानानि । चत्वार्य्यप्रमाणानि चतस्र आरूप्यसमापत्तयः। अष्टौविमोक्षाः । नवाऽनुपूर्व्वविहारसमापत्तयः । तत्र कतमानि चत्वारि ध्यानानि । इह सुभूते बोधिसत्त्वो महासत्त्व प्रज्ञापारमितायां चरन् विविक्तं कामैर्व्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसम्पद्य विहरति। सवितर्कं सविचाराणां व्युपशमादध्यात्मसम्प्रसादाच्चेतस एकोतीभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसम्पद्य विहरति । स प्रीतेर्व्विरागादुपेक्षको विहरति । स्मृतिमान् सम्प्रजानन् सुखञ्च कायेन प्रतिसम्वेदयति । यत्तदार्य्या आचक्षते उपेक्षकः स्मृतिमान् सुखविहारी निष्प्रीतिकं तृतीयं ध्यानमुपसम्पद्य विहरति । सुखस्य च प्रहाणात दुःखस्य च प्रहाणात् पूर्व्वमेव

च सौमनस्यदौर्मनस्ययोरस्तङ्गमाददुःखाऽसुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसम्पद्य विहरति। तच्चाऽनुपलम्भयोगेन। इमानि चत्वारि ध्यानानि। तत्र कतमानि चत्वार्य्यप्रमाणानि इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् मैत्रीसहगतेन चित्तेन विपुलेन महद्गतेना ऽद्वयेना ऽप्रमाणेना ऽवैरेणा ऽसपत्नेनाव्याबध्येन धर्म्मधातुपरमे लोके आकाशधातुपर्य्यवसाने दशदिशः स्फुरित्वा-ऽधिमुच्यापसम्पद्य विहरति। करुणासहगतेन चित्तेन विपुलेन महद्गतेना ऽद्वयेना ऽप्रमाणेना ऽवैरेणा ऽसपत्नेनाऽव्याबध्येन धर्म्म-धातुपरमेलोके आकाशधातुपर्य्यवसाने दशदिशःस्फुरित्वाऽधिमु-च्योपसम्पद्य विहरति। मुदितासहगतेन चित्तेन विपुलेन महद्गतेनाद्वयेना ऽप्रमाणेना ऽवैरेणा ऽसपत्नेनाव्याबध्येन धर्म्मधातु-परमेलोके आकाशधातुपर्य्यवसाने दशदिशःस्फुरित्वाऽधिमुच्योप-सम्पद्य विहरति। उपेक्षासहगतेन चित्तेन विपुलेन महद्गतेना ऽद्वयेना ऽप्रमाणेना ऽवैरेणाऽसपत्नेनाऽव्याबध्येन धर्म्मधातुपरमेलोके आकाशधातुपर्य्यवसाने दशदिशःस्फुरित्वाऽधिमुच्योपसम्पद्य विह-रति। अनुपलम्भयोगेन। इमानि चत्वार्य्यप्रमाणानि।

कतमाश्चतस्र आरूप्यसमापत्तयः। इह सुभूते बोधिसत्त्वो-महासत्त्वः प्रज्ञापारमितायां चरन् सर्व्वशोरूपसंज्ञानां समतिक्रमात्-प्रतिघसंज्ञानामस्तङ्गमान्नानात्वसंज्ञानाम मनसिकारादनन्तमाका-शमित्याकाशानन्त्यायतनमुपसम्पद्य विहरति। सर्व्वश आकाशा-ऽनन्त्यायतनं समतिक्रमादनन्तं विज्ञानमिति विज्ञानानन्त्यायतनमु-पसम्पद्य विहरति। स सर्व्वशो विज्ञानानन्त्यायतनसमतिक्रमान्नास्ति

किञ्चिदित्याकिञ्चन्यायतनमुपसम्पद्य विहरति। सर्व्वश आकिञ्चन्यायतन समतिक्रमान्नैव संज्ञानासंज्ञायतनमुपसम्पद्य विहरति। तच्चाऽनुपलम्भयोगेन। इमास्तस्य आरूप्यसमापत्तयः। तत्र कतमेऽष्टौ विमोक्षाः। रूपरूपाणि पश्यत्ययं प्रथमो विमोक्षः। अध्यात्मरूपसंज्ञीवहिर्द्धारूपाणि पश्यत्ययं द्वितीयो विमोक्षः। शून्यतायां अधिमुक्तोभवत्ययं तृतीयो विमोक्षः। स सर्व्वशो-रूपसंज्ञानां समतिक्रमात् प्रतिघसंज्ञानामस्तङ्गमात्नानात्वसंज्ञानाम मनसिकारादनन्तमाकाशमित्याकाशानन्त्यायतनमुपसम्पद्य विहरति। अयं चतुर्थो विमोक्षः। स सर्व्वश आकाशानन्त्यायतन समतिक्रमादनन्तं विज्ञानमिति विज्ञानानन्त्यायतनमुपसम्पद्य विहरति। अयं पञ्चमो विमोक्षः। स सर्व्वशोविज्ञानानन्त्यायतन समतिक्रमान्नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसम्पद्य विहरति। अयं षष्ठो विमोक्षः। स सर्व्वश आकिञ्चन्यायतन समतिक्रमान्नैव संज्ञानासंज्ञायतनमुपसम्पद्य विहरति। अयं सप्तमो विमोक्षः। स सर्व्वशो नैव संज्ञानासंज्ञायतनसमतिक्रमात् संज्ञावेदयित निरोधमुपसम्पद्य विहरति। अयमष्टमोविमोक्षः। तच्चाऽनुपलम्भयोगेन। इमेऽष्टौ विमोक्षाः।

तत्र कतमा नवानुपूर्व्वाविहारसमापत्तयः। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्म्मैः, स वितर्कः स विचार विवेकजं प्रीतिसुखं प्रथम ध्यानमुपसम्पद्य विहरति। स वितर्कविचाराणां व्युपशमादध्यात्मसम्प्रसादाच्चेतस एकोतीभावादवितर्कमविचारं

समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसम्पद्य विहरति। सप्रीतेर्व्विरागादुपेक्षको विहरति। स्मृतिमान् संप्रजानन् सुखञ्च कायेन प्रतिसम्वेदयति। यत्तदार्य्या आचक्षते उपेक्षकः स्मृतिमान् सुखविहारीनिष्प्रीतिकं तृतीयं ध्यानमुपसम्पद्य विहरति। ससुखस्य च प्रहाणात् दुःखस्य च प्रहाणात् पूर्व्वमेव सौमनस्य दौर्म्मनस्ययो-रस्तङ्गमाददुःखाऽसुखमुपेक्षा स्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसम्पद्य विहरति। स सर्व्वशो रूपसंज्ञानां समतिक्रमात् प्रतिघसंज्ञानाम-स्तङ्गमामानात्व संज्ञानाममनसिकारादनन्तमाकाशमनित्याकाशान-न्त्यायतनमुपसम्पद्य विहरति। स सर्व्वश आकाशानन्त्यायतन समतिक्रमादनन्तं विज्ञानमितिविज्ञानानन्त्यायतनमुपसम्पद्य विह-रति। स सर्व्वशो विज्ञानानन्त्यायतन समतिक्रमान्नाकिञ्चिदित्या किञ्चन्यायतनमुपसम्पद्य विहरति। स सर्व्वश आकिञ्च न्यायतन समतिक्रमान्नैवसंज्ञाना संज्ञायतनमुपसम्पद्य विहरति। स सर्व्वशोनैव संज्ञानासंज्ञायतन समतिक्रमात् संज्ञा वेदयतिनिरोधमुपसम्पद्य विहरति। इमान वा ऽनुपूर्व्वविहारसमापत्तयः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदुत दश तथा गतबलानि। कतमानि दश। इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् स्थानञ्च स्थानतः। अस्थानञ्चा-स्थानतो यथाभूतं प्रजानाति। अतीतानागतप्रत्युत्पन्नानां धर्म्माणां कर्म्मसमादानानाञ्च स्थानशोहेतुशः कर्म्मविपाकं यथाभूतं प्रजानाति। नानाधातुर्ल्लोकोऽनेकधातुर्ल्लोकोऽनेकधातुर्ल्लोक इति। यथाभूतं प्रजानाति। परसत्वानां परपुद्गलानामनेकाधिमुक्तिकानां

नानाऽधिमुक्तिकानां यथाभूतं प्रजानाति । परसत्त्वानां परपुद्गला-नामिन्द्रियपरापरज्ञतानां यथाभूतं प्रजानाति । सर्व्वत्र गामिनीं प्रतिपदं यथाभूतं प्रजानाति । इन्द्रियबलबोध्यङ्गध्यानाविमोच-समाधिसमापत्तिसंक्लेशव्यवदानस्थानं यथाभूतं प्रजानाति । सोऽनेकविधं पूर्व्वनिवासमनुस्मरति । एकमपि जातिमनुस्मरति । यावज्जातिशतमपि सहस्रमपि दशसहस्रमपि जातिकोटिमपि जातिकोटिशतमपि जातिकोटिसहस्रमपि जातिकोटिशतसहस्र-मपि जातिकोटिनियुतशतसहस्रमप्यनुस्मरति । एकमपि कल्पमनु-स्मरति । यावत् कल्पशतमपि कल्पसहस्रमपि कल्पशतसहस्रमपि यावदनेकान्यपि कल्पकोटिनियुतशतसहस्राण्यनुस्मरति । अमाह-मासमेवं नामैवं गोत्र एवंजातिः । एवमाहारः एवं चिरस्थितिका एवमायुष्मन्तः । सोऽहं ततश्च्युतःसत्रमुत्रोपपन्नो यावत्ततश्च्युतः इहो-पन्न इति । यावत् साकारं सोद्देशं सनिर्द्देशमनेकविधं पूर्व्वनिवास-मनुस्मरति । सदिव्येन चक्षुषा विशुद्धेनातिक्रान्त मानुषेण सत्त्वान् पश्यति । च्यवमानानुत्पद्यमानानुपपन्नानापि सुवर्णान् दुर्वर्णान् हीनान् प्रणीतान् सुगतान् दुर्गतान यावद्यथा कर्म्मोपगान् सत्त्वान् प्रजानाति । अमी भवन्तः सत्त्वाः कायदुश्चरितेन समन्वागताः वाक्दुश्चरितेन समन्वागताः । मनोदुश्चरितेन समन्वागताः । आर्य्याणामपवादकामिथ्यादृष्टयस्तद्धेतो स्तत्प्रत्ययकायस्य भेदाद-पायदुर्गतिविनिपातं नरकेषूपपद्यन्ते । अमी पुनर्भवन्तः सत्त्वाः कायसुचरितेन समन्वागताः वाक्सुचरितेन समन्वागताः मनःसु-चरितेन समन्वागता । आर्य्याणामनपवादका. सम्यग्दृष्टय.स्तद्धे-

तोपलप्रत्ययं कायस्य भेदात् सुगतौ स्वर्गलोके देवेषूपपद्यन्ते इति। आस्रवाणां क्षयादनास्रवचेतोविमुक्तिं प्रज्ञाविमुक्तिं स्वयमभिज्ञाय साक्षात्कृत्योपसम्पद्य विहरन्ति। क्षीणामेजाति रुषितं ब्रह्मचर्यं कृतं करणीयं। नापरमित्थमिति प्रजानाति। इदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। तच्चाऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदुत चत्वारि वैशारद्यानि। कतमानि चत्वारि। सम्यक्सम्बुद्धस्य च मे प्रतिजानतो। इमे धर्मा अनभिसम्बुद्धा इति। अत्र वत मे श्रमणो वा ब्राह्मणो वा देवो वा मारो वा ब्रह्मा वा केनचिद्वा पुनर्लोके सहधर्मेण चोदयेदिति। निमित्तं न समनुपश्याम्यत्र चाहं निमित्तमसमनुपश्यन् क्षेमं प्राप्तो विहराम्यभयं प्राप्तो वैशारद्यप्राप्तः। उदारमार्षभं स्थानं प्रजानामि। परिषद्गतः सम्यक्सिंहनादं नदामि। ब्राह्मं चक्रं प्रवर्त्तयाम्यप्रवर्त्तनीयं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा ब्रह्मणा वा केनचिद्वा पुनर्लोके सहधर्मेण क्षीणास्रवस्यतत मे प्रतिजानतः। इमे आस्रवाः अपरिक्षीणाः इति। अत्र वत मे श्रमणो वा ब्राह्मणो वा देवो वा मारो वा ब्रह्मा वा केनचिद्वा पुनर्लोके सहधर्मेण चोदयति। निमित्तमेव न समनुपश्याम्यत्र चाहं निमित्तमसमनुपश्यन् क्षेमप्राप्तोऽधिऽराम्यभयप्राप्तो वैशारद्यप्राप्तः। उदारार्षभं स्थानं प्रजानामि। परिषद्गतः सम्यक् सिंहनादं नदामि। ब्राह्मं चक्रं प्रवर्त्तयाम्यप्रवर्त्तनीयं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा ब्रह्मणा वा केनचिद्वा पुनर्लोके सहधर्मेण। ये खलु पुनर्मयान्तरायिकाधर्मा आख्याता। ताम्

प्रतिषेवतो नालमन्तरायेति नेदं स्थानं विद्यते। अत्र बत मे श्रमणो वा ब्राह्मणो वा देवो वा मारो वा ब्रह्मा वा केनचिद्वा पुनर्लोके सहधर्मेण चोदयेदिति। निमित्तमेव न समनुपश्याम्यच चाहं निमित्तमसमनुपश्यन् क्षेमप्राप्तो विहराम्यभयप्राप्तो वैशारद्यप्राप्तः। उदारमार्षभं स्थानं प्रतिजानामि। पर्षद्गतः सम्यक्सिंहनादं नदामि। ब्राह्मं चक्रं प्रवर्त्तयाम्यप्रवर्त्तनीयं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा ब्रह्मणा वा केनचिद्वा पुनर्लोके सहधर्मेण। याश्च मया प्रतिपद आख्याताः। आर्य्यनिर्य्याणिका नैर्वाधिकास्तत्करस्य सम्यग्दुःखक्षयायेतास्ताः प्रतिपद्यमानो न निर्यायादसम्यग्दुःखक्षयायेति नेदं स्थानं विद्यते। अत्र बत मे श्रमणो वा ब्राह्मणो वा देवो वा मारो वा ब्रह्मा वा केनचिद्वा लोके सहधर्मेण चोदयति। निमित्तमेव न समनुपश्याम्यच चाहं निमित्तमसमनुपश्यन् क्षेमप्राप्तो विहराम्यभयप्राप्तो वैशारद्यप्राप्तः। उदारमार्षभं स्थानं प्रजानामि। परिषद्गतः सम्यक्सिंहनादं नदामि। ब्राह्मं चक्रं प्रवर्त्तयाम्यप्रवर्त्तनीयः श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा ब्रह्मणा वा केनचिद्वा पुनर्लोके सहधर्मेण। इदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं तच्चाऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं यदुत चतस्रः प्रतिसम्विदः। कतमास्ताश्चतस्रः। अर्थप्रतिसम्विद्धर्म्मप्रतिसम्विन्निरुक्तिप्रतिसम्वित्प्रतिभा न प्रतिसम्वित्। इदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। तच्चानुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदुता-

ऽष्टादशावेणिकाबुद्धधर्म्माः। कतमेऽष्टादश। यां च रात्रिं तथागतो-ऽनुत्तरां सम्बोधिमभिसम्बुद्धो यां च रात्रिं स देवकं लोकं समारकं सब्रह्मकं सश्रमण ब्राह्मणीप्रजां सदेवमानुषासुरां दुःखक्षयाय गामिनो मार्गंशानुशाशिष्यानुपधिशेषे निर्व्वाणधातौ परिनिर्व्वा-प्यान्यत्र अत्रान्तरा नास्ति तथागतस्य स्खलितं नास्ति रवितं नास्ति मुषितस्मृतिर्नास्ति नानात्वसंज्ञानास्त्यसमाहितं चित्तं नास्ति अप्रतिसंख्यायोपेक्षानास्ति छन्दपरिहाणिर्नास्ति वीर्य्यपरि-हाणिर्नास्ति स्मृतिपरिहाणिर्नास्ति समाधिपरिहाणिर्नास्ति प्रज्ञा-परिहाणिर्नास्ति विमुक्तिपरिहाणिर्नास्ति विमुक्तिज्ञानदर्शनपरि-हाणिः। सर्व्वं कायकर्म्मज्ञानपूर्व्वङ्गमं ज्ञानानुपरिवर्त्ति। सर्व्वं वाक्कर्म्मज्ञानपूर्व्वङ्गमं ज्ञानानुपरिवर्त्ति। सर्व्वं मनःकर्म्मज्ञानपूर्व्वङ्गमं ज्ञानानुपरिवर्त्ति। अतीतेऽध्वनि अप्रतिहतमसङ्गं ज्ञानं दर्शनं प्रवर्त्तते। अनागतेऽध्वन्यप्रतिहतमसंज्ञानदर्शनं प्रवर्त्तते। प्रत्युत्पन्ने-ऽध्वान्यप्रतिहतमसंज्ञानदर्शनं प्रवर्त्तते। इदमपि सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। तच्चाऽनुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं यदुत धारणीमुखानि। कतमानि धारणीमुखानि। अक्षरसमता भाष्य-समता अक्षरमुखमक्षरप्रवेशः। तत्र कतमदक्षरमुखाक्षरप्रवेशः। अकारोमुखं सर्व्वधर्म्माणामाद्यनुत्पन्नत्वात्। रकारोमुखं सर्व्वधर्म्माणां रजोपगतत्वात्। पकारोमुखं सर्व्वधर्म्माणां परमार्थनिर्देशत्वात्। चकारोमुखं सर्व्वधर्म्माणां च्यवनोपपत्त्यनुपलब्धित्वात्। सर्व्वधर्म्मान च्यवन्ते नोपपद्यन्ते। नकारोमुखं सर्व्वधर्म्माणां नामापगतत्वात्।

नामप्रकृत्यानलब्धं न नष्टं। लकारोमुखं सर्व्वधर्म्माणां लोकोत्तीर्ण-त्वात् तृष्णालताहेतुप्रत्ययसमुत्पादितत्वात्। दकारोमुखं सर्व्वधर्म्माणां दान्तदमथपरिच्छिन्नत्वात्। बकारोमुखं सर्व्वधर्म्माणां बद्ध न विगतत्वात्। डकारोमुखं सर्व्वधर्म्माणां डमयगतत्वात्। षकारोमुखं सर्व्वधर्म्माणां षड्नाऽनुपलब्धित्वात्। न सज्यते न बध्यते। वकारोमुखं सर्व्वधर्म्माणां वाक्पथेष समुच्छिन्नत्वात्। तकारोमुखं सर्व्वधर्म्माणां तथताऽविचलितत्वात्। यकारोमुखं सर्व्वधर्म्माणां यावदनुपलब्धि-त्वात्। स्तकारोमुखं सर्व्वधर्म्माणां स्तम्भानुपलब्धित्वात्। काकारोमुखं सर्व्वधर्म्माणां कारकाऽनुपलब्धित्वात्। सकारोमुखं सर्व्वधर्म्माणां समताऽनुपलब्धित्वात्। समन्ताच्च व्यतिवर्त्तते। मकारोमुखं सर्व्वधर्म्माणां मकारानुपलब्धितामुपादाय। गकारोमुखं सर्व्वधर्म्माणां गमनाऽनुपलब्धित्वात्। स्थकारोमुखं सर्व्वधर्म्माणां स्थानाऽनुपलब्धि-त्वात्। जकारोमुखं सर्व्वधर्म्माणां जात्यनुपलब्धित्वात्। श्वकारोमुखं सर्व्वधर्म्माणां श्वासाऽनुपलब्धित्वात्। धकारोमुखं सर्व्वधर्म्माणां धर्म्मधात्वनुपलब्धित्वात्। शकारोमुखं सर्व्वधर्म्माणां शमथाऽनुप-लब्धित्वात्। खकारोमुखं सर्व्वधर्म्माणां खसमताऽनुपलब्धित्वात्। क्षकारोमुखं सर्व्वधर्म्माणां क्षयाऽनुपलब्धित्वात्। स्तकारोमुखं सर्व्व-धर्म्माणां स्तवाऽनुपलब्धित्वात्। ज्ञकारोमुखं सर्व्वधर्म्माणां ज्ञाना-ऽनुपलब्धित्वात्। तकारोमुखं सर्व्वधर्म्माणां मायाऽनुपलब्धित्वात्। भकारोमुखं सर्व्व-हकारोमुखं सर्व्वधर्म्माणां हेत्वनुपलब्धित्वात्। धर्म्माणां भङ्गानुपलब्धितः। छकारोमुखं सर्व्वधर्म्माणां छेदनाऽनुप-लब्धितः। स्मकारोमुखं सर्व्वधर्म्माणां स्मरणाऽनुपलब्धितः।

क्ष्कारोमुखं सर्व्वधर्म्माणामाज्ञानानुपलब्धितः। झकारोमुखं सर्व्वधर्म्माणामुत्पादाऽनुपलब्धितः। घकारोमुखं सर्व्वधर्म्माणां घनाऽनुपलब्धितः। ठकारोमुखं सर्व्वधर्म्माणां विठपाऽनुपलब्धितः। णकारोमुखं सर्व्वधर्म्माणां रणविगतत्वात्। न कश्चिद्गच्छति नागच्छति न तिष्ठति नानिषीदति न शय्यं कल्पयति न विकल्पयति। फकारोमुखं सर्व्वधर्म्माणां फलाऽनुपलब्धित्वात्। स्ककारोमुखं सर्व्वधर्म्माणां स्कन्धाऽनुपलब्धित्वात्। एकारोमुखं सर्व्वधर्म्माणां एकाराऽनुपलब्धित्वात्। चकारोमुखं सर्व्वधर्म्माणां चर्य्याऽनुपलब्धित्वात्। ढकारोमुखं सर्व्वधर्म्माणां ढकारानुपलब्धित्वात्। हकारोमुखं सर्व्वधर्म्माणां हकारानुपलब्धित्वात्। पर्य्यन्तमिहाक्षानेनच्यवन्तेनोपपन्ने। नाक्षरत्र उत्तर्य्यवहारः। तत्कस्य हेतोस्तथाहि न कश्चित् किञ्चिदन्यत्रामव्यवह्रियते येनाऽभिलप्येत। येन निर्द्दिश्यते पश्चिख्येत दृश्येत वाच्येत। तद्यथापि नाम सुभूते आकाशमेव सर्व्वधर्म्मा अनुगन्तव्याः। अयमुच्यते धारणीमुखप्रवेशः। अकाराद्यक्षरनिर्द्देशप्रवेशः। यो हि कश्चित् सुभूते बोधिसत्वो महासत्व इदमकाराद्यक्षरकौशल्यं ज्ञास्यति। स न क्वचिद्रुते सजति। सर्व्वधर्म्मसमतायां संबाधयिष्यति। रुतज्ञानकौशल्यञ्च प्रतिलप्स्यते। योहि कश्चित् सुभूते बोधिसत्त्वो महासत्त्वः। इदमकाराद्यक्षरप्रवेशमुद्रामकाराद्यक्षरप्रवेशमुद्रापदानि श्रोष्यति। श्रुत्वा चोद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्य्यवाप्स्यति। परेभ्यश्च देशयिष्यति न च प्रतीतयाबुद्धा तस्य विंशतिरनुशंसाः प्रतिकाङ्क्षितव्याः। कतमे विंशतिः। तद्यत स्मृतिमांश्च भविष्यति।

मतिमांश्च बुद्धिमांश्च धृतिमांश्च ह्रीमांश्च प्रज्ञावांश्च प्रतिभानवांश्च। इदञ्च धारणीमुखमल्पकृच्छ्रेण प्रतिलप्स्यते। न कथं कथीभविष्यति। धिमतिश्चाऽस्य न भविष्यति। न च परस्यान्तिकात्कुशलां वाचं श्रुत्वाऽनुनेष्यते। नपरुषां वाचं श्रुत्वा प्रतिहंस्यते। नोन्नतोभविष्यति नाऽवनतः। यथास्थित एव भविष्यति। स्कन्धकुशलश्च भविष्यति। धातुकुशलश्च भविष्यति। आयतनकुशलश्च भविष्यति। सत्यकुशलः। प्रतीत्य समुत्पादकुशलः। हेतुकुशलः प्रत्ययकुशलः। धर्म्मताकुशलः। इन्द्रियपरापरज्ञानकुशलः। च्युतोपपत्तिकुशलः। दिव्यश्रोत्रज्ञानकुशलः। परचित्तज्ञानकुशलः। पूर्व्वनिवासाऽनुस्मृतिज्ञानकुशल.। ऋद्धिविधिज्ञानकुशलः। आस्रवक्षयज्ञानकुशलः। स्थानाऽस्थाननिर्द्देशकुशलः। अतिक्रमणकुशलः। प्रतिक्रमणकुशलः। ईर्यापथकुशलः। सवचाप्यकौशल्यञ्चाऽनुप्राप्स्यति। इदमपि सुभूते धारणीमुखमकाराद्यक्षरप्रवेशो बोधिसत्त्वस्य महासत्त्वस्य महायानं। तच्चाऽनुपलम्भयोगेन ॥ ० ॥

शतसाहस्र्यां प्रज्ञापारमितायां नवमः परिवर्त्तः॥

# अथ दशमः परिवर्त्तः।

---

यदपि सुभूतिरेवमाह। कथ बोधिसत्त्वो महासत्त्वो महायानसंप्रस्थितो भवतीति। इह सुभूते बोधिसत्त्वो महासत्त्वः षट्सु पारमितासु चरन् भूमेर्भूमिं संक्रामति। कथञ्च सुभूते बोधिसत्त्वो महासत्त्वः षट्सु पारमितासु चरन् भूमेर्भूमिं संक्रामति। यदुत संक्रान्त्या सर्व्वधर्म्माणां न हि कश्चिद्धर्म्म आगच्छति वा गच्छति वा संक्रामति वा अपसंक्रामति वा। अपि तु या सर्व्वधर्म्माणां भूमिस्तां स न मन्यते। न चिन्तयति। न भूमिपरिकर्म्म च करोति। न च तां भूमिं समनुपश्यति। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य भूमिपरिकर्म्म। प्रथमायां सुभूते भूमौ वर्त्तमानेन बोधिसत्त्वेन महासत्त्वेन दशपरिकर्म्माणि करणीयानि। कतमानि दश। अध्याशयादि परिकर्म्माऽनुपलम्भयोगेन हितवस्तुतापरिकर्म्मनिमित्ताऽनुपलब्धितामुपादाय। सर्व्वसत्त्वसमचित्ततापरिकर्म्मसत्त्वानुपलब्धितामुपादाय। त्यागपरिकर्म्मदानदायकपरिग्राहकाऽनुपलब्धितामुपादाय। कल्याणमित्रसेवनापरिकर्म्मतैरमध्यतामुपादाय। धर्म्मपर्य्येष्टिपरिकर्म्मसर्व्वधर्म्माऽनुपलब्धितामुपादाय। अभीक्ष्णनैष्क्रम्यपरिकर्म्मगृहानुपलब्धितामुपादाय। बुद्धकायस्पृहापरिकर्म्मलक्षणाऽनुव्यञ्जननिमित्ताऽनुपलब्धितामुपादाय। धर्म्मविवरणपरिकर्म्मभेदाऽनुपलब्धितामुपादाय। मानस्तम्भननिर्घातनपरिकर्म्ममन्नुनता-

ऽनुपलक्षितामुपादाय। सत्यवचनपरिकर्म्मवचनाऽनुपलक्षितामुपादाय। इमानि सुभूते बोधिसत्त्वेन महासत्त्वेन प्रथमायां भूमौ वर्त्तमानेन दशपरिकर्म्माणि करणीयानि।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन द्वितीयायां भूमौ वर्त्तमानेनाष्टौधर्म्मा अभीक्ष्णं मानसि कर्त्तव्या। तत्र च प्रतिपत्तव्यं। कतमेऽष्टौ। यदुत शीलपरिशुद्धिः कृतज्ञताकृतवेदिता। क्षान्तिबलप्रतिस्थानं। प्रामोद्यं। प्रीत्यनुभवनता। सर्व्वसत्त्वपरित्यागिता। महाकरुणाया आमुखीभावः। गुरुशुश्रूषा। श्रद्धागौरवता। पारमिता सुयोगपर्य्येष्टिः। इमे सुभूते बोधिसत्त्वेन महासत्त्वेन द्वितीयायां भूमौ वर्त्तमानेनाष्टौ धर्म्माः अभीक्ष्णं मनसि कर्त्तव्यास्तत्र च प्रतिपत्तव्यम्।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन तृतीयायां भूमौ वर्त्तमानेन पञ्चसुधर्म्मेषु स्थातव्यं। कतमेषु पञ्चसु। यदुतबाहुश्रुत्यातृप्ततायां। तत्र चाक्षरानभिनिवेशेन निरामिषधर्म्मविसरणतायां। तथाचाऽमन्यनतया बुद्धक्षेत्रे परिशोधनकुशलमूलावरोपणपरिणामनतायां। तथाचाऽमन्यनतया अपरिमितसंसारापरिखेदतायां। तथाचाऽमनन्यतयाह्र्यपत्राप्यस्थानतायां। तथाचाऽमनन्यतया एषु सुभूते पञ्चसुधर्म्मेषु बोधिसत्त्वेन महासत्त्वेन तृतीयायां भूमौ वर्त्तमानेन स्थातव्यम्।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन च चतुर्थ्यांभूमौ वर्त्तमानेन दशधर्म्मान् समादायवर्त्तितव्यं। तेन च परित्यक्तव्याः। कतमेदश। अरण्यवासं। अल्पेच्छतया सन्तुष्टिता। धुतगुणमंलेखा-

ऽनुवर्जनता। शिक्षाया अपरित्यागिता। कामगुणजुगुप्सनता। निर्वृतेसहगतचित्तोत्पादः। सर्व्ववस्तुपरित्यागिता। अनवलीन-चित्तता। सर्व्ववस्त्वनपेक्षणता। इमे सुभूते दशधर्माः बोधिसत्त्वेन महासत्त्वेन चतुर्थ्यां भूमौ वर्त्तमानेन न परित्यक्तव्याः। समादाय च वर्त्तितव्यम्।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन पञ्चम्यां भूमौ वर्त्त-मानेन षड्धर्माः परिवर्जयितव्याः। कतमे षट् यदुतगृहिसंस्तवः परिवर्जयितव्य। भिक्षुणीसंस्तवः। कुलमात्सर्य्यं। सगणिकास्थानं। आत्मोत्कर्षणतापरपंसनता। इमे षट्धर्माः परिवर्जयितव्याः। पुनरष्टादशधर्माः परिवर्जयितव्याः। यदुतदशाऽकुशलाः कर्मपथाः परिवर्जयितव्याः। मानस्तम्भविपर्यासा, विचिकित्सा, राग, द्वेष, मोहा, धिरामनता, इमे ऽष्टादशधर्मा बोधिसत्त्वेन महासत्त्वेन पञ्चम्यां भूमौ वर्त्तमानेन परिवर्जयितव्याः।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन षष्ठ्यां भूमौ वर्त्तमानेन षड्धर्माः परिपूरयितव्याः। यदुत षट्पारमिता। अपरे षड्धर्माः परिवर्जयितव्याः। कतमे षट्श्रावकचित्त परिवर्जयितव्यं। प्रत्येकबुद्धचित्तं परिवर्जयितव्यं। परितर्षणचित्तं परिवर्जयितव्यं। याचनकं दृष्ट्वाऽनवलीनपरिवर्जयितव्यं। नाऽवलीयितव्यं। सर्व्ववस्तुनि परित्यज्यदुर्मनस्कतापरिवर्जयितव्या। न दुर्मनस्केन भवितव्यं। याचनक दृष्ट्वा विक्षेपचित्तं परिवर्जयितव्यं। न याचनकं विक्षेपः कर्त्तव्य। इमे सुभूते बोधिसत्त्वेन महासत्त्वेन षष्ठ्यां भूमौ वर्त्तमानेन षड्धर्मा. परिवर्जयितव्या.।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन सप्तम्यां भूमौ वर्त्तमानेन विंशतिधर्म्मा न कर्त्तव्याः। कतमे विंशतिः। यदुत आत्मग्राहो न कर्त्तव्यः। सत्त्वग्राहो न कर्त्तव्यः। जीवग्राहो न कर्त्तव्यः। पुद्गलग्राहो न कर्त्तव्यः। उच्छेदग्राहो न कर्त्तव्यः। शाश्वतग्राहो न कर्त्तव्यः। निमित्तसंज्ञा न कर्त्तव्या। हेतुदृष्टिः स्कन्धाऽभिनिवेशो धात्वभिनिवेशः। आयतनाऽभिनिवेशः। त्रैधातुकाऽभिनिवेशः। त्रैधातुकाऽध्यवसानं। त्रैधातुकालयः। बुद्धनिश्रयदृष्ट्यभिनिवेशः। धर्म्मनिश्रयदृष्ट्यभिनिवेशः। संघनिश्रयदृष्ट्यभिनिवेशः। शीलनिश्रयदृष्ट्यभिनिवेशः। शून्याधर्म्मा इति विवादः। शून्यानिरोधाश्च। इमे सुभूते विंशतिर्धर्म्मा न कर्त्तव्याः। तेन विंशतिरेव धर्म्माः परिपूरयितव्याः। कतमे विंशतिः। यदुत शून्यताप्रतिवेधः। आनिमित्तसाक्षात्क्रिया। अप्रणिहितज्ञानं। त्रिमण्डलपरिशुद्धिः। कृपाकारुण्यतासर्व्वसत्त्वेषु। ते च सत्त्वानाऽवमन्तव्याः। सर्व्वधर्म्मसमतादर्शनं। तच्च चाऽनभिनिवेशः। भूतनयप्रतिवेधः। तेन चाऽमनता। अनुत्पादक्षान्तिः। अनुत्पादज्ञानं। एकनयनिर्देशः। सर्व्वधर्म्माणां कल्पनासमुद्घातः। संज्ञाविवर्त्तः। दृष्टिविवर्त्तः। क्लेशविवर्त्तः। शमथविपश्यनाभूतिः। दान्तचित्तता। अप्रतिहतज्ञानता। अनूनता। अवसरज्ञता। यथेच्छाचेष्टगमनता। इमे सुभूते बोधिसत्त्वेन महासत्त्वेन सप्तम्यां भूमौ वर्त्तमानेन विंशतिधर्म्माः परिपूरयितव्याः।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेनाऽष्टम्यां भूमौ वर्त्तमानेन चत्वारोधर्म्माः परिपूरयितव्याः। कतमे चत्वारः। यदुत

सर्व्वसत्त्वचित्ताऽनुप्रवेशः। अभिज्ञाविक्रीडनता। बुद्धक्षेत्रदर्शनता। तेषां बुद्धक्षेत्राणां यथा दृष्टानां परिनिष्पादनता। बुद्धपर्युपासनता। बुद्धकाय यथाभूत प्रत्यवेक्षणता। इमे सुभूते चत्वारोधर्म्माः परिपूरयितव्याः। पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेनाष्टम्यां भूमौ वर्त्तमानेन चत्वारोधर्म्माः परिपूरयितव्याः। यदुतेन्द्रिय परापरज्ञानता। बुद्धक्षेत्रपरिशोधनता। मायोपमसमाधेरभीक्ष्णसमापद्यनता। यथायथा सत्त्वानां कुशलमूलानि परिनिष्पद्यन्ते। तथा तथात्मभावपरिनिष्पादनता। संचिन्त्य भवोपादानता। इमे सुभूते बोधिसत्त्वेन महासत्त्वेनाष्टम्यां भूमौ वर्त्तमानेन चत्वारोधर्म्माः परिपूरयितव्याः।

पुनरपरं सुभूते बोधिसत्त्वेन महासत्त्वेन नवम्यां भूमौ वर्त्तमानेन द्वादशधर्म्माः परिपूरयितव्याः। कतमे द्वादश। यदुत अनन्तप्रणिधानपरिग्रहः। स यथायथाप्रणिदधाति तथातथाऽस्य समृध्यति। देवनागयक्षगन्धर्व्वासुरगरुडकिन्नरमहोरगरुतज्ञानं। परिपूर्णप्रणिधाननिर्देशज्ञानं। गर्भविक्रान्तिसम्पत्। गोत्र सम्पत्। परिवारसम्पत्। जन्मसम्पत्। बोधिद्रुमव्यूहसम्पत्। सर्व्वगुणपरिपूरिसम्पत्। इमे सुभूते बोधिसत्त्वेन महासत्त्वेन नवम्यां भूमौ वर्त्तमानेन द्वादशधर्म्माः परिपूरयितव्याः।

दशम्यां पुनः सुभूते भूमौ वर्त्तमाने बोधिसत्त्वो न महासत्त्वस्तथागत एव वक्तव्यः। एवमुक्त आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। कतमद्भगवन् बोधिसत्त्वस्य महासत्त्वस्याध्याशयादिपरिकर्म्म। भगवानाह। यः सुभूते बोधिसत्त्वोमहासत्त्व सर्व्वाकारज्ञताप्रति-

संयुक्तैश्चित्तोत्पादैः कुशलमूलानि समुदानयति। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्याध्याशयादिपरिकर्म्म। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य सर्व्वसत्त्वसमचित्ततापरिकर्म्म। सर्व्वाकारज्ञताप्रतिसंयुक्तैश्चित्तोत्पादैश्चत्वार्यप्रमाणान्यभिनिर्हरति। मैत्रीकरुणामुदितोपेक्षमिदमुच्यते बोधिसत्त्वस्य महासत्त्वस्य सर्व्वसत्त्वसमचित्ततापरिकर्म्म। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य त्यागपरिकर्म्म। यत्सर्व्वसत्त्वेभ्योऽविकल्पतस्तद्दानं ददातीदमुच्यते बोधिसत्त्वस्य महासत्त्वस्य त्यागपरिकर्म्म। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रसेवनापरिकर्म्म। यदुत तानि बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्राणि यान्येव सर्व्वाकारज्ञतायां समादापयन्ति। निवेशयन्ति। प्रतिष्ठापयन्ति। तेषां कल्याणमित्राणां या सेवना भजना पर्य्युपासना गुरुशुश्रूषणता। इयमुच्यते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रसेवनापरिकर्म्म। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य धर्म्मपर्य्येष्टिपरिकर्म्म। यत् सर्व्वाकारज्ञताप्रतिसंयुक्तैश्चित्तोत्पादैर्धर्म्मं पर्य्येषते। न श्रावकप्रत्येकबुद्धभूमौ पततीदं बोधिसत्त्वस्य महासत्त्वस्य धर्म्मपर्य्येष्टिपरिकर्म्म। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्याऽभीक्ष्णं नैष्क्रम्यपरिकर्म्म। यत् सर्व्वसत्त्वजातावव्यवकीर्णो निष्क्रमति। तथागत शासने प्रव्रजति। न चाऽस्य कश्चिदन्तरायं करोतीदं बोधिसत्त्वस्य महासत्त्वस्याऽभीक्ष्णं नैष्क्रम्यपरिकर्म्म। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य बुद्धकायस्पृहापरिकर्म्म। यद्बुद्धविग्रहं दृष्ट्वा न कदाचिद्बुद्धमनसिकारेण विरहितो भवति यावत् सर्व्वकारज्ञतामनुप्राप्नोतीदं बोधिसत्त्वस्य महासत्त्वस्य बुद्धकायस्पृहापरिकर्म्म।

तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य धर्मविवरणपरिकर्म। यद्बोधिसत्त्वो महासत्त्वः संमुखीभूत तथागत परिनिर्वृत्तं सत्त्वेभ्यो धर्मं देशयति। आदौ कल्याणं मध्येकल्याणं पर्यवसानेकल्याणं स्वर्थं सुव्यञ्जनं केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं सम्प्रकाशयति। यदुत सूत्रं गेयं व्याकरणं गाथोद्दाननिदानत्युक्तकजातकवैपुल्याद्भुतधर्माऽववादोपदेशादिदं बोधिसत्त्वस्य महासत्त्वस्य धर्मविवरणपरिकर्म। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य मानस्तम्भनिर्घातनपरिकर्म। येन मानस्तम्भनिर्घातेन न जातु नीचकुलेषूपपद्यते। इदं बोधिसत्त्वस्य महासत्त्वस्य मानस्तम्भनिर्घातनपरिकर्म। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य सत्यवचनपरिकर्म। यदुत यथा वादिता तथा कारिता। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य सत्यवचनपरिकर्म। इमानि सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रथमायां भूमौ वर्त्तमानस्य दशपरिकर्माणि। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य शीलपरिशुद्धिः। यदुत श्रावकप्रत्येकबुद्धचित्तानाम मनसिकारः। येऽपि तदन्यदौःशील्यकराः। बोधिपरिपन्थकराः धर्माः तेषामप्यमनसिकारः। इयं बोधिसत्त्वस्य महासत्त्वस्य शीलपरिशुद्धिः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य कृतज्ञता कृतकारिता। यद्बोधिसत्त्वो महासत्त्वो बोधिसत्त्वचर्यां चरन्नल्पमपि कृतमीमं नाशयति। प्रागेव इयं बोधिसत्त्वस्य महासत्त्वस्य कृतज्ञता कृतकारिता। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिबलप्रतिष्ठानं। यत् सर्वसत्त्वानामन्तिके व्यापादविहिंसाचित्तता। इदं बोधिसत्त्वस्य महासत्त्वस्य क्षान्तिबल-

प्रतिष्ठानं। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्यामामोद्य प्रीत्यनु-भवनता। यदुत सर्व्वसत्त्वपरिपाचनता त्रिषु यानेषु। इयं बोधि-सत्त्वस्य महासत्त्वस्य प्रामोद्य प्रीत्यनुभवनता। तत्र कतमद्बोधि-सत्त्वस्य महासत्त्वस्य सर्व्वसत्त्वापरित्यागिता। यदुत सर्व्वसत्त्वानां परित्राणता। इदं बोधिसत्त्वस्य महासत्त्वस्य सर्व्वसत्त्वापरि-त्यागिता। तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्य महाकरुणया आसुखीभावः। यद्बोधिसत्त्वस्य महासत्त्वस्य बोधिसत्त्वचारिकाञ्चरत एवं भवति। एकैकस्याहं सत्त्वस्यार्थाय गङ्गानदीवालुकोपमान् कल्पान्निरयेषु वसन् तत्र छेदनभेदनलुण्डनखेदनपचनान्यनुभवेयं यावन्नसत्त्वा बुद्धज्ञानप्रतिष्ठापिता भवेत्। एवं यावत् सर्व्वसत्त्वानां कृते यात्युत्सहनता अपरिखेदः। अयमुच्यते बोधिसत्त्वस्य महा-सत्त्वस्य महाकरुणाया आसुखीभावः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य गुरुशुश्रूषाश्रद्धागौरवता। यदुत गुरूणामन्तिके शास्तृ-संज्ञा। इयमुच्यते बोधिसत्त्वस्य महासत्त्वस्य गुरुशुश्रूषाश्रद्धा-गौरवता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य पारमिता-सूद्योगपर्य्येष्टिः। यदुतानन्यकृतकर्मतया पारमितानां पर्य्येषणता सर्व्वसत्त्वपरिपाचनतायै। इयं बोधिसत्त्वस्य महासत्त्वस्य पारमिता-सूद्योगपर्य्येष्टिः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बाहुश्रुत्या-तृप्तता। यत्किञ्चिद्बुद्धैर्भगवद्भिर्भाषितमिहलोकधातौ समन्ताद्दशसु दिक्षुलोकधातुषु तत्सर्व्वमाधारयिष्यामीति यात्यतृप्तता। इयं बोधिसत्त्वस्य महासत्त्वस्य बाहुश्रुत्यातृप्तता। तत्र कतमा बोधि-सत्त्वस्य महासत्त्वस्य निरामिषधर्म्मदानविवरणता। यद्बोधिसत्त्वो

महासत्त्वो धर्मं देशयंस्तेन धर्मदानेनान्तशो बोधिमपि न प्रतिकाङ्क्षति । इयं बोधिसत्त्वस्य महासत्त्वस्य निरामिषधर्मदानविवरणता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बुद्धक्षेत्रपरिशोधनकुशलमूलावरोपणता । यैः कुशलमूलैर्बुद्धक्षेत्रं परिशोधयन् नामपरचित्तक्षेत्रं परिशोधयति । तेषां कुशलमूलानां परिणामना । इयं बोधिसत्त्वस्य महासत्त्वस्य बुद्धक्षेत्रपरिशोधनकुशलमूलावरोपणपरिणामगता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्यापरिमितसंसारापरिखेदनता । यदुत कुशलमूलोपलम्भनतायै कुशलमूलैरुपलब्धः सत्त्वांश्च परिपाचयति । बुद्धक्षेत्रञ्च परिशोधयति । न च कदाचित् खेदनोपपद्यते । यावत् सर्वाकारज्ञतां परिपूरयति । इयं बोधिसत्त्वस्य महासत्त्वस्यापरिमितसंसाराऽपरिखेदनता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य ह्रपत्राप्यस्थानं । यदुत श्रावक प्रत्येकबुद्धचित्तजुगुप्सनता । इदं बोधिसत्त्वस्य महासत्त्वस्य ह्रपत्राप्यस्थानं । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्यारण्यवासापरित्यागिता । या श्रावकप्रत्येकबुद्धभूमेरतिक्रमणता । इयं बोधिसत्त्वस्य महासत्त्वस्यारण्यवासापरित्यागिता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्याऽल्पेच्छता । यद्बोधिसत्त्वो महासत्त्वो बोधिमपि नेच्छतीतीयं बोधिसत्त्वस्य महासत्त्वस्याल्पेच्छता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य सन्तुष्टिता । यत्सर्वाकारज्ञता प्रतिलम्भेनापि न लभ्यते । इयं बोधिसत्त्वस्य महासत्त्वस्य सन्तुष्टिता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य धुतगुणसंलेखेऽनुवर्त्तनता । यदुत गम्भीरेषु धर्मेषु निर्याण क्षान्तिरियं बोधिसत्त्वस्य महासत्त्वस्य

धुतगुणसंलेखानुवर्त्तनता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य शिक्षाया अपरित्यागिता। यत्र सर्व्वशिक्षाणामप्रचारः। इयं बोधिसत्त्वस्य महासत्त्वस्य शिक्षाया अपरित्यागिता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य कामगुणजुगुप्सनता। कामचित्तस्याऽनुत्पादः। इयं बोधिसत्त्वस्य महासत्त्वस्य कामगुणजुगुप्सनता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य निर्वृत्तिसहगतचित्तोत्पादः। यदुत सर्व्वधर्म्माणामनभिसंस्कारः। अयं सुभूते बोधिसत्त्वस्य महासत्त्वस्य निर्वृत्तिसहगतचित्तोत्पादः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य सर्व्वस्वपरित्यागिता। याध्यात्मिकवाह्यानां धर्म्माणामग्रहणता। इयं बोधिसत्त्वस्य महासत्त्वस्य सर्व्वस्वपरित्यागिता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्यावलीनचित्तता। यद्विज्ञानस्थितिसत्त्वं चित्तं न तिष्ठति। इयं बोधिसत्त्वस्य महासत्त्वस्यावलीनचित्तता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य सर्व्ववस्तुनिरपेक्षता। यः सर्व्ववस्तूनाम मनसिकारः। इयं बोधिसत्त्वस्य महासत्त्वस्य सर्व्ववस्तुनिरपेक्षता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य गृहिसंस्तवपरिवर्जनता। यदुत बुद्धक्षेत्रेण बुद्धक्षेत्रसंक्रमणता। उपपादुकता। प्रादुर्भावमण्डका वायुप्रावरणता। इयं बोधिसत्त्वस्य महासत्त्वस्य गृहिसंस्तवपरिवर्जनता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य भिक्षुणीसंस्तवपरिवर्जनता। यद्भिक्षुण्याऽर्द्धमक्ष संघातमात्रं न तिष्ठति। ■ च तच्चिदामं परितर्षणचित्तमुत्पादयति। न च तन्निदानं चीवरमुपादयति। इयं बोधिसत्त्वस्य महासत्त्वस्य भिक्षुणीसंस्तवपरिवर्जनता। तत्र कतमा

बोधिसत्त्वस्य महासत्त्वस्य कुलेषु मात्सर्य्यपरिवर्जनता। इह सुभूते बोधिसत्त्वेन महासत्त्वेनैकचित्तमुत्पादयितव्यम्। तन्मया सर्व्वसत्त्वानां सुखोपधानं कर्त्तव्यम्। तदेते सत्त्वाः स्वपुण्यैरेव सुखिता नात्र मया मात्सर्य्यचित्तमुत्पाद्यम्। एवं बोधिसत्त्वेन महासत्त्वेन कुलमात्सर्य्यं परिवर्जयितव्यम्। तत्र कथं बोधिसत्त्वेन महासत्त्वेन संगणिकास्थानं परिवर्जयितव्यम्। यत्र बोधिसत्त्वस्य महासत्त्वस्य संगणिकास्थानस्थितस्य श्रावकप्रत्येकबुद्धा भवेयुः। तत्प्रतिसंयुक्ताः कथा भवेयुः। तत्प्रतिसंयुक्तावादचित्तोत्पादा उत्पद्येरम्। तत्र बोधिसत्त्वेन महासत्त्वेन न स्थातव्यम्। इयं बोधिसत्त्वस्य महासत्त्वस्य संगणिस्थानपरिवर्जनता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्योत्कर्षणपरिवर्जनता। तत्र कथं बोधिसत्त्वेन महासत्त्वेन व्यापादः परिवर्जयितव्यः। यद्व्यापाद विचिकित्साचित्तागामवकाशं न ददाति। कलहचित्तस्य विग्रहचित्तस्य वाऽवकाशं न ददातीतीय बोधिसत्त्वस्य महासत्त्वस्य व्यापादपरिवर्जनता। या आत्मिकानां धर्म्माणामसमनुपश्यनता। इयं बोधिसत्त्वस्य महासत्त्वस्योत्कर्षणपरिवर्जनता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य परपंसनापरिवर्जनता। यदुत वाह्यानां धर्म्माणामसमनुपश्यनता। इतीयं बोधिसत्त्वस्य महासत्त्वस्य परपंसनता परिवर्जनता। तत्र कथं बोधिसत्त्वेन महासत्त्वेन दशाऽकुशलाः कर्म्मपथाः परिवर्जयितव्याः। तथा ह्येते सुगतेरप्यन्तरायकराः प्रागेवार्य्यमार्गस्य प्रागेवाऽनुत्तरायाः सम्बोधेः। एवं बोधिसत्त्वेन महासत्त्वेन दशाऽकुशलाः कर्म्मपथाः परिवर्जयितव्याः। तत्र कथं बोधिसत्त्वेन महासत्त्वेनाधिमानः

परिवर्जयितव्यः। यमं समनुपश्यति कुतः पुनरधिकं येनाऽधिमन्येत एवमधिमानः परिवर्जयितव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन लाभः परिवर्जयितव्यः। तथाहि स तद्वस्तु न समनुपश्यति। यथाऽस्य लाभ उत्पद्येत। एवं बोधिसत्त्वेन महासत्त्वेन लाभः परिवर्जयितव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन विपर्यासाः परिवर्जयितव्याः। वस्त्वनुपलब्धितामुपादाय। एवं बोधिसत्त्वेन महासत्त्वेन विपर्यासाः परिवर्जयितव्याः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन रागद्वेषमोहानाधिवासयितव्याः। तथा हि सरागद्वेषमोहानां वस्तु न समनुपश्यति। एवं बोधिसत्त्वेन महासत्त्वेन रागद्वेषमोहानाऽधिवासयितव्याः।

तत्र कतमे षष्ठ्यां भूमौ षट्धर्माः परिपूरयितव्याः। यदुत षट्पारमिताः। दानपारमिता, शीलपारमिता, क्षान्तिपारमिता, वीर्यपारमिता, ध्यानपारमिता, प्रज्ञापारमिता, परिपूरयितव्याः। तथा ह्यासु षट्सु पारमितासु, स्थित्वा बुद्धा भगवन्तः श्रावकप्रत्येकबुद्धाश्च पञ्चविधस्य ज्ञेयार्णवस्य पारङ्गता गच्छन्ति गमिष्यन्ति च। कतमस्य पञ्चविधस्य। यदुताऽतीतस्यानागतस्य प्रत्युत्पन्नस्यावक्तव्यस्याऽसंस्कृतस्य। एवं बोधिसत्त्वेन महासत्त्वेन षट्धर्माः परिपूरयितव्याः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन श्रावकचित्तं परिवर्जयितव्यम्। तथा हि नैषमार्गो बोधये। प्रत्येकबुद्धचित्तं परिवर्जयितव्यम्। तथा हि नैषमार्गो बोधये। परितर्पणचित्तं नोत्पादयितव्यम्। तथा हि नैषमार्गो बोधये। याचनकं दृष्ट्वा नाऽवलीनचित्तमुत्पादयितव्यम्। तत्कस्य हेतोस्तथा हि नैषमार्गो

बोधये। सर्व्ववस्तुनि वरिष्यच्युता। न दुर्म्मनस्केन भवितव्यम्। तत्कस्य हेतोस्तथा हि। नैवमार्गो बोधये। प्रथमचित्तोत्पादमुपादाय। नित्यं दानं दातव्यम्। न सक्तचित्ते न भवितव्यम्। तत्र कथं बोधिसत्त्वेन महासत्त्वेनात्मग्रहो न कर्त्तव्यः। तथा हि अत्यन्ततया आत्मा न संविद्यते। जीवग्रहो न कर्त्तव्यः। तथा ह्यत्यन्ततया जीवो न संविद्यते। पुद्गलग्रहो न कर्त्तव्यस्तथा ह्यत्यन्ततया पुद्गलो न विद्यते। तत्र कथं बोधिसत्त्वेन महासत्त्वेन नोच्छेदग्रहो न कर्त्तव्यः तथा हि न कश्चिद्धर्म्मं उच्छिद्यतेऽत्यन्ताऽनुपलम्भात् सर्व्वधर्म्माणां। तत्र कथं बोधिसत्त्वेन महासत्त्वेन शाश्वतग्रहो न कर्त्तव्यः। तत्कस्यहेतोस्तथा हि धर्म्मो नोत्पद्यन्ते न शाश्वतो भवति नोच्छेदः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन निमित्तसंज्ञा न कर्त्तव्या। तथा ह्यत्यन्ततया संक्लेशो न संविद्यते। तत्र कथं बोधिसत्त्वेन महासत्त्वेन हेतुदृष्टिर्न कर्त्तव्या। तथा हि तां दृष्टिं न समनुपश्यति। तत्र कथं बोधिसत्त्वेन महासत्त्वेन नामरूपाऽभिनिवेशो न कर्त्तव्यः। तथा हि तद्वस्तुन समनुपश्यति। तत्र कथं बोधिसत्त्वेन महासत्त्वेन स्कन्धाभिनिवेशो न कर्त्तव्यः। तथा ह्यत्यन्ततया स्कन्धा न संविद्यते। एवं स्कन्धाभिनिवेशो न कर्त्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन धात्वभिनिवेशो न कर्त्तव्यः। तथा ह्यत्यन्ततया धातवो न संविद्यन्ते। एवं धात्वभिनिवेशो न कर्त्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेनायतनाभिनिवेशो न कर्त्तव्यः। तथा ह्यत्यन्ततया आयतनानि न संविद्यन्ते। एवमायतनाऽभिनिवेशो न कर्त्तव्यः। तत्र कथं बोधिसत्त्वेन महा-

सत्त्वेन त्रैधातुकाऽभिनिवेशो न कर्त्तव्यः। तथा ह्यस्य स्वभावेन संविद्यते। एवं बोधिसत्त्वेन महासत्त्वेन त्रैधातुकाभिनिवेशो न कर्त्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन त्रैधातुकाऽध्यवसानं न कर्त्तव्यम्। तथा हि तदस्य न संविद्यते नोपलभ्यते। एवं बोधिसत्त्वेन महासत्त्वेन त्रैधातुकाध्यवसानं न कर्त्तव्यम्। तत्र कथं बोधिसत्त्वेन महासत्त्वेन त्रैधातुकाश्रयो न कर्त्तव्यः। तथा हि तस्य वस्तुन संविद्यते एवं त्रैधातुकाश्रयो न कर्त्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन त्रैधातुकनिश्रयो न कर्त्तव्यः। तथा हि तस्य तद्वस्तुन संविद्यते। एवं बोधिसत्त्वेन महासत्त्वेन त्रैधातुकनिश्रयो न कर्त्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन बुद्धनिश्रयदृष्ट्यभिनिवेशो न कर्त्तव्यः। तथा हि न बुद्धदृष्टिनिश्रयो बुद्धदर्शनम्। एवं बोधिसत्त्वेन महासत्त्वेन बुद्धनिश्रयदृष्ट्यभिनिवेशो न कर्त्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन धर्म्मनिश्रयदृष्ट्यभिनिवेशो न कर्त्तव्यः। तथा हि न धर्म्मदृष्टिनिश्रयाद्धर्म्मदर्शनम्। एवं बोधिसत्त्वेन महासत्त्वेन धर्म्मनिश्रयदृष्ट्यभिनिवेशो न कर्त्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन सङ्घनिश्रयदृष्ट्यभिनिवेशो न कर्त्तव्यः। तथा हि न सङ्घदृष्टिनिश्रयात् सङ्घदर्शनम्। एवं बोधिसत्त्वेन महासत्त्वेन सङ्घनिश्रयदृष्ट्यभिनिवेशो न कर्त्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन शीलनिश्रयदृष्ट्यभिनिवेशो न कर्त्तव्यः। तथा हि न शीलदृष्टिनिश्रयाच्छीलपरिशुद्धिरेवं बोधिसत्त्वेन महासत्त्वेन शीलनिश्रयदृष्ट्यभिनिवेशो न कर्त्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन शून्याधर्म्मा इति विवादो न कर्त्तव्यः। तथा हि सर्व्वधर्म्माः

पासनता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बुद्धपर्य्युपासनता । या धर्म्मपर्य्युपासनता सर्व्वसत्त्वाऽनुग्रह प्रति । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बुद्धकाय यथाभूतप्रत्यवेक्षणता । या धर्मकाययथाभूतप्रत्यवेक्षणता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्येन्द्रिय परापरज्ञानता । या दशकुशलेषु स्थिता सर्व्वसत्त्वानामिन्द्रियपरिपूरिप्रज्ञानता । तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बुद्धक्षेत्रपरिशोधनता । या सत्त्वचित्तपरिशोधनताऽनुपलम्भयोगेन । तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्य मायोपमः समाधिः । यत्र समाधौ स्थित्वा बोधिसत्त्वो महासत्त्वः सर्व्वाः क्रियाः करोति । न चाऽस्यचित्तं कचिद्धर्म्मे प्रवर्त्तते । तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्याऽभीक्ष्णं समापद्यनता । यद्बोधिसत्त्वस्य महासत्त्वस्य विपाकजः समाधिः । तत्र कथं बोधिसत्त्वो महासत्त्वो यथा यथा सत्त्वानां कुशलमूलपरिनिष्पत्तिर्भवति । तथा तथात्मभावं परिनिष्पादयति । इह बोधिसत्त्वो महासत्त्वः सञ्चिन्त्यात्मभावं परिगृह्णाति । यथा यथा सत्त्वपरिपाको भवति । तत्र कथं बोधिसत्त्वो महासत्त्वः सञ्चिन्त्यात्मभावमुपादत्ते । यदुत सर्व्वसत्त्वपरिपाकः । तत्र कथं बोधिसत्त्वो महासत्त्वो यथा यथा प्रणिदधाति । तथा तथाऽस्य समृध्यति । इह बोधिसत्त्वो महासत्त्वः षण्णां पारमितानां परिपूर्णत्वाद्यथा यथा प्रणिदधाति तथा तथा समृध्यति ।

तत्र कथं बोधिसत्त्वो महासत्त्वो देवनागयक्षगन्धर्व्वाऽसुरगरुडकिन्नरमहोरगरुतज्ञानं प्रतिविध्यति । यदुत निरुक्तिप्रतिसंविदा । तत्र कथं बोधिसत्त्वो महासत्त्वः परिपूर्णप्रतिभानिर्देशज्ञानं प्रति-

विध्यति। यदुत प्रतिभानसंविदा। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य गर्भावक्रान्तिसम्पत्। इह सुभूते बोधिसत्त्वो महासत्त्वः सर्व्वासु जातिषूपपादुक उपपद्यते। इह बोधिसत्त्वस्य महासत्त्वस्य गर्भावक्रान्तिसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य कुलसम्पत्। यद्बोधिसत्त्वो महासत्त्वो महाकुलेषु प्रत्याजायते। इयं बोधिसत्त्वस्य महासत्त्वस्य कुलसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य जातिसम्पत्। यद्बोधिसत्त्वो महासत्त्वः क्षत्रियमहाशालकुलेषु वा ब्राह्मणमहाशालकुलेषु वा प्रत्याजायते। इयं बोधिसत्त्वस्य महासत्त्वस्य जातिसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य गोत्रसम्पत्। यद्बोधिसत्त्वो महासत्त्वो यतो गोत्रात् पौर्व्विका बोधिसत्त्वो ऽभूवन्। तत्र गोत्रे प्रत्याजायते। इयं बोधिसत्त्वस्य महासत्त्वस्य गोत्रसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य परिवारसम्पत्। यद्बोधिसत्त्वो महासत्त्वो बोधौसत्त्वान् प्रतिष्ठाप्य बोधिसत्त्वपारिचार एव भवति। इयं बोधिसत्त्वस्य महासत्त्वस्य परिचारसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य जन्मसम्पत्। यद्बोधिसत्त्वो महासत्त्वो जातमात्र एवाऽसंख्येय लोकधातूनवभासेन स्फुरति। तांश्च षड्विकारं प्रकम्पयति। इय बोधिसत्त्वस्य महासत्त्वस्य जन्मसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वाऽभिक्रमणसम्पत्। यद्बोधिसत्त्वो महासत्त्वः प्रव्रज्यायैर्निष्क्रामति। अनेकैः सत्त्वकोटीनियुतशतसहस्रैः सार्द्धं ते च सत्त्वा नियता भवन्ति। त्रिषु यानेषु। इयं बोधिसत्त्वस्य महासत्त्वस्याऽभिनिष्क्रमणसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बोधिद्रुमव्यूहसम्पत्। यद्बोधिसत्त्वो महा-

स्वलक्षणेन शून्याः न शून्यतया। एवं बोधिसत्त्वेन महासत्त्वेन शून्यतायां विवादो न कर्त्तव्यः। तत्र कथं बोधिसत्त्वेन महासत्त्वेनावरोधयितव्या। तथा हि सर्व्वधर्म्माः शून्या न शून्यताशून्यतां विरोधयति। एवं बोधिसत्त्वेन महासत्त्वेन शून्यता न विरोधयितव्या। तत्र कथं बोधिसत्त्वेन महासत्त्वेन शून्यतापरिपूरयितव्या। स्वलक्षणशून्यतापरिपूरिर्बोधिसत्त्वस्य महासत्त्वस्य शून्यतापरिपूरिः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्यानिमित्त साक्षात्क्रिया। यदुत सर्व्वनिमित्तानाममनसिकारः। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्याऽप्रतिष्ठितज्ञानं यत् स त्रैधातुकचित्तं न प्रवर्त्तते। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य त्रिमण्डलपरिशुद्धिः। यदुत दशकुशलकर्म्मपथपरिपूरिः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य सत्त्वेषु कृपाकरुणतापरिपूरिः। यदुत महाकरुणाप्रतिलम्भः। तत्र कथं बोधिसत्त्वेन महासत्त्वेन सत्त्वानाऽवमन्तव्याः। यदुत मैत्रीपरिपूर्य्या। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य सर्व्वधर्म्माणां समता दर्शनम्। यदुतानुत्क्षेपा प्रचयः। सर्व्वधर्म्माणां। तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्य भूतनय प्रतिवेधः। यः सर्व्वधर्म्माणामेकनय प्रतिवेधः। अप्रतिवेधः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्याऽनुत्पाद क्षान्तिः। या सर्व्वधर्म्माणामनुत्पादायाऽनिरोधयोऽनभिसंस्काराय क्षान्तिः। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्याऽनुत्पादज्ञानं। यन्नामरूपाऽनुत्पादज्ञानं। इदं बोधिसत्त्वस्य महासत्त्वस्यानुत्पादज्ञानं। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्यैकनयनिर्देशः। यथा असमुदाचारता। अयं बोधिसत्त्वस्य महासत्त्वस्यैकनय-

निर्देशः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य कल्पतामसुद्घातः। या सर्व्वधर्म्मा नाम विकल्पनता। तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्य दृष्टिविवर्त्तः। या श्रावकभूमेः प्रत्येकबुद्धभूमेश्च दृष्टिविवर्त्तनता। तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्य क्लेशविवर्त्तः। यः सर्व्ववासनाऽनुसन्धिक्लेशक्षयः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य शमथविपश्यनाभूमिः। यदुत सर्व्वाकारज्ञताज्ञानं। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य दान्तचित्तता। यत्र त्रैधातुकैरतिविन्दति। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य शान्तचित्तता। यायषामिन्द्रियाणां प्रतिसंहरणता। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्याऽप्रतिहतज्ञानं। यदुत बुद्धचक्षुः प्रतिलम्भः। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्यानूनया च सर्व्वज्ञतया षड़ायतनापेक्षा। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य यत्रेच्छाक्षेत्रगमनं। यत्र तत्र पर्षण्मण्डले आत्मभावदर्शनं। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य सर्व्वसत्त्वचित्ताऽनुप्रवेशः। यदेकचित्तेन सर्व्वसत्त्वानां चित्तचैतसिकानि प्रतिजानाति। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्याऽभिज्ञाविक्रीड़ता। याभिराभिज्ञाभिर्व्विक्रीड़न् बुद्धक्षेत्राद्बुद्धक्षेत्रं संक्रामति। बुद्धदर्शनाय न चाऽस्य बुद्धसंज्ञा भवति। तत्र कतमद्बोधिसत्त्वस्य महासत्त्वस्य बुद्धक्षेत्रदर्शनं। यदेकस्मिन्नेव बुद्धक्षेत्रे स्थित्वाऽपरिमाणानि बुद्धक्षेत्राणि पश्यति। न चाऽस्य बुद्धक्षेत्रसंज्ञा भवति। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य यथादृष्टि बुद्धक्षेत्रपरिनिष्पादनता। यस्त्रिसाहस्रमहासाहस्रलोकधातौ चक्रवर्त्तिभूमौ स्थित्वा त्रिसाहस्रमहासाहस्रलोकधातोः परित्यजनं तेन

चासनता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बुद्धपर्य्युपासनता। या धर्म्मपर्य्युपासनता सर्व्वसत्त्वाऽनुग्रहं प्रति। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बुद्धकाय यथाभूतप्रत्यवेक्षणता। या धर्म्मकाययथाभूतप्रत्यवेक्षणता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्येन्द्रिय परापरज्ञानता। या दशकुशलेषु स्थिता सर्व्वसत्त्वानामिन्द्रियपरिपूरिप्रजाननता। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बुद्धक्षेत्रपरिशोधनता। या सत्त्वचित्तपरिशोधनताऽनुपलम्भयोगेन। तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्य मायोपमः समाधिः। यत्र समाधौ स्थिता बोधिसत्त्वो महासत्त्वः सर्व्वाः क्रियाः करोति। न चाऽस्यचित्तं कचिद्धर्म्मे प्रवर्त्तते। तत्र कतमो बोधिसत्त्वस्य महासत्त्वस्याऽभीक्ष्णं समापद्यनता। यद्बोधिसत्त्वस्य महासत्त्वस्य विपाकजः समाधिः। तत्र कथं बोधिसत्त्वो महासत्त्वो यथा यथा सत्त्वानां कुशलमूलपरिनिष्पत्तिर्भवति। तथा तथात्मभावं परिनिष्पादयति। इह बोधिसत्त्वो महासत्त्वः सञ्चिन्त्यात्मभावं परिगृह्णाति। यथा यथा सत्त्वपरिपाको भवति। तत्र कथं बोधिसत्त्वो महासत्त्वः सञ्चिन्त्यात्मभावमुपादत्ते। यदुत सर्व्वसत्त्वपरिपाकः। तत्र कथं बोधिसत्त्वो महासत्त्वो यथा यथा प्रणिदधाति। तथा तथाऽस्य समृध्यति। इह बोधिसत्त्वो महासत्त्वः षण्णां पारमितानां परिपूर्णत्वाद्यथा यथा प्रणिदधाति तथा तथा समृध्यति।

तत्र कथं बोधिसत्त्वो महासत्त्वो देवनागयक्षगन्धर्व्वाऽसुरगरुड़किन्नरमहोरगरुतज्ञानं प्रतिविध्यति। यदुत निरुक्तिप्रतिसंविदा। तत्र कथं बोधिसत्त्वो महासत्त्वः परिपूर्णप्रतिभानिर्देशज्ञानं प्रति-

विध्यति। यदुत प्रतिभानसंविदा। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य गर्भावक्रान्तिसम्पत्। इह सुभूते बोधिसत्त्वो महासत्त्वः सर्वासु जातिषूपपादुक उपपद्यते। इह बोधिसत्त्वस्य महासत्त्वस्य गर्भावक्रान्तिसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य कुलसम्पत्। यद्बोधिसत्त्वो महासत्त्वो महाकुलेषु प्रत्याजायते। इयं बोधिसत्त्वस्य महासत्त्वस्य कुलसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य जातिसम्पत्। यद्बोधिसत्त्वो महासत्त्वः क्षत्रियमहासालकुलेषु वा ब्राह्मणमहासालकुलेषु वा प्रत्याजायते। इयं बोधिसत्त्वस्य महासत्त्वस्य जातिसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य गोत्रसम्पत्। यद्बोधिसत्त्वो महासत्त्वो यतो गोत्रात् पौर्विका बोधिसत्त्वो ऽभूवन्। तत्र गोत्रे प्रत्याजायते। इयं बोधिसत्त्वस्य महासत्त्वस्य गोत्रसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य परिवारसम्पत्। यद्बोधिसत्त्वो महासत्त्वो बोधिसत्त्वान् प्रतिष्ठाप्य बोधिसत्त्वापरिवार एव भवति। इयं बोधिसत्त्वस्य महासत्त्वस्य परिवारसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य जन्मसम्पत्। यद्बोधिसत्त्वो महासत्त्वो जातमात्र एवाऽसंख्येय लोकधातूनवभासेन स्फुरति। तांश्च षड्विकारं प्रकम्पयति। इयं बोधिसत्त्वस्य महासत्त्वस्य जन्मसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्याऽभिनिष्क्रमणसम्पत्। यद्बोधिसत्त्वो महासत्त्वः प्रव्रज्यायैनिष्क्रामति। अनेकैः सत्त्वकोटीनियुतशतसहस्रैः सार्द्धं ते च सत्त्वा नियता भवन्ति। त्रिषु यानेषु। इयं बोधिसत्त्वस्य महासत्त्वस्याऽभिनिष्क्रमणसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य बोधिवृक्षव्यूहसम्पत्। यद्बोधिसत्त्वो महा-

सत्त्वो बोधिवृक्षमूलं सुवर्णमयं भवति। स्कन्धो वैदूर्यमयः। सप्तरत्नमय्यः शाखाः सर्वरत्नमयानि पत्रपुष्पाणि यस्य वृक्षस्य पुष्पो गन्धोऽवभासायानन्तलोकधातून् स्फुरति। इमं बोधिसत्त्वस्य महासत्त्वस्य बोधिवृक्षव्यूहसम्पत्। तत्र कतमा बोधिसत्त्वस्य महासत्त्वस्य सर्वगुणपरिपूरिसम्पत्। या बोधिसत्त्वस्य महासत्त्वस्य सत्त्वपरिपाकविशुद्धिश्च बुद्धक्षेत्रपरिशुद्धिश्च। इयं बोधिसत्त्वस्य महासत्त्वस्य सर्वगुणपरिपूरिसम्पत्। तत्र कथं बोधिसत्त्वो महासत्त्वो दशम्यां भूमौ स्थितस्तथागत एव वक्तव्यः। यस्य बोधिसत्त्वस्य महासत्त्वस्य सर्वपारमिताः परिपूर्णा भवन्ति। दश तथागतबलानि चत्वारि वैशारद्यानि चतस्रः प्रतिसंविदः। अष्टादशावेणिका बुद्धधर्माः। सर्वाकारज्ञता ज्ञानं सर्ववासनाऽनुसन्धिक्लेशप्रहाणं। महाकरुणा। सर्वबुद्धधर्माश्च परिपूर्णा भवन्ति। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वो दशम्यां भूमौ स्थितस्तथागत एव वक्तव्यः। तत्र कतमा सुभूते बोधिसत्त्वस्य महासत्त्वस्य दशभूमयः। इह सुभूते बोधिसत्त्वो महासत्त्व उपायकौशलेन दानपारमितायां चरन् शीलपारमितायां चरन् क्षान्तिपारमितायां चरन् वीर्यपारमितायां चरन् ध्यानपारमितायां चरन् प्रज्ञापारमितायाश्चरन्। अध्यात्मशून्यतायां चरन् बहिर्धाशून्यतायां चरन् अध्यात्मबहिर्धाशून्यतायां चरन् शून्यताशून्यतायां चरन् महाशून्यतायां चरन् परमार्थशून्यतायां चरन् संस्कृतशून्यतायां चरन् असंस्कृतशून्यतायां चरन् अत्यन्तशून्यतायां चरन् अनवराग्रशून्यतायां चरन् अनवकारशून्यतायां चरन् प्रकृतिशून्यतायां चरन्

सर्व्वधर्म्म शून्यतायां चरन् स्वलक्षणशून्यतायां चरन् अनुपलम्भ-शून्यतायां चरन् अभावशून्यतायां चरन् स्वभावशून्यतायां चरन् अभावस्वभाव शून्यतायां चरन् स्मृत्युपस्थानेषु चरन् सम्यक्प्रहाणेषु चरन् ऋद्धिपादेषु चरन् इन्द्रियेषु चरन् बलेषु चरन् बोध्यङ्गेषु चरन् आर्य्याष्टाङ्गमार्गे चरन् आर्य्यसत्येषु चरन् ध्यानेषु चरन् अप्रमाणेषु चरन् आरूप्यसमापत्तिषु चरन् विमोक्षेषु चरन् अनुपूर्व्व विहार समापत्तिषु चरन् शून्यतानिमित्ताप्रणिहित-विमोक्षेषु चरन् अभिज्ञासु चरन् धारणीमुखेषु चरन् समाधिषु चरन् तथागतबलेषु चरन् चतुर्षु वैशारद्येषु चरन् चतुःप्रतिसम्भित्सु चरन् महामैत्र्यां चरन् महाकरुणायां चरन् अष्टादशावेणि-कबुद्धधर्म्मेषु चरन् शुक्लविपश्यनाभूमिमतिक्रामति। गोत्रभूमिं समतिक्रामति। अष्टमकभूमिं समतिक्रामति। दर्शनभूमिं समति-क्रामति। तनुभूमिं समतिक्रामति। वीतरागभूमिं समतिक्रामति। कृताविभूमिं समतिक्रामति। प्रत्येक बुद्धभूमिं समतिक्रामति। बोधिसत्त्वभूमिं समतिक्रामति। इह सुभूते बोधिसत्त्वोमहासत्त्वो नवभूमिरतिक्रामति। बुद्धभूमौ तिष्ठति। इह सुभूते बोधिसत्त्वस्य महासत्त्वस्य दशभूमयः। एवं खलु सुभूते बोधिसत्त्वो महासत्त्वो महायानं संप्रस्थितो वेदितव्यः।

यत् पुनः सुभूतिरेव माह। कुतस्तद्यानं निर्यास्यतीति। त्रैधातुकान्निर्य्यास्यति। येन सर्व्वाकारज्ञता तेन स्थास्यति। तत् पुनरद्वययोगेन। तत् कस्य हेतो स्तथाहि सुभूते यच्च महायानं या च सर्व्वाकारज्ञता उभावेतौ धर्म्मौ न विसंयुक्तौ संयुक्तावरूपिणा-

रूपशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । शब्दशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । गन्धशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । रसशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । स्पर्शशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । धर्मशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । तत् कस्य हेतोर्नहि सुभूते रूपशून्यता त्रैधातुकान्निर्याति । न सर्वाकारज्ञतायां तिष्ठति । न शब्दशून्यता त्रैधातुकान्निर्याति । न सर्वाकारज्ञतायां तिष्ठति । न गन्धशून्यता त्रैधातुकान्निर्याति । न सर्वाकारज्ञतायां तिष्ठति । न रसशून्यता त्रैधातुकान्निर्याति । न सर्वाकारज्ञतायां तिष्ठति । न स्पर्शशून्यता त्रैधातुकान्निर्याति । न सर्वाकारज्ञतायां तिष्ठति । न धर्मशून्यता त्रैधातुकान्निर्याति । न सर्वाकारज्ञतायां तिष्ठति । तत् कस्य हेतोस्तथाहि सुभूते रूपं रूपेण शून्यं शब्दः शब्देन शून्यः गन्धो गन्धेन शून्यः रसो रसेन शून्यः स्पर्शः स्पर्शेन शून्यः धर्माः धर्मैः शून्याः ।

चक्षुर्विज्ञानशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । श्रोत्रविज्ञानशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । घ्राणविज्ञान-शून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । जिह्वा विज्ञानशून्यतायाः स सुभूते निर्याणमि-

च्छेद्योऽलचणानां धर्म्माणां निर्याणमिच्छेत्। काय विज्ञानशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलचणानां धर्म्माणां निर्यानमिच्छेत्। मनो विज्ञानशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलचणानां धर्म्माणां निर्यानमिच्छेत्। तत् कस्य हेतोर्नहि सुभूते चक्षुर्व्विज्ञानशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न श्रोत्रविज्ञानशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न घ्राणविज्ञानशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न जिह्वा विज्ञानशून्यता त्रैधातुकान्निर्याति। सर्व्वाकारज्ञतायां तिष्ठति। न कायविज्ञानशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न मनोविज्ञानशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। तत् कस्य हेतोस्तथाहि सुभूते चक्षुर्व्विज्ञानं चक्षुर्व्विज्ञानेन शून्यं। श्रोत्रविज्ञानं श्रोत्रविज्ञानेन शून्यं। घ्राणविज्ञानं घ्राणविज्ञानेन शून्यं। जिह्वाविज्ञानं जिह्वाविज्ञानेन शून्यं। कायविज्ञानं कायविज्ञानेन शून्यं। मनोविज्ञानं मनोविज्ञानेन शून्यं। चक्षुः संस्पर्शशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलचणानां धर्म्माणां निर्याणमिच्छेत्। श्रोत्रसंस्पर्शशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलचणानां धर्म्माणां निर्याणमिच्छेत्। घ्राणसंस्पर्शशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलचणानां धर्म्माणां निर्याणमिच्छेत्। जिह्वा संस्पर्शशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलचणानां धर्म्माणां निर्याणमिच्छेत्। कायसंस्पर्शशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलचणानां धर्म्माणां निर्याणमिच्छेत्।

वनिदर्शनावप्रतिघातैकलक्षणौ । तत् कस्य हेतोः । न हि सुभूते अलक्षणा धर्म्मानिर्यान्ति वा निर्यास्यति वा निर्याता वा धर्म्मधातो । न सुभूते निर्याणमिच्छेद्यः अलक्षणानां धर्म्माणां निर्याणमिच्छेत् । तथतायाः न सुभूते निर्याणमिच्छेद्योऽवितथतायाः सुभूते निर्याणमिच्छेत्। भूतकोटेः न सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। अचिन्त्यधातोः न सुभूतेनिर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। आकाशधातोः न सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। रागक्षयधातोः न सुभूतेनिर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । प्रहाणधातोः न सुभूतेनिर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । विरागधातोः न सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । निरोधधातोः न सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । रूपशून्यतायाः न सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । वेदनाशून्यतायाः न सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । संज्ञाशून्यतायाः न सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । संस्कार शून्यतायाः न सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । विज्ञान शून्यतायाः न सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। तत् कस्य हेतोर्नहि सुभूते रूपशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न वेदनाशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति । न संज्ञाशून्यता त्रैधातुकान्निर्याति । न

सर्व्वाकारज्ञतायां तिष्ठति। न संस्कार शून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न विज्ञानशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। तत् कस्य हेतोस्तथाहि। स सुभूते रूपं रूपेण शून्यं। वेदना वेदनयाशून्या। संज्ञा संज्ञयाशून्या। संस्काराः संस्कारैः शून्या। विज्ञानं विज्ञानेन शून्यं। चक्षुः शून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। श्रोत्र शून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। घ्राण शून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। जिह्वा शून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। काय शून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। मनः शून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। तत् कस्य हेतोर्नहि सुभूते चक्षुः शून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न श्रोत्रशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न घ्राणशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न जिह्वाशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न कायशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न मनः शून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। तत् कस्य हेतोस्तथाहि सुभूते चक्षुश्चक्षुषा शून्यं। श्रोत्र श्रोत्रेण शून्यं। घ्राण घ्राणेन शून्यं। जिह्वा जिह्वया शून्या। कायः कायेन शून्यः। मनो मनसा शून्यं।

मनः संस्पर्शशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। तत् कस्य हेतोर्नहि सुभूते चक्षुः संस्पर्शशून्यता त्रैधातुकान्निर्याति। न सर्वाकारज्ञतायां तिष्ठति। न श्रोत्रसंस्पर्शशून्यता त्रैधातुकान्निर्याति। न सर्वाकारज्ञतायां तिष्ठति। न घ्राणसंस्पर्शशून्यता त्रैधातुकान्निर्याति। न सर्वाकारज्ञतायां तिष्ठति। न जिह्वासंस्पर्शशून्यता त्रैधातुकान्निर्याति। न सर्वाकारज्ञतायां तिष्ठति। न कायसंस्पर्शशून्यता त्रैधातुकान्निर्याति। न सर्वाकारज्ञतायां तिष्ठति। न मनः संस्पर्शशून्यता त्रैधातुकान्निर्याति। न सर्वाकारज्ञतायां तिष्ठति। तत् कस्य हेतोस्तथाहि सुभूते चक्षुः संस्पर्शश्चक्षुः संस्पर्शेन शून्यः। श्रोत्रसंस्पर्शः श्रोत्रसंस्पर्शेन शून्यः। घ्राणसंस्पर्शो घ्राणसंस्पर्शेन शून्यः। जिह्वासंस्पर्शो जिह्वासंस्पर्शेन शून्यः। कायसंस्पर्शः कायसंस्पर्शेन शून्यः। मनः संस्पर्शो मनः संस्पर्शेन शून्यः।

चक्षुः संस्पर्शप्रत्ययवेदनायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। श्रोत्रसंस्पर्शप्रत्ययवेदनायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। घ्राणसंस्पर्शप्रत्ययवेदनायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। जिह्वासंस्पर्शप्रत्ययवेदनायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। कायसंस्पर्शप्रत्ययवेदनायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। मनः संस्पर्शप्रत्ययवेदनायाः स सुभूते निर्याणमिच्छेत् योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। तत् कस्य हेतोर्नहि

चक्षुःसंस्पर्शप्रत्ययवेदना त्रैधातुकान्निर्यांति। न सर्व्वाकारज्ञतायां तिष्ठति। न श्रोत्रसंस्पर्शप्रत्ययवेदना त्रैधातुकान्निर्यांति। न सर्व्वाकारज्ञतायां तिष्ठति। न घ्राणसंस्पर्शप्रत्ययवेदना त्रैधातुकान्निर्यांति। न सर्व्वाकारज्ञतायां तिष्ठति। न जिह्वासंस्पर्शप्रत्ययवेदना त्रैधातुकान्निर्यांति। न सर्व्वाकारज्ञतायां तिष्ठति। न कायसंस्पर्शप्रत्ययवेदना त्रैधातुकान्निर्यांति। न सर्व्वाकारज्ञतायां तिष्ठति। न मनःसंस्पर्शप्रत्ययवेदना त्रैधातुकान्निर्यांति। न सर्व्वाकारज्ञतायां तिष्ठति। तत्कस्य हेतोस्तथा हि सुभूते चक्षुःसंस्पर्शप्रत्ययवेदना चक्षुःसंस्पर्शप्रत्ययवेदनया शून्या। श्रोत्रसंस्पर्शप्रत्ययवेदना श्रोत्रसंस्पर्शप्रत्ययवेदनया शून्या। घ्राणसंस्पर्शप्रत्ययवेदना घ्राणसंस्पर्शप्रत्ययवेदनया शून्या। जिह्वासंस्पर्शप्रत्ययवेदना जिह्वासंस्पर्शप्रत्ययवेदनया शून्या। कायसंस्पर्शप्रत्ययवेदना कायसंस्पर्शप्रत्ययवेदनया शून्या। मनःसंस्पर्शप्रत्ययवेदना मनःसंस्पर्शप्रत्ययवेदनया शून्या।

स्वप्नस्य स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। मायायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। मरीच्याः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। प्रतिश्रुत्कायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। प्रतिभासस्य स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। तथागतनिर्म्मितस्य स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। तत्कस्य हेतोर्न हि सुभूते स्वप्नस्य स्वभावस्त्रैधा-

तुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न मायायाः स्वभावस्त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न मरीच्याः स्वभावस्त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न प्रतिश्रुत्कायाः स्वभावस्त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न प्रतिभासस्य स्वभावस्त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न तथागतनिर्म्मितस्य स्वभावस्त्रैधातु-निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। तत्कस्य हेतोस्तथा हि सुभूते स्वप्नस्वभावः स्वप्नस्वभावेन शून्यः। मायास्वभावो मायास्वभा-वेन शून्यः। मरीचिस्वभावो मरीचिस्वभावेन शून्यः। प्रतिश्रुत्का-स्वभावः प्रतिश्रुत्कास्वभावेन शून्यः। प्रतिभासस्वभावः प्रतिभासस्वभा-वेन शून्यः। तथागत निर्म्मितस्वभावस्तथागत निर्म्मितेन शून्यः।

दानपारमितायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। शीलपारमितायाः स सुभूते निर्याणमिच्छेद्यो-ऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। क्षान्तिपारमितायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। वीर्य्यपार-मितायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याण-मिच्छेत्। ध्यानपारमितायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। प्रज्ञापारमितायाः स सुभूते निर्याण-मिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। तत्कस्य हेतोस्तथा हि सुभूते दानपारमितायाः स्वभावो न त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यः शीलपारमितायाः स्वभावो न स त्रैधातुकान्निर्याति। यः क्षान्तिपारमितायाः स्वभावो न स त्रैधा-

तुकान्निर्य्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यो वीर्य्यपारमितायाः स्वभावो न स त्रैधातुकान्निर्य्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यो ध्यानपारमितायाः स्वभावो न स त्रैधातुकान्निर्य्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यः प्रज्ञापारमितायाः स्वभावो न स त्रैधातुकान्निर्य्याति। न सर्व्वाकारज्ञतायां तिष्ठति। तत्कस्य हेतोः। तथाहि सुभूते दानपारमितायाः स्वभावो दानपारमितास्वभावेन शून्यः। शीलपारमितायाः स्वभावः शीलपारमितास्वभावेन शून्यः। क्षान्तिपारमितायाः स्वभावः क्षान्तिपारमितास्वभावेन शून्यः। वीर्य्यपारमितायाः स्वभावो वीर्य्यपारमितास्वभावेन शून्यः। ध्यानपारमितायाः स्वभावो ध्यानपारमितास्वभावेन शून्यः। प्रज्ञापारमितास्वभावः प्रज्ञापारमितास्वभावेन शून्यः।

अध्यात्मशून्यतायाः स सुभूते निर्य्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्य्याणमिच्छेत्। बहिर्द्धाशून्यतायाः स सुभूते निर्य्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्य्याणमिच्छेत्। अध्यात्मबहिर्द्धाशून्यतायाः स सुभूते निर्य्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्य्याणमिच्छेत्। शून्यताशून्यतायाः स सुभूते निर्य्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्य्याणमिच्छेत्। महाशून्यतायाः स सुभूते निर्य्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्य्याणमिच्छेत्। परमार्थशून्यतायाः स सुभूते निर्य्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्य्याणमिच्छेत्। संस्कृतशून्यतायाः स सुभूते निर्य्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्य्याणमिच्छेत्। असंस्कृतशून्यतायाः स सुभूते निर्य्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्य्याणमिच्छेत्। अत्यन्तशून्यतायाः स सुभूते

निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। अनवराग्रशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। अनवकारशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। प्रकृतिशून्यतायाः स सुभूते निर्य्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। सर्व्वधर्म्मशून्यतायाः स सुभूते निर्याणमिच्छेत् योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। स्वलक्षणशून्यतायाः स सुभूते निर्याणमिच्छद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। अनुपलम्भशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। अभावशून्यतायाः स सुभूते, निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। स्वभावशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। अभावस्वभावशून्यतायाः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्।, तत् कस्य हेतोर्नहि सुभूते ऽध्यात्मशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न बहिर्द्धाशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। नाऽध्यात्मबहिर्द्धाशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न शून्यताशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न महाशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न परमार्थशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। न संस्कृतशून्यता त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। नाऽसंस्कृतशून्यता त्रैधातुकान्नि-

र्यांति। न सर्व्वाकारज्ञतायां तिष्ठति। नात्यन्तशून्यता त्रैधातु-काम्नियांति। न सर्व्वाकारज्ञतायां तिष्ठति। नाऽनवराग्रशून्यता त्रैधातुकान्नियांति। न सर्व्वाकारज्ञतायां तिष्ठति। नाऽनवकार-शून्यता त्रैधातुकान्नियांति। न सर्व्वाकारज्ञतायां तिष्ठति। न प्रकृतिशून्यता त्रैधातुकान्नियांति। न सर्व्वाकारज्ञतायां तिष्ठति। न सर्व्वधर्म्मशून्यता त्रैधातुकान्नियांति। न सर्व्वाकार-ज्ञतायां तिष्ठति। न स्वलक्षणशून्यता त्रैधातुकान्नियांति न सर्व्वाऽकारज्ञतायां तिष्ठति। नाऽनुपलम्भशून्यता त्रैधातुका-न्नियांति। न सर्व्वाकारज्ञतायां तिष्ठति। नाऽभावशून्यता त्रैधातुकान्नियांति। न सर्व्वाकारज्ञतायां तिष्ठति। न स्वभाव-शून्यता त्रैधातुकान्नियांति। न सर्व्वाकारज्ञतायां तिष्ठति।। नाऽभावस्वभावशून्यता त्रैधातुकान्नियांति। न सर्व्वाकारज्ञतायां तिष्ठति।

तत् कस्य हेतोस्तथाहि सुभूते ऽध्यात्मशून्यता ऽध्यात्मशून्यतया शून्या। बहिर्द्धाशून्यता बहिर्द्धाशून्यतयाशून्या। अध्यात्म बहिर्द्धाशून्यता ऽध्यात्मबहिर्द्धाशून्यतया शून्या। शून्यताशून्यता शून्यतया शून्या। महाशून्यता महाशून्यतया शून्या। परमार्थ-शून्यता परमार्थशून्यतया शून्या। संस्कृतशून्यता संस्कृतशून्यतया शून्या। असंस्कृतशून्यता ऽसंस्कृतशून्यतया शून्या। अत्यन्तशून्यता अत्यन्तशून्यतया शून्या। अनवराग्रशून्यता अनवराग्रशून्यतया शून्या। अनवकारशून्यता अनवकारशून्यतया शून्या। प्रकृतिशून्यता प्रकृतिशून्यतया शून्या। सर्व्वधर्म्मशून्यता सर्व्वधर्म्मशून्यतया शून्या।

स्वलक्षणशून्यता स्वलक्षणशून्यतया शून्या । अनुपलम्भशून्यता अनुपलम्भशून्यतया शून्या । अभावशून्यता अभावशून्यतया शून्या । स्वभावशून्यता स्वभावशून्यतया शून्या । अभावस्वभावशून्यता अभावस्वभावशून्यतया शून्या ।

स्मृत्युपस्थानानां सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । सम्यक्प्रहाणानां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । ऋद्धिपादानां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां निर्याणमिच्छेत् । इन्द्रियाणां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । बलानां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । बोध्यङ्गानां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । आर्याष्टाङ्गमार्गस्य च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत् । तत् कस्य हेतोस्तथाहि सुभूते यः स्मृत्युपस्थानानां स्वभावो न स त्रैधातुकान्निर्याति । न सर्वाकारज्ञतायां तिष्ठति । यः सम्यक्प्रहाणानां स्वभावो न स त्रैधातुकान्निर्याति । न सर्वाकारज्ञतायाः तिष्ठति । य ऋद्धिपादानां स्वभावो न स त्रैधातुकान्निर्याति । न सर्वाकारज्ञतायां तिष्ठति । यऽ इन्द्रियाणां स्वभावो न स त्रैधातुकान्निर्याति । न सर्वाकारज्ञतायां तिष्ठति । यो बलानां स्वभावो न स त्रैधातुकान्निर्याति । न सर्वाकारज्ञतायां तिष्ठति । यो बोध्यङ्गानां स्वभावो न स त्रैधातुकान्निर्याति । न सर्वाकारज्ञतायां तिष्ठति । यो मार्गस्य स्वभावो न स त्रैधातुकान्निर्याति । न

सर्व्वाकारज्ञतायां तिष्ठति। तत् कस्य हेतोस्तथाहि। स्मृत्युपस्थान स्वभावः स्मृत्युपस्थानस्वभावेन शून्यं। सम्यक्प्रहाणस्वभावः सम्यक्प्रहाणस्वभावेन शून्यः। ऋद्धिपादस्वभाव ऋद्धिपादस्वभावेन शून्यः। इन्द्रियस्वभावः इन्द्रियस्वभावेन शून्यः। बलस्वभावो बलस्वभावेन शून्यः। बोध्यङ्गस्वभावो बोध्यङ्गस्वभावेन शून्यः। मार्गस्वभावो मार्गस्वभावेन शून्यः।

आर्य्यसत्यानां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। ध्यानानां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। अप्रमाणानां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। आरूप्य समापत्तीनां च निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। विमोक्षाणां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। न वाऽनुपूर्व्वविहार समापत्तीनां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। शून्यतायाः च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। आनिमित्तस्य च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। अप्रणिहितस्य च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। तत् कस्य हेतोस्तथाहि सुभूते य आर्य्यसत्यानां स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यो ध्यानानां स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यो ऽप्रमाणानां स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। य आरूप्य

समापत्तीनां स्वभावो न स त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । योऽष्टानां विमोक्षाणां स्वभावो न स त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । यो नवा ऽनुपूर्व्वविहार समापत्तीनां स्वभावो न स त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । यः शून्यतायाः स्वभावो न स त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । यो ऽप्रमाणहितस्य स्वभावो न स त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । तत् कस्य हेतोस्तथाहि सुभूते आर्य्यसत्यस्य स्वभाव आर्य्यसत्यस्वभावेन शून्यः । ध्यानस्वभावो ध्यानस्वभावेन शून्यः । अप्रमाणस्वभावो ऽप्रमाणस्वभावेन शून्यः । आरूप्यसमापत्ति-स्वभाव आरूप्यसमापत्तिस्वभावेन शून्यः । विमोक्षस्वभावो विमोक्षस्वभावेन शून्यः । नवाऽनुपूर्व्वविहार स्वभावो नवा ऽनुपूर्व्वविहारस्वभावेन शून्यः । शून्यतास्वभावः शून्यता स्वभावेन शून्यः । आनिमित्त स्वभाव आनिमित्त स्वभावेन शून्य । अप्रणिहितस्वभावो ऽप्रणिहितस्वभावेन शून्यः ।

अभिज्ञानां स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । समाधीनां स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । धारणीमुखानां स सुभूते निर्याण-मिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । तत् कस्य हेतो-स्तथाहि सुभूते यो ऽभिज्ञानां स्वभावो न स त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । यः समाधीनां स्वभावो न स त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । यो धारणी-

सुखानां स्वभावो न च त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । तत् कस्य हेतोस्तथाहि सुभूते अभिज्ञास्वभावो ऽभिज्ञास्वभावेन शून्यः । समाधिस्वभावः समाधिस्वभावेन शून्यः । धारणीमुखस्वभावो धारणीमुखस्वभावेन शून्यः ।

„ दशानां तथागतबलानां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । चतुर्णां वैशारद्यानां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । चतसृणां प्रतिसम्विदां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । अष्टादशानामावेणिक बुद्धधर्म्माणां च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । तत् कस्य हेतोस्तथाहि सुभूते यो दशानां तथागतबलानां स्वभावो न च त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । यश्चतुर्णां वैशारद्यानां स्वभावो न च त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । य श्चतसृणां प्रतिसम्विदां स्वभावो न च त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । यो ऽष्टादशानामावेणिकबुद्धधर्म्माणां स्वभावो न च त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । तत् कस्य हेतोस्तथाहि । सुभूते तथागमबलस्वभावस्तथागतबल स्वभावेन शून्यः । वैशारद्यस्वभावो वैशारद्यस्वभावेन शून्यः । प्रतिसम्वित्स्वभावः प्रतिसम्वित्स्वभावेन शून्यः । आवेणिक बुद्धधर्म्मस्वभाव आवेणिक बुद्धधर्म्म स्वभावेन शून्यः ।

अर्हतः सुभूते क्षीणाश्रवस्योत्पत्तिमिच्छेद्योऽलक्षणानां धर्म्माणां

निर्याणमिच्छेत्। प्रत्येकबुद्धस्य च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। बोधिसत्त्वस्य महासत्त्वस्य च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। तथागतस्यार्हतः सम्यक्सम्बुद्धस्य च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। तत्कस्य हेतोस्तथाहि सुभूते योऽर्हतः सम्यक् सम्बुद्धस्य स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यः प्रत्येकबुद्धस्य स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यो बोधिसत्त्वस्य महासत्त्वस्य स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यस्तथागतस्यार्हतः सम्यक्सम्बुद्धस्य स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। तत्कस्य हेतोस्तथा हि सुभूते अर्हत् स्वभावोऽर्हत् स्वभावेन शून्यः। प्रत्येकबुद्धस्वभावः प्रत्येकबुद्धस्वभावेन शून्यः। बोधिसत्त्वस्वभावो बोधिसत्त्वस्वभावेन शून्यः। तथागतस्वभावस्तथागतस्वभावेन शून्यः।

स्रोत आपत्तिफलस्य च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। सकृदागामिफलस्य च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। अनागामिफलस्य च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। अर्हत्त्वस्य च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। प्रत्येकबोधेः च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। मार्गाकारज्ञतायाः च सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। सर्व्वाकारज्ञतायाः

न सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। तत्कस्य हेतोस्तथा हि सुभूते यः स्रोत आपत्तिफलस्य स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यः सकृदागामिफलस्य स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। योऽनागामिफलस्य स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। योऽर्हत्त्वस्य स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यः प्रत्येकबोधः स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यो मार्गाकारज्ञतायाः स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। यः सर्व्वाकारज्ञतायाः स्वभावो न स त्रैधातुकान्निर्याति। न सर्व्वाकारज्ञतायां तिष्ठति। तत्कस्य हेतोस्तथा हि सुभूते स्रोत आपत्तिफलस्वभावः स्रोत आपत्तिफलस्वभावेन शून्यः। सकृदागामिफलस्वभावः सकृदागामिफलस्वभावेन शून्यः। अनागामिफलस्वभावोऽनागामिफलस्वभावेन शून्यः। अर्हत्त्वस्वभावोऽर्हत्त्वस्वभावेन शून्यः। प्रत्येकबोधिस्वभावः प्रत्येकबोधिस्वभावेन शून्यः। मार्गाकारज्ञतास्वभावो मार्गाकारज्ञतास्वभावेन शून्यः। सर्व्वाकारज्ञतास्वभावः सर्व्वाकारज्ञतास्वभावेन शून्यः।

शब्दः स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। निमित्तस्य स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। सङ्केतस्य स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। व्यवहारस्य स सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत्। प्रज्ञप्तेः स

सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । तत्कस्य हेतोस्तथा हि नामशून्यता नामशून्यतास्वभावेन शून्या । निमित्तशून्यता निमित्तशून्यतास्वभावेन शून्या । सङ्केतशून्यता सङ्केतशून्यतास्वभावेन शून्या । व्यवदानशून्यता व्यवदानशून्यतास्वभावेन शून्या । प्रज्ञप्तिशून्यता प्रज्ञप्तिशून्यतास्वभावेन शून्या ।

अनुत्पादस्य सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । अनिरोधस्य सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । संक्लेशस्य सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । व्यवदानस्य सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । अनभिसंस्कारस्य सुभूते निर्याणमिच्छेद्योऽलक्षणानां धर्म्माणां निर्याणमिच्छेत् । तत्कस्य हेतोस्तथाहि योऽनुत्पादस्य स्वभावो न स त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । योऽनिरोधस्वभावो न स त्रैधातुन्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । यः संक्लेशस्य स्वभावो न स त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । यो व्यवदानस्य स्वभावो न स त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । योऽनभिसंस्कारस्य स्वभावो न स त्रैधातुकान्निर्याति । न सर्व्वाकारज्ञतायां तिष्ठति । तत्कस्य हेतोस्तथाहि । अनुत्पादस्वभावोऽनुत्पादस्वभावेन शून्यः । निरोधस्वभावो निरोध स्वभावेन शून्यः । संक्लेशस्वभावः संक्लेशस्वभावेन शून्यः । व्यवदानस्वभावो व्यवदानस्वभावेन शून्यः । अनभिसंस्कारस्वभावोऽनभिसंस्कारस्वभावेन शून्यः ।

तद्नेनापि ते सुभूते पर्य्यायेणैवं वेदितव्यम्। महायानं त्रैधातुकान्निर्यातिः। येन सर्व्वाकारज्ञता तेन यास्यत्याख्यातम् स्थानं। यत्पुनः सुभूतिरेवमाह। क्व तद्यानं स्थास्यतीति। न क्वचित्तद्यानं स्थास्यति। तत्कस्य हेतोस्तथा ह्यस्थिताः सर्व्वधर्म्माः प्रतिष्ठाऽनुपलब्धितः।, अपि तु खलु पुनः सुभूते अस्थानस्थान-योगेन तद्यान स्थास्यति। तद्यथापि नामसुभूते धर्म्मधातुर्न स्थितो नाऽस्थितः। एवमेव सुभूते तद्यानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते तथता न स्थिता नाऽस्थिता। एवमेव सुभूते तद्यानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते भूतकोटिर्न स्थिता नाऽस्थिता। एवमेव तद्यानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूतेऽचिन्त्यधातुर्न स्थितो नाऽस्थित.। एवमेव तद्यानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूते धर्म्मधातुस्वभावः स्थितो वाऽस्थितो वा। न तथतायाः स्वभावः स्थितो वाऽस्थितो वा। न भूतकोटेः स्वभावः स्थितो वाऽस्थितो वा। नाऽचिन्त्यधातुस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि सुभूते। धर्म्मधातु-स्वभावो धर्म्मधातुस्वभावेन शून्यः। तथता स्वभावस्तथता स्वभावेन शून्यः। भूतकोटेः स्वभावो भूतकोटिस्वभावेन शून्यः। अचिन्त्यधातु-स्वभावोऽचिन्त्यधातुस्वभावेन शून्यः। तद्यथापि नाम सुभूते आकाशधातुर्न स्थितो नाऽस्थितः। एवमेव सुभूते तद्यान न स्थित नाऽस्थितं। तद्यथापि नाम सुभूते रागक्षयधातुर्न स्थितो नाऽस्थितः। एवमेव सुभूते तद्यानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते प्रहाणधातुर्न स्थितो नाऽस्थित.। एवमेव सुभूते

तद्यथापि नाम सुभूते रूपशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते शब्दशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते गन्धशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते रसशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते स्पर्शशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते धर्मशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूते रूपस्वभावः स्थितो वाऽस्थितो वा। न शब्दस्वभावः स्थितो वाऽस्थितो वा। न गन्धस्वभावः स्थितो वाऽस्थितो वा। न रसस्वभावः स्थितो वाऽस्थितो वा। न स्पर्शस्वभावः स्थितो वाऽस्थितो वा। न धर्मस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि रूपं रूपेण शून्यं। शब्दो शब्देन शून्यः। गन्धो गन्धेन शून्यः। रसो रसेन शून्यः। स्पर्शः स्पर्शेन शून्यः। धर्माः धर्मैः शून्याः।

तद्यथापि नाम सुभूते चक्षुर्विज्ञानशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते श्रोत्रविज्ञानशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते घ्राणविज्ञानशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते

तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते जिह्वाविज्ञानशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते कायविज्ञानशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते मनो विज्ञानशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूते चक्षुर्विज्ञानस्वभावः स्थितो वाऽस्थितो वा। न श्रोत्रविज्ञानस्वभाव स्थितो वाऽस्थितो वा। न घ्राणविज्ञानस्वभावः स्थितो वाऽस्थितो वा। न जिह्वाविज्ञानस्वभावः स्थितो वाऽस्थितो वा। न कायविज्ञानस्वभावः स्थितो वाऽस्थितो वा। मनोविज्ञानस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि चक्षुर्विज्ञानं चक्षुर्विज्ञानेन शून्यं। श्रोत्रविज्ञानं श्रोत्रविज्ञानेन शून्यं। घ्राणविज्ञानं घ्राणविज्ञानेन शून्यं। जिह्वाविज्ञानं जिह्वाविज्ञानेन शून्यं। कायविज्ञानं कायविज्ञानेन शून्यं। मनोविज्ञानं मनोविज्ञानेन शून्यम्।

तद्यथापि नाम सुभूते चक्षुःसंस्पर्शशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते श्रोत्रसंस्पर्शशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते घ्राणसंस्पर्शशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते जिह्वासंस्पर्शशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं

तद्यानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते विरागधातुर्न स्थितो नाऽस्थितः। एवमेव सुभूते यद्यानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते निरोधधातुर्न स्थितो नाऽस्थितः। एवमेव सुभूते तद्यानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूते। आकाशधातुः स्थितो वाऽस्थितो वा। न रागक्षयधातुस्वभावः स्थितो वाऽस्थितो वा। न प्रहाणधातुस्वभावः स्थितो वाऽस्थितो वा। न विरागधातुस्वभावः स्थितो वाऽस्थितो वा। न निरोधधातुस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि सुभूते आकाशधातुस्वभाव आकाशधातुस्वभावेन शून्यः। रागक्षयधातुस्वभावो रागक्षयधातुस्वभावेन शून्यः। प्रहाणधातुस्वभावः प्रहाणधातुस्वभावेन शून्यः। विरागधातुस्वभावो विरागधातुस्वभावेन शून्यः। निरोधधातुस्वभावो निरोधधातुस्वभावेन शून्यः।

तद्यथापि नाम सुभूते रूपशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते वेदनाशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते संज्ञाशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं। न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते संस्कारशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते विज्ञानशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोस्तथाहि सुभूते न रूपस्वभावः स्थितो वाऽस्थितो वा। न वेदनास्वभावः स्थितो

वाऽस्थितो वा। न संज्ञास्वभावः स्थितो वाऽस्थितो वा। न संस्कार-स्वभावः स्थितो वाऽस्थितो वा। न विज्ञानस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि। रूपं रूपेण शून्यं वेदना वेदनया शून्या। संज्ञा संज्ञया शून्या। संस्काराः संस्कारैः शून्याः। विज्ञानं विज्ञानेन शून्यम्।

तद्यथापि नाम सुभूते चक्षुः शून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते श्रोत्रशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते घ्राणशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते जिह्वाशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते कायशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते मनः शून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूते चक्षुःस्वभावः स्थितो वाऽस्थितो वा। न श्रोत्रस्वभावः स्थितो वाऽस्थितो वा। न घ्राणस्वभावः स्थितो वाऽस्थितो वा। न जिह्वास्वभावः स्थितो वाऽस्थितो वा। काय-स्वभावः स्थितो वाऽस्थितो वा। मनःस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि चक्षुश्चक्षुषा शून्यं श्रोत्रं श्रोत्रेण शून्यं। घ्राणं घ्राणेन शून्यं। जिह्वा जिह्वया शून्या कायः कायेन शून्यः। मनो मनसा शून्यं।

नाऽस्थितं। तद्यथापि नाम सुभूते कायसंस्पर्शशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते मनःसंस्पर्शशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि चक्षुःसंस्पर्शस्वभावः स्थितो वाऽस्थितो वा। न श्रोत्रसंस्पर्शस्वभावः स्थितो वाऽस्थितो वा। न घ्राणसंस्पर्शस्वभावः स्थितो वाऽस्थितो वा। न जिह्वासंस्पर्शस्वभावः स्थितो वाऽस्थितो वा। न कायसंस्पर्शस्वभावः स्थितो वाऽस्थितो वा। न मनः संस्पर्शस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि सुभूते चक्षुःसंस्पर्शश्चक्षुःसंस्पर्शेन शून्यः। श्रोत्रसंस्पर्शः श्रोत्रसंस्पर्शेन शून्यः। घ्राणसंस्पर्शो घ्राणसंस्पर्शेन शून्यः। जिह्वासंस्पर्शो जिह्वासंस्पर्शेन शून्यः। कायसंस्पर्शः कायसंस्पर्शेन शून्यः। मनःसंस्पर्शो मनःसंस्पर्शेन शून्यः।

तद्यथापि नाम सुभूते चक्षुःसंस्पर्शप्रत्ययवेदितशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते श्रोत्रसंस्पर्शप्रत्ययवेदितशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते घ्राणसंस्पर्शप्रत्ययवेदितशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते जिह्वासंस्पर्शप्रत्ययवेदितशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते कायसंस्पर्शप्रत्ययवेदितशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं।

तद्यथापि नाम सुभूते मनःसंस्पर्शप्रत्ययवेदितशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूते चक्षुःसंस्पर्शप्रत्ययवेदितस्वभावः स्थितो वाऽस्थितो वा। न श्रोत्रसंस्पर्शप्रत्ययवेदितस्वभावः स्थितो वाऽस्थितो वा। न घ्राणसंस्पर्शप्रत्ययवेदितस्वभावः स्थितो वाऽस्थितो वा। न जिह्वासंस्पर्शप्रत्ययवेदितस्वभावः स्थितो वाऽस्थितो वा। न कायसंस्पर्शप्रत्ययवेदितस्वभावः स्थितो वाऽस्थितो वा। न मनःसंस्पर्शप्रत्ययवेदितस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि चक्षुःसंस्पर्शप्रत्ययवेदितं चक्षुःसंस्पर्शप्रत्ययवेदितेन शून्यं। श्रोत्रसंस्पर्शप्रत्ययवेदितं श्रोत्रसंस्पर्शप्रत्ययवेदितेन शून्यं। घ्राणसंस्पर्शप्रत्ययवेदितं घ्राणसंस्पर्शप्रत्ययवेदितेन शून्यं। जिह्वासंस्पर्शप्रत्ययवेदितं जिह्वासंस्पर्शप्रत्ययवेदितेन शून्यं। कायसंस्पर्शप्रत्ययवेदितं कायसंस्पर्शप्रत्ययवेदितेन शून्यं। मनःसंस्पर्शप्रत्ययवेदितं मनःसंस्पर्शप्रत्ययवेदितेन शून्यम्।

तद्यथापि नाम सुभूते स्वप्नो न स्थितो नाऽस्थितः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते माया न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते मरीचिर्न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते प्रतिश्रुत्का न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते प्रतिभासो न स्थितो नाऽस्थितः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं।

तद्यथापि नाम सुभूते तथागतनिर्म्मितो न स्थितो नाऽस्थितः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि स्वप्नस्वभावः स्थितो वाऽस्थितो वा। न मायास्वभावः स्थितो वाऽस्थितो वा। न मरीचिस्वभावः स्थितो वाऽस्थितो वा। न प्रतिश्रुत्कस्वभावः स्थितो वाऽस्थितो वा। न प्रतिभासस्वभावः स्थितो वाऽस्थितो वा। न तथागतनिर्म्मितस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि स्वप्नः स्वप्नेन शून्यः। माया मायया शून्या। मरीचिर्मरीच्या शून्या। प्रतिश्रुत्का प्रतिश्रुत्कया शून्या। प्रतिभासः प्रतिभासेन शून्यः। तथागतनिर्म्मितस्तथागतनिर्म्मितेन शून्यः।

तद्यथापि नाम सुभूते दानपारमिता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते शीलपारमिता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते क्षान्तिपारमिता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते वीर्य्यपारमिता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते ध्यानपारमिता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते प्रज्ञापारमिता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूते दानपारमितास्वभावः स्थितो वाऽस्थितो वा। न

शीलपारमितास्वभावः स्थितो वाऽस्थितो वा । न क्षान्तिपारमितास्वभावः स्थितो वाऽस्थितो वा । न वीर्य्यपारमितास्वभावः स्थितो वाऽस्थितो वा । न ध्यानपारमितास्वभावः स्थितो वाऽस्थितो वा । न प्रज्ञापारमितास्वभावः स्थितो वाऽस्थितो । तत्कस्य हेतोस्तथाहि दानपारमिता दानपारमितया शून्या । शीलपारमिता शीलपारमितया शून्या । क्षान्तिपारमिता क्षान्तिपारमितया शून्या । वीर्य्यपारमिता वीर्य्यपारमितया शून्या । ध्यानपारमिता ध्यानपारमितया शून्या । प्रज्ञापारमिता प्रज्ञापारमितया शून्या ।

तद्यथापि नाम सुभूते अध्यात्मशून्यता न स्थिता नाऽस्थिता । एवमेव सुभूते तन्महायानं न स्थितं । तद्यथापि नाम सुभूते बहिर्द्धाशून्यता न स्थिता नाऽस्थिता । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं । तद्यथापि नाम सुभूते अध्यात्मबहिर्द्धाशून्यता न स्थिता नाऽस्थिता । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं । तद्यथापि नाम सुभूते शून्यताशून्यता न स्थिता नाऽस्थिता । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं । तद्यथापि नाम सुभूते महाशून्यता न स्थिता नाऽस्थिता । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं । तद्यथापि नाम सुभूते परमार्थशून्यता न स्थिता नाऽस्थिता । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थित । तद्यथापि नाम सुभूते संस्कृतशून्यता न स्थिता नाऽस्थिता । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं । तद्यथापि नाम सुभूतेऽसंस्कृतशून्यता न स्थिता नाऽस्थिता । एवमेव सुभूते

तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते अत्यन्तशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूतेऽनवराग्रशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूतेऽनवकारशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते प्रकृतिशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते सर्वधर्मशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते स्वलक्षणशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूतेऽनुपलम्भशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूतेऽभावशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते स्वभावशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते अभावस्वभावशून्यता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितम्।

तत्कस्य हेतोर्न हि सुभूतेऽध्यात्मशून्यतास्वभावः स्थितो वाऽस्थितो वा। न बहिर्धाशून्यतास्वभावः स्थितो वाऽस्थितो वा। नाऽध्यात्मबहिर्धाशून्यतास्वभावः स्थितो वाऽस्थितो वा। न शून्यता-

शून्यतास्वभावः स्थितो वाऽस्थितो वा। न महाशून्यतास्वभावः स्थितो वाऽस्थितो वा। न परमार्थशून्यतास्वभावः स्थितो वाऽस्थितो वा। न संस्कृतशून्यतास्वभावः स्थितो वाऽस्थितो वा। नाऽसंस्कृतशून्यतास्वभावः स्थितो वाऽस्थितो वा। नात्यन्तशून्यतास्वभावः स्थितो वाऽस्थितो वा। नाऽनवराग्रशून्यतास्वभावः स्थितो वाऽस्थितो वा। नाऽनवकारशून्यतास्वभावः स्थितो वाऽस्थितो वा। न प्रकृतिशून्यतास्वभावः स्थितो वाऽस्थितो वा। न सर्व्वधर्म्मशून्यतास्वभावः स्थितो वाऽस्थितो वा। न स्वलक्षणशून्यतास्वभावः स्थितो वाऽस्थितो वा। नाऽनुपलम्भशून्यतास्वभावः स्थितो वाऽस्थितो वा। नाऽभावशून्यतास्वभावः स्थितो वाऽस्थितो वा। न स्वभावशून्यतास्वभावः स्थितो वाऽस्थितो वा। नाऽभावस्वभावशून्यतास्वभावः स्थितो वाऽस्थितो वा।

तत्कस्य हेतोस्तथा ह्यध्यात्मशून्यताऽध्यात्मशून्यतया शून्या। बहिर्द्धाशून्यता बहिर्द्धाशून्यतया शून्या। अध्यात्मबहिर्द्धाशून्यताऽध्यात्मबहिर्द्धाशून्यतया शून्या। शून्यताशून्यता शून्यताशून्यतया शून्या। महाशून्यता महाशून्यतया शून्या। परमार्थशून्यता परमार्थशून्यतया शून्या। संस्कृतशून्यता संस्कृतशून्यतया शून्या। असंस्कृतशून्यता असंस्कृतशून्यतया शून्या। अत्यन्तशून्यता अत्यन्तशून्यतया शून्या। अनवराग्रशून्यता अनवराग्रशून्यतया शून्या। अनवकारशून्यताऽनवकारशून्यतया शून्या। प्रकृतिशून्यता प्रकृतिशून्यतया शून्या। सर्व्वधर्म्मशून्यता सर्व्वधर्म्मशून्यतया शून्या। स्वलक्षणशून्यता स्वलक्षणशून्यतया शून्या। अनुपलम्भशून्यताऽनुपलम्भ-

शून्यतया शून्या । अभावशून्यता अभावशून्यतया शून्या । स्वभावशून्यता स्वभावशून्यतया शून्या । अभावस्वभावशून्यता अभावस्वभावशून्यतया शून्या ।

तद्यथापि नाम सुभूते स्मृत्युपस्थानानि न स्थितानि नाऽस्थितानि । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं । तद्यथापि नाम सुभूते सम्यक्प्रहाणानि न स्थितानि नाऽस्थितानि । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं । तद्यथापि नाम सुभूते ऋद्धिपादाः न स्थिता नाऽस्थिताः । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं । तद्यथापि नाम सुभूते इन्द्रियाणि न स्थितानि नाऽस्थितानि । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं । तद्यथापि नाम सुभूते बलानि न स्थितानि नाऽस्थितानि । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं । तद्यथापि नाम सुभूते बोध्यङ्गानि न स्थितानि नाऽस्थितानि । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं । तद्यथापि नाम सुभूते आर्याष्टाङ्गमार्गो न स्थितो नाऽस्थितः । एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं । तत्कस्य हेतोर्न हि सुभूते स्मृत्युपस्थानस्वभावः स्थितो वाऽस्थितो वा । न सम्यक्प्रहाणस्वभावः स्थितो वाऽस्थितो वा । नर्द्धिपादस्वभावः स्थितो वाऽस्थितो वा । नेन्द्रियस्वभावः स्थितो वाऽस्थितो वा । न बलस्वभावः स्थितो वाऽस्थितो वा । न बोध्यङ्गस्वभावः स्थितो वाऽस्थितो वा । नार्याष्टाङ्गमार्गस्वभावः स्थितो वाऽस्थितो वा । तत्कस्य हेतोस्तथा हि स्मृत्युपस्थानानि स्मृत्युपस्थानैः शून्यानि । सम्यक्प्रहाणानि सम्यक्प्रहाणैः शून्यानि । ऋद्धिपादाः

ऋद्धिपादैः शून्याः। इन्द्रियाणीन्द्रियैः शून्यानि। बलानि बलैः शून्यानि। बोध्यङ्गानि बोध्यङ्गैः शून्यानि। मार्गो मार्गेण शून्यः।

तद्यथापि नाम सुभूते आर्य्यसत्यानि न स्थितानि नाऽस्थितानि। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते ध्यानानि न स्थितानि नाऽस्थितानि। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते अप्रमाणानि न स्थितानि नाऽस्थितानि। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते आरूप्यसमापत्तयो न स्थिता नाऽस्थिताः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूतेऽष्टौ विमोक्षाः न स्थिता नाऽस्थिताः। एवमेव सुभूते तन्महायानं न स्थित नाऽस्थित। तद्यथापि नाम सुभूते अनुपूर्व्वविहारसमापत्तयो न स्थिताः नाऽस्थिताः। एवमेव सुभूते तन्महायान न स्थितं नाऽस्थित। तद्यथापि नाम सुभूते शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि न स्थितानि नाऽस्थितानि। एवमेव सुभूते तन्महायान न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते अभिज्ञा न स्थिता नाऽस्थिता। एवमेवसुभूते तन्महायान न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते समाधयो न स्थिता नाऽस्थिताः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते धरणीमुखानि न स्थितानि नाऽस्थितानि। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूते आर्य्यसत्यस्वभावः स्थितो वाऽस्थितो वा। न ध्यानस्वभावः स्थितो वाऽस्थितो वा। नाऽप्र-

माणस्वभावः स्थितो वाऽस्थितो वा। नारूप्यसमापत्तिस्वभावः स्थितो वाऽस्थितो वा। नाष्टविमोक्षस्वभावः स्थितो वाऽस्थितो वा। नाऽनुपूर्व्वविहारसमापत्तिस्वभावः स्थितो वाऽस्थितो वा। न शून्यतानिमित्ताप्रणिहितविमोक्षस्वभावः स्थितो वाऽस्थितो वा नाऽभिज्ञास्वभावः स्थितो वाऽस्थितो वा। न समाधिस्वभावः स्थितो वाऽस्थितो वा। न धारणीमुखस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा ह्यार्य्यसत्यान्यार्य्यसत्यैः शून्यानि। ध्यानानि ध्यानैः शून्यानि। अप्रमाणान्यप्रमाणैः शून्यानि। आरूप्यसमापत्तयः आरूप्यसमापत्तिभिः शून्याः। विमोक्षाः विमोक्षैः शून्याः। अनुपूर्व्वविहारसमापत्तयोऽनुपूर्व्वविहारसमापत्तिभिः शून्याः। शून्यतानिमित्ताऽप्रणिहितविमोक्षमुखानि शून्यतानिमित्ताप्रणिहितविमोक्षमुखैः शून्यानि। अभिज्ञाः अभिज्ञाभिःशून्याः। समाधयः समाधिभिः शून्याः। धारणीमुखानि धारणीमुखैः शून्यानि।

तद्यथापि नाम सुभूते दशतथागतबलानि न स्थितानि नाऽस्थितानि। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते चत्वारिवैशारद्यानि न स्थितानि नाऽस्थितानि। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते चतस्रः प्रतिसम्विदो न स्थिताः नाऽस्थिताः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते महाकरुणा न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायान न स्थित नाऽस्थित। तद्यथापि नाम सुभूते ष्टादशावेणिकबुद्धधर्म्मा न स्थिताः नाऽस्थिताः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थित।

तत्कस्य हेतोर्न हि सुभूते दशतथागतबलास्वभावः स्थितो वाऽस्थितो वा। न वैशारद्यस्वभावः स्थितो वाऽस्थितो वा। न प्रतिसम्वित् स्वभावः स्थितो वाऽस्थितो वा। न महाकरुणास्वभावः स्थितो वाऽस्थितो वा। नावेणिकबुद्धधर्मस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि दशतथागतबलानिबलैः शून्यानि। चत्वारि वैशारद्यानि वैशारद्यैः शून्यानि। चतस्रः प्रतिसम्विदः प्रतिसम्वित् स्वभावैः शून्याः। महाकरुणामहाकरुणयाशून्या। अष्टादशावेणिक-बुद्धधर्माः आवेणिकबुद्धधर्मैः शून्याः।

तद्यथापि नाम सुभूतेऽर्हत् क्षीणास्रया न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायान न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते प्रत्येकबुद्धो न स्थितो नास्थितः। एवमेव सुभूते तन्महा-यानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूतेऽर्हत् क्षीणा-स्रवस्वभावः स्थितो वाऽस्थितो वा। न प्रत्येकबुद्धस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि अर्हत् स्वभावोऽर्हत् स्वभावेन शून्यः। प्रत्येकबुद्धस्वभावः प्रत्येकबुद्धस्वभावेन शून्यः।

तद्यथापि नाम सुभूते बोधिसत्त्वो न स्थितो नाऽस्थितः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते तथागतोऽर्हत् सम्यक्सम्बुद्धो न स्थितो नाऽस्थितः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूते बोधिसत्त्वस्वभावः स्थितो वाऽस्थितो वा। न तथागतस्वभावः स्थितो वाऽस्थितो। तत्कस्य हेतोस्तथा हि, बोधिसत्त्व स्वभावो बोधिसत्त्व स्वभावेन शून्यः। तथागत स्वभावस्तथागत स्वभावेन शून्यः।

तद्यथापि नाम सुभूते स्रोत आपत्तिफलं न स्थितं नाऽस्थितं। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते सकृदागामिफलं न स्थितं नाऽस्थितं। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते अनागामिफलं न स्थितं नाऽस्थितं। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूतेऽर्हत्वं न स्थितं नाऽस्थितं। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते प्रत्येक बोधिर्न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न सुभूते स्रोत आपत्तिफलस्वभावः स्थितो वाऽस्थितो वा। न सकृदागामिफलस्वभावः स्थितो वाऽस्थितो वा। नाऽनागामिफलस्वभावः स्थितो वाऽस्थितो वा। नार्हत्त्वस्वभावः स्थितो वाऽस्थितो वा। न प्रत्येकबोधिस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि स्रोत आपत्तिफलस्वभावः स्रोत आपत्तिफल-स्वभावेन शून्यः। सकृदागामिफलस्वभावः सकृदागामिफलस्वभावेन शून्यः। अनागामिफलस्वभावोऽनागामिफलस्वभावेन शून्यः। अर्हत्त्व-स्वभावोऽर्हत्त्वस्वभावेन शून्यः। प्रत्येकबोधिस्वभावः प्रत्येकबोधि-स्वभावेन शून्यः।

तद्यथापि नाम सुभूते मार्गाकारज्ञता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते सर्व्वाकारज्ञता न स्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न सुभूते मार्गाकारज्ञतास्वभावः स्थितो वाऽस्थितो वा। न सर्व्वाकारज्ञतास्वभावः

स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि मार्गाकारज्ञता-स्वभावो मार्गाकारज्ञतास्वभावेन शून्यः। सर्व्वाकारज्ञतास्वभावः सर्व्वाकारज्ञतास्वभावेन शून्यः।

तद्यथापि नाम सुभूते नाम स्वभावं न स्थितं नाऽस्थितं। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते निमित्तं न स्थितं नाऽस्थितं। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते सङ्केतो न स्थितो नाऽस्थितः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते व्यवहारो न स्थितो नाऽस्थितः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते प्रज्ञप्तिर्नस्थिता नाऽस्थिता। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूते नाम स्वभावः स्थितो वाऽस्थितो वा। न नाम निमित्तस्वभावः स्थितो वाऽस्थितो वा। न सङ्केतस्वभावः स्थितो वाऽस्थितो वा। न व्यवहारस्वभावः स्थितो वाऽस्थितो वा। न प्रज्ञप्तिस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि नाम स्वभावो नाम स्वभावेन शून्यः। निमित्तस्वभावो निमित्तस्वभावेन शून्यः। सङ्केतस्वभावः सङ्केत-स्वभावेन शून्यः। व्यवहारस्वभावो व्यवहारस्वभावेन शून्यः। प्रज्ञप्तिस्वभावः प्रज्ञप्तिस्वभावेन शून्यः।

तद्यथापि नाम सुभूतेऽनुत्पादो न स्थितो नाऽस्थितः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूते-ऽनिरोधो न स्थितो नाऽस्थितः। एवमेव सुभूते तन्महायानं

न स्थितं नाऽस्थितं। तद्यथापि ना सुभूतेऽसंक्लेशो न स्थितो नाऽस्थितः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तद्यथापि नाम सुभूतेऽव्यवदानं न स्थितं नाऽस्थितं। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूतेऽनुत्पादस्वभावः स्थितो वाऽस्थितो वा। न निरोधस्वभावः स्थितो वाऽस्थितो वा। नाऽसंक्लेशस्वभावः स्थितो वाऽस्थितो वा। नाऽव्यवदानस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि अनुत्पादस्वभावोऽनुत्पादस्वभावेन शून्यः। अनिरोधस्वभावोऽनिरोधस्वभावेन शून्यः। असंक्लेशस्वभावोऽसंक्लेशस्वभावेन शून्यः। अव्यवदानस्वभावोऽव्यवदानस्वभावेन शून्यः।

तद्यथापि नाम सुभूतेऽनभिसंस्कारो न स्थितो नाऽस्थितः। एवमेव सुभूते तन्महायानं न स्थितं नाऽस्थितं। तत्कस्य हेतोर्न हि सुभूतेऽनभिसंस्कारस्वभावः स्थितो वाऽस्थितो वा। तत्कस्य हेतोस्तथा हि अनभिसंस्कारस्वभावोऽनभिसंस्कारस्वभावेन शून्यः। अनेन पर्य्यायेण तद्यानं न क्वचित् स्यास्तथ्यस्थितस्थानयोगेन।

यत् पुनः सुभूतिरेवमाह कतेन यानेन निर्यास्यतीति। न कश्चित्तेन यानेन निर्यास्यतीति। न कश्चित्तेन यानेन निर्याति। तत्कस्य हेतोस्तथा हि सुभूते यच्च तद्यानं यश्च निर्यायाद्यो न च निर्यायाद्यतश्च निर्यायात्। सर्व्वं ते धर्म्मा न संविद्यन्ते नोपलभ्यन्ते। एवमसंविद्यमानेष्वनुपलभ्यमानेषु सर्व्वधर्म्मेषु कतमो धर्म्मः कतमेन धर्म्मेण निर्यास्यति। तत्कस्य हेतोस्तथा हि सुभूतेऽत्यन्ततयात्मा नोपलभ्यते। सत्त्वो नोपलभ्यते। जीवो नोपलभ्यते। जन्तुर्नोपलभ्यते।

पोषो नोपलभ्यते। पुरुषो नोपलभ्यते। पुद्गलो नोपलभ्यते। मनुजो नोपलभ्यते। मानवो नोपलभ्यते। कारको नोपलभ्यते। वेदको नोपलभ्यते। जानको नोपलभ्यते। पश्यको नोपलभ्यते। अत्यन्तविशुद्धितामुपादाय। आत्मनोऽत्यन्तविशुद्धितामुपादाय। सत्त्वस्यात्यन्तविशुद्धितामुपादाय। जीवस्याऽत्यन्तविशुद्धितामुपादाय। जन्तोरत्यन्तविशुद्धितामुपादाय। पोषस्याऽत्यन्तविशुद्धितामुपादाय। पुरुषस्याऽत्यन्तविशुद्धितामुपादाय। पुद्गलस्याऽत्यन्तविशुद्धितामुपादाय। मनुजस्यात्यन्तविशुद्धितामुपादाय। मानवस्यात्यन्तविशुद्धितामुपादाय। कारकस्याऽत्यन्तविशुद्धितामुपादाय। वेदकस्याऽत्यन्तविशुद्धितामुपादाय। जानकस्याऽत्यन्तविशुद्धितामुपादाय। पश्यकस्याऽत्यन्तविशुद्धितामुपादाय। धर्मधातुर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। तथतानोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। भूतकोटिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अचिन्त्यधातुर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। स्कन्धानोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। धातवो नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। आयतनानि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। प्रतीत्यसमुत्पादो नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। दानपारमिता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। शीलपारमिता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। क्षान्तिपारमिता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। वीर्यपारमिता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। ध्यानपारमिता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। प्रज्ञापारमिता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय।

अध्यात्मशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। बहिर्द्धाशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अध्यात्मबहिर्द्धाशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। शून्यताशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। महाशून्यतानोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। परमार्थशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। संस्कृतशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। असंस्कृतशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अत्यन्तशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अनवराग्रशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अनवकारशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। प्रकृतिशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। सर्व्वधर्म्मशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। स्वलक्षणशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अनुपलम्भशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अभावशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। स्वभावशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अभावस्वभावशून्यता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय।

स्मृत्युपस्थानानि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। सम्यक्प्रहाणानि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाया। ऋद्धिपादा नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। इन्द्रियाणि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। बलानि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। बोध्यङ्गानि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। आर्य्याष्टाङ्गमार्गो नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। आर्य्य-

बलानि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। ध्यानानि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। अप्रमाणानि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। आरूप्यसमापत्तयो नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। अष्टौ विमोक्षा नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। अनुपूर्व्वविहारसमापत्तयो नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। अभिज्ञानोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। समाधयो नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। धारणीमुखानि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। तथागतबलानि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। वैशारद्यानि नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। प्रतिसम्विदो नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। महाकरुणा नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। आवेणिकबुद्धधर्म्मानोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। स्रोत आपन्नो नोपलभ्यते अत्यन्तविशुद्धितामुपादाय। सकृदागामिनो नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। अनागामिनो नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। अर्हन्तो नोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। प्रत्येकबुद्धानोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। बोधिसत्त्वानोपलभ्यन्तेऽत्यन्तविशुद्धितामुपादाय। तथागतोऽर्हन् सम्यक्सम्बुद्धो नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। स्रोत आपत्तिफलं नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। सकृदागामिफलं नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अनागामिफलं नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अर्हत्वं नोपलभ्यतेऽत्यन्तविशुद्धिता-

सुपादाय। प्रत्येकबोधिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। मार्गाकारज्ञता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। सर्वाकारज्ञता नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अनुत्पादो नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अनिरोधो नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। असंक्लेशो नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अव्यवदानं नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अनभिसंस्कारो नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। पूर्वान्तो नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अपरान्तो नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। प्रत्युत्पन्नं नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। आगामि नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। गतिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। स्थितिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। च्युतिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। उपपत्तिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। हानिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। वृद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। कस्माऽनुपलब्ध्यासर्वं नोपलभ्यते।

धर्मधात्वनुपलब्ध्या नोपलभ्यते धर्मधातुस्तत्कस्य हेतोर्न हि सुभूते धर्मधात्वनुपलब्धिरुपलभ्यते नोपलभ्यते। तथताऽनुपलब्ध्या नोपलभ्यते। तत्कस्य हेतोर्न हि सुभूते तथताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। भूतकोट्यनुपलब्ध्या नोपलभ्यते भूतकोटिस्तत्कस्य हेतोर्न हि सुभूते भूतकोट्यनुपलब्धिरुपलभ्यते नोपलभ्यते। अचिन्त्यधात्वनुपलब्ध्या नोपलभ्यते। अचिन्त्यधातुस्तत्कस्य हेतोर्न हि सुभूतेऽचिन्त्यधात्वनुपलब्धिरुपलभ्यते न नोपलभ्यते। स्कन्धधात्वायतनानुपलब्ध्या नोपलभ्यते स्कन्धधात्वायतनानि। तत्कस्य हेतोर्न हि

सुभूते स्कन्धधात्वायतनाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। प्रतत्य समुत्पादानुपलब्ध्या नोपलभ्यते प्रतीत्यसुत्पादः। तत्कस्य हेतोर्न हि सुभूते प्रतीत्य समुत्पादाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते।

दानपारमिताऽनुपलब्ध्या नोपलभ्यते दानपारमिता। तत्कस्य हेतोर्न हि सुभूते दानपारमितानुपलब्धिरुपलभ्यते न नोपलभ्यते। शीलपारमिताऽनुपलब्ध्या नोपलभ्यते शीलपारमिता। तत्कस्य हेतोर्न हि सुभूते शीलपारमिताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। क्षान्तिपारमिताऽनुपलब्ध्या नोपलभ्यते क्षान्तिपारमिता। तत्कस्य हेतोर्न हि सुभूते क्षान्तिपारमिताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। वीर्य्यपारमिताऽनुपलब्ध्या नोपलभ्यते वीर्य्यपारमिता। तत्कस्य हेतोर्न हि सुभूते वीर्य्यपारमिताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। ध्यानपारमिताऽनुपलब्ध्या नोपलभ्यते ध्यानपारमिता। तत्कस्य हेतोर्न हि सुभूते ध्यानपारमिताऽनुपलब्धिरुलभ्यते न नोपलभ्यते। प्रज्ञापारमिताऽनुपलब्ध्या नोपलभ्यते प्रज्ञापारमिता। तत्कस्य हेतोर्न हि सुभूते प्रज्ञापारमिताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते।

अध्यात्मशून्यताऽनुपलब्ध्या नोपलभ्यते अध्यात्मशून्यता। तत्कस्य हेतोर्न हि सुभूते अध्यात्मशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। वहिर्द्धाशून्यताऽनुपलब्ध्या नोपलभ्यते वहिर्द्धाशून्यता। तत्कस्य हेतोर्न हि सुभूते वहिर्द्धाशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अध्यात्मवहिर्द्धाशून्यताऽनुपलब्ध्या नोपलभ्यते अध्यात्मवहिर्द्धाशून्यता। तत्कस्य हेतोर्न हि सुभूते अध्यात्मवहिर्द्धाशून्यता-

ऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। शून्यताशून्यताऽनुपलब्ध्या नोपलभ्यते शून्यताशून्यता। तत्कस्य हेतोर्न हि सुभूते शून्यताशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। महाशून्यताऽनुपलब्ध्या नोपलभ्यते महाशून्यता। तत्कस्य हेतोर्न हि सुभूते महाशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। परमार्थशून्यताऽनुपलब्ध्या नोपलभ्यते परमार्थशून्यता। तत्कस्य हेतोर्न हि सुभूते परमार्थशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। संस्कृतशून्यताऽनुपलब्ध्या नोपलभ्यते संस्कृतशून्यता। तत्कस्य हेतोर्न हि सुभूते संस्कृतशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। असंस्कृतशून्यताऽनुपलब्ध्या नोपलभ्यतेऽसंस्कृतशून्यता। तत्कस्य हेतोर्न हि सुभूतेऽसंस्कृतशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अत्यन्तशून्यताऽनुपलब्ध्या नोपलभ्यतेऽत्यन्तशून्यता। तत्कस्य हेतोर्न हि सुभूतेऽत्यन्तशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अनवराग्रशून्यताऽनुपलब्ध्या नोपलभ्यतेऽनवराग्रशून्यता। तत्कस्य हेतोर्न हि सुभूते अनवराग्रशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अनवकारशून्यताऽनुपलब्ध्या नोपलभ्यतेऽनवकारशून्यता। तत्कस्य हेतोर्न हि सुभूतेऽनवकारशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। प्रकृतिशून्यताऽनुपलब्ध्या नोपलभ्यते प्रकृतिशून्यता। तत्कस्य हेतोर्न हि सुभूते प्रकृतिशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। सर्व्वधर्म्मशून्यताऽनुपलब्ध्या नोपलभ्यते सर्व्वधर्म्मशून्यता। तत्कस्य हेतोर्न हि सुभूते सर्व्वधर्म्मशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। स्वलक्षणशून्यताऽनुपलब्ध्या नोपलभ्यते स्वलक्षणशून्यता। तत्कस्य

हेतोर्न हि सुभूते स्वलक्षणशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अनुपलम्भशून्यताऽनुपलब्ध्या नोपलभ्यतेऽनुपलम्भशून्यता। तत्कस्य हेतोर्न हि सुभूतेऽनुपलम्भशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अभावशून्यताऽनुपलब्ध्या नोपलभ्यते अभावशून्यता। तत्कस्य हेतोर्न हि सुभूतेऽभावशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। स्वभावशून्यताऽनुपलब्ध्या नोपलभ्यते स्वभावशून्यता। तत्कस्य हेतोर्न हि सुभूते स्वभावशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अभावस्वभावशून्यताऽनुपलब्ध्या नोपलभ्यतेऽभावस्वभावशून्यता। तत्कस्य हेतोर्न हि सुभूते अभावस्वभावशून्यताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते।

स्मृत्युपस्थानाऽनुपलब्ध्या नोपलभ्यन्ते स्मृत्युपस्थानानि। तत्कस्य हेतोर्न हि सुभूते स्मृत्युपस्थानाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। सम्यक्प्रहाणाऽनुपलब्ध्या नोपलभ्यन्ते सम्यक्प्रहाणानि। तत्कस्य हेतोर्न हि सुभूते सम्यक्प्रहाणाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। ऋद्धिपादऽनुपलब्ध्या नोपलभ्यन्ते ऋद्धिपादाः। तत्कस्य हेतोर्न हि सुभूते ऋद्धिपादाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। इन्द्रियाऽनुपलब्ध्या नोपलभ्यन्ते इन्द्रियाणि। तत्कस्य हेतोर्न हि सुभूते इन्द्रियाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। बलाऽनुपलब्ध्या नोपलभ्यन्ते बलानि। तत्कस्य हेतोर्न हि सुभूते बलाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। बोध्यङ्गानुपलब्ध्या नोपलभ्यन्ते बोध्यङ्गानि। तत्कस्य हेतोर्न हि सुभूते बोध्यङ्गानुपलब्धिरुपलभ्यते न नोपलभ्यते। मार्गाऽनुपलब्ध्या नोपलभ्यते मार्गः। तत्कस्य हेतोर्न हि

सुभूते मार्गोऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। आर्य्यसत्याऽनुपलब्ध्या नोपलभ्यन्ते आर्य्यसत्यानि। तत्कस्य हेतोर्न हि सुभूते आर्य्यसत्याऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। ध्यानाऽनुपलब्ध्या नोपलभ्यन्ते ध्यानानि। तत्कस्य हेतोर्न हि सुभूते ध्यानाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अप्रमाणाऽनुपलब्ध्या नोपलभ्यन्तेऽप्रमाणानि। तत्कस्य हेतोर्न हि सुभूतेऽप्रमाणाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। आरूप्यसमापत्त्यनुपलब्ध्या नोपलभ्यन्ते आरूप्यसमापत्तयः। तत्कस्य हेतोर्न हि सुभूते आरूप्यसमापत्त्यनुपलब्धिरुपलभ्यते न नोपलभ्यते। विमोक्षाऽनुपलब्ध्या नोपलभ्यन्ते विमोक्षाः। तत्कस्य हेतोर्न हि सुभूते विमोक्षाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अनुपूर्व्वविहारसमापत्त्यनुपलब्ध्या नोपलभ्यन्तेऽनुपूर्व्वविहारसमापत्तयः। तत्कस्य हेतोर्न हि सुभूते अनुपूर्व्वविहारसमापत्त्यनुपलब्धिरुपलभ्यते न नोपलभ्यते। शून्यतानिमित्ताप्रणिहितविमोक्षमुखाऽनुपलब्ध्या नोपलभ्यन्ते शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि। तत्कस्य हेतोर्न हि सुभूते शून्यतानिमित्ताप्रणिहितविमोक्षमुखाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अभिज्ञाऽनुपलब्ध्या नोपलभ्यतेऽभिज्ञा। तत्कस्य हेतोर्न हि सुभूतेऽभिज्ञाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। समाध्यनुपलब्ध्या नोपलभ्यन्ते समाधयः। तत्कस्य हेतोर्न हि सुभूते समाध्यनुपलब्धिरुपलभ्यते न नोपलभ्यते। धारणीमुखानुपलब्ध्या नोपलभ्यन्ते धारणीमुखानि। तत्कस्य हेतोर्न हि सुभूते धारणीमुखाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। तथागतबलानुपलब्ध्या नोपलभ्यन्ते

तथागतबलानि। तत्कस्य हेतोर्न हि सुभूते तथागतबलानुपलब्धिरुपलभ्यते न नोपलभ्यते। वैशारद्यानुपलब्ध्या नोपलभ्यन्ते वैशारद्यानि। तत्कस्य हेतोर्न हि सुभूते वैशारद्याऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। प्रतिसम्विदनुपलब्ध्या नोपलभ्यन्ते प्रतिसम्विदः। तत्कस्य हेतोर्न हि सुभूते प्रतिसम्विदनुपलब्धिरुपलभ्यते न नोपलभ्यते। महाकरुणाऽनुपलब्ध्या नोपलभ्यते महाकरुणा। तत्कस्य हेतोर्न हि सुभूते महाकरुणाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अष्टादशावेणिकबुद्धधर्माऽनुपलब्ध्या नोपलभ्यन्ते अष्टादशावेणिकबुद्धधर्माः। तत्कस्य हेतोर्न हि सुभूते अष्टादशावेणिकबुद्धधर्माऽनुपलब्धिरुपलभ्यते न नोपलभ्यते।

स्रोत आपन्नाऽनुपलब्ध्या नोपलभ्यते स्रोत आपन्नः। तत्कस्य हेतोर्न हि सुभूते स्रोत आपन्नाऽनुलब्धिरुपलभ्यते न नोपलभ्यते। सकृदागाम्यनुपलब्ध्या नोपलभ्यते सकृदागामि। तत्कस्य हेतोर्न हि सुभूते सकृदागाम्यनुपलब्धिरुपलभ्यते न नोपलभ्यते। अनागाम्यनुपलब्ध्या नोपलभ्यतेऽनागामि। तत्कस्य हेतोर्न हि सुभूते अनागाम्यनुपलब्धिरुपलभ्यते न नोपलभ्यते। अर्हत्त्वाऽनुपलब्ध्या नोपलभ्यतेऽर्हन्। तत्कस्य हेतोर्न हि सुभूतेऽर्हत्वाऽनुलब्धिरुपलभ्यते न नोपलभ्यते। प्रत्येकबुद्धाऽनुपलब्ध्या नोपलभ्यते प्रत्येकबुद्धः। तत्कस्य हेतोर्न हि सुभूते प्रत्येकबुद्धाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। बोधिसत्त्वाऽनुपलब्ध्या नोपलभ्यते बोधिसत्त्वः। तत्कस्य हेतोर्न हि सुभूते बोधिसत्त्वाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। तथागताऽनुपलब्ध्या नोपलभ्यते तथागतः। तत्कस्य हेतोर्न हि

सुभूते तथागताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। स्रोत आपत्तिफलानुपलब्ध्या नोपलभ्यते स्रोत आपत्तिफलं। तत्कस्य हेतोर्न हि सुभूते स्रोत आपत्तिफलानुपलब्धिरुपलभ्यते न नोपलभ्यते। सकृदागामिफलाऽनुपलब्ध्या नोपलभ्यते सकृदागामिफलं। तत्कस्य हेतोर्न हि सुभूते सकृदागामिफलाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अनागामिफलाऽनुपलब्ध्या नोपलभ्यतेऽनागामिफलं। तत्कस्य हेतोर्न हि सुभूते अनागामिफलाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अर्हत्त्वाऽनुपलब्ध्या नोपलभ्यते अर्हत्त्वं। तत्कस्य हेतोर्न हि सुभूते अर्हत्वाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। प्रत्येकबोध्यनुपलब्ध्या नोपलभ्यते प्रत्येकबोधिः। तत्कस्य हेतोर्न हि सुभूते प्रत्येकबोध्यनुपलब्धिरुपलभ्यते न नोपलभ्यते। मार्गाकारज्ञताऽनुपलब्ध्या नोपलभ्यते मार्गाकारज्ञता। तत्कस्य हेतोर्न हि सुभूते मार्गाकारज्ञताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। सर्व्वाकारज्ञताऽनुपलब्ध्या नोपलभ्यते सर्व्वाकारज्ञता। तत्कस्य हेतोर्न हि सुभूते सर्व्वाकारज्ञताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अनुत्पादाऽनुपलब्ध्या नोपलभ्यतेऽनुत्पादः। तत्कस्य हेतोर्न हि सुभूते अनुत्पादाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अनिरोधाऽनुपलब्ध्या नोपलभ्यतेऽनिरोधः। तत्कस्य हेतोर्न हि सुभूते अनिरोधाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। असंक्लेशाऽनुपलब्ध्या नोपलभ्यते असंक्लेशः। तत्कस्य हेतोर्न हि सुभूते असंक्लेशाऽनुपलब्धिरुपलभ्यते न नोपलभ्यते। अव्यवदानाऽनुपलब्ध्या नोपलभ्यतेऽव्यवदानं। तत्कस्य हेतोर्न हि सुभूते अव्यवदानाऽनुपलब्धि-

रुपलभ्यते न नोपलभ्यते । अनभिसंस्काराऽनुपलब्ध्या नोपलभ्यते-ऽनभिसंस्कारः । तत्कस्य हेतोर्न सुभूते ऽनभिसंस्कारानुपलब्धिरुपलभ्यते न नोपलभ्यते । पूर्वान्ताऽनुपलब्ध्या नोपलभ्यते पूर्वान्तः । तत्कस्य हेतोर्न हि सुभूते पूर्वान्ताऽनुपलब्धिरुपलभ्यते न नोपलभ्यते । अपरान्ताऽनुपलब्ध्या नोपलभ्यते ऽपरान्तः । तत्कस्य हेतोर्न हि सुभूते अपरान्तानुपलब्धिरुपलभ्यते न नोपलभ्यते । प्रत्युत्पन्नाऽनुपलब्ध्या नोपलभ्यते प्रत्युत्पन्नः । तत्कस्य हेतोर्न हि सुभूते प्रत्युत्पन्नानुपलब्धिरुपलभ्यते न नोपलभ्यते । आगत्यनुपलब्ध्या नोपलभ्यते आगतिः । तत्कस्य हेतोर्न हि सुभूते आगत्यनुपलब्धि-रुपलभ्यते न नोपलभ्यते । गत्यनुपलब्ध्या नोपलभ्यते गतिः । तत्कस्य हेतोर्न हि सुभूते गत्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । स्थित्यनुपलब्ध्या नोपलभ्यते स्थितिः । तत्कस्य हेतोर्न हि सुभूते स्थित्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । च्युत्यनुपलब्ध्या नोपलभ्यते च्युतिः । तत्कस्य हेतोर्न हि सुभूते च्युत्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । उपपत्त्यनुपलब्ध्या नोपलभ्यते उपपत्तिः । तत्कस्य हेतोर्न हि सुभूते उपपत्त्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । हान्यनुपलब्ध्या नोपलभ्यते हानिः । तत्कस्य हेतोर्न हि सुभूते हान्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । वृद्ध्यनुपलब्ध्या नोपलभ्यते वृद्धिः । तत्कस्य हेतोर्न हि सुभूते वृद्ध्यनुपलब्धिरुपलभ्यते न नोपलभ्यते ।

प्रथमाभूमिर्भूम्यनुपलब्ध्या नोपलभ्यते । तत्कस्य हेतोर्न हि सुभूते प्रथमभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । द्वितीया-

भूमिर्भूम्यनुपलब्ध्या नोपलभ्यते । तत्कस्य हेतोर्न हि सुभूते द्वितीयभूम्यनुपलब्धिरुपलभ्यते । तृतीयाभूमिर्भूम्यनुपलब्ध्या नोपलभ्यते । तत्कस्य हेतोर्न हि सुभूते तृतीयभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । चतुर्थीभूमिर्भूम्यनुपलब्ध्या नोपलभ्यते । तत्कस्य हेतोर्न हि सुभूते चतुर्थभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । पञ्चमीभूमिर्भूम्यनुपलब्ध्या नोपलभ्यते । तत्कस्य हेतोर्न हि सुभूते पञ्चमभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । षष्ठीभूमिर्भूम्यनुपलब्ध्या नोपलभ्यते । तत्कस्य हेतोर्न हि सुभूते षष्ठभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । सप्तमीभूमिर्भूम्यनुपलब्ध्या नोपलभ्यते । तत्कस्य हेतोर्न हि सुभूते सप्तमभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । अष्टमीभूमिर्भूम्यनुपलब्ध्या नोपलभ्यते । तत्कस्य हेतोर्न हि सुभूते अष्टमभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । नवमीभूमिर्भूम्यनुपलब्ध्या नोपलभ्यते । तत्कस्य हेतोर्न हि सुभूते नवमभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यते । दशमीभूमिर्भूम्यनुपलब्ध्या नोपलभ्यते । तत्कस्य हेतोर्न हि सुभूते दशमभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यते ।

कतमा प्रथमाभूमिः कतमा द्वितीयाभूमिः कतमा तृतीयाभूमिः कतमा चतुर्थीभूमिः कतमा पञ्चमीभूमिः कतमा षष्ठीभूमिः कतमा सप्तमी भूमिः कतमा अष्टमीभूमिः कतमा नवमीभूमिः कतमा दशमीभूमिः । यदुतशुक्लविदर्शनाभूमिर्गोत्रभूमिरष्टमकभूमिर्दर्शनभूमिः तनुभूमिर्वीतरागभूमिः कृताविभूमिः प्रत्येकबुद्धभूमिर्बोधिसत्त्वभूमिर्बुद्धभूमिः ।

अध्यात्मशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । बहिर्द्धाशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । अध्यात्मबहिर्द्धाशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । शून्यताशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । महाशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । परमार्थशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । संस्कृतशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । असंस्कृतशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । अत्यन्तशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । अनवराग्रशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । अनवकारशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । प्रकृतिशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । सर्व्वधर्म्मशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । स्वलक्षणशून्यतायाः प्रथमाभूमिर्नोलभ्यते । अनुपलम्भशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । अभावशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । स्वभावशून्यतायाः प्रथमाभूमिर्नोपलभ्यते । अभावस्वभावशून्यतायाः प्रथमाभूमिर्नोपलभ्यते ।

अध्यात्मशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । बहिर्द्धाशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । अध्यात्मबहिर्द्धाशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । शून्यताशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । महाशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । परमार्थशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । संस्कृतशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । असंस्कृतशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । अत्यन्तशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । अनवराग्रशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । अनवकारशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । प्रकृतिशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । सर्व्वधर्म्मशून्यतायाद्वितीयाभूमिर्नोपलभ्यते ।

स्वलक्षणशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । अनुपलम्भशून्यताया-द्वितीयाभूमिर्नोपलभ्यते । अभावशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । स्वभावशून्यतायाद्वितीयाभूमिर्नोपलभ्यते । अभावस्वभावशून्यताया-द्वितीयाभूमिर्नोपलभ्यते ।

अध्यात्मशून्यतायास्तृतीयाभूमिर्नोपलभ्यते । बहिर्द्धाशून्यताया-स्तृतीयाभूमिर्नोपलभ्यते । अध्यात्मबहिर्द्धाशून्यतायास्तृतीयाभूमि-र्नोपलभ्यते । शून्यताशून्यतायास्तृतीयाभूमिर्नोपलभ्यते । महा-शून्यतायास्तृतीयाभूमिर्नोपलभ्यते । परमार्थशून्यतायास्तृतीयाभूमि-र्नोपलभ्यते । संस्कृतशून्यतायास्तृतीयाभूमिर्नोपलभ्यते । असंस्कृत-शून्यतायास्तृतीयाभूमिर्नोपलभ्यते । अत्यन्तशून्यतायास्तृतीयाभूमि-र्नोपलभ्यते । अनवराग्रशून्यतायास्तृतीयाभूमिर्नोपलभ्यते । अनव-कारशून्यतायास्तृतीयाभूमिर्नोपलभ्यते । प्रकृतिशून्यतायास्तृतीया-भूमिर्नोपलभ्यते । सर्व्वधर्मशून्यतायास्तृतीयाभूमिर्नोपलभ्यते । स्वलक्षणशून्यतायास्तृतीयाभूमिर्नोपलभ्यते । अनुपलम्भशून्यताया-स्तृतीयाभूमिर्नोपलभ्यते । अभावशून्यतायास्तृतीयाभूमिर्नोपलभ्यते । स्वभावशून्यतायास्तृतीयाभूमिर्नोपलभ्यते । अभावस्वभावशून्यताया-स्तृतीयाभूमिर्नोपलभ्यते ।

अध्यात्मशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते । बहिर्द्धाशून्यताया-श्चतुर्थीभूमिर्नोपलभ्यते । अध्यात्मबहिर्द्धाशून्यतायाश्चतुर्थीभूमिर्नोप-लभ्यते । शून्यताशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते । महाशून्यताया-श्चतुर्थीभूमिर्नोपलभ्यते । परमार्थशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते । संस्कृतशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते । असंस्कृतशून्यतायाश्चतुर्थी-

भूमिर्नोपलभ्यते। अत्यन्तशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते। अनवरायशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते। अनवकारशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते। प्रकृतिशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते। सर्व्वधर्म्मशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते। स्वलक्षणशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते। अनुपलम्भशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते। अभावशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते। स्वभावशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते। अभावस्वभावशून्यतायाश्चतुर्थीभूमिर्नोपलभ्यते।

अध्यात्मशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। बहिर्द्धाशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। अध्यात्मबहिर्द्धाशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। शून्यताशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। महाशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। परमार्थशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। संस्कृतशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। असंस्कृतशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। अत्यन्तशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। अनवरायशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। अनवकारशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। प्रकृतिशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। सर्व्वधर्म्मशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। स्वलक्षणशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। अनुपलम्भशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। अभावशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। स्वभावशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते। अभावस्वभावशून्यतायाः पञ्चमीभूमिर्नोपलभ्यते।

अध्यात्मशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। बहिर्द्धाशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। अध्यात्मबहिर्द्धाशून्यतायाः षष्ठीभूमिर्नोप-

लभ्यते। शून्यताशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। महाशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। परमार्थशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। संस्कृतशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। असंस्कृतशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। अत्यन्तशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। अनवराग्रशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। अनवकारशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। प्रकृतिशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। सर्व्वधर्मशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। स्वलक्षणशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। अनुपलम्भशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। अभावशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। स्वभावशून्यतायाः षष्ठीभूमिर्नोपलभ्यते। अभावस्वभावशून्यतायाः षष्ठीभूमिर्नोपलभ्यते।

अध्यात्मशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। बहिर्द्धाशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। अध्यात्मबहिर्द्धाशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। शून्यताशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। महाशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। परमार्थशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। संस्कृतशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। असंस्कृतशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। अत्यन्तशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। अनवराग्रशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। अनवकारशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। प्रकृतिशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। सर्व्वधर्मशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। स्वलक्षणशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। अनुपलम्भशून्यतायाः सप्तमीभूमिर्नोपलभ्यते। अभावशून्यतायाः सप्तमीभूमिर्नोपलभ्यते।

स्वभावशून्यताया: सप्तमीभूमिर्नोपलभ्यते । अभावस्वभावशून्यताया: सप्तमीभूमिर्नोपलभ्यते ।

अध्यात्मशून्यताया अष्टमीभूमीर्नोपलभ्यते । बहिर्द्धाशून्यताया: अष्टमीभूमिर्नोपलभ्यते । अध्यात्मबहिर्द्धाशून्यताया: अष्टमीभूमिर्नोपलभ्यते । शून्यताशून्यताया: अष्टमीभूमिर्नोपलभ्यते । महाशून्यताया: अष्टमीभूमिर्नोपलभ्यते । परमार्थशून्यताया: अष्टमीभूमिर्नोपलभ्यते । संस्कृतशून्यताया: अष्टमीभूमिर्नोपलभ्यते । असंस्कृतशून्यताया: अष्टमीभूमिर्नोपलभ्यते । अत्यन्तशून्यताया: अष्टमीभूमिर्नोपलभ्यते । अनवराग्रशून्यताया: अष्टमीभूमिर्नोपलभ्यते । अनवकारशून्यताया: अष्टमीभूमिर्नोपलभ्यते । प्रकृतिशून्यताया: अष्टमीभूमिर्नोपलभ्यते । सर्व्वधर्मशून्यताया: अष्टमीभूमिर्नोपलभ्यते । स्वलक्षणशून्यताया: अष्टमीभूमिर्नोपलभ्यते । अनुपलम्भशून्यताया: अष्टमीभूमिर्नोपलभ्यते । अभावशून्यताया: अष्टमीभूमिर्नोपलभ्यते । स्वभावशून्यताया: अष्टमीभूमिर्नोपलभ्यते । अभावस्वभावशून्यताया: अष्टमीभूमिर्नोपलभ्यते ।

अध्यात्मशून्यताया नवमीभूमिर्नोपलभ्यते । बहिर्द्धाशून्यताया नवमीभूमिर्नोपलभ्यते । अध्यात्मबहिर्द्धाशून्यताया नवमीभूमिर्नोपलभ्यते । शून्यताशून्यताया नवमीभूमिर्नोपलभ्यते । महाशून्यताया नवमीभूमिर्नोपलभ्यते । परमार्थशून्यताया नवमीभूमिर्नोपलभ्यते । संस्कृतशून्यताया नवमीभूमिर्नोपलभ्यते । असंस्कृतशून्यताया नवमीभूमिर्नोपलभ्यते । अत्यन्तशून्यताया नवमीभूमिर्नोपलभ्यते । अनवराग्रशून्यताया नवमीभूमिर्नोपलभ्यते । अनवकारशून्यताया

नवमीभूमिर्नोपलभ्यते । प्रकृतिशून्यताया नवमीभूमिर्नोपलभ्यते । सर्व्वधर्म्मशून्यताया नवमीभूमिर्नोपलभ्यते । स्वलक्षणशून्यताया नवमीभूमिर्नोपलभ्यते । अनुपलम्भशून्यताया नवमीभूमिर्नोपलभ्यते । अभावशून्यताया नवमीभूमिर्नोपलभ्यते । स्वभावशून्यताया नवमीभूमिर्नोपलभ्यते । अभावस्वभावशून्यताया नवमीभूमिर्नोपलभ्यते ।

अध्यात्मशून्यताया दशमीभूमिर्नोपलभ्यते । बहिर्द्धाशून्यताया दशमीभूमिर्नोपलभ्यते । अध्यात्मबहिर्द्धाशून्यताया दशमीभूमिर्नोपलभ्यते । शून्यताशून्यताया दशमीभूमिर्नोपलभ्यते । महाशून्यताया दशमीभूमिर्नोपलभ्यते । परमार्थशून्यताया दशमीभूमिर्नोपलभ्यते । संस्कृतशून्यताया दशमीभूमिर्नोपलभ्यते । असंस्कृतशून्यताया दशमीभूमिर्नोपलभ्यते । अत्यन्तशून्यताया दशमीभूमिर्नोपलभ्यते । अनवराग्रशून्यताया दशमीभूमिर्नोपलभ्यते । अनवकारशून्यताया दशमीभूमिर्नोपलभ्यते । प्रकृतिशून्यताया दशमीभूमिर्नोपलभ्यते । सर्व्वधर्म्मशून्यताया दशमीभूमिर्नोपलभ्यते । स्वलक्षणशून्यताया दशमीभूमिर्नोपलभ्यते । अनुपलम्भशून्यताया दशमीभूमिर्नोपलभ्यते । अभावशून्यताया दशमीभूमिर्नोपलभ्यते । स्वभावशून्यताया दशमीभूमिर्नोपलभ्यते । अभावस्वभावशून्यताया दशमीभूमिर्नोपलभ्यते ।

तत्कस्य हेतोर्न हि सुभूते प्रथमाभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय । न द्वितीयाभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय । न तृतीयाभूम्यनुप-

लब्धिरुपलभ्यते न नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। न चतुर्थीभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। न पञ्चमीभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। न षष्ठीभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। न सप्तमीभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। नाष्टमीभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। न नवमीभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। न दशमीभूम्यनुपलब्धिरुपलभ्यते न नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय।

अध्यात्मशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। बहिर्धाशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अध्यात्मबहिर्धाशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। शून्यताशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। महाशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। परमार्थशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। संस्कृतशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। असंस्कृतशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अत्यन्तशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अनवराग्रशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अनवकारशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। प्रकृतिशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धिता-

मुपादाय। सर्व्वधर्मशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। स्वलक्षणशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अनुपलम्भशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अभावशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। स्वभावशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अभावस्वभावशून्यतया सत्त्वपरिपाको नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय।

अध्यात्मशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। बहिर्द्धाशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अध्यात्मबहिर्द्धाशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। शून्यताशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। महाशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। परमार्थशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। संस्कृतशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। असंस्कृतशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अत्यन्तशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अनवराग्रशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। अनवकारशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। प्रकृतिशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय। सर्व्वधर्मशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय।

स्वलक्षणशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धिता-मुपादाय । अनुपलम्भशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्त-विशुद्धितामुपादाय । अभावशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय । स्वभावशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय । अभावस्वभावशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यतेऽत्यन्तविशुद्धितामुपादाय ।

अध्यात्मशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। बहिर्द्धाशून्यतया पञ्च-चक्षूंषि नोपलभ्यन्ते। अध्यात्मबहिर्द्धाशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। शून्यताशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। महाशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। परमार्थशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। संस्कृत-शून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। असंस्कृतशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। अत्यन्तशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। अनवराग्रशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। अनवकारशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। प्रकृतिशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। सर्व्वधर्म्मशून्यतया पञ्च-चक्षूंषि नोपलभ्यन्ते। स्वलक्षणशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। अनु-पलम्भशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। अभावशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। स्वभावशून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। अभावस्वभाव-शून्यतया पञ्चचक्षूंषि नोपलभ्यन्ते। अत्यन्तविशुद्धितामुपादाय ।

एवं खलु सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्ननुपलम्भयोगेन सर्व्वधर्म्माणां महायानेन सर्व्वाकारज्ञतायां स्थास्यति ॥ ० ॥

शतसाहस्राः प्रज्ञापारमितायाः दशमः परिवर्त्तः ॥ ० ॥

# अथ एकादशः परिवर्त्तः ॥

अथायुष्मान् सुभूतिर्भगवन्तमेतदवोचत् । महायानं महायान-
मिति भगवन्नुच्यते सदेवासुरमानुषं लोकमभिभूयनिर्यास्यति
ते नोच्यते महायानमिति । आकाशसमं भगवंस्तन्महायानं ।
यथाकाशे अप्रमेयानामसंख्येयानां सत्त्वानामवकाशः । एवमेव
भगवन्नस्मिन् महायाने अप्रमेयानामसंख्येयानां सत्त्वानामवकाशः ।
अनेन भगवन् पर्य्यायेण महायानमिदं बोधिसत्त्वानां महासत्त्वानां ।
न चाऽस्य महायानस्यागमो वा निर्गमो वा स्थानं वा दृश्यते । नापि
पूर्व्वान्तो नाऽपरान्तो न मध्यः । तद्यथापि नाम भगवन्नाकाशस्य
नैवागमो वा दृश्यते न निर्गमो वा दृश्यते । न स्थानं दृश्यते ।
एवमेव भगवन्नस्य महायानस्य नैवागम उपलभ्यते न निर्गम
उपलभ्यते नास्थानमुपलभ्यते । तद्यथापि नाम भगवन्नाकाशस्य
नैव पूर्व्वान्त उपलभ्यते नाऽपरान्त उपलभ्यते न मध्य उपलभ्यते ।
त्र्यध्वसमतामुपादाय । एवमेव भगवन्नस्य महायानस्य नैव पूर्व्वान्त
उपलभ्यते नापरान्त उपलभ्यते न मध्य उपलभ्यते । त्र्यध्वसमताया न
मिदं भगवन् यदुतमहायानं । तस्मान्महायानं महायानमित्युच्यते ।

भगवानाह । एवमेतत् सुभूते एवमेतन्महायानमिदं बोधिसत्त्वस्य
महासत्त्वस्य षट्पारमिताः । दानपारमिता शीलपारमिता
क्षान्तिपारमिता वीर्य्यपारमिता ध्यानपारमिता प्रज्ञापारमिता ।

इदमुच्यते बोधिसत्त्वस्य महासत्त्वस्य महायानं। पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं यदुत सर्व्वधारणीमुखानि सर्व्वसमाधिमुखानि। शूरङ्गम समाधिः। रत्नमुद्रा समाधिः। सिंहविक्रीडित समाधिः। सुचन्द्र समाधिः। चन्द्रध्वजकेतु समाधिः। सर्व्वधर्म्मोद्गम समाधिः। विलोकितमूर्द्ध समाधिः। धर्म्मधातुनियतः समाधिः। नियतध्वजकेतुः समाधिः। वज्रः समाधिः। सर्व्वधर्म्मप्रवेशमुद्रा समाधिः। समाधिराजसुप्रतिष्ठितः समाधिः। रश्मिप्रमुक्तः समाधिः। बलव्यूहः समाधिः। समुद्गतः समाधिः। निरुक्तिनियतप्रवेशः समाधिः। अधिवचनसंप्रवेशः समाधिः। दिग्विलोकितः समाधिः। साधारणमुद्रा समाधि। असम्प्रमोषः समाधिः। सर्व्वधर्म्मसमवसरणसागरमुद्रा समाधिः। आकाशस्फुरणः समाधिः। वज्रमण्डलः समाधिः। ध्वजाग्रकेयूरः समाधिः। इन्द्रकेतुः समाधिः। श्रोतोऽनुगतः समाधिः। सिंहविजृम्भितः समाधिः। व्यभ्यस्तः समाधिः। रणञ्जहः समाधिः। वैरोचनः समाधिः। अनेयः समाधिः। अनिकेतस्थितः समाधिः। निश्चित्तः समाधिः। विमलप्रदीपः समाधिः। अनन्तप्रभः समाधिः। प्रभाकरः समाधि। समन्तावभासः समाधिः। शुद्धसारः समाधिः। विमलप्रभः समाधिः। रतिकरः समाधिः। विद्युत्प्रदीपः समाधिः। अक्षयः समाधिः। अजेयः समाधिः। तेजोवती समाधिः। क्षयापगतः समाधिः। अनिञ्जः समाधिः। अवितर्कः समाधिः। सूर्य्यप्रदीपः समाधिः। चन्द्रविमलः समाधिः। प्रज्ञाप्रदीप समाधिः। शुद्धप्रतिभासः समाधिः। आलोककरः समाधि। काराकारः समाधिः।

ज्ञानकेतुः समाधिः। वज्रोपमः समाधिः। चित्तस्थितिः समाधिः। समन्तालोकः समाधिः। सुप्रतिष्ठितः समाधिः। रत्नकोटिः समाधिः। वरधर्म्ममुद्रा समाधिः। सर्व्वधर्म्मसमता समाधिः। रतिजहः समाधिः। धर्म्मोद्गतः समाधिः। अविकिरणः समाधिः। सर्व्वधर्म्मपदप्रभेदः समाधिः। समाक्षरावकारः समाधिः। अक्षरापगतः समाधिः। आरम्बणच्छेदनः समाधिः। अविकारः समाधिः। अप्रकारः समाधिः। नामनियतप्रवेशः समाधिः। अनिकेतचारी समाधिः। तिमिरापगतः समाधिः। चारित्रवती समाधिः। अचलः समाधिः। विषयतीर्णः समाधिः। सर्व्वगुणसञ्चयगतः समाधिः। स्थितनिश्चित्तः समाधिः। शुभपुष्पितशुद्धिः समाधिः। अनन्तप्रतिभानः समाधिः। असमसमः समाधिः। सर्व्वधर्म्मातिक्रमणः समाधिः। परिच्छेदकरः समाधिः। विमतिविकिरणः समाधिः। निरधिष्ठानः समाधिः। एकव्यूहः समाधिः। आकाराभिनिर्हारः समाधिः। एकाकारः समाधिः। आकारानवकारः समाधिः। नैर्वेधिकसर्व्वभवतलापगतः समाधिः। सङ्केतरुतप्रवेशः समाधिः। निर्घोषाक्षरविमुक्तः समाधिः। ज्वलनोल्का समाधिः। लक्षणपरिशोधनः समाधिः। अनभिलक्षितः समाधिः। सर्व्वाकारवरोपेतः समाधिः। सर्व्वदुःखनिरभिनन्दी समाधिः। अक्षयकरण्डः समाधिः। धारणीमतिः समाधिः। सम्यक्त्वमिथ्यात्वसंप्रशमनः समाधिः। सर्व्वरोधविरोधासंप्रशमनः समाधिः। विमलप्रभः समाधिः। सारवती समाधिः। परिपूर्णचन्द्रविमलप्रभः समाधिः। विद्युत्प्रभः समाधिः। महाव्यूहः समाधिः। सर्व्वाकारप्रभाकरः समाधिः।

समाधिसमता समाधिः। अरजोविरजोनयमुक्तः समाधिः। अरणसमवसरणः समाधिः। अरणसरण सर्व्वसमवसरणः समाधिः। अनिलयानिकेतनिरतः समाधिः। तथतास्थितनिश्चित्तः समाधिः। कायकलिसंप्रमथनः समाधिः। वाक्कलिविध्वंसनगगनकल्पः समाधिः। आकाशासङ्गविमुक्तिनिरुपलेपः समाधिः। इदमुच्यते बोधिसत्त्वस्य महासत्त्वस्य महायान।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदुताध्यात्मशून्यता। बहिर्द्धाशून्यता। अध्यात्मबहिर्द्धाशून्यता। शून्यताशून्यता। महाशून्यता। परमार्थशून्यता। संस्कृतशून्यता। असंस्कृतशून्यता। अत्यन्तशून्यता। अनवराग्रशून्यता। अनवकारशून्यता। प्रकृतिशून्यता। सर्व्वधर्मशून्यता। स्वलक्षणशून्यता। अनुपलम्भशून्यता। अभावशून्यता। स्वभावशून्यता। अभावस्वभावशून्यता। इदमुच्यते बोधिसत्त्वस्य महासत्त्वस्य महायानं।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य महायानं। यदुत चत्वारि स्मृत्युपस्थानानि। चत्वारि सम्यक्प्रहाणानि। चत्वार ऋद्धिपादाः। पञ्चेन्द्रियाणि। पञ्चबलानि। सप्तबोध्यङ्गानि। आर्य्याष्टाङ्गमार्गः। आर्य्यसत्यानि। ध्यानानि। अप्रमाणानि। आरूप्यसमापत्तयः। अष्टौ विमोक्षाः। नव ऽनुपूर्व्वविहारसमापत्तयः। शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि। अभिज्ञाः समाधयः। धारणीमुखानि। दशतथागतबलानि। चत्वारि वैशारद्यानि। चतस्रः प्रतिसम्विदः। महाकरुणा। अष्टादशावेणिकबुद्धधर्म्माः। इदमुच्यते बोधिसत्त्वस्य महसत्त्वस्य महायानं। यत् पुनः सुभूति-

रेवमाह। सदेवमानुषासुरं लोकमभिभूयतन्महायानं निर्यास्य-तीति। कतमस्य सदेवमानुषासुरलोकः। यदुतकामधातुः। रूपधातुः। आरूप्यधातुः स चेत् सुभूते कामधातुस्तथता भविष्यद्वितथता अनन्यतथताऽविपरीतो भूतं सत्यं यथावस्थित्यो-ध्रुवः शाश्वतः। अविपरिणामधर्माभावोभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते कामधातुः कल्पितो विठपितः सन्दर्भितः। अनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्मा अभावः। तस्मात्तन्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यास्यति। स चेत् सुभूते रूपधातुस्तथताऽभविष्यत् अवितथता अनन्यतथता विपरीतो भूतं सत्यं यथावस्थित्योध्रुवः शाश्वतः अविपरिणामधर्माभावोऽभविष्यत्। नेदं महायानं सदेव-मानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते रूपधातुः कल्पितो विठपितः सन्दर्भितः। अनित्योऽध्रुवोऽशाश्वतो विपरि-णामधर्माऽभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूय-निर्यास्यति। स चेत् सुभूते आरूप्यधातुस्तथताऽभविष्यत्। अवितथता अनन्यतथताऽविपरितं भूत सत्यं यथावस्थित्यो ध्रुवः शाश्वतोऽविपरिणामधर्माभावोऽभविष्यत्। नेदं महायानं सदेव-मानुषासुरं लोकमभिभूयनिर्यास्यत्। तस्मात्तर्हि सुभूते रूपं कल्पितं विठपितं सन्दर्भितं। इद सर्वमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्म अभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभि-भूयनिर्यास्यति। स चेत् सुभूते वेदनातथताऽभविष्यद्वितथता-ऽनन्यतथता अविपरीताभूता सत्यायथावस्थित्याध्रुवाशाश्वता अवि-

परिणामधर्मिणी न खल्वभावोऽभविष्यत् नेदं महायानं सदेव-मानुषासुरलोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते वेदना-कल्पिता विठपिता सन्दर्भिता । इदं सर्व्वमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माऽभावस्तस्मान्महायानं सदेवमानुषासुरलोकमभि-भूयनिर्यातिः । स चेत् सुभूते संज्ञातथताऽभविष्यदवितथताऽनन्य-तथताऽविपरीताभूतासत्या यथावन्नित्याध्रुवाशाश्वताऽविपरिणाम-धर्म्मिणी न खल्वभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते संज्ञाकल्पिता विठपिता सन्दर्भिता । इदं सर्व्वमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभाव-स्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यातिः । स चेत् सुभूते संस्कारास्तथाऽभविष्यन्नवितथा अनन्यतथा अविपरिभूता-सत्या यथावन्नित्याध्रुवाः शाश्वता अविपरिणामधर्म्माणः । न खल्व-भावोऽभविष्यन्नेदं महायानं सदेवमानुषाऽसुरं लोकमभिभूय-निरयास्यत् । यस्मात्तर्हि सुभूते संस्काराः कल्पिता विठपिताः सन्दर्भिताः । इदं सर्व्वमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माऽभाव-स्तस्मान्महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिर्यातिः । स चेत् सुभूते विज्ञानं तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवमशाश्वतमविपरिणामधर्म्मं न खल्वभावोऽभविष्यन्नेदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते विज्ञानं कल्पितं विठपितं सन्दर्भितं इदं सर्व्वमनित्यमध्रुव-मशाश्वतं विपरिणामधर्म्माऽभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यातिः ।

स चेत् सुभूते चक्षुस्तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावस्थितं ध्रुवं शाश्वतमपरिणामधर्मं। न खल्वभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते चक्षुः कल्पितं विठपितं सन्दर्भितं। इदं सर्व्वमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिनिर्याति। स चेत् सुभूते श्रोत्रं तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावस्थितं ध्रुवं शाश्वतमविपरिणामधर्म्मं न खल्वभावोऽभविष्यन्नेदं महायामं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते श्रोत्रं कल्पितं विठपितं सन्दर्भितं। इदं सर्व्वमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते घ्राणस्तथाऽभविष्यदवितथाऽनन्यतथाऽविपरितं भूतं सत्यं यथावस्थितं ध्रुवं शाश्वतमविपरिणामधर्म्मं न खल्वभावोऽभविष्यन्नेदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिर्यास्यत्। यस्मात्तर्हि सुभूते घ्राणं कल्पितं विठपितं सन्दर्भितं। इदं सर्व्वमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभावस्तस्मात् सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते जिह्वा तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीताभूतासत्यायथावस्थिताध्रुवाशाश्वताऽविपरिणामधर्म्मिणी न खल्वभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। तस्मात्तर्हि सुभूते जिह्वा कल्पिता विठपिता सन्दर्भिता। इद सर्व्वमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं

लोकमभिभूयनिर्यांति। स चेत् सुभूते कायस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीताभूतः सत्या यथावन्नित्याध्रुवः शाश्वतोऽविपरिणाम धर्म्मा खल्वभावोऽभविष्यन्नेदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिरयास्यत्। तस्मात्तर्हि सुभूते कायः कल्पितो विठपितः सन्दर्भितः। इदं सर्व्वमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते मनस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमविपरिणामधर्म्म न खल्वभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। तस्मात्तर्हि सुभूते मनः कल्पितं विठपितं सन्दर्भितमिदं सर्व्वमनित्यध्रुवमशाश्वतं विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति।

स चेत् सुभूते रूपस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमपरिणामधर्म्म न खल्वभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते रूप कल्पितं विठपितं सन्दर्भितमिदं सर्व्वमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते शब्दस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतं भूतः सत्यः यथावन्नित्याध्रुवः शाश्वतोऽविपरिणामधर्म्मा न खल्वभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते शब्दः कल्पितो विठपितः सन्दर्भितः इदं सर्व्वमनित्यमध्रुवमशाश्वतं

विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति । स चेत् सुभूते गन्धस्तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीतो भूतः सत्यः यथावच्चित्यो ध्रुवः शाश्वतोऽविपरिणामधर्म्मा खल्वभावोऽभविष्यदेवं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते गन्धः कल्पितो विठपितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति । स चेत् सुभूते रसस्तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावच्चित्यो ध्रुवः शाश्वतोऽविपरिणामधर्म्मा न खल्वभावोऽभविष्यदेवं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते रसः कल्पितो विठपितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति । स चेत् सुभूते स्पर्शस्तथाभविष्यदवितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावच्चित्यो ध्रुवः शाश्वतोऽविपरिणामधर्म्मा न खल्वभावोऽभविष्यदेवं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते स्पर्शः, कल्पितो विठपितः सन्दर्भितोऽनित्योऽध्रुवऽशाश्वतो विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति । स चेत् सुभूते धर्म्मास्तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीताः सत्यायथावच्चित्याध्रुवाः शाश्वता अविपरिणामधर्म्माः न खल्वभावोऽभविष्यदेवं महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति ।

स चेत् सुभूते चक्षुर्व्विज्ञानं तथाऽभविष्यदवितथाऽनन्यतथा

ऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमविपरिणामधर्म्म न खल्वभावोऽभविष्यदेदं महायानं सदेवमानुषासुरं लोकमभिभूय-निरयास्यत्। यस्मात्तर्हि सुभूते चक्षुर्विज्ञानं कल्पितं विठपितं सन्दर्भितमनित्यध्रुवमशाश्वतं। विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यातिं। स चेत् सुभूते श्रोत्रविज्ञानं तथा भविष्यदवितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमविपरिणामधर्म्म न खल्वभावोऽभविष्यदेदं महायानं सदेव-मानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते श्रोत्र-विज्ञानं कल्पितं विठपितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरि-णामधर्म्माभावस्तस्मान्महायानं सदेवमानुषाऽसुरं लोकमभिभूय-निर्यातिं। स चेत् सुभूते घ्राणविज्ञानन्तथाऽभविष्यदवितथाऽनन्य-तथाऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमविपरिणाम-धर्म्म न खल्वभावोऽभविष्यदेदं महायानं सदेवमानुषासुरं लोक-मभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते घ्राणविज्ञानं कल्पितं विठपितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभाव-स्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यातिं। स चेत् सुभूते जिह्वाविज्ञानं तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमविपरिणामधर्म्म न खल्वभावो-ऽभविष्यदेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते जिह्वाविज्ञानं कल्पितं विठपितं सन्दर्भितम-नित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभावस्तस्मान्महायानं सदेव-मानुषासुरं लोकमभिभूयनिर्यातिं। स चेत् सुभूते कायविज्ञानं

तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावस्थितं ध्रुवं शाश्वतमविपरिणामधर्मं न खल्वभावोऽभविष्यदेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते कायविज्ञानं कल्पितं विठपितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते मनोविज्ञानं तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावस्थितं ध्रुवं शाश्वतमविपरिणामधर्मं न खल्वभावोऽभविष्यदेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते मनोविज्ञानं कल्पितं विठपितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति।

स चेत् सुभूते चक्षुःसंस्पर्शस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावस्थितो ध्रुवः शाश्वतोऽविपरिणामधर्मा न खल्वभावोऽभविष्यदेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते चक्षुःसंस्पर्शः कल्पितो विठपितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते श्रोत्रसंस्पर्शस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावस्थितो ध्रुवः शाश्वतोऽविपरिणामधर्मा न खल्वभावोऽभविष्यदेदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते श्रोत्रसंस्पर्शः कल्पितो विठपितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभि-

भूयनिर्यांति। स चेत् सुभूते घ्राणसंसर्गस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावन्नित्यो ध्रुवः शाश्वतोऽविपरिणामधर्मा न खल्वभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते घ्राणसंसर्गः कल्पितो विठपितः सन्दर्भितो नित्यो ध्रुवोऽशाश्वतो विपरिणामधर्माभावस्तस्मान्महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते जिह्वासंसर्गस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावन्नित्यो ध्रुवः शाश्वतोऽविपरिणामधर्मा न खल्वभावोऽभविष्यन्नेदं महायान सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते जिह्वासंसर्गः कल्पितो विठपितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्माऽभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते कायसंसर्गस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावन्नित्यो ध्रुवः शाश्वतोऽविपरिणामधर्मा न खल्वभावोऽभविष्यत्। यस्मात्तर्हि सुभूते कायसंसर्गः कल्पितो विठपितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते मनःसंसर्गस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावन्नित्यो ध्रुवः शाश्वतोऽविपरिणामधर्मा न खल्वभावोऽभविष्यन्नेदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते मनःसंसर्गः कल्पितो विठपितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्माभावस्तस्मान्महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिर्यांति।

स चेत् सुभूते चक्षुःसंस्पर्शप्रत्ययवेदितं तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमविपरिणामधर्म्म नखल्वभावोऽभविष्यदिदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते चक्षुःसंस्पर्शप्रत्ययवेदितं कल्पितं विठपितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते श्रोत्रसंस्पर्शप्रत्ययवेदितं तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमविपरिणामधर्म्म न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते श्रोत्रसंस्पर्शप्रत्ययवेदितं कल्पितं विठपितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते घ्राणसंस्पर्शप्रत्ययवेदितं तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमविपरिणामधर्म्म न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते घ्राणसंस्पर्शप्रत्ययवेदितं कल्पितं विठपितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते जिह्वासंस्पर्शप्रत्ययवेदितं तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीत भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमविपरिणामधर्म्म न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते जिह्वासंस्पर्शप्रत्ययवेदितं कल्पितं

विठपितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्माभावलक्षणा-न्महायानं सदेवमानुषासुरं लोकमभिभूय निर्याति। स चेत् सुभूते कायसंस्पर्शप्रत्ययवेदितं तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावच्चित्यं ध्रुवं शाश्वतमविपरिणामधर्म न खल्वभावो-ऽभविष्यत्तेदं महायानं सदेवमानुषासुरं लोकमभिभूय निरयास्यत्। यस्मात्तर्हि सुभूते कायसंस्पर्शप्रत्ययवेदितं कल्पितं विठपितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्माभावलक्षणान्महायानं सदेवमानुषासुरं लोकमभिभूय निर्याति। स चेत् सुभूते मनः-संस्पर्शप्रत्ययवेदितं तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावच्चित्यं ध्रुवं शाश्वतमविपरिणामधर्म न खल्वभावोऽभविष्यत्तेदं महायानं सदेवमानुषासुरं लोकमभिभूय निरयास्यत्। यस्मात्तर्हि सुभूते मनःसंस्पर्शप्रत्ययवेदितं कल्पितं विठपितं सन्दर्भितमनित्य-मध्रुवमशाश्वतं विपरिणामधर्माभावलक्षणान्महायानं सदेवमानुषा-ऽसुरं लोकमभिभूय निर्याति।

स चेत् सुभूते पृथिवीधातुस्तथाऽभविष्यदवितथाऽनन्यतथा-ऽविपरीतो भूतः सत्यो यथावच्चित्यो ध्रुवः शाश्वतोऽविपरिणाम-धर्मा न खल्वभावोऽभविष्यत्तेदं महायानं सदेवमानुषाऽसुरं लोक-मभिभूय निरयास्यत्। यस्मात्तर्हि सुभूते पृथिवीधातुः कल्पितो विठपितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्माऽभाव-लक्षणान्महायानं सदेवमानुषाऽसुरं लोकमभिभूय निर्याति। स चेत् सुभूतेऽब्धातुस्तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावच्चित्यो ध्रुवः शाश्वतोऽविपरिणामधर्मा न खल्वभावोऽभविष्य-

स्येदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत् । तस्मात्तर्हि सुभूतेऽब्धातुः कल्पितो विठयितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्माऽभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते तेजोधातुस्तथाऽभविष्यद्वितथानन्यतथाऽविपरीतो भूतः सत्यो यथावन्नित्योऽध्रुवः शाश्वतोऽविपरिणामधर्मा न खल्वभावोऽभविष्यत्स्येदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते तेजो धातुः कल्पितो विठयितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्माऽभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते वायुधातुस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावन्नित्यो ध्रुवः शाश्वतोऽविपरिणामधर्मा न खल्वभावोऽभविष्यत्स्येदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते वायुधातुः कल्पितो विठयितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्माभावस्तस्मान्महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिर्याति । स चेत् सुभूते आकाशधातुस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावन्नित्यो ध्रुवः शाश्वतोऽविपरिणामधर्मा न खल्वभावोऽभविष्यत्स्येदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते आकाशधातुः कल्पितो विठयितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यानि ।

स चेत् सुभूते विज्ञानधातुस्तथाऽभविष्यद्वितथाऽनन्यतथा-

ऽविपरीतो भूतः सत्यो यथावन्नित्यो ध्रुवः शाश्वतोऽविपरिणामधर्मा न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषासुरं लोकमभि-भूयनिरयास्यत् । यस्मात्तर्हि सुभूते विज्ञानधातुः कल्पितो विठपितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्माऽभावस्तस्मान्महा-यानं सदेवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते अविद्यातथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतो भूता सत्यायथा-वन्नित्याध्रुवाशाश्वताऽविपरिणामधर्मा न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते अविद्या कल्पिता विठपिता सन्दर्भिताऽनित्याऽध्रुवा-ऽशाश्वताविपरिणामधर्मिणी अभावस्तस्मान्महायानं सदेवमानुषा-ऽसुरं लोकमभिभूयनिर्याति । स चेत् सुभूते संस्कारास्तथा-भविष्यद्वितथाऽनन्यतथाऽविपरीताभूताः सत्यायथावन्नित्याध्रुवाः शाश्वता अविपरिणामधर्माणो न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते संस्काराः कल्पिता विठपिताः सन्दर्भिताः अनित्याऽध्रुवाऽशाश्वता विपरिणामधर्माणोऽभावस्तस्मान्महायानं सदेवमानुषाऽसुरं लोक-मभिभूयनिर्याति । स चेत् सुभूते विज्ञानं तथाऽभविष्यद्वितथा-ऽनन्यतथाऽविपरीतं भूतं सत्यं यथावन्नित्य ध्रुवं शाश्वतमविपरि-णामधर्मं न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते विज्ञानं कल्पित विठपितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्माऽभाव-स्तस्मान्महायानं सदेवमानुषाऽसुरं लोकमभिनिर्याति । स चेत्

सुभूते नामरूपं तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमविपरिणामधर्मं न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते नामरूपं कल्पितं विठपितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्माऽभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते षडायतनं तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमविपरिणामधर्मं न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते षडायतनं कल्पितं विठपितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते स्पर्शस्तथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावन्नित्यो ध्रुवः शाश्वतोऽविपरिणामधर्मा न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते स्पर्शः कल्पितो विठपितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतोऽविपरिणामधर्माऽभावस्तस्मान्महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिर्याति। स चेत् सुभूते वेदनातथाऽभविष्यद्वितथाऽनन्यतथाऽविपरीताभूतासत्यायथावन्नित्याध्रुवा शाश्वताऽविपरिणामधर्मिणी न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते वेदनाकल्पिताविठपितासन्दर्भिताऽनित्याऽध्रुवाऽशाश्वताऽविपरिणामधर्मिणी अभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते तृष्णातथाऽभविष्यद्वि-

तथाऽनन्यतथाऽविपरीताभूतासत्यायथावन्नित्याध्रुवाशाश्वताऽविपरिणामधर्म्मिणी न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते तृष्णाकल्पिताविठयितासन्दर्भिताऽनित्याऽध्रुवाऽशाश्वताविपरिणामधर्म्मिणी अभावस्तस्मान्महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते उपादानं तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीतं भूतं सत्यं यथावन्नित्यं ध्रुवं शाश्वतमविपरिणामधर्म्मं न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते उपादानं कल्पितं विठयितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माऽभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते भवस्तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीतो भूतः सत्यो यथावन्नित्यो ध्रुवः शाश्वतोऽविपरिणामधर्म्मा न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते भवः कल्पितो विठयितः सन्दर्भितोऽनित्योऽध्रुवोऽशाश्वतो विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते जातिस्तथाऽभविष्यदवितथाऽनन्यतथाऽविपरीताभूतासत्यायथावन्नित्याध्रुवाशाश्वताऽविपरिणामधर्म्मिणी न खल्वभावोऽभविष्यदिदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते जातिः कल्पिताविठयितासन्दर्भिताऽनित्याऽध्रुवाऽशाश्वता विपरिणामधर्म्मिणी अभावस्तस्मान्महायानं सदेवमानुषाऽसुर लोकमभिभूयनिर्यांति। स चेत् सुभूते जरामरणं तथाभविष्यदवि-

तथाऽनन्य तथाऽविपरीतं भूतं सत्यं यथावस्थितं ध्रुवं शाश्वतमविपरिणामधर्म्मं न खल्वभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यास्यत् । यस्मात्तर्हि सुभूते जरामरणं कल्पितं त्रिठयितं सन्दर्भितमनित्यमध्रुवमशाश्वतं विपरिणामधर्म्माभावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति ।

स चेत् सुभूते दानपारमिताऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यास्यत् । यस्मात्तर्हि सुभूते दानपारमिताऽभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते शीलपारमिताभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यास्यत् । यस्मात्तर्हि सुभूते शीलपारमिताऽभावो न भावस्तस्मान्महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिर्याति । स चेत् क्षान्तिपारमिताभावोऽभविष्यन्नेदं महायानं सदेवमानुषाऽसुरं लोकमभिभूयनिर्यास्यत् । यस्मात्तर्हि सुभूते क्षान्तिपारमिताऽभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते वीर्य्यपारमिताऽभावोऽभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यास्यत् । यस्मात्तर्हि सुभूते वीर्य्यपारमिताऽभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते ध्यानपारमिताऽभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुर लोकमभिभूयनिर्यास्यत् । यस्मात्तर्हि सुभूते ध्यानपारमिताऽभावो न भावस्तस्मान्महायानं । सदेवमानुषाऽसुरं लोकमभिभूयनिर्याति । स चेत् सुभूते प्रज्ञापार-

मिताभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूय-निरयास्यत्। यस्मात्तर्हि सुभूते प्रज्ञापारमिताऽभावो न भाव-स्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति।

स चेत् सुभूते अध्यात्मशून्यताभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते अध्यात्मशून्यताऽभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते बहिर्द्धाशून्यताभावो-ऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते बहिर्द्धाशून्यताऽभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् अध्यात्मबहिर्द्धा-शून्यताभावोऽभविष्यन्नेदं महायानं सदेवमानुषासुरं लोकमभि-भूयनिरयास्यत्। यस्मात्तर्हि सुभूते अध्यात्मबहिर्द्धाशून्यताऽभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते शून्यताशून्यताभावोऽभविष्यत्भावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते शून्यताशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते महाशून्यताभावोऽभवि-ष्यत्भावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते महाशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते परमार्थ-शून्यताभावोऽभविष्यत्भावो नेदं महायानं सदेवमानुषासुरं लोक-मभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते परमार्थशून्यता अभावो

न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते संस्कृतशून्यताभावोऽभविष्यत्भावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते संस्कृतशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते असंस्कृतशून्यताभावोऽभविष्यत्ऽभावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते असंस्कृतशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूतेऽत्यन्तशून्यताभावोऽभविष्यत्भावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते अत्यन्तशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते अनवराग्रशून्यताभावोऽभविष्यत्भावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते अनवराग्रशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते अनवकारशून्यताभावोऽभविष्यत्भावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते अनवकारशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते प्रकृतिशून्यताभावोऽभविष्यत्भावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते प्रकृतिशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते सर्व्वधर्मशून्यताभावो-

ऽभविष्यणाभावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूय-निरयास्यत्। यस्मात्तर्हि सुभूते सर्वधर्मशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूय निर्याति। स चेत् सुभूते स्वलक्षणशून्यताभावोऽभविष्यणाभावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते स्वलक्षणशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते अनुपलम्भशून्यताभावोऽभविष्यणाभावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते अनुपलम्भशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते ऽभावशून्यताभावोऽभविष्यणाभावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते अभावशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूय-निरयास्यत्। स चेत् सुभूते स्वभावशून्यताभावोऽभविष्यणेदं महायानं सदेवमानुषासुरं लोकमभिभूतनिरयास्यत्। यस्मात्तर्हि सुभूते स्वभावशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते अभावस्वभावशून्यताभावो भविष्यणेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते अभावस्वभावशून्यता अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्याति।

स चेत् सुभूते चत्वारिस्मृत्युपस्थानानि भावोऽभविष्यणाभावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि

सुभूते स्मृत्युपस्थानानि स्वभावो न भावस्तस्मान्महायानं सदेव-मानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते सम्यक्प्रहाणानि भावोऽभविष्यन्नाभावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते सम्यक्प्रहाणानि स्वभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते ऋद्धिपादाभावोऽभविष्यन्नाभावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते ऋद्धिपादा स्वभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभि-भूयनिर्यांति। स चेत् सुभूते इन्द्रियाणिभावोऽभविष्यन्नाभावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते इन्द्रियाण्यभावस्तस्मान्महायानं सदेवमानुषासुरं लोक-मभिभूयनिर्यांति। स चेत् सुभूते बलानि भावोऽभविष्यन्नाभावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते बलान्यभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते बोध्यङ्गानिभावोऽभविष्यन्ना-भावो नेदं महायानं सदेवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते बोध्यङ्गान्यभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते मार्गो-भावोऽभविष्यन्नाभावो नेदं महायानं सदेवमानुषासुरं लोकमभि-भूयनिरयास्यत्। यस्मात्तर्हि सुभूते मार्गोऽभावो न भावस्तस्मान्महा-यानं सदेवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते आर्यसत्यानि भावोऽभविष्यन्नाभावो नेदं महायानं सदेवमानुषासुरं

लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते आर्य्यसत्यान्यभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते ध्यानानि भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते ध्यानान्यभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते अप्रमाणानिभावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते अप्रमाणान्यभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । यस्मात्तर्हि सुभूते आरूप्यसमापत्तयो भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते आरूप्यसमापत्तयोऽभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते विमोक्षाभावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते विमोक्षा अभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते अनुपूर्व्वविहारसमापत्तयो भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूतेऽनुपूर्व्वविहारसमापत्तयो भावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते शून्यतानिमित्ताप्रणिहितविमोक्ष मुखानि भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते शून्यता-

निमित्ताप्रणिहित विमोक्षमुखान्यभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूतेऽभिज्ञा भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते अभिज्ञाऽभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते समाधयो भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते समाधयोऽभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते धारणीमुखानि भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते धारणीमुखान्यभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते तथागतबलानि भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते तथागतबलान्यभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते वैशारद्यानि भावोऽभविष्यन्नेदं महायानं स देवमानुषासुर लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते वैशारद्यान्यभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते प्रतिसम्विदोभावो अभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते प्रतिसम्विदोऽभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति । स चेत् सुभूते महाकरुणा-

भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुर लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते महाकरुणाऽभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते अष्टादशावेणिकाबुद्धधर्माभावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते अष्टादशावेणिकाबुद्धधर्मा अभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति।

स चेत् सुभूते गोत्र भूधर्माभावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते गोत्र भूधर्मा अभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते अष्टमकधर्माभावोऽभविष्यन्नाभावो नेद महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते अष्टमकधर्मा अभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते स्रोत आपन्नधर्माभावोऽभविष्यन्नाभावो नेद मयायानं स देवमानुषासुरं, लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते स्रोत आपन्नधर्मा अभावो न भावस्तस्मान्महायान स देवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते सकृदागामिधर्माभावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते सकृदागामिधर्मा अभावो न भावस्तस्मान्महायानं स, देवमानुषासुरं लोकमभिभूयनिर्याति। स चेत् सुभूते अनागामिधर्माभावोऽभविष्यन्नाभावो

नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मा-त्तर्हि सुभूते अनागामिधर्मा अभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते अर्हद्धर्मा-भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोक-मभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते अर्हद्धर्मा अभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते प्रत्येकबुद्धधर्माभावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते प्रत्येकबुद्धधर्मा अभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते बोधिसत्वधर्माभावोऽभवि-ष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरया-स्यत्। यस्मात्तर्हि सुभूते बोधिसत्वधर्मा अभावो न भावस्तस्मा-न्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते बुद्धधर्माभावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते बुद्धधर्मा अभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यांति। स चेत् सुभूते गोत्र भूर्भावोऽभविष्यन्नाभावो नेदं महायानं स देव-मानुषासुरं लोकमभिभूयनिरूयास्यत्। यस्मात्तर्हि सुभूते गोत्र भूरभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूय-निर्यांति। स चेत् सुभूतेऽष्टमको भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूतेऽष्टमकोऽभावो न भावस्तस्मान्महायानं स देवमानुषासुरं

लोकमभिभूयनिर्यातिं । स चेत् सुभूते स्रोत आपन्नो भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिर्यास्यत् । यस्मात्तर्हि सुभूते स्रोत आपन्नोऽभावो न भावस्तस्मात् महायानं स देवमानुषासुरलोकमभिभूयनिर्यातिं । स चेत् सुभूते सकृदागामी भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते सकृदागामी अभावो न भावस्तस्मान्महायानं सदेवमानुषासुरं लोकमभिभूयनिर्यातिं । स चेत् सुभूते अनागामीभावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते अनागामी अभावो न भावस्तस्मान्महायानं स देवमनुषासुरं लोकमभिभूयनिर्यातिं । स चेत् सुभूतेऽर्हन् भावोऽभविष्यन्नाऽभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूतेऽर्हन् भावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यातिं । स चेत् सुभूते प्रत्येकबुद्धो भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते प्रत्येकबुद्धोऽभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यातिं । स चेत् सुभूते बोधिसत्त्वो भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते बोधिसत्त्वोऽभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यातिं । स चेत् सुभूते तथागतोऽर्हन् सम्यक्सम्बुद्धो भावोऽभविष्यन्नाभावो नेदं महायानं स

देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते तथागतोऽर्हन् सम्यक्सम्बुद्धोऽभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यांति । स चेत् सुभूते धर्मधातुर्भावो ऽभविष्यन्नाभावो नेदं महायानं स देवमानुषाऽसुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते धर्मधातुरभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यांति । स चेत् सुभूते तथताभावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते तथता ऽभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यांति । स चेत् सुभूते भूतकोटिर्भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते भूतकोटिरभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यांति । स चेत् सुभूते अचिन्त्यधातुर्भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूतेऽचिन्त्यधातुरभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यांति । स चेत् सुभूते स देवमानुषासुरो लोको भावोऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुर लोकमभिभूयनिरयास्यत् । यस्मात्तर्हि सुभूते स देवमानुषासुरो लोकोऽभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोकमभिभूयनिर्यांति ।

स चेत् सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रथमचित्तोत्पाद-मुपादाय यावद्बोधिमण्ड एतस्मिन्नन्तरे ये चित्तोत्पादास्ते भावो

ऽभविष्यन्नाभावो नेदं महायानं स देवमानुषासुरं लोकमभिभूय-
निरयास्यत्। यस्मात्तर्हि सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रथम-
चित्तोत्पादनमुपादाय यावद्बोधिमण्ड एतस्मिन्नन्तरे ये चित्तो-
त्पादास्तेऽभावो न भावस्तस्मान्महायानं स देवमानुषासुरं लोक-
मभिभूयनिर्याति। स चेत् सुभूते बोधिसत्त्वस्य महासत्त्वस्य वज्रो-
पमं ज्ञानं भावोऽभविष्यन्नाभावो नेदं बोधिसत्त्वोमहासत्त्वः सर्व्व-
वासनाऽनुसन्धिक्लेशं न भावं विदित्वा सर्व्वाकारज्ञतामनुप्राप्स्यत्।
स देवमानुषासुरं लोकमभिभूयनिरयास्यत्। यस्मात्तर्हि सुभूते
बोधिसत्त्वस्य महासत्त्वस्य वज्रोपमं ज्ञानमभावो न भावस्तस्मा-
द्बोधिसत्त्वोमहासत्त्वः सर्व्ववासनाऽनुसन्धिक्लेशमभावं विदित्वा सर्व्वा-
कारज्ञतामनुप्राप्नोति। स देवमानुषासुरं लोकमभिभूयनिर्याति।
स चेत् सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य द्वात्रिंशन्महापुरुष-
लक्षणानि भावोऽभविष्यन्नाभावो नेदं तथागतोऽर्हन् सम्यक्-
सम्बुद्धः स देवमानुषासुरं लोकमभिभूय तेजसा श्रिया चाभा-
सिष्यता तप्स्यत् राजिष्यत्। तस्मात्तर्हि सुभूते तथागतस्यार्हतः
सम्यक्सम्बुद्धस्य द्वात्रिंशन्महापुरुष लक्षणान्यभावो न भावस्तस्मा-
त्तथागतोऽर्हन् सम्यक्सम्बुद्धः स देवमानुषासुरं लोकमभिभूयतेजसा
श्रिया च भासते तपति विराजते। स चेत् सुभूते तथागत-
स्यार्हतः सम्यक्सम्बुद्धस्य भावोऽभविष्यन्नाभावो नेदं तथागतोऽर्हन्
सम्यक्सम्बुद्धो गङ्गानदीवालुकोपमान् लोकधातूना भयाऽस्फुरि-
ष्यत्। यस्मात्तर्हि सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्याभावो न
भावस्तस्मात्तथागतोऽर्हन् सम्यक्सम्बुद्धो गङ्गानदीवालुकोपमान्

लोकधातून् भयास्फुरति। स चेत् सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य षष्ठ्यङ्गोपेत स्वरो भावोऽभविष्यन्नाभावो नेदं तथागतोऽर्हन् सम्यक्सम्बुद्धो दशसु दिक्षु अप्रमेयाऽसंख्येयान् लोकधातून् स्वरेणाऽभिव्यज्ञपयिष्यत्। यस्मात्तर्हि सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य षष्ठ्यङ्गोपेतः स्वरोऽभावो न भावस्तस्मात्तथागतोऽर्हन् सम्यक्सम्बुद्धो दशसु दिक्षु अप्रमेयासंख्येयान् लोकधातून् स्वरेणाऽभिव्यज्ञापयति। स चेत् सुभूते तथागतस्याऽर्हतः सम्यक्सम्बुद्धस्य धर्मचक्रं भावोऽभविष्यन्नाभावो नेदं तथागतोऽर्हन् सम्यक्सम्बुद्धो धर्मचक्रं प्रावर्त्तयिष्यत्। अप्रवर्त्तनीयं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा ब्रह्मणा वा केनचिद्वा पुनर्लोके सहधर्मेण। यस्मात्तर्हि सुभूते तथागतस्यार्हतः सम्यक्सम्बुद्धस्य धर्मचक्रमभावो न भावस्तस्मात्तथागतोऽर्हन् सम्यक्सम्बुद्धो धर्मचक्रं प्रवर्त्तयत्यप्रवर्त्तनीयं श्रमणेन वा ब्राह्मणेन वा देवेन मारेण वा केनचिद्वा पुनर्लोके सहधर्मेण। स चेत् सुभूते सत्त्वाभावोऽभविष्यन्नाऽभावो येषां कृते तथागतेनार्हता सम्यक्सम्बुद्धेन धर्मचक्रं प्रवर्त्तितं नेह ते सत्त्वा अनुपधिशेषे निर्वाणधातौ परिनिरवापयिष्यत्। यस्मात्तर्हि सुभूते सत्त्वा अभावो न भाव वा येषां कृते तथागतेनार्हता सम्यक्सम्बुद्धेन धर्मचक्रं प्रवर्त्तितं। तस्मात् सत्त्वा अनुपधिशेषे निर्वाणधातौ परिनिर्वृताश्च परिनिर्वान्ति च परिनिर्वास्यन्ति च।

यत्पुनः सुभूतिरेवमाह। आकाशसमं तद्यानमिति। एवमेतत् सुभूते एवमेतत् आकाशसमं तद्यानं तद्यथापि नाम सुभूते

आकाशस्य न पूर्व्वादिक् प्रज्ञायते न दक्षिणा न पश्चिमा नोत्तरा नोर्द्धा नाधो नानुविदिशः प्रज्ञायन्ते। एवमेव सुभूते तस्य महायानस्य न पूर्व्वादिक् प्रज्ञायते न दक्षिणा न पश्चिमानोत्तरा नाऽनुविदिशः प्रज्ञायन्ते। तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं न नीलं न पीतं न लोहितं नाऽवदातं नाञ्जिष्ठं न स्फटिकरजतवर्णमेव मेव सुभूते तन्महायानं न नीलं न पीतं न लोहितं नावदातं नाञ्जिष्ठं न स्फटिकरजतवर्णं तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं नातीतं नानागतं न प्रत्युत्पन्नमेव मेव सुभूते तन्महायानं नातीतं नानागतं न प्रत्युत्पन्नं तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशस्य न हानिर्नवृद्धिर्नपरिहाणिः एवमेव तस्य महायानस्य न हानिर्नवृद्धिर्नपरिहाणिस्तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशस्य न संक्लेशो न व्यवदानमेव मेव सुभूते तस्य महायानस्य न संक्लेशो न व्यवदानं तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशस्य नोत्पादो न विरोधो न स्थितिर्नविष्ठिति न स्थितेरण्यथात्वं प्रज्ञायते। एवमेव सुभूते तस्य महायानस्य नोत्पादो न निरोधो न स्थितिर्नविष्ठितिर्नस्थितेरण्यथात्वं प्रज्ञायते। तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं न कुशलं नाऽकुशलं न व्याकृतमेव मेव सुभूते तन्महायानं न कुशलं नाऽकुशलं न व्याकृतं तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं न दृष्टं न श्रुतं न मतं न विज्ञातमेवमेव सुभूते तन्महायानं

न दृष्टं न श्रुतं न मतं न विज्ञातं तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं न ज्ञेयं नाज्ञेयं न विज्ञेयं न परिज्ञेयं न साक्षात्कर्त्तव्यं न प्रहातव्यं न भावयितव्यमेवमेव सुभूते तन्महायानं न ज्ञेयं नाऽज्ञेयं न विज्ञेयं न परिज्ञेयं न साक्षात्कर्त्तव्यं न प्रहातव्यं न भावयितव्यं तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं न विपाको न विपाकधर्म्म एवमेव सुभूते तन्महायानं न विपाको न विपाकधर्म्म तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं न कामधातुपर्य्यापन्नं न रूपधातुपर्य्यापन्नं नारूप्यधातुपर्य्यापन्नमेवमेव सुभूते तन्महायानं न कामधातुपर्य्यापन्नं न रूपधातुपर्य्यापन्नं नारूप्यधातुपर्य्यापन्नं तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं न सरागं न विरागं न सदेषं न विगतदेषं न समोहं न विगतमोहं। एवमेव सुभूते तन्महायानं न सरागं न विरागं न सदेषं न विगतदेषं न समोहं विगतमोहं। तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशे न प्रथम चित्तोत्पादो न द्वितीयो न तृतीयो न चतुर्थो न पञ्चमो न षष्ठो न सप्तमो नाष्टमो न नवमो न दशमश्चित्तोत्पादः। एवमेव सुभूते तत्र महायाने न प्रथमश्चित्तोत्पादो न द्वितीयो न तृतीयो न चतुर्थो न पञ्चमो न षष्ठो न सप्तमो नाऽष्टमो न नवमो न दशमश्चित्तोत्पादः। तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशे न शुक्लविदर्शनाभूमिर्नगोत्रभूमिर्नाष्टमकभूमिर्न-दर्शनभूमिर्नतनुभूमिर्नवीतरागभूमिर्नकृताविभूमिरेवमेव सुभूते तत्र

महायाने न शुक्लविदर्शनाभूमिर्नगोत्रभूमिर्नाष्टमकभूमिर्नदर्शनभूमिर्न-तनुभूमिर्नवीतरागभूमिस्तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशे न स्रोतआपत्तिफलं न सकृदागामिफलं नाऽनागामिफलं नार्हत्त्वमेवमेव सुभूते तत्र महायाने न स्रोतआपत्तिफलं न सकृदागामिफलं नाऽनागामिफलं तेनोच्यते आकाश-समं तद्यानं। तद्यथापि नाम सुभूते आकाशे न श्रावकभूमिर्न-प्रत्येकबुद्धभूमिर्नबोधिसत्त्वभूमिर्नसम्यक्सम्बुद्धभूमिरेवमेव सुभूते तत्र महायाने न श्रावकभूमिर्नप्रत्येकबुद्धभूमिर्नबोधिसत्त्वभूमिर्नसम्यक्-सम्बुद्धभूमिस्तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं न रूपि नारूपि न सनिदर्शनं नानिदर्शनं न प्रतिघं नाऽप्रतिघं न संयुक्तं न वियुक्तमेवमेव सुभूते तन्महायानं न रूपि नारूपि न सनिदर्शनं नाऽनिदर्शनं न प्रतिघं नाऽप्रतिघं न संयुक्तं न वियुक्तं तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं न नित्यं नाऽनित्यं न सुखं न दुःखं नात्मा नाऽनात्मा न शुभं नाऽशुभं। एवमेव सुभूते तन्महायानं न नित्यं नाऽनित्यं न सुखं न दुःखं नात्मा नाऽनात्मा न शुभं नाऽशुभं तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं न शून्यं नाऽशून्यं न निमित्तं नाऽनिमित्तं न प्रणिहितं नाऽप्रणिहितमेव-मेव तन्महायानं न शून्यं नाऽशून्यं न निमित्तं नाऽनिमित्तं न प्रणिहितं नाऽप्रणिहितं तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं न शान्तं नाऽशान्तं न विविक्तं नाऽविविक्तं। एवमेव सुभूते तन्महायानं न शान्तं नाऽशान्तं न विविक्तं नाऽविविक्तं

तेनोच्यते आकाशसमं तद्यानं तद्यथापि नाम सुभूते आकाशं नालोको न तमः एवमेव सुभूते तन्महायानं नालोको न तमः तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं नोपलभ्यते। एवमेव तन्महायानं नोपलभ्यते। तेनोच्यते आकाशसमं तद्यानं। तद्यथापि नाम सुभूते आकाशं न प्रव्याहारो नाऽप्रव्याहारः। एवमेव सुभूते तन्महायानं न प्रव्याहारो नाऽप्रव्याहारः। तेनोच्यते आकाशसमं तद्यानं। अनेन सुभूते पर्य्यायेणाकाशसमं तद्यानं यदुत महायानम्।

यदपि सुभूतिरेवमाह। यथाकाशेऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। एवमेव तस्मिन् महायानेऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाश इति। एवमेतत् सुभूते एवमेतत् यथाकाशेऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। एवमेतस्मिन् महायानेऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोः सत्त्वासत्तया हि सुभूते आकाशासत्तावेदितव्या। आकाशासत्तया महायानासत्ता वेदितव्या। अनेनापि पर्य्यायेण तस्मिन् महायाने अप्रमेयानामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथा हि सुभूते ये च सत्त्वा यश्चाकाशं यच्च महायानं सर्व्वं तन्नोपलभ्यते। पुनरपरं सुभूते सत्त्वाप्रमाणतया आकाशप्रमाणतावेदितव्या। आकाशप्रमाणतया महायानप्रमाणतावेदितव्या। अनेनापि सुभूते पर्य्यायेन तस्मिन् महायाने अप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते ये च सत्त्वायश्चाकाशं यच्च महायानं सर्व्वं तन्नोपलभ्यते। पुनरपरं सुभूते सत्त्वापरिमाणतया आकाशापरिमाणता-

वेदिता। आकाशापरिमाणतया महायानाऽपरिमाणतावेदिता। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायानेऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते ये च यथाकाशं यश्च महायानं सर्व्वमेतन्नोपलभ्यते। पुनरपरं सुभूते सत्त्वासत्तया-धर्म्मधात्वसत्तावेदितव्या। धर्म्मधात्वसत्तया आकाशासत्तावेदितव्या। आकाशासत्तया महायानासत्तावेदितव्या। महायानासत्तया अप्रमेयासत्तावेदितव्या। अप्रमेयासत्तयाऽसंख्येयासत्तावेदितव्या। असंख्येयासत्तयाऽपरिमाणासत्तावेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायानेऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते ये च सत्त्वा यश्च धर्म्मधातुर्यश्चाकाशं यच्च महायानं यच्चाऽप्रमेयं यच्चाऽसंख्येयं यच्चापरिमाणं सर्व्वमेतन्नोपलभ्यते। पुनरपरं सुभूते सत्त्वासत्तया तथताऽसत्तावेदितव्या। तथताऽसत्तया आकाशाऽसत्तावेदितव्या। आकाशासत्तयामहा-यानाऽसत्तावेदितव्या। महायानाऽसत्तयाऽप्रमेयासत्तावेदितव्या। अप्रमेयासत्तयाऽसंख्येयासत्तावेदितव्या। असंख्येयासत्तयाऽपरि-माणासत्तयासर्व्वधर्म्मासत्तावेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायानेऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते ये च सत्त्वायश्चधर्म्मधातुर्यश्चाकाशं यच्च महा-यानं यच्चाप्रमेयं यच्चाऽसंख्येयं यच्चाऽपरिमाणं सर्व्वमेतन्नोपलभ्यते। पुनरपरं सुभूते सत्त्वाऽसत्तया तथताऽसत्तावेदितव्या। तथता-ऽसत्तया आकाशासत्तावेदितव्या। आकाशाऽसत्तया महायाना-सत्तावेदितव्या। महायानासत्तयाऽप्रमेयासत्तावेदितव्या। अप्रमेया-

ऽसत्तयाऽसंख्येयासत्तावेदितव्या । असंख्येयासत्तयाऽपरिमाणासत्तावेदितव्या । अपरिमाणासत्तयासर्व्वधर्म्माऽसत्तावेदितव्या । अनेनापि सुभूते पर्य्यायेण तस्मिन् महायानेऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः । तत्कस्य हेतोस्तथाहि सुभूते ये च सत्त्वाया च तथता यश्चाकाशं यश्च महायानं यश्चाऽप्रमेयं यश्चाऽसंख्येयं यश्चाऽपरिमाणं ये च सर्व्वधर्म्माः सर्व्वमेतन्नोपलभ्यते ।

पुनरपरं सुभूते आत्मसत्तयासत्त्वाऽसत्तावेदितव्या । सत्त्वाऽसत्तयाजीवाऽसत्तावेदितव्या । जीवाऽसत्तयाजन्त्वसत्तावेदितव्या । जन्त्वसत्तयापोषाऽसत्तावेदितव्या । पोषासत्तयापुरुषासत्तावेदितव्या । पुरुषाऽसत्तयापुद्गलासत्तावेदितव्या । पुद्गलासत्तयामनुजासत्तावेदितव्या । मनुजाऽसत्तयामानवासत्तावेदितव्या । मानवाऽसत्तयाकारकासत्तावेदितव्या । कारकासत्तयावेदकासत्तावेदितव्या । वेदकासत्तयाजानकासत्तावेदितव्या । जानकाऽसत्तयापश्यकाऽसत्तावेदितव्या । पश्यकाऽसत्तयाभूतकोट्यसत्तयावेदितव्या । भूतकोट्यसत्तया आकाशासत्तावेदितव्या । आकाशासत्तयामहायानाऽसत्तावेदितव्या । महायानाऽसत्तयाऽप्रमेयाऽसत्तावेदितव्या । अप्रमेयाऽसत्तयाऽसंख्येयासत्तावेदितव्या । असंख्येयाऽसत्तयाऽपरिमाणासत्तावेदितव्या । अपरिमाणासत्तयासर्व्वधर्म्माऽसत्तावेदितव्या । अनेनापि सुभूते पर्य्यायेण तस्मिन् महायानेऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः । तत्कस्य हेतोस्तथाहि सुभूते यश्चात्मा यश्च सत्त्वो यश्च जीवो यश्च जन्तुर्यश्च पोषो यश्च पुरुषो यश्च पुद्गलः । यश्च मनुजो यश्च मानवो । यश्च कारकोऽकारको यश्च ज्ञानको यश्च

पश्यको या च भूतकोटि यश्चाकाशं यच्च महायानं यच्चाऽप्रमेयं यच्चाऽसंख्येयं यच्चाऽपरिमाणं ये च सर्व्वधर्म्माः सर्व्वमेतन्नोपलभ्यते। पुनरपरं सुभूते आत्मासत्तया सत्त्वाऽसत्तावेदितव्या। सत्त्वाऽसत्तया जीवाऽसत्तावेदितव्या। जीवाऽसत्तया जन्त्वसत्तावेदितव्या। जन्त्व-सत्तया पोषाऽसत्तावेदितव्या। पोषाऽसत्तया पुरुषासत्तावेदितव्या। पुरुषाऽसत्तया पुद्गलासत्तावेदितव्या। पुद्गलासत्तया मनुजासत्ता-वेदितव्या। मनुजाऽसत्तया मानवासत्तावेदितव्या। मानवासत्तया कारकासत्तावेदितव्या। कारकाऽसत्तया वेदकाऽसत्तावेदितव्या। वेदकासत्तया जानकासत्तावेदितव्या। जानकाऽसत्तया पश्यका-ऽसत्तावेदितव्या। पश्यकासत्तयाऽचिन्त्यधात्वसत्तावेदितव्या। अचिन्त्य-धात्वसत्तया रूपाऽसत्तावेदितव्या। रूपासत्तया वेदनासत्तावेदितव्या। वेदनासत्तया संज्ञाऽसत्तावेदितव्या। संज्ञासत्तया संस्काराऽसत्ता-वेदितव्या। संस्काराऽसत्तया विज्ञानाऽसत्तावेदितव्या। विज्ञाना-सत्तया आकाशासत्तावेदितव्या। आकाशासत्तया महायानासत्ता-वेदितव्या। महायानासत्तयाऽप्रमेयासत्तावेदितव्या। अप्रमेया-सत्तयाऽसंख्येयाऽसत्तावेदितव्या। असंख्येयाऽसत्तयाऽपरिमाणासत्ता-वेदितव्या। अपरिमाणासत्तया सर्व्वधर्म्मासत्तावेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायानेऽप्रमेयाणामसंख्येयानां सत्त्वा-नामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते यश्चात्मा यश्च सत्त्वो यश्च जीवो यश्च जन्तुर्यश्च पोषो यश्च पुरुषो यश्च पुद्गलो यश्च मनुजो यश्च मानवो यश्च कारको यश्च वेदको यश्च जानको यश्च पश्यको यश्चाऽचिन्त्यधातुर्यच्च रूपं या च वेदनाया च संज्ञा

ये च संस्कारा यच्च विज्ञानं यच्चाकाशं यच्च महायानं यच्चाऽप्रमेयं यच्चाऽसंख्येयं यच्चाऽपरिमाणं ये च सर्व्वधर्म्माः सर्व्वमेतन्नोपलभ्यते। पुनरपरं सुभूते आत्मासत्तया सत्त्वासत्तावेदितव्या। सत्त्वासत्तया जीवासत्तावेदितव्या। जीवासत्तया जन्त्वसत्तावेदितव्या। जन्त्वसत्तया पोषासत्तावेदितव्या। पोषासत्तया पुरुषासत्तावेदितव्या। पुरुषासत्तया पुद्गलासत्तावेदितव्या। पुद्गलासत्तया मनुजासत्तावेदितव्या। मनुजासत्तया मानवाऽसत्तावेदितव्या। मानवासत्ताकारकासत्तावेदितव्या। कारकासत्तया वेदकासत्तावेदितव्या। वेदकासत्तया जानकासत्तावेदितव्या। जानकासत्तया पश्यकासत्तावेदितव्या। पश्यकासत्तया चक्षुरसत्तावेदितव्या। चक्षुरसत्तया श्रोत्रासत्तावेदितव्या। श्रोत्रासत्तया घ्राणासत्तावेदितव्या। घ्राणासत्तया जिह्वासत्तावेदितव्या। जिह्वासत्तया कायासत्तावेदितव्या। कायासत्तया मनोऽसत्तावेदितव्या। मनोऽसत्तया आकाशासत्तवेदितव्या। आकाशासत्तया महायानासत्तावेदितव्या। महायानासत्तयाऽप्रमेयासत्तावेदितव्या। अप्रमेयाऽसत्तयाऽसंख्येयासत्तावेदितव्या। असंख्येयसत्तयाऽपरिमाणासत्तावेदितव्या। अपरिमाणाऽसत्तया सर्व्वधर्म्माऽसत्तावेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायानेऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते यथात्मा यश्च सत्त्वो यश्च जीवो यश्च जन्तुर्यश्च पोषो यश्च पुरुषो यश्च पुद्गलो यश्च मनुजो यश्च मानवो यश्चकारको यश्च वेदको यश्च जानको यश्च पश्यको यच्च चक्षुर्यच्च श्रोत्रं यच्च घ्राणं यच्च जिह्वा यश्च कायः यच्च मनः

यश्चाकाशं यश्च महायानं यश्चाऽप्रमेयं यश्चाऽसंख्येयं यश्चापरिमाणं ये च सर्व्वधर्म्माः। तत्सर्व्वं नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्त्वासत्तावेदितव्या। सत्त्वासत्तया जीवाऽसत्तावेदितव्या। जीवासत्तया जन्तसत्तावेदितव्या। जन्तसत्तया पोषासत्तावेदितव्या। पोषासत्तया पुरुषासत्तावेदितव्या। पुरुषासत्तया पुद्गलासत्तावेदितव्या। पुद्गलासत्तया मनुजासत्तावेदितव्या। मनुजासत्तया मानवासत्तावेदितव्या। मानवासत्तया कारकसत्तावेदितव्या। कारकसत्तया वेदकासत्तावेदितव्या। वेदकासत्तया जानकासत्तावेदितव्या। जानकासत्तया पश्यकासत्तावेदितव्या। पश्यकासत्तया रूपासत्तावेदितव्या। रूपासत्तया शब्दासत्तावेदितव्या। शब्दासत्तया गन्धासत्तावेदितव्या। गन्धासत्तया रसासत्तावेदितव्या। रसासत्तया स्पर्शासत्तावेदितव्या। स्पर्शासत्तया धर्म्मासत्तावेदितव्या। धर्म्मासत्तया आकाशसत्तावेदितव्या। आकाशासत्तया महायानसत्तावेदितव्या। महायानसत्तयाऽप्रमेयासत्तावेदितव्या। अप्रमेयासत्तयाऽसंख्येयासत्तावेदितव्या। असंख्येयसत्तयाऽपरिमाणासत्तावेदितव्या। अपरिमाणसत्तया सर्व्वधर्म्मासत्तावेदितव्या। अनेनापि सुभूते पर्य्यायेण तत्तस्मिन् महायानेऽप्रमेयाणामसंख्येयाणां सत्त्वानामवकाशः। तत्कस्यहेतोस्तथा हि सुभूते यश्चात्मा यश्च सत्त्वो यश्च जीवो यश्च जन्तु यश्च पोषो यश्च पुरुषो यश्च पुद्गलो यश्च मनुजो यश्च मानवो यश्च कारको यश्च वेदको यश्च जानको यश्च पश्यको यश्च रूपं यश्च शब्दः यश्च गन्धो यश्च रसो यश्च स्पर्शः ये च धर्म्माः यश्चाकाशं यश्च

महायानं यच्चाप्रमेयं यच्चासंख्येयं यच्चाऽपरिमाणं ये च सर्व्वधर्म्माः। सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्त्वासत्तावेदितव्या। सत्त्वासत्तया जीवासत्तावेदितव्या। जीवासत्तया जन्त्वसत्तावेदितव्या। जन्त्वसत्तया पोषासत्तावेदितव्या। पोषासत्तया पुरुषासत्तावेदितव्या। पुरुषासत्तया पुद्गलासत्तावेदितव्या। पुद्गलासत्तया मनुजासत्तावेदितव्या। मनुजासत्तया मानवासत्तावेदितव्या। मानवासत्तया कारकासत्तावेदितव्या। कारकासत्तया वेदकासत्तावेदितव्या। वेदकासत्तया जानकासत्तावेदितव्या। जानकासत्तया पश्यकासत्तावेदितव्या। पश्यकसत्तया चचुर्व्विज्ञानासत्तावेदितव्या। चचुर्व्विज्ञानासत्तया श्रोत्रविज्ञानासत्तावेदितव्या। श्रोत्रविज्ञानासत्तया घ्राणविज्ञानासत्तावेदितव्या। घ्राणविज्ञानासत्तया जिह्वाविज्ञानासत्तावेदितव्या। जिह्वाविज्ञानासत्तया कायविज्ञानासत्तावेदितव्या। कायविज्ञानासत्तया मनोविज्ञानासत्तावेदितव्या। मनोविज्ञानासत्तया आकाशसत्तावेदितव्या। आकाशासत्तया महायानासत्तावेदितव्या। महायानासत्तयाऽप्रमेयासत्तावेदितव्या। अप्रमेयासत्तयाऽसंख्येयासत्तावेदितव्या। असंख्येयासत्तयाऽपरिमाणासत्तावेदितव्या। अपरिमाणासत्तया सर्व्वधर्म्मासत्तावेदितव्या। अनेनापि सुभूते पर्य्यायेण महायानेऽप्रमेयाणामसंख्येयाणां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते यथात्मा यथ सत्त्वो यथ जीव यथ जन्तुर्यथ पोषो यथ पुरुषो यथ पुद्गलो यथ मनुजो यथ मानवो यथ कारको यथ वेदको यथ जानको यथ पश्यको

यच्च चक्षुर्विज्ञानं यच्च श्रोत्रविज्ञानं यच्च घ्राणविज्ञानं यच्च जिह्वाविज्ञानं यच्च कायविज्ञानं यच्च मनोविज्ञानं यच्चाकाशं यच्च महायानं यच्चाप्रमेयं यच्चासंख्येयं यच्चापरिमाणं ये च सर्व्वधर्म्माः सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्वासत्तावेदितव्या। सत्वासत्तया जीवासत्तावेदितव्या। जीवासत्तया जन्तुसत्तावेदितव्या। जन्तुसत्तया पोषासत्तावेदितव्या। पोषसत्तया पुरुषसत्तावेदितव्या। पुरुषसत्तया पुद्गलासत्तावेदितव्या। पुद्गलसत्तया मनुजासत्तावेदितव्या। मनुजासत्तया मानवासत्तावेदितव्या। मानवासत्तया कारकासत्तावेदितव्या। कारकासत्तया वेदकासत्तावेदितव्या। वेदकासत्तया जानकासत्तावेदितव्या। जानकासत्तया पश्यकासत्तावेदितव्या। पश्यकासत्तया चक्षुःसंस्पर्शासत्तावेदितव्या। चक्षुःसंस्पर्शासत्तया श्रोत्रसंस्पर्शासत्तावेदितव्या। श्रोत्रसंस्पर्शासत्तया घ्राणसंस्पर्शासत्तावेदितव्या। घ्राणसंस्पर्शासत्तया जिह्वासंस्पर्शासत्तावेदितव्या। जिह्वासंस्पर्शासत्तया कायसंस्पर्शासत्तावेदितव्या। कायसंस्पर्शासत्तया मनःसंस्पर्शासत्तावेदितव्या। मनःसंस्पर्शासत्तया आकाशासत्तावेदितव्या। आकाशसत्तया महायानासत्तावेदितव्या। महायानासत्तयाऽप्रमेयासत्तावेदितव्या। अप्रमेयासत्तयाऽसंख्येयासत्तावेदितव्या। असंख्येयासत्तया अपरिमाणासत्तावेदितव्या। अपरिमाणासत्तया सर्व्वधर्म्मासत्तावेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायानेऽप्रमेयाणामसंख्येयाणां सत्वानामवकाशः। तत्कस्य हेतोस्तथाहि यदात्मा यश्च सत्वो यश्च

जीवो यस्य जन्तुर्यस्य पोषो यस्य पुरुषो यस्य पुद्गलो यस्य मनुजो यस्य मानवो यस्य कारको यस्य वेदको यस्य जानको यस्य पश्यको यस्य चक्षुःसंस्पर्शो यस्य श्रोत्रसंस्पर्शो यस्य घ्राणसंस्पर्शो यस्य जिह्वासंस्पर्शो यस्य कायसंस्पर्शो यस्य मनःसंस्पर्शो यच्चाकाशं यच्च महायानं यच्चाप्रमेयं यच्चाऽसंख्येयं यच्चापरिमाणं ये च सर्व्वधर्माः। सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्वासत्तावेदितव्या। सत्वासत्तया जीवासत्तावेदितव्या। जीवासत्तया जन्त्वसत्तावेदितव्या। जन्त्वसत्तया पोषासत्तावेदितव्या। पोषासत्तया पुरुषासत्तावेदितव्या। पुरुषासत्तया पुद्गलासत्तावेदितव्या। पुद्गलासत्तया मनुजासत्तावेदितव्या। मनुजासत्तया मानवासत्तावेदितव्या। मानवासत्तया कारकासत्तावेदितव्या। कारकासत्तया वेदकासत्तावेदितव्या। वेदकासत्तया जानकासत्तावेदितव्या। जानकासत्तया पश्यकासत्तावेदितव्या। पश्यकासत्तया चक्षुःसंस्पर्शजावेदनासत्तावेदितव्या। चक्षुःसंस्पर्शजावेदनासत्तया श्रोत्रसंस्पर्शजावेदनासत्तावेदितव्या। श्रोत्रसंस्पर्शजावेदनासत्तया घ्राणसंस्पर्शजावेदनासत्तावेदितव्या। घ्राणसंस्पर्शजावेदनासत्तया जिह्वासंस्पर्शजावेदनासत्तावेदितव्या। जिह्वासंस्पर्शजावेदनासत्तया कायसंस्पर्शजावेदनासत्तावेदितव्या। कायसंस्पर्शजावेदनासत्तया मनःसंस्पर्शजावेदनासत्तावेदितव्या। मनःसंस्पर्शजावेदनासत्तया आकाशासत्तावेदितव्या। आकाशासत्तया महायानासत्तावेदितव्या। महायानासत्तयाऽप्रमेयासत्तावेदितव्या। अप्रमेयासत्तया असंख्येयासत्तावेदितव्या। असंख्येयासत्तया अपरिमाणासत्तावेदितव्या। अपरि-

माणासत्तया सर्व्वधर्मासत्तावेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायानेऽप्रमेयाणामसंख्येयाणां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते यश्चात्मा यश्च सत्त्वो यश्च जीवो यश्च जन्तु र्यश्च पोषो यश्च पुरुषो यश्च पुद्गलो यश्च मनुजो यश्च मानवो यश्च कारको यश्च वेदको यश्च जानको यश्च पश्यको या च चक्षुःसंस्पर्शजावेदना या च श्रोत्रसंस्पर्शजावेदना या च घ्राणसंस्पर्शजावेदना या च जिह्वासंस्पर्शजावेदना या च कायसंस्पर्शजावेदना या च मनःसंस्पर्शजावेदना यच्चाकाशं यच्च महायानं यच्चाप्रमेयं यच्चासंख्येयं यच्चापरिमाणं ये च सर्व्वधर्माः सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्त्वासत्तावेदितव्या। सत्त्वासत्तया जीवासत्तावेदितव्या। जीवासत्तया जन्त्वसत्तावेदितव्या। जन्त्वसत्तया पोषासत्तावेदितव्या। पोषासत्तया पुरुषासत्तावेदितव्या। पुरुषासत्तया पुद्गलासत्तावेदितव्या। पुद्गलासत्तया मनुजासत्तावेदितव्या। मनुजासत्तया मानवासत्तावेदितव्या। मानवासत्तया कारकासत्तावेदितव्या। कारकासत्तया वेदकासत्तावेदितव्या। वेदकासत्तया जानकासत्तावेदितव्या। जानकासत्तया पश्यकासत्तावेदितव्या। पश्यकासत्तया पृथिवीधात्वसत्तावेदितव्या। पृथिवीधात्वसत्तया अब्धात्वसत्तावेदितव्या। अब्धात्वसत्तया तेजोधात्वसत्तवेदितव्या। तेजोधात्वसत्तया वायुधात्वसत्तावेदितव्या। वायुधात्वसत्तया आकाशधात्वसत्तावेदितव्या। आकाशधात्वसत्तया विज्ञानधात्वसत्तावेदितव्या। विज्ञानधात्वसत्तया आकाशासत्तावेदितव्या। आकाशासत्तया महायानासत्तावेदितव्या। महायाना-

सत्तया अप्रमेयासत्तावेदितव्या। अप्रमेयासत्तयाऽसंख्येयासत्तावेदितव्या। असंख्येयासत्तया अपरिमाणासत्तावेदितव्या। अपरिमाणासत्तया सर्व्वधर्म्मासत्तावेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायानेऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते यश्चात्मा यश्च सत्त्वो यश्च जीवो यश्च जन्तु र्यश्च पोषो यश्च पुरुषो यश्च पुद्गलो यश्च मनुजो यश्च मानवो यश्च कारको यश्च वेदको यश्च जानको यश्च पश्यको यश्च पृथिवीधातुर्यश्चाब्धातुर्यश्च तेजोधातुर्यश्च वायुधातुर्यश्चाकाशधातुर्यश्च विज्ञानधातुर्यश्चाकाशं यच्च महायानं यच्चाप्रमेयं। यच्चाऽसंख्येयं यच्चापरिमाणं ये च सर्व्वधर्म्माः। सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्त्वासत्तावेदितव्या। सत्त्वासत्तया जीवासत्तावेदितव्या। जीवासत्तया जन्त्वसत्तावेदितव्या। जन्त्वसत्तया पोषासत्तावेदितव्या। पोषासत्तया पुरुषासत्तावेदितव्या। पुरुषासत्तया पुद्गलासत्तावेदितव्या। पुद्गलासत्तया मनुजासत्तावेदितव्या। मनुजासत्तया मानवासत्तावेदितव्या। मानवासत्तया कारकासत्तावेदितव्या। कारकासत्तया वेदकासत्तावेदितव्या। वेदकासत्तया जानकासत्तावेदितव्या। जानकासत्तया पश्यकासत्तावेदितव्या। पश्यकासत्तया अविद्यासत्तावेदितव्या। अविद्यासत्तया संस्कारासत्तावेदितव्या। संस्कारासत्तया विज्ञानासत्तावेदितव्या। विज्ञानासत्तया नामरूपासत्तावेदितव्या। नामरूपासत्तया षडायतनासत्तावेदितव्या। षडायतनासत्तया स्पर्शासत्तावेदितव्या। स्पर्शासत्तया वेदनासत्तावेदितव्या। वेदनासत्तया

तृष्णासत्तावेदितव्या। तृष्णासत्तया उपादानासत्तावेदितव्या। उपादानासत्तया भवासत्तावेदितव्या। भवासत्तया जात्यसत्तावेदितव्या। जात्यसत्तया जरामरणासत्तावेदितव्या। जरामरणासत्तया आकाशासत्तावेदितव्या। आकाशासत्तया महायानासत्तावेदितव्या। महायानासत्तयाऽप्रमेयासत्तावेदितव्या। अप्रमेयासत्तयाऽसंख्येयासत्तावेदितव्या। असंख्येयासत्तया अपरिमाणासत्तावेदितव्या। अपरिमाणासत्तया सर्व्वधर्म्मासत्तावेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायानेऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः तत्कस्य हेतोस्तथाहि सुभूते यश्चात्मा यश्च सत्त्वो यश्च जीवो यश्च जन्तु र्यश्च पोषो यश्च पुरुषो यश्च पुद्गलो यश्च मनुजो यश्च मानवो यश्च कारको यश्च वेदको यश्च जानको यश्च पश्यको यश्चाऽविद्या ये च संस्कारा यश्च विज्ञानं यश्च नाम रूपं यश्च षडायतनं यश्च स्पर्शो या च वेदनाया च तृष्णा यश्चोपादानं यश्च भवो या च जातिर्यश्च जरामरणं यश्चाकाशं यश्च महायानं यश्चाऽप्रमेयं यश्चाऽसंख्येयं यश्चापरिमाणं ये च सर्व्वधर्माः। सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्त्वासत्तावेदितव्या। सत्त्वासत्तया जीवासत्तावेदितव्या। जीवासत्तया जन्त्वसत्तावेदितव्या। जन्त्वसत्तया पोषासत्तावेदितव्या। पोषासत्तया पुरुषासत्तावेदितव्या। पुरुषासत्तया पुद्गलासत्तावेदितव्या। पुद्गलासत्तया मनुजासत्तावेदितव्या। मनुजासत्तया मानवासत्तावेदितव्या। मानवासत्तया कारकासत्तावेदितव्या। कारकासत्तया वेदकासत्तावेदितव्या। वेदकासत्तया जानकासत्तावेदितव्या। जानकासत्तया

पश्यकासत्तावेदितव्या। पश्यकासत्तया दानपारमिताऽसत्तावेदि-
तव्या। दानपारमिताऽसत्तया शीलपारमितासत्तावेदितव्या।
शीलपारमितासत्तया क्षान्तिपारमितासत्तावेदितव्या। क्षान्ति-
पारमितासत्तया वीर्य्यपारमितासत्तावेदितव्या। वीर्य्यपारमिता-
सत्तया ध्यानपारमितासत्तावेदितव्या। ध्यानपारमितासत्तया
प्रज्ञापारमितासत्तावेदितव्या। प्रज्ञापारमितासत्तया आकाशा-
सत्तावेदितव्या। आकाशासत्तया महायानासत्तावेदितव्या। महा-
यानासत्तयाऽप्रमेयासत्तावेदितव्या। अप्रमेयासत्तयाऽसंख्येयासत्ता-
वेदितव्या। असंख्येयासत्तया अपरिमाणासत्तावेदितव्या। अपरि-
माणासत्तया सर्व्वधर्म्मासत्तावेदितव्या। अनेनापि सुभूते पर्य्या-
येण तस्मिन् महायानेऽप्रमेयाणामसंख्येयानां सत्वानामवकाशः।
तत्कस्य हेतोस्तथाहि। यथात्मा यस्य सत्वो यस्य जीवो यस्य
जन्तु र्यस्य पोषो यस्य पुरुषो यस्य पुद्गलो यस्य मनुजो यस्य
मानवोयस्य कारको यस्य वेदको यस्य जानको यस्य पश्यको या च
दानपारमिताया च शीलपारमिताया च क्षान्तिपारमिताया च
वीर्य्यपारमिताया च ध्यानपारमिताया च प्रज्ञापारमिता यच्चा-
काशं यस्य महायानं यच्चाप्रमेयं यच्चासंख्येयं यच्चापरिमाणं ये च
सर्व्वधर्म्माः सर्व्वमेतन्नोपलभ्यते.।

पुनरपरं सुभूते आत्मासत्तया सत्वासत्तावेदितव्या। सत्वा-
सत्तया जीवासत्तावेदितव्या। जीवासत्तया जन्त्वसत्तावेदितव्या।
जन्त्वसत्तया पोषासत्तावेदितव्या। पोषासत्तया पुरुषासत्तावेदि-
तव्या। पुरुषासत्तया पुद्गलासत्तावेदितव्या। पुद्गलासत्तया

मनुजासत्ता वेदितव्या। मनुजासत्तया मानवासत्ता वेदितव्या। मानवासत्तया कारकासत्ता वेदितव्या। कारकासत्तया वेदकासत्ता वेदितव्या। वेदकासत्तया जानकासत्ता वेदितव्या जानकासत्तया पश्यकासत्ता वेदितव्या। पश्यकासत्तया अध्यात्मशून्यतासत्ता वेदितव्या। अध्यात्मशून्यतासत्तया बहिर्द्धाशून्यतासत्ता वेदितव्या। बहिर्द्धाशून्यतासत्तया अध्यात्मबहिर्द्धाशून्यतासत्ता वेदितव्या। अध्यात्मबहिर्द्धाशून्यतासत्तया शून्यताशून्यतासत्ता वेदितव्या। शून्यताशून्यतासत्तया महाशून्यतासत्ता वेदितव्या। महाशून्यतासत्तया परमार्थशून्यतासत्ता वेदितव्या। परमार्थशून्यतासत्तया संस्कृतशून्यतासत्ता वेदितव्या। संस्कृतशून्यतासत्तयाऽसंस्कृतशून्यतासत्ता वेदितव्या। असंस्कृतशून्यतासत्तया अत्यन्तशून्यतासत्ता वेदितव्या। अत्यन्तशून्यतासत्तया अनवराग्रशून्यतासत्ता वेदितव्या। अनवराग्रशून्यतासत्तया अनवकारशून्यतासत्ता वेदितव्या। अनवकारशून्यतासत्तया प्रकृतिशून्यतासत्ता वेदितव्या। प्रकृतिशून्यतासत्तया सर्व्वधर्म्मशून्यतासत्तावेदितव्या। सर्व्वधर्म्मशून्यतासत्तया स्वलक्षणशून्यता वेदितव्या। स्वलक्षणशून्यतासत्तया अनुपलम्भशून्यतासत्ता वेदितव्या। अनुपलम्भशून्यतासत्तया अभावशून्यतासत्ता वेदितव्या। अभावशून्यतासत्तया स्वभावशून्यतासत्ता वेदितव्या। स्वभावशून्यतासत्तया अभावस्वभावशून्यतासत्ता वेदितव्या। अभावस्वभावशून्यता सत्तया आकाशासत्ता वेदितव्या। आकाशासत्तया महायानासत्ता वेदितव्या। महायानासत्तया अप्रमेयासत्ता वेदितव्या। अप्रमेयासत्तया अपरिमाणासत्तावेदितव्या। अपरिमाणासत्तया सर्व्वधर्म्मासत्ता वेदितव्या।

अनेनापि सुभूते पर्य्यायेण तस्मिन् महायाने अप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते यश्चात्मा यश्च सत्त्वो यश्च जीवो यश्च जन्तुर्यश्च पोषो यश्च पुरुषो यश्च पुद्गलो यश्च मनुजो यश्च मानवो यश्च कारको यश्च वेदको यश्च जानको यश्च पश्यको या चाऽध्यात्मशून्यता या च बहिर्द्धाशून्यता याचाध्यात्मबहिर्द्धाशून्यता याच शून्यताशून्यता याच महाशून्यता याच परमार्थशून्यता याच संस्कृतशून्यता याचासंस्कृतशून्यता याचात्यन्तशून्यता याचानवराग्रशून्यता याचानवकारशून्यता याच प्रकृतिशून्यता याच सर्व्वधर्म्मशून्यता याच स्वलक्षणशून्यता याचाऽनुपलम्भशून्यता याचाऽभावशून्यता याच स्वभावशून्यता याचाऽभावस्वभावशून्यता यच्चाकाशं यच्च महायानं यच्चाऽपरिमेयं यच्चासंख्येयं यच्चापरिमाणं ये च सर्व्वधर्म्माः। सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्माऽसत्तया सत्त्वाऽसत्ता वेदितव्या। सत्त्वाऽसत्तया जीवासत्ता वेदितव्या। जीवासत्तया जन्त्वसत्ता वेदितव्या। जन्त्वसत्तया पोषासत्ता वेदितव्या। पोषासत्तया पुरुषासत्ता वेदितव्या। पुरुषासत्तया पुद्गलासत्ता वेदितव्या। पुद्गलासत्तया मनुजासत्ता वेदितव्या। मनुजासत्तया मानवासत्ता वेदितव्या। मानवासत्तया कारकासत्ता वेदितव्या। कारकासत्तया वेदकासत्ता वेदितव्या। वेदकासत्तया जानकासत्ता वेदितव्या। जानकासत्तया पश्यकासत्ता वेदितव्या। पश्यकासत्तया स्मृत्युपस्थानासत्ता वेदितव्या। स्मृत्युपस्थानासत्तया सम्यक्प्रहाणासत्ता वेदितव्या। सम्यक्प्रहाणासत्तया ऋद्धिपादासत्ता वेदितव्या। ऋद्धिपादासत्तया इन्द्रिया-

सत्ता वेदितव्या। इन्द्रियासत्तया बलासत्ता वेदितव्या। बलासत्तया बोध्यङ्गासत्ता वेदितव्या। बोध्यङ्गासत्तया आर्य्याष्टाङ्गमार्गासत्ता वेदितव्या। आर्य्याष्टाङ्गमार्गासत्तया आकाशासत्ता वेदितव्या। आकाशासत्तया महायानासत्ता वेदितव्या। महायानासत्तयाऽप्रमेयासत्ता-वेदितव्या। अप्रमेयासत्तयाऽसंख्येयासत्ता वेदितव्या। असंख्येयासत्तया अपरिमाणासत्ता वेदितव्या। अपरिमाणासत्तया सर्व्वधर्म्मासत्ता वेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायाने अप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि यथात्मा यथ सत्त्वो यथ जीवो यथ जन्तुर्यथ पोषो यथ पुरुषो यथ पुद्गलो यथ मनुजो यथ मानवो यथ कारको यथ वेदको यथ जानको यथ पश्यको यानि स्मृत्युपस्थानानि यानि सम्यक् प्रहाणानि ये ऋद्धिपादाः यानीन्द्रियाणि यानि बलानि यानि बोध्यङ्गानि यथार्य्याष्टाङ्गमार्गो यथाकाशं यथ महायानं यथाऽपरिमेयं यथाऽसंख्येयं यथापरिमाणं ये च सर्व्वधर्माः। सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्त्वासत्ता वेदितव्या। सत्त्वासत्तया जीवासत्ता वेदितव्या। जीवासत्तया जन्त्वसत्ता वेदितव्या। जन्त्वसत्तया पोषासत्ता वेदितव्या। पोषासत्तया पुरुषासत्ता वेदितव्या। पुरुषासत्तया पुद्गलासत्ता वेदितव्या। पुद्गलासत्तया मनुजासत्ता वेदितव्या। मनुजासत्तया मानवासत्ता वेदितव्या। मानवासत्तया कारकासत्ता वेदितव्या। कारकासत्तया वेदकासत्ता वेदितव्या। वेदकासत्तया जानकासत्ता वेदितव्या। जानकासत्तया पश्यकासत्ता वेदितव्या। पश्यकासत्तया आर्य्यसत्यासत्ता वेदितव्या।

आर्य्यसत्यासत्तया ध्यानासत्ता वेदितव्या। ध्यानासत्तया अप्रमाणासत्ता वेदितव्या। अप्रमाणासत्तया आरूप्यसमापत्त्यसत्ता वेदितव्या। आरूप्यसमापत्त्यसत्तया विमोक्षासत्ता वेदितव्या। विमोक्षासत्तया अनुपूर्व्वविहारसमापत्त्यसत्ता वेदितव्या। अनुपूर्व्वविहारसमापत्त्यसत्तया शून्यतानिमित्ताप्रणिहितविमोक्षमुखासत्ता वेदितव्या। शून्यतानिमित्ताप्रणिहितविमोक्षमुखासत्तया अभिज्ञासत्ता वेदितव्या। अभिज्ञासत्तया समाध्यसत्ता वेदितव्या। समाध्यसत्तया धारणीमुखासत्ता वेदितव्या। धारणीमुखासत्तया आकाशासत्ता वेदितव्या। आकाशासत्तया महायानासत्ता वेदितव्या। महायानासत्तया अप्रमेयासत्ता वेदितव्या। अप्रमेयासत्तयाऽसंख्येयासत्ता वेदितव्या। असंख्येयासत्तया अपरिमाणासत्ता वेदितव्या। अपरिमाणासत्तया सर्व्वधर्म्मासत्ता वेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायाने अप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते यश्चात्मा यश्च सत्त्वो यश्च जीवो यश्च जन्तुर्यश्च पोषो यश्च पुद्गलो यश्च मनुजो यश्च मानवो यश्च कारको यश्च वेदको यश्च जानको यश्च पश्यको यानि चार्य्यसत्यानि यानि चाप्रमाणानि याश्चारूप्यसमापत्तयो ये च विमोक्षा याश्चानुपूर्व्वविहारसमापत्तयो यानि च शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि याश्चाऽभिज्ञाः ये च समाधयो यानि च धारणीमुखानि यच्चाकाशं यच्च महायानं यच्चाप्रमेयं यच्चासंख्येयं यच्चापरिमाणं ये च सर्व्वधर्म्माः। सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्त्वासत्तया वेदितव्या। सत्त्वा-

सत्तया जीवासत्ता वेदितव्या। जीवासत्तया जन्त्वसत्ता वेदितव्या। जन्त्वसत्तया पोषासत्ता वेदितव्या। पोषासत्तया पुरुषासत्ता वेदितव्या। पुरुषासत्तया पुद्गलासत्ता वेदितव्या। पुद्गलासत्तया मनुजासत्ता वेदितव्या। मनुजासत्तया मानवासत्ता वेदितव्या। मानवासत्तया कारकासत्ता वेदितव्या। कारकासत्तया वेदकासत्ता वेदितव्या। वेदकासत्तया जानकासत्ता वेदितव्या। जानकासत्तया पश्यकासत्ता वेदितव्या। पश्यकासत्तया तथागतबलासत्ता वेदितव्या। तथागतबलासत्तया वैशारद्यासत्ता वेदितव्या। वैशारद्यासत्तया प्रतिसम्विदसत्ता वेदितव्या। प्रतिसम्विदसत्तया महाकरुणासत्ता वेदितव्या। महाकरुणासत्तया आवेणिकबुद्धधर्म्मासत्तावेदितव्या। आवेणिकबुद्धधर्म्मासत्तया आकाशासत्ता वेदितव्या। आकाशासत्तया महायानासत्ता वेदितव्या। महायानासत्तया अप्रमेयासत्ता वेदितव्या। अप्रमेयासत्तयाऽसंख्येयासत्ता वेदितव्या। असंख्येयासत्तयाऽपरिमाणासत्ता वेदितव्या। अपरिमाणासत्तया सर्व्वधर्म्मासत्ता वेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायाने अप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते यस्यात्मा यस्य सत्त्वो यस्य जीवो यस्य जन्तुर्यस्य पोषो यस्य पुरुषो यस्य पुद्गलो यस्य मनुजो यस्य मानवो यस्य कारको यस्य वेदको यस्य जानको यस्य पश्यको यानि च तथागतबलानि यानि च वैशारद्यानि यास्च प्रतिसम्विदो या च महाकरुणा ये चावेणिकबुद्धधर्म्माः यच्चाकाशं यच्च महायानं यच्चापरिमेयं यच्चासंख्येयं यच्चापरिमाणं ये च सर्व्वधर्म्माः। सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्त्वासत्ता वेदितव्या। सत्त्वासत्तया जीवासत्ता वेदितव्या। जीवासत्तया जन्त्वसत्ता वेदितव्या। जन्त्वसत्तया पोषासत्ता वेदितव्या। पोषासत्तया पुरुषासत्ता वेदितव्या। पुरुषासत्तया पुद्गलासत्ता वेदितव्या। पुद्गलासत्तया मनुजासत्ता वेदितव्या। मनुजासत्तया मानवासत्ता वेदितव्या। मानवासत्तया कारकासत्ता वेदितव्या। कारकासत्तया वेदकासत्ता वेदितव्या। वेदकासत्तया जानकासत्ता वेदितव्या। जानकासत्तया पश्यकासत्ता वेदितव्या। पश्यकासत्तया गोचभूधर्मासत्ता वेदितव्या। गोचभूधर्मासत्तया अष्टामकधर्मासत्ता वेदितव्या। अष्टामकधर्मासत्तया दर्शनकभूम्यसत्ता वेदितव्या। दर्शनकभूम्यसत्तया तनुभूम्यसत्ता वेदितव्या। तनुभूम्यसत्तया वीतरागभूम्यसत्ता वेदितव्या। वीतरागभूम्यसत्तया कृताविभूम्यसत्ता वेदितव्या। कृताविभूम्यसत्तया आकाशासत्ता वेदितव्या। आकाशासत्तया महायानासत्ता वेदितव्या। महायानासत्तया अप्रमेयासत्ता वेदितव्या। अप्रमेयासत्तया असंख्येयासत्ता वेदितव्या। असंख्येयासत्तया अपरिमानासत्ता वेदितव्या। अपरिमाणासत्तया सर्व्वधर्मासत्ता वेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायाने अप्रमेयाणामसंख्येयानां सत्त्वानामवकाशं। तत्कस्य हेतोस्तथाहि सुभूते यत्रात्मा यस्य सत्त्वो यस्य जीवो यस्य जन्तुर्यस्य पोषो यस्य पुरुषो यस्य पुद्गलो यस्य मनुजोयस्य मानवो यस्य कारको यस्य वेदको यस्य जानको यस्य पश्यको ये च गोचभूधर्मा: ये चाष्टामकधर्मा: ये च दर्शनकभूमिधर्मा: ये च तनुभूमिधर्मा: ये च वीतरागभूमिधर्मा: ये च कृताविधर्मा:

यश्चाकाशं यश्च महायानं यश्चाप्रमेयं यश्चासंख्येयं यश्चापरिमाणं ये च सर्व्वधर्माः। सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्त्वासत्ता वेदितव्या। सत्त्वासत्तया जीवासत्ता वेदितव्या। जीवासत्तया जन्त्वसत्ता वेदितव्या। जन्त्वसत्तया पोषासत्ता वेदितव्या। पोषासत्तया पुरुषासत्ता वेदितव्या। पुरुषासत्तया पुद्गलासत्ता वेदितव्या। पुद्गलासत्तया मनुजासत्ता वेदितव्या। मनुजासत्तया मानवासत्ता वेदितव्या। मानवासत्तया कारकासत्ता वेदितव्या। कारकासत्तया वेदकासत्ता वेदितव्या। वेदकासत्तया जानकासत्ता वेदितव्या। जानकासत्तया पश्यकासत्ता वेदितव्या। पश्यकासत्तया स्रोत आपन्नासत्ता वेदितव्या। स्रोत आपन्नासत्तया सकृदागाम्यसत्ता वेदितव्या। सकृदागाम्यसत्तया अनागाम्यसत्ता वेदितव्या। अनागाम्यसत्तया अर्हदसत्ता वेदितव्या। अर्हदसत्तया आकाशासत्ता वेदितव्या। आकाशासत्तया महायानासत्ता वेदितव्या। महायानासत्तया अप्रमेयासत्ता वेदितव्या। अप्रमेयासत्तया असंख्येयासत्ता वेदितव्या। असंख्येयासत्तया अपरिमाणासत्ता वेदितव्या। अपरिमाणासत्तया सर्व्वधर्मासत्ता वेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायाने अप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथा हि सुभूते यश्चात्मा यश्च सत्त्वो यश्च जीवो यश्च जन्तुर्यश्च पोषो यश्च पुरुषो यश्च पुद्गलो यश्च मनुजो यश्च मानवो यश्च कारको यश्च वेदको यश्च जानको यश्च पश्यको यश्च स्रोत आपन्नो यश्च सकृदागामी यश्चानागामी यश्चार्हन् यश्चाकाशं यश्च महायानं

यच्चाप्रमेयं यच्चासंख्येयं यच्चापरिमाणं ये च सर्व्वधर्माः। सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्त्वासत्ता वेदितव्या। सत्त्वासत्तया जीवासत्ता वेदितव्या। जीवासत्तया जन्त्वसत्ता वेदितव्या। जन्त्वसत्तया पोषासत्ता वेदितव्या। पोषासत्तया पुरुषासत्ता वेदितव्या। पुरुषासत्तया पुद्गलासत्ता वेदितव्या। पुद्गलासत्तया मनुजासत्ता वेदितव्या। मनुजासत्तया मानवासत्ता वेदितव्या। मानवासत्तया कारकासत्ता वेदितव्या। कारकासत्तया वेदकासत्ता वेदितव्या। वेदकासत्तया जानकासत्ता वेदितव्या। जानकासत्तया पश्यकासत्ता वेदितव्या। पश्यकासत्तया प्रत्येकबुद्धासत्ता वेदितव्या। प्रत्येकबुद्धसत्तया सम्यक्सम्बुद्धासत्ता वेदितव्या। सम्यक्सम्बुद्धासत्तया आकाशासत्ता वेदितव्या। आकाशासत्तया महायानासत्ता वेदितव्या। महायानासत्तया अप्रमेयासत्ता वेदितव्या। अप्रमेयासत्तयाऽसंख्येयासत्ता वेदितव्या। असंख्येयासत्तया अपरिमाणासत्ता वेदितव्या। अपरिमाणासत्तया सर्व्वधर्मासत्ता वेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायाने अप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते यश्चात्मा यश्च सत्त्वो यश्च जीवो यश्च जन्तुर्यश्च पोषो यश्च पुरुषो यश्च पुद्गलो यश्च मनुजो यश्च मानवो यश्च कारको यश्च वेदको यश्च जानको यश्च पश्यको यश्च प्रत्येकबुद्धो यश्च सम्यक्सम्बुद्धो यच्चाकाशं यच्च महायानं यच्चाप्रमेयं यच्चासंख्येयं यच्चापरिमाणं येच सर्व्वधर्माः। सर्व्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते आत्मासत्तया सत्त्वसत्ता वेदितव्या। सत्त्वासत्तया

जीवासत्ता वेदितव्या। जीवासत्तया जन्तवसत्ता वेदितव्या। जन्तु-सत्तया पोषासत्ता वेदितव्या। पोषासत्तया पुरुषासत्ता वेदितव्या। पुरुषासत्तया पुद्गलासत्ता वेदितव्या। पुद्गलासत्तया मनुजासत्ता वेदितव्या। मनुजासत्तया मानवासत्ता वेदितव्या। मानवासत्तया कारकासत्ता वेदितव्या। कारकासत्तया वेदकासत्ता वेदितव्या। वेदकासत्तया जानकासत्ता वेदितव्या। जानकासत्तया पश्यकासत्ता वेदितव्या। पश्यकासत्तया श्रावकयानासत्ता वेदितव्या। श्रावक-यानासत्तया प्रत्येकबुद्धयानासत्ता वेदितव्या। प्रत्येकबुद्धयानासत्तया बुद्धयानासत्ता वेदितव्या। बुद्धयानासत्तया सर्व्वाकारज्ञतासत्ता वेदि-तव्या। सर्व्वाकारज्ञतासत्तया आकाशासत्ता वेदितव्या। आकाशा-सत्तया महायानासत्ता वेदितव्या। महायानासत्तया अप्रमेयासत्ता वेदितव्या। अप्रमेयासत्तया असंख्येयासत्ता वेदितव्या। असंख्येया-सत्तया अपरिमाणासत्ता वेदितव्या। अपरिमाणासत्तया सर्व्वधर्म्मा-सत्ता वेदितव्या। अनेनापि सुभूते पर्य्यायेण तस्मिन् महायाने अप्र-मेयाणामसंख्येयानां सत्वानामवकाशः। तत्कस्य हेतोस्तथाहि सुभूते यत्रात्मा यत्र सत्वो यत्र जीवो यत्र जन्तुर्यत्र पोषो यत्र पुरुषो यत्र पुद्गलो यत्र मनुजो यत्र मानवो यत्र कारको यत्र वेदको यत्र जानको यत्र पश्यको यत्र श्रावकयानं यत्र प्रत्येकबुद्धयानं यत्र बुद्धयानं यत्र सर्व्वाकारज्ञता यत्राकाशं यत्र महायानं यत्राप्रमेयं यत्रासंख्येयं यत्रापरिमाणं ये च सर्व्वधर्म्माः। सर्व्वमेतन्नोपलभ्यते। तद्यथापि नाम सुभूते निर्व्वाणधातावप्रमेयाणामसंख्येयाना-मपरिमाणानां सत्वानामवकाशः। एवमेव तस्मिन् महायाने-

ऽप्रमेयानामसंख्येयानामपरिमाणानां सत्त्वानामवकाशः। अनेनापि सुभूते पर्य्यायेण यथाकाशे अप्रमेयाणामसंख्येयाणामपरिमाणानां सत्त्वानामवकाशः। एवमेव तस्मिन् महायानेऽप्रमेयाणामसंख्येयाणामपरिमाणानां सत्त्वानामवकाशः। यदपि सुभूतिरेवमाह नापि तस्य महायानस्य गतिर्दृश्यते नागतिर्दृश्यते न स्थानं दृश्यते इति। एवमेतत् सुभूते एवमेतत्। न तस्य महायानस्यागतिर्वा गतिर्वा दृश्यते। तत्कस्य हेतोरचलाहि सुभूते सर्व्वधर्माः। तेन कुतश्चिदागच्छन्ति न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोस्तथाहि सुभूते रूपं न कुतश्चिदागच्छति। न क्वचिद्गच्छति। न क्वचित्तिष्ठति। तत्कस्य हेतोर्नहि सुभूते रूपस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति। न क्वचित्तिष्ठति। न रूपस्य तथता कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति। न रूपस्य स्वभावः कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति। न रूपस्य लक्षणं कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वेदना कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते वेदनायाः प्रकृतिः कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वेदनायास्तथता कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वेदनायाः स्वभावः कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वेदनाया लक्षणं कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति। न संज्ञा कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते संज्ञायाः प्रकृतिः कुतश्चिदा-

गच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न संज्ञायास्तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति । न क्वचित्तिष्ठति । न संज्ञायाः स्वभावः कुतश्चिदागच्छतिर्नक्वचिद्गच्छति न क्वचित्तिष्ठति । न संज्ञाया लक्षणं कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति । न संस्काराः कुतश्चिदागच्छन्ति । न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति । तत्कस्य हेतोर्न हि सुभूते संस्काराणां प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न संस्काराणां तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न संस्काराणां स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न संस्काराणां लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न विज्ञानं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते विज्ञानस्य प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न विज्ञानस्य तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न विज्ञानस्य स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति । न क्वचित्तिष्ठति । न विज्ञानस्य लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति ।

न चक्षुः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते चक्षुषः प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति । न क्वचित्तिष्ठति । न चक्षुषस्तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति । न क्वचित्तिष्ठति । न चक्षुषः स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति । न क्वचित्तिष्ठति ।

न चक्षुषो लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति। न क्वचित्तिष्ठति। न श्रोत्रं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते श्रोत्रस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति। न क्वचित्तिष्ठति। न श्रोत्रस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। श्रोत्रस्य स्वभावो न कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। श्रोत्रस्य लक्षणं न कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न घ्राणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते घ्राणस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न घ्राणस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न घ्राणस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति। न क्वचित्तिष्ठति। न घ्राणस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वा कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते जिह्वायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वाया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न कायः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते कायस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति। न क्वचित्तिष्ठति।

न कायस्य तथता न कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न कायस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न कायस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न मनः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते मनसः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न मनसस्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न मनसः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न मनसो लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति।

न रूपं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते रूपस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न रूपस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न रूपस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न रूपस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति। न क्वचित्तिष्ठति। न शब्दः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते शब्दस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न शब्दस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न शब्दस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न शब्दस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न गन्धः

कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते गन्धस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न गन्धस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न गन्धस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न गन्धस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति। न क्वचित्तिष्ठति। न रसः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते रसस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न रसस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति। न क्वचित्तिष्ठति। न रसस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न रसस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्पर्शः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते स्पर्शस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्पर्शस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्पर्शस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्पर्शस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न धर्माः कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते धर्माणां प्रकृतिः कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। न धर्माणां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न धर्माणां

स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न धर्म्माणां लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति ।

न चक्षुर्व्विज्ञानं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न्न हि सुभूते चक्षुर्व्विज्ञानस्य प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति। न चक्षुर्व्विज्ञानस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति । न चक्षुर्व्विज्ञानस्य स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न चक्षुर्व्विज्ञानस्य लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न श्रोत्रविज्ञानं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न्न हि सुभूते श्रोत्रविज्ञानस्य प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्व चित्तिष्ठति । न श्रोत्रविज्ञानस्य तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न श्रोत्रविज्ञानस्य स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न श्रोत्रविज्ञानस्य लक्षणं कुतश्चिदागच्छति ।' न क्वचिद्गच्छति न क्वचित्तिष्ठति । न घ्राणविज्ञानं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न्न हि सुभूते घ्राणविज्ञानस्य प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न घ्राणविज्ञानस्य तथता न कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न घ्राणविज्ञानस्य स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न घ्राण-

विज्ञानस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वाविज्ञानं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते जिह्वाविज्ञानस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वाविज्ञानस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वाविज्ञानस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वाविज्ञानस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न कायविज्ञानं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते कायविज्ञानस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न कायविज्ञानस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न कायविज्ञानस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न कायविज्ञानस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न मनोविज्ञानं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते मनोविज्ञानस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न मनोविज्ञानस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न मनोविज्ञानस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न मनोविज्ञानस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति।

—

न चक्षुःसंस्पर्शः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते चक्षुःसंस्पर्शस्य प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न चक्षुःसंस्पर्शस्य तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न चक्षुःसंस्पर्शस्य स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न चक्षुःसंस्पर्शस्य लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न श्रोत्रसंस्पर्शः कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते श्रोत्रसंस्पर्शस्य प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न श्रोत्रसंस्पर्शस्य तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न श्रोत्रसंस्पर्शस्य स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न श्रोत्रसंस्पर्शस्य लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न घ्राणसंस्पर्शः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते घ्राणसंस्पर्शस्य प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न घ्राणसंस्पर्शस्य तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न घ्राणसंस्पर्शस्य स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न घ्राणसंस्पर्शस्य लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न जिह्वासंस्पर्शः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते जिह्वासंस्पर्शस्य प्रकृतिः

कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वासंस्पर्शस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वासंस्पर्शस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वासंस्पर्शस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न कायसंस्पर्शः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते कायसंस्पर्शस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न कायसंस्पर्शस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न कायसंस्पर्शस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न कायसंस्पर्शस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न मनःसंस्पर्शः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते मनःसंस्पर्शस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न मनःसंस्पर्शस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न मनःसंस्पर्शस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न मनःसंस्पर्शस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति।

न चक्षुःसंस्पर्शजावेदना कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोस्तथाहि न हि सुभूते चक्षुःसंस्पर्शजा वेदनायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न चक्षुःसंस्पर्शजा वेदनायास्तथता कुतश्चिदागच्छति।

न क्वचिद्गच्छति न क्वचित्तिष्ठति। न चक्षुःसंस्पर्शजा वेदनायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति। न क्वचित्तिष्ठति। न चक्षुःसंस्पर्शजा वेदनाया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न श्रोत्रसंस्पर्शजा वेदनाया कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोस्तथाहि नहि सुभूते श्रोत्रसंस्पर्शजा वेदनायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न श्रोत्रसंस्पर्शजा वेदनायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न श्रोत्रसंस्पर्शजा वेदनायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न श्रोत्रसंस्पर्शजा वेदनाया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न घ्राणसंस्पर्शजा वेदना कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते घ्राणसंस्पर्शजा वेदनायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न घ्राणसंस्पर्शजा वेदनायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न घ्राणसंस्पर्शजा वेदनायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न घ्राणसंस्पर्शजा वेदनाया लक्षण कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वासंस्पर्शजा वेदना कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते जिह्वासंस्पर्शजा वेदनायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जिह्वासंस्पर्शजा वेदनायास्तथता

कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न जिह्वासंस्पर्शजा वेदनायाः स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न जिह्वासंस्पर्शजा वेदनाया लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न कायसंस्पर्शजा वेदना कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते कायसंस्पर्शजा वेदनायाः प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न कायसंस्पर्शजा वेदनायास्तथता न कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न कायसंस्पर्शजा वेदनायाः स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न कायसंस्पर्शजा वेदनाया लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न मनःसंस्पर्शजा वेदना कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते मनःसंस्पर्शजा वेदनायाः प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न मनःसंस्पर्शजा वेदनायास्तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न मनःसंस्पर्शजा वेदनायाः स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति ।

न पृथिवीधातुः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते पृथिवीधातोः प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न पृथिवीधातोस्तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न पृथिवीधातोः स्वभावः कुतश्चिदागच्छति । न क्वचि-

द्गच्छति न क्वचित्तिष्ठति। न पृथिवीधातोर्लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽब्धातुः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूतेऽब्धातोः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽब्धातोस्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽब्धातोः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽब्धातोर्लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न तेजोधातुः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते तेजोधातोः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न तेजोधातोस्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न तेजोधातोः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न तेजोधातोर्लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वायुधातुः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते वायुधातोः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वायुधातोस्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वायुधातोः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वायुधातोर्लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाकाशधातुः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि

सुभूते आकाशधातोः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाकाशधातोस्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाकाशधातोः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाकाशधातोर्लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति।

न विज्ञानधातुः कुतश्चिदागच्छति। न क्वचिद्गच्छति। न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते विज्ञानधातोः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न विज्ञानधातोस्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न विज्ञानधातोः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न विज्ञानधातोर्लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽविद्या कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते अविद्यायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽविद्यायास्तथता कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽविद्यायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाविद्याया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न संस्काराः कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति। न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते संस्काराणां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न संस्काराणां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न संस्काराणां

स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न संस्काराणां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न विज्ञानं सुभूते कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते विज्ञानस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न विज्ञानस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न विज्ञानस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न विज्ञानस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न नामरूपं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते नामरूपस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न नामरूपस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न नामरूपस्य, स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न नामरूपस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न षडायतनं कुतश्चिदागच्छति।.न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते षडायतनस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न षडायतनस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न षडायतनस्य स्वभावः कुतश्चिदागच्छति, न क्वचिद्गच्छति न क्वचित्तिष्ठति। न षडायतनस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्पर्शः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति।

त्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते स्पर्शस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्पर्शस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्पर्शस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्पर्शस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वेदना कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते वेदनायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वेदनायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वेदनायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वेदनाया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न तृष्णा कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते तृष्णायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न तृष्णायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न तृष्णायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न तृष्णायाः लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नोपादानं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते उपादानस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नोपादानस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नोपादानस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्-

च्छति न क्वचित्तिष्ठति। नोपादानस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न भवः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते भवस्य प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न भवस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न भवस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न भवस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जातिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते जातेः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति। न क्वचित्तिष्ठति। न जातेस्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जातेः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जातेर्लक्षणं, कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जरामरणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते जरामरणस्य प्रकृतिः ,कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जरामरणस्य तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जरामरणस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न जरामरणस्य ,लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति।

न दानपारमिता कुतश्चिदागच्छति,। ,न क्वचिद्गच्छति न क्वचित्तिष्ठति,। तत्कस्य हेतोर्न हि सुभूते दानपारमितायाः

प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न दानपारमितायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न दानपारमितायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न दानपारमिताया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न शीलपारमिता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते शीलपारमितायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न शीलपारमितायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न शीलपारमितायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न शीलपारमिताया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न क्षान्तिपारमिता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते क्षान्तिपारमितायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न क्षान्तिपारमितायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न क्षान्तिपारमितायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न क्षान्तिपारमितायालक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वीर्य्यपारमिता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते वीर्य्यपारमितायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वीर्य्यपारमिता-

यास्तथता कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । न वीर्यपारमितायाः स्वभावः कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । न वीर्यपारमितायालक्षण कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । न ध्यानपारमिता कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते ध्यानपारमितायाः प्रकृति कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । न ध्यानपारमितायास्तथता कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । न ध्यानपारमितायाः स्वभावः कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । न ध्यानपारमितायालक्षणं कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । न प्रज्ञापारमिता कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते प्रज्ञापारमितायाः प्रकृतिः कुतश्चिद्गागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । न प्रज्ञापारमितायास्तथता कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । न प्रज्ञापारमितायाः स्वभावः कुतश्चिदागच्छति न कचिद्गच्छति न कचित्तिष्ठति । न प्रज्ञापारमितायालक्षण कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति ।

नाऽध्यात्मशून्यता कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते अध्यात्मशून्यतायाः प्रकृतिः कुतश्चिदागच्छति । न कचिद्गच्छति न कचित्तिष्ठति । न कचिद्गच्छति न नाध्यात्मशून्यतायास्तथता कुतश्चिदागच्छति । न कचिद्गच्छति न

क्वचित्तिष्ठति। नाध्यात्मशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाध्यात्मशून्यताया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न बहिर्द्धाशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते बहिर्द्धाशून्यतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न बहिर्द्धाशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न बहिर्द्धाशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न बहिर्द्धाशून्यताया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाध्यात्मबहिर्द्धाशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते अध्यात्मबहिर्द्धाशून्यतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाध्यात्मबहिर्द्धाशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाध्यात्मबहिर्द्धाशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाध्यात्मबहिर्द्धाशून्यताया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न शून्यताशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते शून्यताशून्यतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न शून्यताशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न शून्यताशून्यतायाः स्वभावः कुतश्चिदागच्छति। न

क्वचिद्गच्छति न क्वचित्तिष्ठति। न शून्यताशून्यतायाम्लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न महाशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते महाशून्यतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न महाशून्यतास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न महाशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न महाशून्यतायाल्लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न परमार्थशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते परमार्थशून्यतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न परमार्थशून्यतायास्तथता न कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न परमार्थशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न परमार्थशून्यताया लक्षणं न कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न संस्कृतशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते संस्कृतशून्यतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न संस्कृतशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न संस्कृतशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न संस्कृतशून्यताया-लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति।

नासंस्कृतशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते असंस्कृतशून्यताया प्रकृति कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नासंस्कृतशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नासंस्कृतशून्यताया स्वभाव कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नासंस्कृतशून्यतायाल्लक्षण कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नात्यन्तशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते अत्यन्तशून्यताया प्रकृति कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नात्यन्तशून्यतायास्तथता न कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नात्यन्तशून्यताया स्वभाव कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नात्यन्तशून्यतायाल्लक्षण कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नानवराग्रशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते अनवराग्रशून्यताया प्रकृति कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नानवराग्रशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नानवराग्रशून्यताया स्वभाव कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नानवराग्रशून्यतायाल्लक्षण कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नानवकारशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते अनवकारशून्य-

तायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नानवकारशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नानवकारशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नानवकारशून्यताया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न प्रकृतिशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते प्रकृतिशून्यतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न प्रकृतिशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न प्रकृतिशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न प्रकृतिशून्यताया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न सर्व्वधर्म्मशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते सर्व्वधर्म्मशून्यतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न सर्व्वधर्म्मशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न सर्व्वधर्म्मशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न सर्व्वधर्म्मशून्यतायालक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्वलक्षणशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते स्वलक्षणशून्यतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्वलक्षणशून्यतायास्तथता कुत-

श्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्वलक्षणशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्वलक्षणशून्यताया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽनुपलम्भशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते अनुपलम्भशून्यतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽनुपलम्भशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽनुपलम्भशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽनुपलम्भशून्यताया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽभावशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते अभावशून्यतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाभावशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाभावशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाभावशून्यतायाः लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्वभावशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते स्वभावशून्यतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्वभावशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्वभावशून्यतायाः स्वभावः कुतश्चिदागच्छति।

न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्वभावशून्यताया लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाभावस्वभावशून्यता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते अभावस्वभावशून्यतायाः प्रकृतिः कुतश्चिदागच्छति न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽभावस्वभावशून्यतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽभावस्वभावशून्यतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाभावस्वभावशून्यतायालक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति।

*न स्मृत्युपस्थानानि कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते स्मृत्युपस्थानानां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्मृत्युपस्थानानां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्मृत्युपस्थानानां स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न स्मृत्युपस्थानानां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न सम्यक्प्रहाणानि कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते सम्यक्प्रहाणानां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न सम्यक्प्रहाणानां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न सम्यक्प्रहाणानां स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न सम्यक्प्रहा-

* This form occurs in all MSS.

णानां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नर्द्धिपादाः कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते ऋद्धिपादानां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नर्द्धिपादानां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नर्द्धिपादानां स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नर्द्धिपादानां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नेन्द्रियाणि कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते इन्द्रियाणां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नेन्द्रियाणां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नेन्द्रियाणां स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नेन्द्रियाणां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति।

न बलानि कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते बलानां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न बलानां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न बलानां स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न बलानां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न बोध्यङ्गानि कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते बोध्यङ्गानां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न बोध्यङ्गानां

तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न बोध्यङ्गानां स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न बोध्यङ्गानां लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न मार्गः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते मार्गस्य प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न मार्गस्य तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न मार्गस्य स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न मार्गस्य लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । नार्य्यसत्यानि कुतश्चिदागच्छन्ति । न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति । तत्कस्य हेतोर्न हि सुभूते आर्य्यसत्यानां प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । नार्य्यसत्यानां तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति । न क्वचित्तिष्ठति । नार्य्यसत्यानां स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । नार्य्यसत्यानां लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न ध्यानानि कुतश्चिदागच्छन्ति । न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति । तत्कस्य हेतोर्न हि सुभूते ध्यानानां प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न ध्यानानां तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न ध्यानानां स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न ध्यानानां लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति ।

नाप्रमाणानि कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते अप्रमाणानां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाप्रमाणानां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाप्रमाणानां स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाप्रमाणानां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नारूप्यसमापत्तयः कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते आरूप्यसमापत्तीनां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नारूप्यसमापत्तीनां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नारूप्यसमापत्तीनां स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नारूप्यसमापत्तीनां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न विमोक्षाः कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते विमोक्षाणां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न विमोक्षाणां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न विमोक्षाणां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽनुपूर्व्वविहार समापत्तयः कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते नवानुपूर्व्वविहार समापत्तीनां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न नवानुपूर्व्वविहार समापत्तीनां तथता कुतश्चिदागच्छति। न

कचिद्गच्छति न कचिन्तिष्ठति। न नवानुपूर्व्वविहार समापत्तीनां स्वभावः कुतश्चिदागच्छति। न कचिद्गच्छति न कचिन्तिष्ठति। न नवानुपूर्व्वविहार समापत्तीनां लक्षणं कुतश्चिदागच्छति। न कचिद्गच्छति न कचिन्तिष्ठति। न शून्यतानिमित्ताप्रणिहितविमोचमुखानि कुतश्चिदागच्छन्ति। न कचिद्गच्छन्ति न कचिन्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते शून्यतानिमित्ताप्रणिहितविमोचमुखानां प्रकृतिः कुतश्चिदागच्छति। न कचिद्गच्छति न कचिन्तिष्ठति। न शून्यतानिमित्ताप्रणिहितविमोचमुखानां तथता कुतश्चिदागच्छति। न कचिद्गच्छति न कचिन्तिष्ठति। न शून्यतानिमित्ताप्रणिहितविमोचमुखानां स्वभावः कुतश्चिदागच्छति। न कचिद्गच्छति न कचिन्तिष्ठति। न शून्यतानिमित्ताप्रणिहितविमोचमुखानां लक्षणं कुतश्चिदागच्छति। न कचिद्गच्छति न कचिन्तिष्ठति। नाऽभिज्ञाः कुतश्चिदागच्छन्ति। न कचिद्गच्छन्ति न कचिन्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते अभिज्ञानां प्रकृतिः कुतश्चिदागच्छति। न कचिद्गच्छति न कचिन्तिष्ठति। नाभिज्ञानां तथता कुतश्चिदागच्छति। न कचिद्गच्छति न कचिन्तिष्ठति। नाभिज्ञानां स्वभावः कुतश्चिदागच्छति। न कचिद्गच्छति न कचिन्तिष्ठति। नाभिज्ञानां लक्षणं कुतश्चिदागच्छति। न कचिद्गच्छति न कचिन्तिष्ठति। न समाधयः कुतश्चिदागच्छन्ति। न कचिद्गच्छन्ति न कचिन्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते समाधीनां प्रकृतिः कुतश्चिदागच्छति। न कचिद्गच्छति न कचिन्तिष्ठति। न समाधीनां तथता कुतश्चिदागच्छति। न कचिद्गच्छति न कचिन्तिष्ठति। न समाधीनां स्वभावः

कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न समाधीनां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न धारणीमुखानि कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते धारणीमुखानां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न धारणीमुखानां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न धारणीमुखानां स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न धारणीमुखानां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न दशतथागतबलानि न कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते दशानां तथागतबलानां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न दशानां तथागतबलानां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न दशानां तथागतबलानां स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न दशानां तथागतबलानां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न चत्वारि वैशारद्यानि कुतश्चिदागच्छन्ति। न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति। तत्कस्य हेतोर्न हि सुभूते वैशारद्यानां प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वैशारद्यानां तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वैशारद्यानां स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न वैशारद्यानां लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न

क्वचित्तिष्ठति । न चतस्रः प्रतिसम्विदः कुतश्चिदागच्छन्ति । न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति । तत्कस्य हेतोर्न हि सुभूते चतसृणां प्रतिसम्विदां प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न चतसृणां प्रतिसम्विदां तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न चतसृणां प्रतिसम्विदां स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न चतसृणां प्रतिसम्विदां लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न महाकरुणा कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । तत्कस्य हेतोर्न हि सुभूते महाकरुणायाः प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न महाकरुणायास्तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न महाकरुणायाः स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । न महाकरुणाया लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । नाष्टादशावेणिकाबुद्धधर्माः कुतश्चिदागच्छन्ति । न क्वचिद्गच्छन्ति न क्वचित्तिष्ठन्ति । तत्कस्य हेतोर्न हि सुभूते आवेणिकबुद्धधर्माणां प्रकृतिः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । नावेणिकबुद्धधर्माणां तथता कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । नावेणिकबुद्धधर्माणां स्वभावः कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति । नावेणिकबुद्धधर्माणां लक्षणं कुतश्चिदागच्छति । न क्वचिद्गच्छति न क्वचित्तिष्ठति ।

न सुभूते धर्मधातुः कुतश्चिदागच्छति । न क्वचिद्गच्छति न

क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते धर्मधातोः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न धर्मधातोस्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न धर्मधातोः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न धर्मधातोर्लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न सुभूते तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते तथतायाः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न तथतायास्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न तथतायाः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न तथतायालक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न भूतकोटिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते भूतकोटेः प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न भूतकोटेस्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न भूतकोटेः स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न भूतकोटेर्लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। न सुभूते ऽचिन्त्यधातुः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते ऽचिन्त्यधातो प्रकृतिः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽचिन्त्यधातोस्तथता कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति।

नाचिऽन्यधातोः स्वभावः कुतश्चिदागच्छति। न कचिद्गच्छति न
कचित्तिष्ठति। नाऽचिन्त्यधातोर्लक्षणं कुतश्चिदागच्छति। न
कचिद्गच्छति न कचित्तिष्ठति। न सुभूते बोधिः कुतश्चिदागच्छति।
न कचिद्गच्छति न कचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते
बोधेः प्रकृतिः कुतश्चिदागच्छति। न कचिद्गच्छति न कचित्तिष्ठति।
न बोधेस्तथता कुतश्चिदागच्छति। न कचिद्गच्छति न कचित्तिष्ठति।
न बोधेः स्वभावः कुतश्चिदागच्छति। न कचिद्गच्छति न कचि-
त्तिष्ठति। न बोधेर्लक्षणं कुतश्चिदागच्छति। न कचिद्गच्छति न
कचित्तिष्ठति। न सुभूते बुद्धः कुतश्चिदागच्छति। न कचिद्गच्छति
न कचित्तिष्ठति। तत्कस्य हेतोर्न हि सुभूते बुद्धस्य प्रकृतिः
कुतश्चिदागच्छति। न कचिद्गच्छति न कचित्तिष्ठति। न बुद्धस्य
तथता कुतश्चिदागच्छति। न कचिद्गच्छति न कचित्तिष्ठति। न
बुद्धस्य स्वभावः कुतश्चिदागच्छति। न कचिद्गच्छति न कचित्तिष्ठति।
न बुद्धस्य लक्षणं कुतश्चिदागच्छति। न कचिद्गच्छति न कचि-
त्तिष्ठति। न सुभूते संस्कृतं कुतश्चिदागच्छति। न कचिद्गच्छति
न कचित्तिष्ठति। न संस्कृतस्य तथता कुतश्चिदागच्छति। न
कचिद्गच्छति न कचित्तिष्ठति। न संस्कृतस्य स्वभावः कुतश्चिदा-
गच्छति। न कचिद्गच्छति न कचित्तिष्ठति। न संस्कृतस्य लक्षणं
कुतश्चिदागच्छति। न कचिद्गच्छति न कचित्तिष्ठति। न सुभूते
ऽसंस्कृतं कुतश्चिदागच्छति। न कचिद्गच्छति न कचित्तिष्ठति।
तत्कस्य हेतोर्न हि सुभूते ऽसंस्कृतस्य प्रकृतिः कुतश्चिदागच्छति।
न कचिद्गच्छति न कचित्तिष्ठति। नाऽसंस्कृतस्य तथता कुतश्चिदा-

गच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽसंस्कृतस्य स्वभावः कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। नाऽसंस्कृतस्य लक्षणं कुतश्चिदागच्छति। न क्वचिद्गच्छति न क्वचित्तिष्ठति। एवं तस्य महायानस्य नागतिर्दृश्यते न गतिर्दृश्यते न स्थानं दृश्यते।

यदपि सुभूतेरेवमाह। नाप्यस्य यानस्य पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्य उपलभ्यते। त्र्यध्वसमतानामेदं यानं महायानं। तस्मान्महायानमित्युच्यते। इति। एवमेतत् सुभूते एवमेतत्। नाप्यस्य यानस्य पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्य उपलभ्यते। त्र्यध्वसमतानामेदं यानं तस्मान्महायानमित्युच्यते। तत्कस्य हेतोस्तथा हि सुभूते अतीतोऽध्वाऽतीतेन शून्यः। अनागतोऽध्वाऽनागतेन शून्यः। प्रत्युत्पन्नोऽध्वाप्रत्युत्पन्नेन शून्यः। त्र्यध्वसमता त्र्यध्वसमतया शून्यः। महायानं महायानेन शून्यः। बोधिसत्त्वो बोधिसत्त्वेन शून्य। न सुभूते शून्यता एका न द्वे न तिस्रः न चतस्रः न पञ्च न षट् न सप्त नाष्टौ न नव न दश न पृथक् तस्मात् त्र्यध्वसमताया न भिदं बोधिसत्त्वानां महासत्त्वानां नैवाच समतोपलभ्यते। न विषमता। नैवाच राग उपलभ्यते। न विरागः। न द्वेष उपलभ्यते नाऽद्वेषः। न मोह उपलभ्यते नामोहः। न नामोपलभ्यते ना नाम। न संस्कृत उपलभ्यते नाऽसंस्कृतः। न कुशलमुपलभ्यते नाऽकुशलं। न सावद्यमुपलभ्यते नाऽनावद्यं। न साश्रवमुपलभ्यते नाऽनाश्रवं। न संक्लेशमुपलभ्यते न निष्क्लेशं। न लौकिकमुपलभ्यते नल्लोकोत्तरं। नोत्पाद उपलभ्यते न निरोधं। न संक्लेशमुपलभ्यते न व्यवदानं। नैवाच नित्यमुपलभ्यते

नाऽनित्यं। न सुखमुपलभ्यते न दुःखं। नात्मोपलभ्यते नाऽनात्मा। न शान्तमुपलभ्यते नाऽशान्तं। न कामधातुरुपलभ्यते न कामधातुसमतिक्रमः। न रूपधातुरुपलभ्यते न रूपधातुसमतिक्रमः। नारूप्यधातुरुपलभ्यते नारूप्यधातुसमतिक्रमः। न संसार उपलभ्यते न निर्वाणं। तत्कस्य हेतोस्तथाह्यस्य स्वभावो नोपलभ्यते।

अतीतं सुभूते रूपमतीते न रूपेण शून्यं तत्कस्य हेतोर्न हि शून्यतायामतीतं रूपमुपलभ्यते। शून्यतैव तावच्छून्याशून्यतया नोपलभ्यते कुतः पुनः शून्यतायामतीतं रूपमुपलभ्यते। अतीता वेदना अतीतया वेदनयाशून्या। तत्कस्य हेतोर्न हि शून्यतायामतीता वेदनोपलभ्यते। शून्यतैव तावच्छून्याशून्यतया नोपलभ्यते कुतः पुनः शून्यतायामतीतो वेदनोपलभ्यते। अतीता संज्ञा अतीतया संज्ञया शून्या। तत्कस्य हेतोर्न हि शून्यतायामतीता संज्ञोपलभ्यते। शून्यतैव तावच्छून्याशून्यतया नोपलभ्यते। कुतः पुनः शून्यतायामतीता संज्ञोपलभ्यते। अतीताः संस्काराः अतीतैः संस्कारैः शून्या तत्कस्य हेतोर्न हि सुभूते शून्यतायामतीताः संस्कारा उपलभ्यन्ते। शून्यतैव तावच्छून्याशून्यतया नोपलभ्यते। कुतः पुनः शून्यतायामतीताः संस्कारा उपलभ्यन्ते। अतीतं विज्ञानमतीते न विज्ञानेन शून्य। तत्कस्य हेतोर्न हि शून्यतायामतीतं विज्ञानमुपलभ्यते। शून्यतैव तावच्छून्याशून्यतया नोपलभ्यते। कुतः पुनः शून्यतायामतीतं विज्ञानमुपलभ्यते।

अनागतं सुभूते रूपमनागते न रूपेण शून्यं। तत्कस्य हेतोर्न हि शून्यतायामनागतं रूपमुपलभ्यते। शून्यतैव तावच्छून्याशून्य-

तयोपलभ्यते । कुतः पुनः शून्यतायामनागतं रूपमुपलभ्यते । अनागता वेदना अनागतया वेदनया शून्या । तत्कस्य हेतोर्न हि शून्यतायामनागता वेदनोपलभ्यते । शून्यतैव तावच्छून्याशून्यतया नोपलभ्यते । कुतः पुनः शून्यतायामनागता वेदनोपलभ्यते । अनागता संज्ञा अनागतया संज्ञयाशून्या । तत्कस्य हेतोर्न हि सुभूते अनागता संज्ञोपलभ्यते । शून्यतैव तावच्छून्याशून्यतया-नोपलभ्यते । कुतः पुनः शून्यतायामनागता संज्ञोपलभ्यते । अनागताः संस्काराः अनागतैः संस्कारैः शून्याः । तत्कस्य हेतोर्न हि सुभूते शून्यतायामनागताः संस्काराः उपलभ्यन्ते । शून्यतैव तावच्छून्याशून्यतया नोपलभ्यते । कुतः पुनः शून्यतायामनागताः संस्कारा उपलभ्यन्ते । अनागतं विज्ञानमनागते न विज्ञानेन शून्यं । तत्कस्य हेतोर्न सुभूते शून्यतायामनागतं विज्ञानमुपलभ्यते शून्यतैव तावच्छून्याशून्यतया नोपलभ्यते । कुतः पुनः शून्यतायामनागतं विज्ञानमुपलभ्यते ।

प्रत्युत्पन्नं सुभूते रूपं प्रत्युत्पन्नेन रूपेण शून्यं । तत्कस्य हेतोर्न हि सुभूते शून्यतायां प्रत्युत्पन्नं रूपमुपलभ्यते । शून्यतैव तावच्छून्या-शून्यतया नोपलभ्यते । कुतः पुनः शून्यतायां प्रत्युत्पन्नं रूपमुप-लभ्यते । प्रत्युत्पन्ना वेदना प्रत्युत्पन्नया वेदनया शून्या । तत्कस्य हेतोर्न हि सुभूते शून्यतायां प्रत्युत्पन्नावेदनोपलभ्यते । शून्यतैव तावच्छून्याशून्यतया नोपलभ्यते । कुतः पुनः शून्यतायां प्रत्युत्पन्ना-वेदनोपलभ्यते । प्रत्युत्पन्ना संज्ञा प्रत्युत्पन्नया संज्ञया शून्या । तत्कस्य हेतोर्न हि शून्यतायां प्रत्युत्पन्ना संज्ञोपलभ्यते । शून्यतैव

तावच्छून्याशून्यतया नोपलभ्यते । कुतः पुनः शून्यतायां प्रत्युत्पन्ना
संज्ञोपलभ्यते । प्रत्युत्पन्नाः संस्काराः प्रत्युत्पन्नैः संस्कारैः शून्याः ।
तत्कस्य हेतोर्न हि सुभूते शून्यतायां प्रत्युत्पन्नाः संस्काराः
उपलभ्यन्ते । शून्यतैव तावच्छून्याशून्यतया नोपलभ्यते । कुतः पुनः
शून्यतायां प्रत्युत्पन्नाः संस्काराः उपलभ्यन्ते । प्रत्युत्पन्नं विज्ञानं
प्रत्युत्पन्नेन विज्ञानेन शून्यं । तत्कस्य हेतोर्न हि सुभूते शून्यतायां
प्रत्युत्पन्नं विज्ञानमुपलभ्यते । शून्यतैव तावच्छून्याशून्यतया नोप-
लभ्यते । कुतः पुनः शून्यतायां प्रत्युत्पन्नं विज्ञानमुपलभ्यते ।

पूर्व्वान्ततः सुभूते दानपारमिता नोपलभ्यते । अपरान्ततो
दानपारमिता नोपलभ्यते । प्रत्युत्पन्नतो दनापारमिता नोपलभ्यते ।
त्र्यध्वसमतायां दानपारमिता नोपलभ्यते । न सुभूते समताया-
मतीताध्वोपलभ्यते । न समतायामनागताध्वोपलभ्यते । न समतायां
प्रत्युत्पन्नाध्वोपलभ्यते । समतैव तावत् समतायां नोपलभ्यते ।
कुतः पुनः समतायामतीताध्वोपलभ्यते । कुतोऽनागतोध्वोपलभ्यते ।
कुतः पुनः प्रत्युत्पन्नोऽध्वोपलभ्यते । पूर्व्वान्ततः शीलपारमिता
नोपलभ्यते । अपरान्ततः शीलपारमितानोपलभ्यते । प्रत्युत्पन्नतः
शीलपारमिता नोपलभ्यते । त्र्यध्वसमतायां शीलपारमिता
नोपलभ्यते । तत्कस्य हेतोर्न हि सुभूते समतायामतीतोऽध्वोप-
लभ्यते । न समतायामनागतोऽध्वोपलभ्यते । न समतायां
प्रत्युत्पन्नोऽध्वोपलभ्यते । समतैव तावत् समतायां नोपलभ्यते ।
कुतः पुनः समतायामतीतोऽध्वोपलभ्यते । कुतोऽनागतोध्वोपलभ्यते ।
कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते । पूर्व्वान्ततः क्षान्तिपारमिता नोपलभ्यते ।

अपरान्ततः क्षान्तिपारमिता नोपलभ्यते। प्रत्युत्पन्नतः क्षान्तिपारमिता नोपलभ्यते। अध्वसमतायां क्षान्तिपारमिता नोपलभ्यते। तत्कस्य हेतोर्न हि सुभूते समतायामतीतोऽध्वोपलभ्यते। न समतायामनागतोऽध्वोपलभ्यते। न समतायां प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत् समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा उपलभ्यते। कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततो वीर्यपारमिता नोपलभ्यते। अपरान्ततो वीर्यपारमिता नोपलभ्यते। प्रत्युत्पन्नतो वीर्यपारमिता नोपलभ्यते। अध्वसमतायां वीर्यपारमिता नोपलभ्यते। तत्कस्य हेतोर्न हि सुभूते समतायामतीतोऽध्वोपलभ्यते। न समतायामनागतोऽध्वोपलभ्यते। न समतायां प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत् समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वोपलभ्यते। कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततो ध्यानपारमिता नोपलभ्यते। अपरान्ततो ध्यानपारमिता नोपलभ्यते। प्रत्युत्पन्नतो ध्यानपारमिता नोपलभ्यते। अध्वसमतायां ध्यानपारमिता नोपलभ्यते। तत्कस्य हेतोर्न हि सुभूते समतायामतीतोऽध्वोपलभ्यते। न समतायामनागतोऽध्वोपलभ्यते। न समतायां प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत् समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वोपलभ्यते। कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते प्रज्ञापारमिता नोपलभ्यते। अपरान्ततः प्रज्ञापारमिता नोपलभ्यते। प्रत्युत्पन्नतः प्रज्ञापारमिता नोपलभ्यते। अध्वसमतायां प्रज्ञापारमिता नोपलभ्यते। तत्कस्य

हेतोर्न हि सुभूते समतायामतीतोऽध्वोपलभ्यते। न समतायामनागतोऽध्वोपलभ्यते न समतायां प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत् समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वोपलभ्यते। कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते।

पूर्वान्ततः सुभूते अध्यात्मशून्यता नोपलभ्यते। अपरान्ततोऽध्यात्मशून्यता नोपलभ्यते। प्रत्युत्पन्नतोऽध्यात्मशून्यता नोपलभ्यते। त्र्यध्वसमतायामध्यात्मशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽनागतोऽध्वोपलभ्यते। न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत् समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वोपलभ्यते। कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते बहिर्द्धाशून्यता नोपलभ्यते। अपरान्ततो बहिर्द्धाशून्यता नोपलभ्यते। प्रत्युत्पन्नतो बहिर्द्धाशून्यता नोपलभ्यते। त्र्यध्वसमतायां बहिर्द्धाशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वोपलभ्यते। न प्रत्युत्पन्नोऽध्वोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वोपलभ्यते। कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते ऽध्यात्मबहिर्द्धाशून्यता नोपलभ्यते। अपरान्ततोऽध्यात्मबहिर्द्धाशून्यता नोपलभ्यते। प्रत्युत्पन्नतोऽध्यात्मबहिर्द्धाशून्यता नोपलभ्यते। त्र्यध्वसमतायामध्यात्मबहिर्द्धाशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वोपलभ्यते। न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत् समतायां

नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वोपलभ्यते। कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते शून्यताशून्यता नोपलभ्यते। अपरान्ततः शून्यताशून्यता नोपलभ्यते। प्रत्युत्पन्नतः शून्यताशून्यता नोपलभ्यते। अध्वसमतायां शून्यताशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत् समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते महाशून्यता नोपलभ्यते। अपरान्ततो महाशून्यता नोपलभ्यते। प्रत्युत्पन्नतो महाशून्यता नोपलभ्यते। अध्वसमतायां महाशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत् समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते परमार्थशून्यता नोपलभ्यते। अपरान्ततः परमार्थशून्यता नोपलभ्यते। प्रत्युत्पन्नतः परमार्थशून्यता नोपलभ्यते। अध्वसमतायां परमार्थशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत् समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते संस्कृतशून्यता नोपलभ्यते। अपरान्ततः संस्कृतशून्यता नोपलभ्यते। प्रत्युत्पन्नतः संस्कृतशून्यता नोपलभ्यते। अध्वसमतायां संस्कृतशून्यता नोपलभ्यते। न सुभूते

समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते ऽसंस्कृतशून्यता नोपलभ्यते। अपरान्ततोऽसंस्कृतशून्यता नोपलभ्यते। प्रत्युत्पन्नतोऽसंस्कृतशून्यता नोपलभ्यते। त्र्यध्वसमतायामसंस्कृतशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते अत्यन्तशून्यता नोपलभ्यते। अपरान्ततोऽत्यन्तशून्यता नोपलभ्यते। प्रत्युत्पन्नतोऽत्यन्तशून्यता नोपलभ्यते। त्र्यध्वसमतायामत्यन्तशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते ऽनवराग्रशून्यता नोपलभ्यते। अपरान्ततोऽनवराग्रशून्यता नोपलभ्यते। प्रत्युत्पन्नतोऽनवराग्रशून्यता नोपलभ्यते। त्र्यध्वसमतायामनवराग्रशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते ऽनवकारशून्यता नोपलभ्यते। अपरान्ततोऽनवकारशून्यता

नोपलभ्यते। प्रत्युत्पन्नतोऽनवकारशून्यता नोपलभ्यते। त्र्यध्वसमतायामनवकारशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतो न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्व्वान्ततः सुभूते प्रकृतिशून्यता नोपलभ्यते। अपरान्ततः प्रकृतिशून्यता नोपलभ्यते। प्रत्युत्पन्नतः प्रकृतिशून्यता नोपलभ्यते। त्र्यध्वसमतायां प्रकृतिशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्व्वान्ततः सुभूते सर्व्वधर्म्मशून्यता नोपलभ्यते। अपरान्ततः सर्व्वधर्म्मशून्यता नोपलभ्यते। प्रत्युत्पन्नतः सर्व्वधर्म्मशून्यता नोपलभ्यते। त्र्यध्वसमतायां सर्व्वधर्म्मशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्व्वान्ततः सुभूते स्वलक्षणशून्यता नोपलभ्यते। अपरान्ततः स्वलक्षणशून्यता नोपलभ्यते। प्रत्युत्पन्नतः स्वलक्षणशून्यता नोपलभ्यते। त्र्यध्वसमतायां स्वलक्षणशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत् समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते।

कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते ऽनुपलम्भशून्यता नोपलभ्यते। अपरान्ततोऽनुपलम्भशून्यता नोपलभ्यते। प्रत्युत्पन्नतोऽनुपलम्भशून्यता नोपलभ्यते। अध्वसमतायाऽनुपलम्भशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत् समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते अभावशून्यता नोपलभ्यते। अपरान्ततोऽभावशून्यता नोपलभ्यते। प्रत्युत्पन्नतोऽभावशून्यता नोपलभ्यते। अध्वसमतायामभावशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते स्वभावशून्यता नोपलभ्यते। अपरान्ततः स्वभावशून्यता नोपलभ्यते। प्रत्युत्पन्नतः स्वभावशून्यता नोपलभ्यते। अध्वसमतायां स्वभावशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते ऽभावस्वभावशून्यता नोपलभ्यते। अपरान्ततोऽभावस्वभावशून्यता नोपलभ्यते। प्रत्युत्पन्नतोऽभावस्वभावशून्यता नोपलभ्यते। अध्वसमतायामभावस्वभावशून्यता नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा

प्रत्युत्पन्नत आर्य्यसत्यानि नोपलभ्यन्ते। अध्वसमतायामार्य्यसत्यानि नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽनागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुत पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्व्वान्ततः सुभूते ध्यानानि नोपलभ्यन्ते। अपरान्ततो ध्यानानि नोपलभ्यन्ते। प्रत्युत्पन्नतो ध्यानानि नोपलभ्यन्ते। अध्वसमतायां ध्यानानि नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽनागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्व्वान्ततः सुभूते अप्रमाणानि नोपलभ्यन्ते। अपरान्ततोऽप्रमाणानि नोपलभ्यन्ते। प्रत्युत्पन्नतोऽप्रमाणानि नोपलभ्यन्ते। अध्वसमतायामप्रमाणानि नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽनागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्व्वान्ततः सुभूते आरूप्यसमापत्तयो नोपलभ्यन्ते। अपरान्तत आरूप्यसमापत्तयो नोपलभ्यन्ते। प्रत्युत्पन्नत आरूप्यसमापत्तयो नोपलभ्यन्ते। अध्वसमतायामारूप्यसमापत्तयो नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते।

पूर्वान्ततः सुभूते अष्टौ विमोक्षा नोपलभ्यन्ते। अपरान्ततोऽष्टौ विमोक्षा नोपलभ्यन्ते। प्रत्युत्पन्नतोऽष्टौ विमोक्षा नोपलभ्यन्ते। त्र्यध्वसमतायामष्टौ विमोक्षा नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽनागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते नवानुपूर्व्वविहारसमापत्तयो नोपलभ्यन्ते। अपरान्ततो नवानुपूर्व्वविहारसमापत्तयो नोपलभ्यन्ते। प्रत्युत्पन्नतो नवानुपूर्व्वविहारसमापत्तयो नोपलभ्यन्ते। त्र्यध्वसमतायां नवानुपूर्व्वविहारसमापत्तयो नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽनागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि नोपलभ्यन्ते। अपरान्ततः शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि नोपलभ्यन्ते। प्रत्युत्पन्नतः शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि नोपलभ्यन्ते। त्र्यध्वसमतायां शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽनागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते अभिज्ञा नोपलभ्यते। अपरान्ततोऽभिज्ञा नोपलभ्यते। प्रत्युत्पन्नतोऽभिज्ञा नोपलभ्यते। त्र्यध्वसमतायामभिज्ञा-

न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते।

पूर्वान्ततः सुभूते स्मृत्युपस्थानानि नोपलभ्यन्ते। अपरान्ततः स्मृत्युपस्थानानि नोपलभ्यन्ते। प्रत्युत्पन्नतः स्मृत्युपस्थानानि नोपलभ्यन्ते। अध्वसमतायां स्मृत्युपस्थानानि नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते सम्यक्प्रहाणानि नोपलभ्यन्ते। अपरान्ततः सम्यक्प्रहाणानि नोपलभ्यन्ते। प्रत्युत्पन्नतः सम्यक्प्रहाणानि नोपलभ्यन्ते। अध्वसमतायां सम्यक्प्रहाणानि नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते ऋद्धिपादा नोपलभ्यन्ते। अपरान्ततः ऋद्धिपादा नोपलभ्यन्ते। प्रत्युत्पन्नत ऋद्धिपादा नोपलभ्यन्ते। अध्वसमतायामृद्धिपादा नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीताध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते इन्द्रियाणि नोपलभ्यन्ते। अपरान्ततः इन्द्रियाणि नोपलभ्यन्ते। प्रत्युत्पन्नत इन्द्रियाणि नोपलभ्यन्ते। अध्वसमताया-

मिन्द्रियाणि नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते बलानि नोपलभ्यन्ते। अपरान्ततो बलानि नोपलभ्यन्ते। प्रत्युत्पन्नतो बलानि नोपलभ्यन्ते। त्र्यध्वसमतायां बलानि नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते बोध्यङ्गानि नोपलभ्यन्ते। अपरान्ततो बोध्यङ्गानि नोपलभ्यन्ते। प्रत्युत्पन्नतो बोध्यङ्गानि नोपलभ्यन्ते। त्र्यध्वसमतायां बोध्यङ्गानि नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते आर्य्याष्टाङ्गमार्गो नोपलभ्यते। अपरान्ततः आर्य्याष्टाङ्गमार्गो नोपलभ्यते। प्रत्युत्पन्नत आर्य्याष्टाङ्गमार्गो नोपलभ्यते। त्र्यध्वसमतायामार्य्याष्टाङ्गमार्गो नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽनागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते आर्य्यसत्यानि नोपलभ्यन्ते। अपरान्तत आर्य्यसत्यानि नोपलभ्यन्ते।

नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽनागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते समाधयो नोपलभ्यन्ते। अपरान्ततः समाधयो नोपलभ्यन्ते। प्रत्युत्पन्नतः समाधयो नोपलभ्यन्ते। अध्वसमतायां समाधयो नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽनागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते धारणीमुखानि नोपलभ्यन्ते। अपरान्ततो धारणीमुखानि नोपलभ्यन्ते। प्रत्युत्पन्नतो धारणीमुखानि नोपलभ्यन्ते। अध्वसमतायां धारणीमुखानि नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽनागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते दशतथागतबलानि नोपलभ्यन्ते। अपरान्ततो दशतथागतबलानि नोपलभ्यन्ते। प्रत्युत्पन्नतो दशतथागतबलानि नोपलभ्यन्ते। अध्वसमतायां दशतथागतबलानि नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नानागतोऽध्वा न प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते चत्वारिवैशारद्यानि नोपलभ्यन्ते।

अपरान्ततश्चत्वारि वैशारद्यानि नोपलभ्यन्ते। प्रत्युत्पन्नतश्चत्वारि
वैशारद्यानि नोपलभ्यन्ते। अध्वसमतायां चत्वारि वैशारद्यानि
नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽना-
गतोऽध्वान प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोप-
लभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतोऽनागतो-
ऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते चतस्रः प्रति-
सम्विदो नोपलभ्यन्ते। अपरान्ततश्चतस्रः प्रतिसम्विदो नोपलभ्यन्ते।
प्रत्युत्पन्नतश्चतस्रः प्रतिसम्विदो नोपलभ्यन्ते। अध्वसमतायां चतस्रः
प्रतिसम्विदो नोपलभ्यन्ते। न सुभूते समतायामतीतोऽध्वोपलभ्यते।
नाऽनागतोऽध्वान प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां
नोपलभ्यते। कुतः पुनः समतायामतीतोऽध्वोपलभ्यते। कुतो-
ऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते
महाकरुणा नोपलभ्यते। अपरान्ततो महाकरुणा नोपलभ्यते।
प्रत्युत्पन्नतो महाकरुणा नोपलभ्यते। अध्वसमतायां महाकरुणा
नोपलभ्यते। न सुभूते समतायामतीतोऽध्वोपलभ्यते। नाऽनागतो-
ऽध्वान प्रत्युत्पन्नोऽध्वोपलभ्यते। समतैव तावत्समतायां नोपलभ्यते।
कुतः पुनः समतायामतीतोऽध्वोपलभ्यते कुतोऽनागतोऽध्वा कुतः
प्रत्युत्पन्नोऽध्वोपलभ्यते। पूर्वान्ततः सुभूते अष्टादशावेणिकाबुद्ध-
धर्मा नोपलभ्यन्ते। अपरान्ततोऽष्टादशावेणिकाबुद्धधर्मा नोपल-
भ्यन्ते। प्रत्युत्पन्नतोऽष्टादशावेणिकाबुद्धधर्मा नोपलभ्यन्ते। अध्व-
समतायामष्टादशावेणिकाबुद्धधर्मा नोपलभ्यन्ते। न सुभूते सम-
तायामतीतोऽध्वोपलभ्यन्ते। नानागतो न प्रत्युत्पन्नोऽध्वोपलभ्यते।

समतैव तावत्समतायां नोपलभ्यते। कुतः पुनः समताया-मतीतोऽध्वोपलभ्यते। कुतोऽनागतोऽध्वा कुतः प्रत्युत्पन्नोऽध्वोपलभ्यते।

पुनरपरं सुभूते पूर्वान्ततः पृथग्जनो नोपलभ्यते। अपरान्ततः पृथग्जनो नोपलभ्यते। प्रत्युत्पन्नतः पृथग्जनो नोपलभ्यते। अध्वसमतायां पृथग्जनो नोपलभ्यते। तत्कस्य हेतोः सत्त्वाऽनुपलब्धितामुपादाय। पुनरपरं सुभूते पूर्वान्ततः श्रावको नोपलभ्यते। अपरान्ततः श्रावको नोपलभ्यते। प्रत्युत्पन्नतः श्रावको नोपलभ्यते। अध्वसमतायां श्रावको नोपलभ्यते। तत्कस्य हेतोः सत्त्वाऽनुपलब्धितामुपादाय। पुनरपरं सुभूते पूर्वान्ततः प्रत्येकबुद्धो नोपलभ्यते। अपरान्ततः प्रत्येकबुद्धो नोपलभ्यते। प्रत्युत्पन्नतः प्रत्येकबुद्धो नोपलभ्यते। अध्वसमतायां प्रत्येकबुद्धो नोपलभ्यते। तत्कस्य हेतोः सत्त्वानुपलब्धितामुपादाय। पुनरपरं सुभूते पूर्वान्ततो बोधिसत्त्वो नोपलभ्यते। अपरान्ततो बोधिसत्त्वो नोपलभ्यते। प्रत्युत्पन्नतो बोधिसत्त्वो नोपलभ्यते। अध्वसमतायां बोधिसत्त्वो नोपलभ्यते। तत्कस्य हेतोः सत्त्वानुपलब्धितामुपादाय। पुनरपरं सुभूते पूर्वान्ततस्तथागतो नोपलभ्यते। अपरान्ततस्तथागतो नोपलभ्यते। प्रत्युत्पन्नतस्तथागतो नोपलभ्यते। अध्वसमतायां तथागतो नोपलभ्यते। तत्कस्य हेतोः सत्त्वानुपलब्धितामुपादाय। एव खलु बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां स्थित्वा त्रिष्वध्वसु शिक्षित्वा सर्व्वाकारज्ञता परिपूरयितव्या। इदं सुभूते बोधिसत्त्वस्य महासत्त्वस्य अध्वसमतानाम-

महायानं। यत्र स्थित्वा बोधिसत्त्वो महासत्त्वः सदेवमानुषासुरं लोकमभिभूय सर्व्वाकारज्ञतायां निर्यातिः।

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। साधु साधु-भगवन् यावत् सुभाषितमिदं भगवता बोधिसत्त्वानां महासत्त्वानां त्र्यध्वसमतानाममहायानं। अत्र भगवन् महायाने शिक्षित्वाऽतीतै-रपि बोधिसत्त्वैर्महासत्त्वैः सर्व्वाकारज्ञता समनुप्राप्ता। अनागता अपि भगवन् बोधिसत्त्वा महासत्त्वा अत्रैव महायाने शिक्षित्वा सर्व्वाकारज्ञता मनुप्राप्स्यन्ति। येऽपि ते भगवन्नेतर्हि दशसु दिक्षु अप्रमेयासंख्येयेषु लोकधातुष्वपरिमाणा बोधिसत्त्वा महासत्त्वा-स्तेऽप्यत्रमहायाने शिक्षित्वा सर्व्वाकारज्ञतामनुप्राप्नुवन्ति। तस्मात्तर्हि भगवन् महायानमिद बोधिसत्त्वानां महासत्त्वानां यदुत त्र्यध्व-समतानाम। एवमुक्ते भगवानायुष्मन्त सुभूतिमेतदवोचत्। एव-मेतत् सुभूते एवमेतत्। अत्र महायाने शिक्षित्वाऽतीतानागत-प्रत्युत्पन्नैस्तथागतैरर्हद्भिः सम्यक्सम्बुद्धैः सर्व्वाकारज्ञताऽनुप्राप्ता चानु-प्राप्स्यते चानुप्राप्यते च॥०॥

शतसाहस्र्याः प्रज्ञापारमितायाः एकादशपरिवर्त्तः॥०॥

# अथ द्वादशः परिवर्त्तः।



अथ खलु पूर्णो मैत्रायणी पुत्रो भगवन्तमेतदवोचत्। अयं भगवन् सुभूतिः स्थविरस्तथागतेनार्हता सम्यक्सम्बुद्धेन प्रज्ञापारमितायाः कृते अध्येषितः स महायानमुपदेष्टव्यमन्यते। अथायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। माहैवाहं भगवन् प्रज्ञापारमितामतिक्रम्यमहायानमुपदिशामि। भगवानाह। नोहीदं सुभूतेऽनुलोमं त्वं सुभूते प्रज्ञापारमितायां महायानमुपदिशसि। तत्कस्य हेतोस्तथाहि सुभूते ये केचित् कुशला धर्माः श्रावकधर्मा वा प्रत्येकबुद्धधर्मा वा बोधिसत्त्वधर्मा वा बुद्धधर्मा वा सर्वे ते प्रज्ञापारमितायां संग्रहं समवसरणं गच्छन्ति। सुभूतिराह। कतमे भगवन् कुशलाधर्मा बोधिपक्षाः वा के धर्माश्च प्रत्येकबुद्धधर्माश्च बोधिसत्त्वधर्माश्च बुद्धधर्माश्च ये प्रज्ञापारमितायां संग्रहं समवसरणं गच्छन्ति। भगवानाह। तद्यथा चत्वारि स्मृत्युपस्थानानि। चत्वारि सम्यक्प्रहाणानि। चत्वार ऋद्धिपादाः। पञ्चेन्द्रियाणि। पञ्चबलानि। सप्तबोध्यङ्गानि। आर्य्याष्टाङ्गोमार्गः। चत्वार्य्यार्य्यसत्यानि। शून्यतानिमित्ताप्रणिहित विमोक्षमुखानि। चत्वारि ध्यानानि। चत्वार्य्यप्रमाणानि। चतस्र आरूप्य समापत्तयः। षड्भिज्ञाः। दानपारमिता। शीलपारमिता। क्षान्तिपारमिता। वीर्य्यपारमिता। ध्यानपारमिता। प्रज्ञापारमिता। अध्यात्मशून्यता। बहिर्द्धाशून्यता। अध्यात्मबहिर्द्धाशून्यता। शून्यता-

 

शून्यता। महाशून्यता। परमार्थशून्यता। संस्कृतशून्यता। असंस्कृतशून्यता। अत्यन्तशून्यता। अनवराग्रशून्यता। अनवकारशून्यता। प्रकृतिशून्यता। सर्व्वधर्म्मशून्यता। स्वलक्षणशून्यता। अनुपलम्भशून्यता। अभावशून्यता। स्वभावशून्यता। अभावस्वभावशून्यता। सर्व्वसमाधयः। सर्व्वधारणीमुखानि। दशतथागतबलानि। चत्वारि वैशारद्यानि। चतस्रः प्रतिसम्विदः। महामैत्री। महाकरुणा। महामुदिता। महोपेक्षा। अष्टादशावेणिकाबुद्धधर्म्माः। असंप्रमोषधर्म्मता। महोपेक्षाविहारिता। इमे सुभूते कुशलाधर्म्मा बोधिपक्षाः। श्रावकधर्म्माश्च प्रत्येकबुद्धधर्म्माश्च बोधिसत्त्वधर्म्माश्च बुद्धधर्म्माश्च ये प्रज्ञापारमितायां संग्रहं समवसरणं गच्छन्ति। यच्च सुभूते महायानं यच्च प्रज्ञापारमिता ध्यानपारमिता वीर्य्यपारमिता क्षान्तिपारमिता शीलपारमिता दानपारमिता। यच्च रूपं या च वेदना या च संज्ञा ये च संस्काराः यच्च विज्ञानं यच्च चक्षुः यच्च रूपं यच्च चक्षुर्व्विज्ञानं यच्च चक्षुःसंस्पर्शो या च चक्षुःसंस्पर्शप्रत्ययवेदना। यच्च श्रोत्रं यच्च शब्दो यच्च श्रोत्रविज्ञानं यच्च श्रोत्रसंस्पर्शो या च श्रोत्रसंस्पर्शप्रत्ययवेदना। यच्च घ्राणं यच्च गन्धो यच्च घ्राणविज्ञानं यच्च घ्राणसंस्पर्शो या च घ्राणसंस्पर्शप्रत्ययवेदना। या च जिह्वा यच्च रसो यच्च जिह्वाविज्ञानं यच्च जिह्वासंस्पर्शो या च जिह्वासंस्पर्शप्रत्ययवेदना। यच्च कायो यच्च स्पर्शो यच्च कायविज्ञानं यच्च कायसंस्पर्शो या च कायसंस्पर्शप्रत्ययवेदना। यच्च मनो ये च धर्म्मा यच्च मनोविज्ञानं यच्च मनःसंस्पर्शो या च मनःसंस्पर्शप्रत्ययवेदना। या चाविद्या ये च संस्कारा यच्च विज्ञानं यच्च

नामरूपं यच्च षडायतनं यश्च स्पर्शो या च वेदना या च तृष्णा यच्चोपादानं यश्च भवो या च जातिर्यच्च जरामरणं। या च दानपारमिता या च शीलपारमिता या च क्षान्तिपारमिता या च वीर्य्यपारमिता या च ध्यानपारमिता या च प्रज्ञापारमिता। या चाऽध्यात्मशून्यता या च बहिर्द्धाशून्यता या चाऽध्यात्मबहिर्द्धाशून्यता या च शून्यताशून्यता या च महाशून्यता या च परमार्थशून्यता या च संस्कृतशून्यता या चाऽसंस्कृतशून्यता या चाऽत्यन्तशून्यता या चाऽनवराग्रशून्यता या चाऽनवकारशून्यता या च प्रकृतिशून्यता या च सर्व्वधर्म्मशून्यता या च स्वलक्षणशून्यता या चाऽनुपलम्भशून्यता या चाऽभावशून्यता या च स्वभावशून्यता या चाऽभावस्वभावशून्यता। यानि च स्मृत्युपस्थानानि यानि च सम्यक्प्रहाणानि। ये चर्द्धिपादाः। यानि चेन्द्रियाणि यानि च बलानि यानि च बोध्यङ्गानि यश्चार्य्याष्टाङ्गोमार्गः। यानि चार्य्यसत्यानि यानि च ध्यानानि यानि चाप्रमाणानि याश्चारूप्यसमापत्तयो याश्च षडभिज्ञाः। यानि चाष्टाभिभ्वायतनानि। यानि दशकृत्स्नायतनानि। येचाष्टौ विमोक्षाः। याश्च नवाऽनुपूर्व्वविहारसमापत्तयः। यच्च दुःखं यश्च समुदयो यश्च निरोधो यश्च मार्गः। यानि च शून्यतानिमित्ताप्रणिहित विमोक्षमुखानि। ये च समाधयो यानि च धारणीमुखानि यानि च दश तथागतबलानि। यानि च चत्वारि वैशारद्यानि। याश्च चतस्रः प्रतिसम्विदो या च महाकरुणा ये चाष्टादशावेणिकाबुद्धधर्म्माः। यश्च कामधातुर्यश्चारूप्यधातुर्ये च कुशलधर्म्माः ये च साश्रवाधर्म्माः ये चानाश्रवाधर्म्माः ये च लौकिकाधर्म्माः

ये च लोकोत्तराधर्म्मा ये च संस्कृतधर्म्मा ये चाऽसंस्कृतधर्म्मा यश्च तथागतधर्म्मः । यश्च तथागतेन प्रवेशितो धर्म्मविनयो यश्च धर्म्मधातुर्या च तथता या च भूतकोटि यश्चाचिन्त्योधातुर्यश्च निर्व्वाणधातु सर्व्वेच एते धर्म्मा न संयुक्ता न विसंयुक्ता । अरूपिणोऽनिदर्शना अप्रतिघा एकलक्षणा यदुत लक्षणा । अनेन त्व सुभूते पर्य्यायेण प्रज्ञापारमितायां अनुलोमं महायानमुपदिशसि । तत्कस्य हेतोर्न्न हि सुभूतेऽन्यन्महायानमन्या प्रज्ञापारमिता । इति हि महायानस्य प्रज्ञापारमिता चाद्वयमेतदद्वैधीकार । नान्यन्महायानमन्या ध्यानपारमिता । इति हि महायानस्य प्रज्ञापारमिता चाद्वयमेतदद्वैधीकार । नान्यन्महायानमन्या वीर्य्यपारमिता । इति हि महायानस्य वीर्य्यपारमिता चाद्वयमेतदद्वैधीकार । नान्यन्महायानमन्या क्षान्तिपारमिता इति हि महायानस्य क्षान्तिपारमिता चाद्वयमेतदद्वैधीकार । नान्यन्महायानमन्या शीलपारमिता । इति हि महायानस्य शीलपारमिता चाद्वयमेतदद्वैधीकार । नान्यन्महायानमन्या दानपारमिता । इति हि महायानस्य दानपारमिता चाद्वयमेतदद्वैधीकार । नान्यन्महायानमन्याऽध्यात्मशून्यता । इति हि महायानस्याध्यात्मशून्यता चाद्वयमेतदद्वैधीकार । नान्यन्महायानमन्या बहिर्द्धाशून्यता । इति हि महायानस्य बहिर्द्धाशून्यता चाद्वयमेतदद्वैधीकार । नान्यन्महायानमन्याऽध्यात्मबहिर्द्धाशून्यता । इति हि महायानस्याध्यात्मबहिर्द्धाशून्यता चाद्वयमेतदद्वैधीकार । नान्यन्महायानमन्या, शून्यताशून्यता । इति हि महायानस्य शून्यताशून्यता चाद्वयमेतदद्वैधीकार । नान्यन्महायान-

मन्या महाशून्यता । इति हि महायानस्य महाशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायान मन्यापरमार्थशून्यता । इति हि महायानस्य परमार्थशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायानं मन्या संस्कृतशून्यता । इति हि महायानस्य संस्कृतशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायानमन्याऽसंस्कृतशून्यता । इति हि महायानस्यासंस्कृतशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायानमन्याऽत्यन्तशून्यता । इति हि महायानस्यात्यन्तशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायानमन्याऽनवराग्रशून्यता । इति हि महायानस्यानवराग्रशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायानमन्याऽनवकारशून्यता । इति हि महायानस्यानवकारशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायानमन्या प्रकृतिशून्यता । इति हि महायानस्य प्रकृतिशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायानमन्या सर्व्वधर्म्मशून्यता । इति हि महायानस्य सर्व्वधर्म्मशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायानमन्या स्वलक्षणशून्यता । इति हि महायानस्य स्वलक्षणशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायानमन्याऽनुपलम्भशून्यता । इति हि महायानस्यानुपलम्भशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायानमन्याऽभावशून्यता । इति हि महायानस्याभावशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायान नान्यास्वभावशून्यता । इति हि महायानस्य स्वभावशून्यता चाद्वयमेतद्द्वैधीकारं । नान्यन्महायानमन्याऽभावस्वभावशून्यता । इति हि महायानस्याभावस्वभावशून्यता चाद्वयमेतद्द्वैधीकारं ।

नान्यन्महायानमन्यानि स्मृत्युपस्थानानि । इति हि महायानस्य

मृत्युपस्थानानि चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्यानि सम्यक्प्रहाणानि। इति हि महायानस्य सम्यक्प्रहाणानि चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्ये ऋद्धिपादाः। इति हि महायानस्यर्द्धिपादाश्चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्यानीन्द्रियाणि। इति हि महायानस्येन्द्रियाणि चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्यानि बलानि। इति हि महायानस्य बलानि चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्यानि बोध्यङ्गानि। इति हि महायानस्य बोध्यङ्गानि चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्य आर्य्याष्टाङ्गमार्गः। इति हि महायानस्यार्य्याष्टाङ्गमार्गश्चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्यान्यार्य्यसत्यानि। इति हि महायानस्यार्य्यसत्यानि चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्यानि ध्यानानि। इति हि महायानस्य ध्यानानि चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्यान्यप्रमाणानि। इति हि महायानस्याप्रमाणानि चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्या आरूप्यसमापत्तय.। इति हि महायानस्यारूप्य समापत्तयश्चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्येऽष्टौ विमोक्षाः। इति हि महायानस्य विमोक्षाश्चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्या नवानुपूर्व्वविहारसमापत्तयः। इति हि महायानस्यानुपूर्व्वविहारसमापत्तयश्चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्यानि शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि। इति हि महायानस्य शून्यतानिमित्ताप्रणिहितविमोक्षमुखानि चाद्यमेतद्द्वैधीकारं। नान्यन्महायानमन्या अभिज्ञा। इति हि महायानस्याभिज्ञाश्चाद्यमेत-

द्वैधीकारं। नान्यन्महायानमन्ये समाधयः। इति हि महायानस्य समाधयश्चाद्वयमेतद्द्वैधीकारं। नान्यन्महायानमन्यानि धारणीमुखानि। इति हि महायानस्य धारणीमुखानि चाद्वयमेतद्द्वैधीकारं। नान्यन्महायानमन्यानि दश तथागतबलानि। इति हि महायानस्य तथागतबलानि चाद्वयमेतद्द्वैधीकारं। नान्यन्महायानमन्यानि वैशारद्यानि। इति हि महायानस्य वैशारद्यानि चाद्वयमेतद्द्वैधीकारं। नान्यन्महायानमन्यास्तस्रः प्रतिसम्विदः। इति हि महायानस्य प्रतिसम्वितश्चाद्वयमेतद्द्वैधीकारं। नान्यन्महायानमन्या महाकरुणा। इति हि महायानस्य महाकरुणा चाद्वयमेतद्द्वैधीकारं। नान्यन्महायानमन्येऽष्टादशावेणिका बुद्धधर्माः। इति हि महायानस्यावेणिकबुद्धधर्माश्चाद्वयमेतद्द्वैधीकारं।

अनेन सुभूते पर्य्यायेण महायानमुपदिश्य प्रज्ञापारमितोपदिष्टा भवति। प्रज्ञापारमितामुपदिश्य महायानमुपदिष्टं भवति। अथायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। अपि तु खलु पुनर्भगवन् पूर्व्वान्ततो बोधिसत्वो नोपलभ्यते। अपरान्ततो बोधिसत्वो नोपलभ्यते। मध्यतोऽपि बोधिसत्वो नोपलभ्यते। रूपापर्य्यन्ततया बोधिसत्वापर्य्यन्तता वेदितव्या। वेदनाऽपर्य्यन्ततया बोधिसत्वापर्य्यन्तता वेदितव्या। संज्ञापर्य्यन्ततया बोधिसत्वापर्य्यन्तता वेदितव्या। संस्कारापर्य्यन्ततया बोधिसत्वापर्य्यन्तता वेदितव्या। विज्ञानापर्य्यन्ततया बोधिसत्वापर्य्यन्तता वेदितव्या। रूपं बोधिसत्त्व इत्येवमपि न संविद्यते नोपलभ्यते। वेदना बोधिसत्त्व इत्येवमपि

न संविद्यते नोपलभ्यते । संज्ञा बोधिसत्त्व इत्येवमपि न संविद्यते
नोपलभ्यते । संस्कारा बोधिसत्त्व इत्येवमपि न संविद्यते नोप-
लभ्यते । विज्ञानं बोधिसत्त्व इत्येवमपि न संविद्यते नोपलभ्यते ।
एवमहं भगवन् सर्व्वेण सर्व्वं सर्व्वथा सर्व्वं बोधिसत्त्वमसमनुपश्यन्न-
नुपलभमानः कतमं बोधिसत्त्वं कतमस्यां प्रज्ञापारमितायामववदि-
ष्याम्यनुशासिष्यामि । बोधिसत्त्वमेव तावत् सकलं न समनुपश्यामि
नोपलभे । तत् कतमं बोधिसत्त्वं कतमस्यां प्रज्ञापारमितायामव-
वदिष्याम्यनुशासिष्यामि । बोधिसत्त्वो महासत्त्व इति भगवन्नुच्यते
नाममात्रमेतत् । यथा आत्मेति भगवन्नुच्यतेऽत्यन्तानभिनिर्वृत्त-
आत्मा । एवमेव भगवन् बोधिसत्त्वो महासत्त्व इत्युच्यतेऽत्यन्ता-
ऽनभिनिर्वृत्तत्वाद् बोधिसत्त्वः । एवमभावस्वभावानां धर्म्माणां कतम-
त्तद्रूपं यदनभिनिर्वृत्तं । कतमासावेदनायाऽनभिनिर्वृत्ता । कत-
मासासंज्ञायाऽनभिनिर्वृत्ता । कतमेते संस्कारा येऽनभिनिर्वृत्ताः ।
कतमत्तद्विज्ञानं यदनभिनिर्वृत्तं । यच्च भगवन्ननभिनिर्वृत्तं । न
तद्रूपं या चानभिनिर्वृत्ता न सा वेदना । या चानभिनिर्वृत्ता न
सा संज्ञा । ये चानभिनिर्वृत्ता न ते संस्काराः । यदनभिनिर्वृत्तं
न तद्विज्ञानं । तत् किमनभिनिर्वृत्तमनभिनिर्वृत्तायां प्रज्ञा-
पारमितायामववदिष्याम्यनुशासिष्यामि । न चान्यत्रानभिनिर्वृत्तो-
र्ब्बोधिसत्त्वो महासत्त्व उपलभ्यते । यो बोधायचरेत् । स चेदेवं
निर्दिश्यमाने बोधिसत्त्वस्य महासत्त्वस्य चित्तं नावलीयते न संली-
यते न विप्रतिसारी भवति मानसं नोत्त्रस्यति न संत्रस्यति न
संत्रासमापद्यते । चरत्ययं बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां ।

अथायुष्मान् शारद्वतीपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्। केन कारणेनायुष्मन् सुभूते पूर्वान्ततो बोधिसत्त्वो नोपैति। अपरान्ततो बोधिसत्त्वो नोपैति मध्यतो बोधिसत्त्वो नोपैति। केन कारणेनायुष्मन् सुभूते रूपापर्यन्ततया बोधिसत्त्वापर्यन्तता वेदितव्या। वेदनापर्यन्ततया बोधिसत्त्वापर्यन्तता वेदितव्या। संज्ञापर्यन्ततया बोधिसत्त्वापर्यन्तता वेदितव्या। संस्कारापर्यन्ततया बोधिसत्त्वापर्यन्तता वेदितव्या। विज्ञानपर्यन्ततया बोधिसत्त्वापर्यन्तता वेदितव्या। केन कारणेनायुष्मन् सुभूते रूपं बोधिसत्त्व इत्येवमपि न संविद्यते नोपलभ्यते। वेदना बोधिसत्त्व इत्येवमपि न संविद्यते नोपलभ्यते। संज्ञा बोधिसत्त्व इत्येवमपि न संविद्यते नोपलभ्यते। विज्ञानं बोधिसत्त्व इत्येवमपि न संविद्यते नोपलभ्यते। केन कारणेनायुष्मन् सुभूते एवं वदस्येवमहं सर्व्वेण सर्व्वं सर्व्वथा सर्व्वं बोधिसत्त्वमसमनुपश्यन्ननुपलभमानः कतमं बोधिसत्त्वं कतमस्यां प्रज्ञापारमितायामववदिष्याम्यनुशासिष्यामि। केन कारणेनायुष्मन् सुभूते एवं वदसि बोधिसत्त्वमेव तावत् सकलं न समनुपश्यामि नोपलभे। कतमं बोधिसत्त्वं कतमस्यां प्रज्ञापारमितायामवदिष्याम्यनुशासिष्यामि। केन कारणेनायुष्मन् सुभूते एवं वदसि बोधिसत्त्वो बोधिसत्त्व इति भगवन्नुच्यते। यावदेव नाममात्रमेतत्। केन कारणेनायुष्मन् सुभूते एव वदसि यथा आत्मेत्युच्यते अत्यन्तानभिनिर्वृत्तत्वादात्मा। एवमेव भगवन् बोधिसत्त्वो महासत्त्व इत्युच्यते अत्यन्तानभिनिर्वृत्तत्वाद् बोधिसत्त्वः। एवमभावे स्वभावानां सर्व्वधर्म्माणां,कतमत्तद्रूपं यदनभिनिर्वृत्तं। कतमा सा वेदना

याऽनभिनिर्वृत्ता। कतमा सा संज्ञा याऽनभिनिर्वृत्ता। कतमे ते संस्कारा येऽनभिनिर्वृत्ताः। कतम तद्विज्ञानं यदनभिनिर्वृत्तं। यदनभिनिर्वृत्तं न तद्रूपं। याऽनभिनिर्वृत्ता न सा वेदना। याऽनभिनिर्वृत्ता न सा संज्ञा। येऽनभिनिर्वृत्ता न ते संस्काराः। यदनभिनिर्वृत्तं न तद्विज्ञानं। केन कारणेन सुभूते एवं वदसि तत् किमनभिनिर्वृत्तमनभिनिर्वृत्तायां प्रज्ञापारमितायामववदिष्याम्यनुशासिष्यामि। केन कारणेन सुभूते एवं नाऽन्यत्रानभिनिर्वृत्तेर्बोधिसत्त्व उपलभ्यते यो बोधाय चरेत्। केन कारणेन सुभूते एवं वदसि स चेदेवं निर्दिश्यमाने बोधिसत्त्वस्य महासत्त्वस्य चित्तं नावलीयते न संलीयते न विप्रतिसारी भवति मानसं नोत्त्रस्यति न संत्रस्यति न संत्रासमापद्यते चरत्ययं बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायामिति। एवमुक्ते आयुष्मान् सुभूतिरायुष्मन्तं शारद्वतीपुत्रमेतदवोचत्। सत्त्वासत्तयायुष्मञ्छारद्वतीपुत्र पूर्वान्ततो बोधिसत्त्वो नोपैति। सत्त्वविविक्ततया पूर्वान्ततो बोधिसत्त्वो नोपैति। सत्त्वा स्वभावतया पूर्वान्ततो बोधिसत्त्वो नोपैति। सत्त्वासत्त्वयाऽपरान्ततो बोधिसत्त्वो नोपैति। सत्त्वाशून्यतया सत्त्वविविक्ततया सत्त्वास्वभावतया अपरान्ततो बोधिसत्त्वो नोपैति। सत्त्वासत्तया मध्यतो बोधिसत्त्वो नोपैति। सत्त्वशून्यतया सत्त्वविविक्ततया सत्त्वास्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र सत्त्वासत्तयो सत्त्वशून्यतायां सत्त्वविविक्ततायां सत्त्वास्वभावतायां पूर्वान्त उपलभ्यते नापरान्तो न मध्य उपलभ्यते। न चान्यासत्त्वासत्ताऽन्यासत्त्वशून्यताऽन्यासत्त्व-

विविक्तताऽन्यामत्त्वास्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यो मध्य इति शारिपुत्रस्कारदतीपुत्र या च सत्त्वासत्ता या च सत्त्वशून्यता या च सत्त्वविविक्तता या च सत्त्वस्वभावता यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं सर्व्वमेतदद्वयमद्वैधीकारं ॥ रूपासत्तायाशारिपुत्रस्कारदतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। रूपशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। रूपविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। रूपास्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। रूपासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। रूपशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। रूपविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। रूपास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। रूपासत्तया मध्यतो बोधिसत्त्वो नोपैति। रूपशून्यतया मध्यतो बोधिसत्त्वो नोपैति। रूपविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। रूपास्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्म शारिपुत्रस्कारदतीपुत्र रूपासत्तायां रूपशून्यतायां रूपविविक्ततायां रूपास्वभावतायां पूर्व्वान्त उपलभ्यते नापरान्त उपलभ्यते न मध्य उपलभ्यते। न चान्यारूपासत्ताऽन्यारूपशून्यताऽन्यारूपविविक्तताऽन्यारूपास्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्येन मध्यं। इति शारिपुत्रस्कारदतीपुत्र या च रूपासत्ता या च रूपशून्यता या च रूपविविक्तता या च रूपास्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं सर्व्वमेतदद्वयमद्वैधीकारं।

वेदनासत्तया शारिपुत्रस्कारदतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति।

वेदनाशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । वेदनाविविक्ततया
पूर्व्वान्ततो बोधिसत्त्वो नोपैति । वेदनाऽस्वभावतया पूर्व्वान्ततो
बोधिसत्त्वो नोपैति। वेदनाऽसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति।
वेदनाशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । वेदनाविविक्त-
तयाऽपरान्ततो बोधिसत्त्वो नोपैति । वेदनाऽस्वभावतयाऽपरान्ततो
बोधिसत्त्वो नोपैति । वेदनाऽसत्तया मध्यतो बोधिसत्त्वो नोपैति ।
वेदनाशून्यतया मध्यतो बोधिसत्त्वो नोपैति । वेदनाविविक्ततया
मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वती-
पुत्र वेदनाऽसत्तया वेदनाशून्यतायां वेदनाविविक्ततायां वेदना-
ऽस्वभावतायां पूर्व्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यं
उपलभ्यते । न चाऽन्यावेदनासत्ताऽन्यावेदनाशून्यताऽन्यावेदनावि-
विक्तताऽन्यावेदनाऽस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽप-
रान्तोऽन्यन्मध्यं । इति ह्यायुष्मञ्छारद्वतीपुत्र या च वेदनाऽसत्ता
या च वेदनाशून्यता या च वेदनाविविक्तता या च वेदनाऽस्वभा-
वतायश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो या च मध्यं
सर्व्वमेतदद्वयमद्वैधीकारं ।

संज्ञाऽसत्तायायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति ।
संज्ञाशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । संज्ञाविविक्ततया
पूर्व्वान्ततो बोधिसत्त्वो नोपैति । संज्ञाऽस्वभावतया पूर्व्वान्ततो
बोधिसत्त्वो नोपैति । संज्ञासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति ।
संज्ञाशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । संज्ञाविविक्ततया-
ऽपरान्ततो बोधिसत्त्वो नोपैति । संज्ञाऽस्वभावतयाऽपरान्ततो

बोधिसत्त्वो नोपैति । संज्ञाऽसत्तया मध्यतो बोधिसत्त्वो नोपैति । संज्ञाशून्यतया मध्यतो बोधिसत्त्वो नोपैति । संज्ञाविविक्ततया मध्यतो बोधिसत्त्वो नोपैति । संज्ञाऽस्वभावतया मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र संज्ञाऽसत्तायां संज्ञाशून्यतायां संज्ञाविविक्ततायां संज्ञाऽस्वभावतायां पूर्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चाऽन्या संज्ञाऽसत्ताऽन्या संज्ञाशून्यताऽन्या संज्ञाविविक्तताऽन्या संज्ञाऽस्वभावता । अन्यो बोधिसत्त्वोऽन्यः पूर्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं । इति ह्यायुष्मञ्छारद्वतीपुत्र या च संज्ञाऽसत्ता या च संज्ञाशून्यता या च संज्ञाविविक्तता या च संज्ञाऽस्वभावता यश्च बोधिसत्त्वो यश्च पूर्वान्तो यश्चाऽपरान्तो यच्च मध्यं सर्वमेतदद्वयमद्वैधीकारं ।

संस्काराऽसत्तयायुष्मञ्छारद्वतीपुत्र पूर्वान्ततो बोधिसत्त्वो नोपैति । संस्कारशून्यतया पूर्वान्ततो बोधिसत्त्वो नोपैति । संस्कारविविक्ततया पूर्वान्ततो बोधिसत्त्वो नोपैति । संस्काराऽस्वभावतया पूर्वान्ततो बोधिसत्त्वो नोपैति । संस्काराऽसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति । संस्कारशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । संस्कारविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । संस्काराऽस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति । संस्काराऽसत्तया मध्यतो बोधिसत्त्वो नोपैति । संस्कारशून्यतया मध्यतो बोधिसत्त्वो नोपैति । संस्कारविविक्ततया मध्यतो बोधिसत्त्वो नोपैति । संस्काराऽस्वभावतया मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र संस्काराऽसत्तायां संस्कारशून्य-

तायां संस्कारविविक्ततायां संस्कारास्वभावतायां पूर्वान्त उप-
लभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चाऽन्या
संस्काराऽसत्ताऽन्या संस्कारशून्यताऽन्या संस्कारविविक्तताऽन्या
संस्काराऽस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्वान्तोऽन्योऽपरान्तो-
ऽन्यन्मध्यं । इति ह्यायुष्मञ्छारद्वतीपुत्र । या च संस्काराऽसत्ता
या च संस्कारशून्यता या च संस्कारविविक्तता या च संस्काराऽ-
स्वभावता यश्च बोधिसत्त्वो यश्च पूर्वान्तो यश्चापरान्तो यच्च मध्यं
सर्वमेतदद्वयमद्वैधीकारं ।

विज्ञानाऽसत्तयायुष्मञ्छारद्वतीपुत्र पूर्वान्तो बोधिसत्त्वो
नोपैति । विज्ञानशून्यतया पूर्वान्ततो बोधिसत्त्वो नोपैति ।
विज्ञानविविक्ततया पूर्वान्ततो बोधिसत्त्वो नोपैति । विज्ञाना-
स्वभावतया पूर्वान्ततो बोधिसत्त्वो नोपैति । विज्ञानासत्तयाऽ-
परान्ततो बोधिसत्त्वो नोपैति । विज्ञानशून्यतयाऽपरान्ततो
बोधिसत्त्वो नोपैति । विज्ञानविविक्ततयाऽपरान्ततो बोधिसत्त्वो
नोपैति । विज्ञानास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति ।
विज्ञानासत्तया मध्यतो बोधिसत्त्वो नोपैति । विज्ञानशून्यतया
मध्यतो बोधिसत्त्वो नोपैति । विज्ञानविविक्ततया मध्यतो बोधि-
सत्त्वो नोपैति । विज्ञानाऽस्वभावतया मध्यतो बोधिसत्त्वो नोपैति ।
तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र विज्ञानासत्तायां विज्ञानशून्य-
तायां विज्ञानविविक्ततायां विज्ञानास्वभावतायां पूर्वान्त उप-
लभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । पराऽन्या
विज्ञानाऽसत्ताऽन्या विज्ञानशून्यताऽन्या विज्ञानविविक्तताऽन्या

विज्ञानाऽस्वभावतोऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं । इति ह्यायुष्मञ्छारद्वतीपुत्र या च विज्ञानाऽसत्ता या च विज्ञानशून्यता या च विज्ञानविविक्तता या च विज्ञानाऽस्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं सर्व्वमेतद्-द्वयमद्वैधीकारं ।

चक्षुरसत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति । चक्षुःशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । चक्षुर्विविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । चक्षुरस्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । चक्षुरसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति । चक्षुःशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । चक्षुर्विविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । चक्षुरस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति । चक्षुरसत्तया मध्यतो बोधिसत्त्वो नोपैति । चक्षुःशून्यतया मध्यतो 'बोधिसत्त्वो नोपैति । चक्षुर्विविक्ततया मध्यतो बोधिसत्त्वो नोपैति । चक्षुरस्वभावतया मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र चक्षुरसत्तायां चक्षुःशून्यतायां चक्षुर्विविक्ततायां चक्षुरस्वभावतायां पूर्व्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते न चान्या चक्षुरसत्ताऽन्या चक्षुःशून्यताऽन्या चक्षुर्विविक्तताऽन्या चक्षुरस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं । इति ह्यायुष्मञ्छारद्वतीपुत्र या च चक्षुरसत्ता या च चक्षुःशून्यता या च चक्षुर्विविक्तता या च चक्षुरस्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं सर्व्वमेतद्द्वयमद्वैधीकारं ।

श्रोत्रासत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रास्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रासत्तया मध्यतो बोधिसत्त्वो नोपैति। श्रोत्रशून्यतया मध्यतो बोधिसत्त्वो नोपैति। श्रोत्रविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। श्रोत्रास्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र श्रोत्रासत्तायां श्रोत्रशून्यतायां श्रोत्रविविक्ततायां श्रोत्रस्वभावतायां पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चान्या श्रोत्रासत्ताऽन्या श्रोत्रशून्यताऽन्या श्रोत्रविविक्तताऽन्या श्रोत्रास्वभावताऽन्यो बोधिसत्त्वोऽन्योऽपरान्तोऽन्यन्मध्यं। इति ह्यायुष्मञ्छारद्वतीपुत्र या च श्रोत्रासत्ता या च श्रोत्रशून्यता या च श्रोत्रविविक्तता या च श्रोत्रास्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं सर्व्वमेतदद्वयमद्वैधीकारं।

घ्राणासत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। घ्राणशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। घ्राणविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। घ्राणास्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। घ्राणासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। घ्राणशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। घ्राणविविक्ततयाऽ-

परान्ततो बोधिसत्त्वो नोपैति। घ्राणास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। घ्राणसत्तया मध्यतो बोधिसत्त्वो नोपैति। घ्राणशून्यतया मध्यतो बोधिसत्त्वो नोपैति। घ्राणविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। घ्राणाऽस्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र घ्राणसत्तायां घ्राणशून्यतायां घ्राणविविक्ततायां घ्राणास्वभावतायां पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चान्या घ्राणसत्ताऽन्या घ्राणशून्यताऽन्या घ्राणविविक्तताऽन्या घ्राणास्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्याऽपरान्तोऽन्यन्मध्यं। इति ह्यायुष्मञ्छारद्वतीपुत्र या च घ्राणसत्ता या च घ्राणशून्यता या च घ्राणविविक्तता या च घ्राणास्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं सर्व्वमेतदद्वयमद्वैधीकारं।.

जिह्वासत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। जिह्वाशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। जिह्वाविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। जिह्वाऽस्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। जिह्वासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। जिह्वाशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। जिह्वाविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। जिह्वाऽस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। जिह्वाऽसत्तया मध्यतो बोधिसत्त्वो नोपैति। जिह्वाशून्यतया मध्यतो बोधिसत्त्वो नोपैति। जिह्वाविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। जिह्वाऽस्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र जिह्वाऽ-

सत्तायां शिक्षाशून्यतायां शिक्षाविविक्ततायां शिक्षाऽस्वभावतायां पूर्व्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चान्या शिक्षाऽसत्ताऽन्या शिक्षाशून्यताऽन्या शिक्षाविविक्तताऽन्या शिक्षाऽस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं। इति ह्यायुष्मञ्छारद्वतीपुत्र या च शिक्षाऽसत्ता या ▪ शिक्षाशून्यता या च शिक्षाविविक्तता या च शिक्षाऽस्वभावता यश्च बोधिसत्त्वो यश्च पुर्व्वान्तो यश्चापरान्तो यच्च मध्यं सर्व्वमेतदद्वयमद्वैधीकारं ।

कायाऽसत्तयायुष्मञ्छारद्वतीपुत्र पुर्व्वान्ततो बोधिसत्त्वो नोपैति। कायशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । कायविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । कायाऽस्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । कायाऽसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति । कायशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । कायविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । कायाऽस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति । कायाऽसत्तया मध्यतो बोधिसत्त्वो नोपैति । कायशून्यतया मध्यतो बोधिसत्त्वो नोपैति । कायविविक्ततया मध्यतो बोधिसत्त्वो नोपैति । कायास्वभावतया मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र कायाऽसत्तायां कायशून्यतायां कायविविक्ततायां कायाऽस्वभावतायां पूर्व्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चान्या कायाऽसत्ताऽन्या कायशून्यताऽन्या कायविविक्तताऽन्या कायस्वभावताऽन्यो बोधिसत्त्वोऽन्य पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्य । इति

ह्यायुष्मञ्छारद्वतीपुत्र या च कायासत्ता या च कायशून्यता या च कायविविक्तता या च कायस्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्य सर्व्वमेतदद्वयमद्वैधीकारं ।

मनोऽसत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति । मनःशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । मनोविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । मनोऽस्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । मनोऽसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति । मनःशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । मनोविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । मनोऽस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति । मनोऽसत्तया मध्यतो बोधिसत्त्वो नोपैति । मनःशून्यतया मध्यतो बोधिसत्त्वो नोपैति । मनोविविक्ततया मध्यतो बोधिसत्त्वो नोपैति । मनोऽस्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र मनोऽसत्ताया मनःशून्यताया मनोविविक्तताया मनोऽस्वभावताया पूर्व्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चान्या मनोऽसत्ताऽन्या मनःशून्यताऽन्या मनोविविक्तताऽन्या मनोऽस्वभावताऽन्यो बोधिसत्त्वोऽन्य पूर्व्वान्ततोऽन्योऽपरान्तोऽन्यन्मध्य । इति ह्यायुष्मञ्छारद्वतीपुत्र या च मनोऽसत्ता या च मनःशून्यता या च मनोविविक्तता या च मनोऽस्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्य सर्व्वमेतदद्वयमद्वैधिकारं ।

रूपासत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्तता बोधिसत्त्वो नोपैति । रूपशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । रूपाविविक्ततया

पूर्व्वान्ततो बोधिसत्त्वो नोपैति । रूपास्वभावतया पूर्व्वान्ततो
बोधिसत्त्वो नोपैति । रूपाऽसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति ।
रूपशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । रूपविविक्ततयाऽ-
परान्ततो बोधिसत्त्वो नोपैति । रूपास्वभावतयाऽपरान्ततो बोधि-
सत्त्वो नोपैति । रूपासत्तया मध्यतो बोधिसत्त्वो नोपैति ।
रूपशून्यतया मध्यतो बोधिसत्त्वो नोपैति । रूपविविक्ततया
मध्यतो बोधिसत्त्वो नोपैति । रूपास्वभावतया मध्यतो बोधिसत्त्वो
नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र रूपासत्तायां
रूपशून्यतायां रूपविविक्ततायां रूपास्वभावतायां पूर्व्वान्त उप-
लभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चाऽन्या
रूपाऽसत्ताऽन्या रूपशून्यताऽन्या रूपविविक्तताऽन्या रूपास्वभा-
वताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं । इति
ह्यायुष्मञ्छारद्वतीपुत्र या च रूपासत्ता या च रूपशून्यता या
च रूपविविक्तता या च रूपास्वभावता यश्च बोधिसत्त्वो यश्च
पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं सर्व्वमेतद्द्वयमद्वैधीकारं ।

शब्दासत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति । शब्दविविक्ततया
शब्दशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । शब्दास्वभावतया पूर्व्वान्ततो
पूर्व्वान्ततो बोधिसत्त्वो नोपैति । शब्दाऽसत्तयाऽपरान्ततो बोधिसत्त्वो
बोधिसत्त्वो नोपैति । शब्दशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । शब्द-
नोपैति । शब्दविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । शब्दास्वभावतयाऽप-
रान्ततो बोधिसत्त्वो नोपैति । शब्दासत्तया मध्यतो बोधिसत्त्वो

नोपैति । शब्दशून्यतया मध्यतो बोधिसत्त्वो नोपैति । शब्दविविक्ततया मध्यतो बोधिसत्त्वो नोपैति । शब्दास्वभावतया मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र शब्दासत्तायां शब्दशून्यतायां शब्दविविक्ततायां शब्दास्वभावतायां पूर्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चाऽन्या शब्दाऽसत्ताऽन्या शब्दशून्यताऽन्या शब्दविविक्तताऽन्या शब्दाऽस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं । इति ह्यायुष्मञ्छारद्वतीपुत्र या च शब्दाऽसत्ता या च शब्दशून्यता या च शब्दविविक्तता या च शब्दास्वभावता यश्च बोधिसत्त्वो यश्च पूर्वान्तो यश्चापरान्तो यच्च मध्यं सर्वमेतदद्वयमद्वैधीकारं ।

गन्धासत्तयायुष्मञ्छारद्वतीपुत्र पूर्वान्ततो बोधिसत्त्वो नोपैति । गन्धशून्यतया पूर्वान्ततो बोधिसत्त्वो नोपैति । गन्धविविक्ततया पूर्वान्ततो बोधिसत्त्वो नोपैति । गन्धास्वभावतया पूर्वान्ततो बोधिसत्त्वो नोपैति । गन्धासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति । गन्धशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । गन्धविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । गन्धस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति । गन्धासत्तया मध्यतो बोधिसत्त्वो नोपैति । गन्धशून्यतया मध्यतो बोधिसत्त्वो नोपैति । गन्धविविक्ततया मध्यतो बोधिसत्त्वो नोपैति । गन्धास्वभावतया मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र गन्धासत्तायां गन्धशून्यतायां गन्धविविक्ततायां गन्धास्वभावतायां पूर्वान्त

उपलभ्यते। नापरान्त उपलभ्यते। मध्यमुपलभ्यते। न चा ऽन्यागन्धासत्ताऽन्यागन्धशून्यताऽन्यागन्धविविक्तताऽन्यागन्धस्वभावता। अन्या बोधिसत्त्वोऽन्य' पूर्व्वान्तोऽन्यो परान्तोऽन्यन्मध्यं। इति ह्यायुष्मञ्छारद्वतीपुत्र या च गन्धासत्ता या च गन्धशून्यता या च गन्धविविक्तता या च गन्धास्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यश्च मध्यं। सर्व्वमेतदद्वयमद्वैधीकार।

रसासत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। रसशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। रसविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। रसास्वभावतया पूर्व्वान्ततो नोपैति। रसास्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। रसासत्तया-ऽपरान्ततो बोधिसत्त्वो नोपैति। रसशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। रसविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। रसा-स्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। रससत्तया मध्यतो बोधिसत्त्वो नोपैति। रसशून्यतया मध्यतो बोधिसत्त्वो नोपैति। रसविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। रसास्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्ह्यायुष्मञ्छारद्वतीपुत्र रसासत्ताया रसशून्यतायां रसविविक्तताया रसास्वभावतायां पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चान्यारसासत्ताऽन्यारसशून्यताऽन्यारसविविक्तताऽन्यारसास्वभावता ऽन्यो बोधिसत्त्वोऽन्य पूर्व्वान्तोऽन्योऽपरान्तोऽन्यमध्य इति ह्यायुष्मञ्छारद्वतीपुत्र या च रसासत्ता या च रसशून्यता या च रसविविक्तता या च रसास्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो ... यश्च मध्य सर्व्वमेतदद्वयमद्वैधीकार।

स्पर्शासत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। स्पर्शशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। स्पर्शविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। स्पर्शास्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। स्पर्शासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। स्पर्शशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। स्पर्शविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। स्पर्शास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। स्पर्शासत्तया मध्यतो बोधिसत्त्वो नोपैति। स्पर्शशून्यतया मध्यतो बोधिसत्त्वो नोपैति। स्पर्शविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। स्पर्शास्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र स्पर्शाऽसत्तायां स्पर्शशून्यतायां स्पर्शविविक्ततायां स्पर्शास्वभावतायां पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चाऽन्यास्पर्शाऽसत्ताऽन्यास्पर्शशून्यताऽन्यास्पर्शविविक्तताऽन्यास्पर्शास्वभावतोऽन्यो बोधिसत्त्वोऽन्य पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्य। इति ह्यायुष्मञ्छारद्वतीपुत्र या च स्पर्शासत्ता या च स्पर्शशून्यता या च स्पर्शविविक्तता या च स्पर्शास्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं सर्व्वमेतदद्वयमद्वैधीकार।

धर्मासत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। धर्मशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। धर्मविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। धर्मास्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। धर्मासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। धर्मशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। धर्मविविक्ततया

ऽपरान्ततो बोधिसत्त्वो नोपैति । धर्मास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति । धर्मासत्तया मध्यतो बोधिसत्त्वो नोपैति । धर्मशून्यतया मध्यतो बोधिसत्त्वो नोपैति। धर्मविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। धर्मास्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र धर्मासत्तायां धर्मशून्यतायां धर्मविविक्ततायां धर्मास्वभावतायां पूर्वान्त उपलभ्यते। नापरान्त उपलभ्यते । न मध्यमुपलभ्यते। न चान्याधर्मासत्ताऽन्याधर्मशून्यताऽन्याधर्मविविक्तताऽन्याधर्मास्वभवताऽन्योबोधिसत्त्वोऽन्यः पूर्वान्तोऽन्योऽपरान्तोऽन्योन्मध्यं । इति ह्यायुष्मन् शारद्वतीपुत्र या च धर्मासत्ता या च धर्मशून्यता या च धर्मविविक्तताऽन्या या च धर्मास्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्वान्तोऽन्योऽपरान्तो यच्च मध्यं सर्व्वमेतदद्वयमद्वैधीकार ।

चक्षुर्व्विज्ञानासत्तया पूर्वान्ततो बोधिसत्त्वो नोपैति । चक्षुर्व्विज्ञानशून्यतया पूर्वान्ततो बोधिसत्त्वो नोपैति । चक्षुर्व्विज्ञानविविक्ततया पूर्वान्ततो बोधिसत्त्वो नोपैति । चक्षुर्व्विज्ञानास्वभावतया पूर्वान्ततो बोधिसत्त्वो नोपैति। चक्षुर्व्विज्ञानासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति । चक्षुर्व्विज्ञानशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । चक्षुर्व्विज्ञानविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । चक्षुर्व्विज्ञानास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति । चक्षुर्व्विज्ञानासत्तया मध्यतो बोधिसत्त्वो नोपैति। चक्षुर्व्विज्ञानशून्यतया मध्यतो बोधिसत्त्वो नोपैति। चक्षुर्व्विज्ञानविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। चक्षुर्व्विज्ञानास्वभावतया मध्यतो बोधिसत्त्वो

नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र चक्षुर्विज्ञानासत्तायां चक्षुर्विज्ञानशून्यतायां चक्षुर्विज्ञानविविक्ततायां चक्षुर्विज्ञानास्वभावतायां पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चान्याचक्षुर्विज्ञानाऽसत्ताऽन्याचक्षुर्विज्ञानशून्यताऽन्याचक्षुर्विज्ञानविविक्ततोऽन्यो चक्षुर्विज्ञानास्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं। इति ह्यायुष्मञ्छारद्वतीपुत्र या च चक्षुर्विज्ञानासत्ताया च चक्षुर्विज्ञानशून्यताया च चक्षुर्विज्ञानविविक्तताया च चक्षुर्विज्ञानास्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं। सर्व्वमेतदद्वयमद्वैधीकारं।

श्रोत्रविज्ञानाऽसत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानास्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानासत्तयामध्यतो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानशून्यतया मध्यतो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानास्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र श्रोत्रविज्ञानासत्तायां श्रोत्रविज्ञानशून्यतायां श्रोत्रविज्ञानविविक्ततायां श्रोत्रविज्ञानास्वभावतायां पूर्व्वान्त उपलभ्यते। नापरान्त

उपलभ्यते । न मध्यमुपलभ्यते । न चान्याश्रोत्रविज्ञानासत्ताऽन्या-श्रोत्रविज्ञानशून्यताऽन्याश्रोत्रविज्ञानविविक्तताऽन्याश्रोत्रविज्ञानास्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं । इति ह्यायुष्मञ्छारद्वतीपुत्र या च श्रोत्रविज्ञानसत्ता या च श्रोत्रविज्ञानासत्ता या च श्रोत्रविज्ञानशून्यता या च श्रोत्रविज्ञानविविक्तता या च श्रोत्रविज्ञानास्वभावता यश्च बोधिसत्त्वो यश्च पूर्वान्तो यश्चापरान्तो यच्च मध्यं सर्व्वमेतदद्वयमद्वैधीकारं ।

घ्राणविज्ञानाऽसत्तयायुष्मञ्छारद्वतीपुत्र पूर्वान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानशून्यतया पूर्वान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानविविक्ततया पूर्वान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानाऽस्वभावतया पूर्वान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञाना-ऽसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानशून्यतया-ऽपरान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानासत्तया मध्यतो बोधिसत्त्वो नोपैति । घ्राणविज्ञानशून्यतया मध्यतो बोधिसत्त्वो नोपैति । घ्राणविज्ञानविविक्ततया मध्यतो बोधिसत्त्वो नोपैति । घ्राणविज्ञानास्वभावतया मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र घ्राणविज्ञानासत्तायां घ्राणविज्ञानशून्यतायां घ्राणविज्ञानविविक्ततायां घ्राणविज्ञानास्वभावतायां पूर्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चान्याघ्राणविज्ञानासत्ताऽन्या-घ्राणविज्ञानशून्यताऽन्याघ्राणविज्ञानविविक्तताऽन्याघ्राणविज्ञानास्वभा-

नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र चक्षुर्विज्ञानासत्तायां चक्षुर्विज्ञानशून्यतायां चक्षुर्विज्ञानविविक्ततायां चक्षुर्विज्ञानास्वभावतायां पूर्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चान्याचक्षुर्विज्ञानाऽसत्ताऽन्याचक्षुर्विज्ञानशून्यताऽन्याचक्षुर्विज्ञानविविक्तताऽन्यो चक्षुर्विज्ञानास्वभावताऽन्यो-बोधिसत्त्वोऽन्यः पूर्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं। इति ह्यायुष्मञ्छारद्वतीपुत्र या च चक्षुर्विज्ञानासत्ताया च चक्षुर्विज्ञानशून्यताया च चक्षुर्विज्ञानविविक्तताया च चक्षुर्विज्ञानास्वभावता यश्च बोधिसत्त्वो यश्च पूर्वान्तो यश्चापरान्तो यच्च मध्यं। सर्वमेतदद्वयमद्वैधीकारं।

श्रोत्रविज्ञानाऽसत्तयायुष्मञ्छारद्वतीपुत्र पूर्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानशून्यतया पूर्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानविविक्ततया पूर्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानास्वभावतया पूर्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानासत्तयामध्यतो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानशून्यतया मध्यतो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। श्रोत्रविज्ञानास्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र श्रोत्रविज्ञानासत्तायां श्रोत्रविज्ञानशून्यतायां श्रोत्रविज्ञानविविक्ततायां श्रोत्रविज्ञानास्वभावतायां पूर्वान्त उपलभ्यते। नापरान्त

उपलभ्यते । न मध्यमुपलभ्यते । न चान्याश्रोत्रविज्ञानासत्ताऽन्या-श्रोत्रविज्ञानशून्यताऽन्याश्रोत्रविज्ञानविविक्तताऽन्याश्रोत्रविज्ञानास्वभा-वताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्य । इति ह्यायुष्मञ्छारद्वतीपुत्र या च श्रोत्रविज्ञानसत्ता या च श्रोत्रविज्ञा-नासत्ता या च श्रोत्रविज्ञानशून्यता या च श्रोत्रविज्ञानविविक्तता या च श्रोत्रविज्ञानास्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं सर्व्वमेतदद्वयमद्वैधीकारं ।

घ्राणविज्ञानाऽसत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । घ्राण-विज्ञानविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानाऽस्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञाना-ऽसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानशून्यतया-ऽपरान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति । घ्राणविज्ञानसत्तया मध्यतो बोधिसत्त्वो नोपैति । घ्राणविज्ञानशून्यतया मध्यतो बोधिसत्त्वो नोपैति । घ्राणविज्ञान-विविक्ततया मध्यतो बोधिसत्त्वो नोपैति । घ्राणविज्ञानास्वभावतया मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र घ्राणविज्ञानासत्तायां घ्राणविज्ञानशून्यतायां घ्राणविज्ञानविविक्त-तायां घ्राणविज्ञानास्वभावतायां पूर्व्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चान्याघ्राणविज्ञानासत्ताऽन्या-घ्राणविज्ञानशून्यताऽन्याघ्राणविज्ञानविविक्तताऽन्याघ्राणविज्ञानास्वभा-

वताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं। इति शारद्वतीपुत्र या च घ्राणविज्ञानासत्ता या च घ्राणविज्ञानशून्यता या च घ्राणविज्ञानविविक्तता या च घ्राणविज्ञानास्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं। सर्व्वमेतदद्वयमद्वैधीकारं।

जिह्वाविज्ञानासत्तयाऽऽयुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। जिह्वाविज्ञानशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। जिह्वाविज्ञानविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। जिह्वाविज्ञानास्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। जिह्वाविज्ञानासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। जिह्वाविज्ञानशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। जिह्वाविज्ञानविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। जिह्वाविज्ञानास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। जिह्वाविज्ञानासत्तया मध्यतो बोधिसत्त्वो नोपैति। जिह्वाविज्ञानशून्यतया मध्यतो बोधिसत्त्वो नोपैति। जिह्वाविज्ञानविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। जिह्वाविज्ञानास्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र जिह्वाविज्ञानासत्तायां जिह्वाविज्ञानशून्यतायां जिह्वाविज्ञानविविक्ततायां जिह्वाविज्ञानास्वभावतायां पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चान्या जिह्वाविज्ञानासत्ताऽन्या जिह्वाविज्ञानशून्यताऽन्या जिह्वाविज्ञानविविक्तताऽन्या जिह्वाविज्ञानास्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं। इति शारद्वतीपुत्र या च जिह्वा-

विज्ञानासत्ता या च जिह्वाविज्ञानशून्यता या च जिह्वाविज्ञान-
विविक्तता या च जिह्वाविज्ञानास्वभावता यश्च बोधिसत्त्वो यश्च
पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं। सर्व्वमेतद्‌द्वयमद्वैधीकारं ।

कायविज्ञानासत्तया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। काय-
विज्ञानशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। कायविज्ञान-
विविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। कायविज्ञानास्वभावतया
पूर्व्वान्ततो बोधिसत्त्वो नोपैति। कायविज्ञानासत्तयाऽपरान्ततो
बोधिसत्त्वो नोपैति। कायविज्ञानशून्यतयाऽपरान्ततो बोधिसत्त्वो
नोपैति। कायविज्ञानविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति।
कायविज्ञानास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। काय-
विज्ञानाऽसत्तया मध्यतो बोधिसत्त्वो नोपैति। कायविज्ञानशून्य-
तया मध्यतो बोधिसत्त्वो नोपैति। कायविज्ञानविविक्ततया
मध्यतो बोधिसत्त्वो नोपैति। कायविज्ञानाऽस्वभावतया मध्यतो
बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मन्शारद्वतीपुत्र काय-
विज्ञानासत्तायां कायविज्ञानशून्यतायां कायविज्ञानविविक्ततायां
कायविज्ञानास्वभावतायां पूर्व्वान्त उपलभ्यते। नापरान्त उप-
लभ्यते। न मध्यमुपलभ्यते। न चान्या कायविज्ञानासत्ताऽन्या
कायविज्ञानशून्यताऽन्या कायविज्ञानविविक्तताऽन्या कायविज्ञान-
स्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यम्।
इति ह्यायुष्मन्शारद्वतीपुत्र या च कायविज्ञानासत्ता या च काय-
विज्ञानशून्यता या च कायविज्ञानविविक्तता या च कायविज्ञाना-
स्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च
। सर्व्वमेतद्‌द्वयमद्वैधीकारम्।

मनोविज्ञानसत्तया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। मनोविज्ञानशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। मनोविज्ञानविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। मनोविज्ञानास्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। मनोविज्ञानासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनोविज्ञानशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनोविज्ञानविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनोविज्ञानास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनोविज्ञानासत्तया मध्यतो बोधिसत्त्वो नोपैति। मनोविज्ञानशून्यतया मध्यतो बोधिसत्त्वो नोपैति। मनोविज्ञानविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। मनोविज्ञानस्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र मनोविज्ञानासत्तायां मनोविज्ञानशून्यतायां मनोविज्ञानविविक्ततायां मनोविज्ञानास्वभावतायां, पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चान्या मनोविज्ञानासत्ताऽन्या मनोविज्ञानशून्यताऽन्या मनोविज्ञानविविक्तताऽन्या मनोविज्ञानस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यम्। इति ह्यायुष्मञ्छारद्वतीपुत्र या च मनोविज्ञानासत्ता या च मनोविज्ञानशून्यता या च मनोविज्ञानविविक्तता या च मनोविज्ञानास्वभावता यश्च बोधिसत्त्वो यश्चापूर्व्वान्तो यश्चापरान्तो यच्च मध्यम्। सर्व्वमेतदद्वयमद्वैधीकारम्।

चक्षुःसंस्पर्शासत्तया, पूर्व्वान्ततो, बोधिसत्त्वो नोपैति। चक्षुःसंस्पर्शशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। चक्षुःसंस्पर्श-

विविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। चक्षुःसंस्पर्शास्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। चक्षुःसंस्पर्शासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। चक्षुःसंस्पर्शशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। चक्षुःसंस्पर्शविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। चक्षुःसंस्पर्शास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। चक्षुःसंस्पर्शासत्तया मध्यतो बोधिसत्त्वो नोपैति। चक्षुःसंस्पर्शशून्यतया मध्यतो बोधिसत्त्वो नोपैति। चक्षुःसंस्पर्शविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। चक्षुःसंस्पर्शास्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र चक्षुःसंस्पर्शासत्तायाः चक्षुःसंस्पर्शशून्यतायाः चक्षुःसंस्पर्शविविक्ततायाः चक्षुःसंस्पर्शास्वभावतायाः पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते न चान्या चक्षुःसंस्पर्शासत्ताऽन्या चक्षुःसंस्पर्शशून्यताऽन्या चक्षुःसंस्पर्शविविक्तताऽन्या चक्षुःसंस्पर्शास्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं। इति ह्यायुष्मञ्छारद्वतीपुत्र या च चक्षुःसंस्पर्शासत्ता या च चक्षुःसंस्पर्शशून्यता या च चक्षुःसंस्पर्शविविक्तता या च चक्षुःसंस्पर्शास्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं। सर्व्वमेतदद्वयमद्वैधीकारम्।

श्रोत्रसंस्पर्शासत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शास्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शशून्यतयाऽपरा-

न्ततो बोधिसत्त्वो नोपैति । श्रोत्रसंस्पर्शविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । श्रोत्रसंस्पर्शस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति । श्रोत्रसंस्पर्शासत्तया मध्यतो बोधिसत्त्वो नोपैति । श्रोत्रसंस्पर्शशून्यतया मध्यतो बोधिसत्त्वो नोपैति । श्रोत्रसंस्पर्शविविक्ततया मध्यतो बोधिसत्त्वो नोपैति । श्रोत्रसंस्पर्शस्वभावतया मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र श्रोत्रसंस्पर्शासत्तायां श्रोत्रसंस्पर्शशून्यतायां श्रोत्रसंस्पर्शविविक्ततायां श्रोत्रसंस्पर्शस्वभावतायां पूर्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चान्या श्रोत्रसंस्पर्शासत्ताऽन्या श्रोत्रसंस्पर्शशून्यताऽन्या श्रोत्रसंस्पर्शविविक्तताऽन्या श्रोत्रसंस्पर्शस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं । इति ह्यायुष्मञ्छारद्वतीपुत्र या च श्रोत्रसंस्पर्शासत्ता या च श्रोत्रसंस्पर्शशून्यता या च श्रोत्रसंस्पर्शविविक्तता या च श्रोत्रसंस्पर्शस्वभावता यश्च बोधिसत्त्वो यश्च पूर्वान्तो यश्चापरान्तो यच्च मध्यं । सर्वमेतदद्वयमद्वैधीकारम् ।

घ्राणसंस्पर्शासत्तया पूर्वान्ततो बोधिसत्त्वो नोपैति । घ्राणसंस्पर्शशून्यतया पूर्वान्ततो बोधिसत्त्वो नोपैति । घ्राणसंस्पर्शविविक्ततया पूर्वान्ततो बोधिसत्त्वो नोपैति । घ्राणसंस्पर्शस्वभावतया पूर्वान्ततो बोधिसत्त्वो नोपैति । घ्राणसंस्पर्शासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति । घ्राणसंस्पर्शशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । घ्राणसंस्पर्शविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । घ्राणसंस्पर्शस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति । घ्राणसंस्पर्शा-

सत्तया मध्यतो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शशून्यतया मध्यतो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शास्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र घ्राणसंस्पर्शासत्तायां घ्राणसंस्पर्शशून्यतायां घ्राणसंस्पर्शविविक्ततायां घ्राणसंस्पर्शास्वभावतायां पूर्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चान्या घ्राणसंस्पर्शासत्ताऽन्या घ्राणसंस्पर्शशून्यताऽन्या घ्राणसंस्पर्शविविक्तताऽन्या घ्राणसंस्पर्शास्वभावताऽन्यो बोधिसत्त्वोऽन्य पूर्वान्तोऽन्याऽपरान्तोऽन्यन्मध्य। इति ह्यायुष्मञ्छारद्वतीपुत्र या च घ्राणसंस्पर्शासत्ता या च घ्राणसंस्पर्शशून्यता या च घ्राणसंस्पर्शविविक्तता या च घ्राणसंस्पर्शास्वभावता यश्च बोधिसत्त्वो यश्चापरान्तो यच्च मध्य। सर्वमेतदद्वयमद्वैधीकारम्।

जिह्वासंस्पर्शासत्तयायुष्मञ्छारद्वतीपुत्र पूर्वान्ततो बोधिसत्त्वो नोपैति। जिह्वासंस्पर्शशून्यतया पूर्वान्ततो बोधिसत्त्वो नोपैति। जिह्वासंस्पर्शविविक्ततया पूर्वान्ततो बोधिसत्त्वो नोपैति। जिह्वासंस्पर्शास्वभावतया पूर्वान्ततो बोधिसत्त्वो नोपैति। जिह्वासंस्पर्शासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। जिह्वासंस्पर्शशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। जिह्वासंस्पर्शविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। जिह्वासंस्पर्शास्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। जिह्वासंस्पर्शासत्तया मध्यतो बोधिसत्त्वो नोपैति। जिह्वासंस्पर्शशून्यतया मध्यतो बोधिसत्त्वो नोपैति। जिह्वासंस्पर्शविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। जिह्वासंस्पर्शास्वभावतया

मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र जिह्वासंस्पर्शसत्तायां जिह्वासंस्पर्शशून्यतायां जिह्वासंस्पर्शविविक्ततायां जिह्वासंस्पर्शस्वभावतायां पूर्व्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चान्या जिह्वासंस्पर्शसत्ताऽन्या जिह्वासंस्पर्शशून्यताऽन्या जिह्वासंस्पर्शविविक्तताऽन्या जिह्वासंस्पर्शस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं । इति ह्यायुष्मञ्छारद्वतीपुत्र या च जिह्वासंस्पर्शसत्ता या च जिह्वासंस्पर्शशून्यता या च जिह्वासंस्पर्शविविक्तता या च जिह्वासंस्पर्शस्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं । सर्व्वमेतदद्वयमद्वैधीकारम् ।

कायसंस्पर्शसत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति । कायसंस्पर्शशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । कायसंस्पर्शविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । कायसंस्पर्शस्वभावतया पूर्व्वान्ततोबोधिसत्त्वो नोपैति । कायसंस्पर्शसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति । कायसंस्पर्शशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । कायसंस्पर्शविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । कायसंस्पर्शस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति । कायसंस्पर्शसत्तया मध्यतो बोधिसत्त्वो नोपैति । कायसंस्पर्शशून्यतया मध्यतो बोधिसत्त्वो नोपैति । कायसंस्पर्शविविक्ततया मध्यतो बोधिसत्त्वो नोपैति । कायसंस्पर्शस्वभावतया मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र कायसंस्पर्शसत्तायां कायसंस्पर्शशून्यतायां

तायां पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चान्या कायसंस्पर्शामत्ताऽन्या कायसंस्पर्शशून्यताऽन्या कायसंस्पर्शविविक्तताऽन्या कायसंस्पर्शाखभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्य। इति ह्यायुष्मञ्छारद्वतीपुत्र या च कायसंस्पर्शामत्ता ऽन्या च कायसंस्पर्शशून्यता या च कायसंस्पर्शविविक्तता या च कायसंस्पर्शाखभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं। सर्व्वमेतदद्वयमद्वैधीकारम्।

मनःसंस्पर्शामत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शाखभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शामत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शाखभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शामत्तया मध्यतो बोधिसत्त्वो नोपैति। मनःसंस्पर्शशून्यतया मध्यतो बोधिसत्त्वो नोपैति। मनःसंस्पर्शविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। मनःसंस्पर्शाखभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र मनःसंस्पर्शामत्तायां मनःसंस्पर्शशून्यतायां मनःसंस्पर्शविविक्ततायां मनःसंस्पर्शाखभावतायां पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चाऽन्या मनःसंस्पर्शामत्ताऽन्या मनःसंस्पर्शशून्यताऽन्या मनःसंस्पर्शविविक्तताऽन्या मनःसंस्पर्शाखभावताऽन्यो बोधि-

संस्पर्शप्रत्ययवेदनाऽस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं इति ह्यायुष्मञ्छारद्वतीपुत्र या च चक्षुःसंस्पर्शप्रत्ययवेदनाऽसत्ता या च चक्षुःसंस्पर्शप्रत्ययवेदनाशून्यता या च चक्षुःसंस्पर्शप्रत्ययवेदनाविविक्तता या च चक्षुःसंस्पर्शप्रत्ययवेदनाऽस्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं। सर्व्वमेतदद्वयमद्वैधीकारम्।

श्रोत्रसंस्पर्शप्रत्ययवेदनासत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शप्रत्ययवेदनाशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शप्रत्ययवेदनाविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शप्रत्ययवेदनाऽस्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शप्रत्ययवेदनासत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शप्रत्ययवेदनाशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शप्रत्ययवेदनाविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शप्रत्ययवेदनाऽस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शप्रत्ययवेदनासत्तया मध्यतो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शप्रत्ययवेदनाशून्यतया मध्यतो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शप्रत्ययवेदनाविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। श्रोत्रसंस्पर्शप्रत्ययवेदनाऽस्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र श्रोत्रसंस्पर्शप्रत्ययवेदनाऽसत्तायां श्रोत्रसंस्पर्शप्रत्ययवेदनाशून्यतायां श्रोत्रसंस्पर्शप्रत्ययवेदनाविविक्ततायां, श्रोत्रसंस्पर्शप्रत्ययवेदनाऽस्वभावतायां पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते

न चाऽन्या श्रोत्रसंस्पर्शप्रत्ययवेदनासत्ताऽन्या श्रोत्रसंस्पर्शप्रत्ययवेदनाशून्यताऽन्या श्रोत्रसंस्पर्शप्रत्ययवेदनाविविक्तताऽन्या श्रोत्रसंस्पर्शप्रत्ययवेदनाऽस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं। इति ह्यायुष्मञ्छारद्वतीपुत्र या च श्रोत्रसंस्पर्शप्रत्ययवेदनासत्ता या च श्रोत्रसंस्पर्शप्रत्ययवेदनाशून्यता या च श्रोत्रसंस्पर्शप्रत्ययवेदनाविविक्तता या च श्रोत्रसंस्पर्शप्रत्ययवेदनाऽस्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं। सर्व्वमेतदद्वयमद्वैधीकारम्।

घ्राणसंस्पर्शप्रत्ययवेदनाऽसत्तयायुष्मञ्छारद्वतीपुत्र पूर्व्वान्ततो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शप्रत्ययवेदनाशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शप्रत्ययवेदनाविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शप्रत्ययवेदनाऽस्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शप्रत्ययवेदनाऽसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शप्रत्ययवेदनाशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शप्रत्ययवेदनाविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शप्रत्ययवेदनाऽस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शप्रत्ययवेदनाऽसत्तया मध्यतो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शप्रत्ययवेदनाशून्यतया मध्यतो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शप्रत्ययवेदनाविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। घ्राणसंस्पर्शप्रत्ययवेदनाऽस्वभावतया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र घ्राणसंस्पर्शप्रत्ययवेदनाऽसत्तायां घ्राणसंस्पर्शप्रत्ययवेदनाशून्यतायां घ्राणसंस्पर्शप्रत्ययवेदनाविविक्ततायां घ्राणसंस्पर्शप्रत्ययवेदनाऽस्वभावतायां पूर्व्वान्त

उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चान्या-घ्राणसंस्पर्शप्रत्ययवेदनाऽसत्ताऽन्याघ्राणसंस्पर्शप्रत्ययशून्यताऽन्याघ्राणसं-स्पर्शप्रत्ययवेदनाविविक्तताऽन्याघ्राणसंस्पर्शप्रत्ययवेदनाऽस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्य । इति ह्यायुष्मञ्छारद्वतीपुत्र या च घ्राणसंस्पर्शप्रत्ययवेदनाऽसत्ता या च घ्राणसंस्पर्श-प्रत्ययवेदनाशून्यता या च घ्राणसंस्पर्शप्रत्ययवेदनाविविक्तता या च घ्राणसंस्पर्शप्रत्ययवेदनाऽस्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्य सर्व्वमेतदद्वयमद्वैधीकारम् ।

जिह्वासंस्पर्शप्रत्ययवेदनाऽसत्तया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । जिह्वासंस्पर्शप्रत्ययवेदनाशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । जिह्वासंस्पर्शप्रत्ययवेदनाविविक्ततया पूर्व्वान्ततो बोधि-सत्त्वो नोपैति । जिह्वासंस्पर्शप्रत्ययवेदनाऽस्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति । जिह्वासंस्पर्शप्रत्ययवेदनाऽसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति । जिह्वासंस्पर्शप्रत्ययवेदनाशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति । जिह्वासंस्पर्शप्रत्ययवेदनाविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति । जिह्वासंस्पर्शप्रत्ययवेदनाऽस्वभावतयाऽपरा-न्ततो बोधिसत्त्वो नोपैति । जिह्वासंस्पर्शप्रत्ययवेदनाऽसत्तया मध्यतो बोधिसत्त्वो नोपैति । जिह्वासंस्पर्शप्रत्ययवेदनाशून्यतया मध्यतो बोधिसत्त्वो नोपैति । जिह्वासंस्पर्शप्रत्ययवेदनाविविक्ततया मध्यतो बोधिसत्त्वो नोपैति । जिह्वासंस्पर्शप्रत्ययवेदनाऽस्वभावतया मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र जिह्वासंस्पर्शप्रत्ययवेदनासत्तायां जिह्वासंस्पर्शप्रत्ययवेदनाशून्यतायां

जिह्वासंस्पर्शप्रत्ययवेदनाविविक्ततायां जिह्वासंस्पर्शप्रत्ययवेदनाऽस्वभावतायां पूर्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चान्या जिह्वासंस्पर्शप्रत्ययवेदनाऽसत्ताऽन्या जिह्वासंस्पर्शप्रत्ययवेदनाशून्यताऽन्या जिह्वासंस्पर्शप्रत्ययवेदनाविविक्तताऽन्या जिह्वासंस्पर्शप्रत्ययवेदनाऽस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं। इति ह्यायुष्मञ्छारद्वतीपुत्र या च जिह्वासंस्पर्शप्रत्ययवेदनाऽसत्ता या च जिह्वासंस्पर्शप्रत्ययवेदनाशून्यता या च जिह्वासंस्पर्शप्रत्ययवेदनाविविक्तता या च जिह्वासंस्पर्शप्रत्ययवेदनाऽस्वभावता यश्च बोधिसत्त्वो यश्च पूर्वान्तो यश्चापरान्तो यच्च मध्यं सर्वमेतदद्वयमद्वैधीकारम्।

कायसंस्पर्शप्रत्ययवेदनाऽसत्तयायुष्मञ्छारद्वतीपुत्र पूर्वान्ततो बोधिसत्त्वो नोपैति। कायसंस्पर्शप्रत्ययवेदनाशून्यताया पूर्वान्ततो बोधिसत्त्वो नोपैति। कायसंस्पर्शप्रत्ययवेदनाविविक्ततया पूर्वान्ततो बोधिसत्त्वो नोपैति। कायसंस्पर्शप्रत्ययवेदनाऽस्वभावतया पूर्वान्ततो बोधिसत्त्वो नोपैति। कायसंस्पर्शप्रत्ययवेदनाऽसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। कायसंस्पर्शप्रत्ययवेदनाशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। कायसंस्पर्शप्रत्ययवेदनाविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। कायसंस्पर्शप्रत्ययवेदनाऽस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। कायसंस्पर्शप्रत्ययवेदनासत्तया मध्यतो बोधिसत्त्वो नोपैति। कायसंस्पर्शप्रत्ययवेदनाशून्यतया मध्यतो बोधिसत्त्वो नोपैति। कायसंस्पर्शप्रत्ययवेदनाविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। कायसंस्पर्शप्रत्ययवेदनाऽस्वभाव-

तया मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छार-
द्वतीपुत्र कायसंस्पर्शप्रत्ययवेदनासत्तायां कायसंस्पर्शप्रत्ययवेदना-
शून्यतायां कायसंस्पर्शप्रत्ययवेदनाविविक्ततायां पूर्व्वान्त उपलभ्यते।
नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न चाऽन्या कायसंस्पर्श-
प्रत्ययवेदनाऽसत्ताऽन्या कायसंस्पर्शप्रत्ययवेदनाशून्यताऽन्या काय-
संस्पर्शप्रत्ययवेदनाविविक्तताऽन्या कायसंस्पर्शप्रत्ययवेदनाऽस्वभावता-
ऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं। इति ह्यायु-
ष्मञ्छारद्वतीपुत्र या च कायसंस्पर्शप्रत्ययवेदनाऽसत्ता या च काय-
संस्पर्शप्रत्ययवेदनाशून्यता या च कायसंस्पर्शप्रत्ययवेदनाविविक्तता
या च कायसंस्पर्शप्रत्ययवेदनाऽस्वभावता यश्च बोधिसत्त्वो यश्च
पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं। सर्व्वमेतदद्वयमद्वैधीकारम्।

मनःसंस्पर्शप्रत्ययवेदनाऽसत्तया पूर्व्वान्ततो बोधिसत्त्वो नोपैति।
मनःसंस्पर्शप्रत्ययवेदनाशून्यताया पूर्व्वान्ततो बोधिसत्त्वो नोपैति।
मनःसंस्पर्शप्रत्ययवेदनाविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति।
मनःसंस्पर्शप्रत्ययवेदनाऽस्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति।
मनःसंस्पर्शप्रत्ययवेदनाऽसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनः-
संस्पर्शप्रत्ययवेदनाशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनः-
संस्पर्शप्रत्ययवेदनाविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनः-
संस्पर्शप्रत्ययवेदनाऽस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति।
मनःसंस्पर्शप्रत्ययवेदनाऽसत्तया मध्यतो बोधिसत्त्वो नोपैति। मनः-
संस्पर्शप्रत्ययवेदनाशून्यतया मध्यतो बोधिसत्त्वो नोपैति। मनः-
संस्पर्शप्रत्ययवेदनाविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। मनः-

संस्पर्शप्रत्ययवेदनाऽस्वभावतया मध्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र मनःसंस्पर्शप्रत्ययवेदनाऽसत्तायां मनःसंस्पर्शप्रत्ययवेदनाशून्यतायां मनःसंस्पर्शप्रत्ययवेदनाविविक्ततायां मनःसंस्पर्शप्रत्ययवेदनाऽस्वभावतायां पूर्व्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चान्या मनःसंस्पर्शप्रत्ययवेदनाऽसत्ताऽन्या मनःसंस्पर्शप्रत्ययवेदनाशून्यताऽन्या मनःसंस्पर्शप्रत्ययवेदनाविविक्तताऽन्या मनःसंस्पर्शप्रत्ययवेदनाऽस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यम् । इति ह्यायुष्मञ्छारद्वतीपुत्र या च मनःसंस्पर्शप्रत्ययवेदनाऽसत्ता या च मनःसंस्पर्शप्रत्ययवेदनाशून्यता या च मनःसंस्पर्शप्रत्ययवेदनाविविक्तता या च मनःसंस्पर्शप्रत्ययवेदनाऽस्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यम् । सर्व्वमेतदद्वयमद्वैधीकारं

शतसाहस्र्याः प्रज्ञापारमितायाः द्वादशः परिवर्त्तः ॥ ० ॥

इति प्रथमखण्डः समाप्तः ॥

